**ध्रुवा ।** स्त्री । शालपर्ण्याम् । रा.नि.व.४ । मूर्व्वायाम् । मे. ।

**ध्वंसः ।** पुं । मद्यविकाररोगे । लक्षणं यथा — "श्लेष्मप्रसेकः कण्ठास्यशोषः शब्दासहिष्णुता । तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥" च. ।

**ध्वंसी ।** स्त्री । मानविशेषे, त्रसरेणुपरपर्य्याये मागधमाने । "त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसी निगद्यते ।" प.प्र.१ख. । पुं (इन्) । गिरिजपीलौ । श.र. ।

**ध्वजः ।** पुं, क्ली । शिश्ने । भा.म.उ. । "ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते ।" "ध्वजं चिह्ने पताकायां मेहने ।" विश्व. । तालवृक्षे । रा.नि.व.९ ।

**ध्वजद्रुमः ।** पुं । तालवृक्षे । रा.नि.व.९ ।

**ध्वजप्रहरणः ।** पुं । वायौ । श.र. ।

**ध्वजभङ्गः ।** पुं । लिङ्गपातकृतक्लैव्यरोगविशेषे । ধ্বজভঙ্গ রোগ । निदानलक्षणे यथा — "अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकः । अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् । अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् । कन्याणीगमनाच्चापि विश्रीनिगमनादपि । दीर्घरोगां चिरोत्सृष्टां तथैव च रजःस्वलां । दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुतां । ईदृशीं प्रमदां मोहात् यो गच्छेत् कामहर्षितः । चतुष्पदादिगमनाच्छेफसश्चाभिघाततः । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् । काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् । चेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥" च. । See क्लैव्यम् ।

**ध्वजवृक्षः ।** पुं । माड़ इति कोङ्कणदेशख्यातवृक्षे । रा.नि.व.९ । [र्पे । मे. ।

**ध्वजी** (इन्) **।** पुं । मयूरे । रा.नि.व.१९ । स-

**ध्वनिग्रहः ।** पुं । कर्णे । त्रिका. ।

**ध्वनिबोधक(न)म् ।** क्ली । सुगन्धरोहिषतृणे । वै.निघ. । [श्म. । जलपक्षिमात्रे ।

**ध्वाङ्क्षः ।** पुं । काके । बके । मत्स्यादपक्षिणि ।

**ध्वान्तवित्तः ।** पुं । खद्योते । श.र. ।

**ध्वान्तशात्रवः ।** पुं । श्योणाकवृक्षे । श.च. ।

**ध्वान्तोन्मेषः ।** पुं । खद्योते । জনাকি পোকা । त्रिका. ।

## न

**नः ।** पुं । रवे । ए.को. ।

**नःक्षुद्रः ।** त्रि । ह्रस्वनासिके । থ্যাব্দা । हे.च. ।

**नकुटम् ।** क्ली । नासिकायाम् । श.मा. ।

**नकुलः ।** पुं । (The bengal mungoose, Viverra ichneumon.) स्वनामख्यातजन्तौ । নেউল । हिं बेजी । मं नेउरा । कं मंगुल । लक्षणं—यः स्थूलपुच्छो रक्तनेत्रो बभ्रुदेहः स नकुलः । शालिहोत्र. । नकुलमांसगुणाः—पिच्छिलं वातघ्नं श्लेष्मपित्तघ्नञ्च । रा.नि.व.१७ । "गुरूष्णस्निग्धमधुरम्बलोपचयवर्द्धनम् । वृष्यं परं वातहरम्… …॥" च.सू.२७अ. । [स्ना । रा.नि.व.७ ।

**नकुलाढ्या ।** स्त्री । गन्धनाकुल्याम् । गन्धरा-

**नकुलान्ध्यम् ।** क्ली । नेत्ररोगभेदे । लक्षणं— "विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा च पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः ॥" भा.म.४भ. । नकुलान्धो दिवा चित्रं पश्यति न तु निशि । अरुण. ।

**नकुलारिः ।** पुं । विड़ाले । वै.निघ. ।

**नकुली ।** स्त्री । शाल्मलीवृक्षे । वै.निघ. । शङ्खिन्याम् । धरणि. । कुङ्कुमे । हे.च. । नकुलपत्न्याम् । मांस्यां । জটামাংসী । कुक्कुट्याम् । मूर्गि । मे. ।

**नकुलेष्टका (ष्टा) ।** स्त्री । रास्नायाम् । अम. ।

**नक्तकः ।** पुं । नेत्रपटले । वै.निघ. । कर्पटे । লেকড়া । अ.टी.भ. । [त्रिका. ।

**नक्तचारी** (इन्) **।** पुं । पेचके । विड़ाले ।

**नक्तञ्चरः ।** पुं । गुग्गुलौ । গুগ্গুল । पेचके । जटा. । सोमराज्यां । दुण्डुभे । रा.नि.व.२३ ।

**नक्तमालः ।** पुं । वृहत्करञ्जवृक्षे । ডহরকরঞ্জ । रा.नि.व.९ । सु.म.३८अ.वृहन्मरिचाद्यतैले । सि.यो.उन्मा.चि. ।

**नक्तमूलकम्** । क्ली । करञ्जमूले । पुं । महाकरञ्जे । वै.निघ. ।

**नक्ता** । स्त्री । लाङ्गलीक्षुपे । বিষলাঙ্গুলিয়া । रा.नि.व.४ । तृणविशेषे । गुलवास इति लोके । गुणाः—वातला शीता गलगण्डहरी च । अपक्वा सा अर्शोघ्नी । वै.निघ. ।

**नक्तान्धः** । त्रि । रात्र्यन्धे । রাতকাণা । रात्र्यान्ध्यस्य लक्षणं यथा—"दिवा पश्यति यः स्वच्छं रात्रौ नैव च पश्यति । नक्तान्ध इति तं विद्यात् विकारं पवनोद्भवम् ॥" ज.द.३०अ. ।

**नक्तान्ध्यम्** । क्ली । रात्र्यन्धतारोगे । निदा. ।

**नक्ताह्वः** । पुं । करञ्जवृक्षे । भैष.ने.रो.चि. । "नक्ताह्वबीजवर्त्तिः ।" च.द.व्र.शो.चि. । भा.वा.र.चि.त्रिफलागुग्गुलौ ।

**नक्रम्** । क्ली । नासिकायाम् । मे. ।

**नक्रः** । पुं । ग्राहे । वै.निघ. । कुम्भीरे । अम. ।

**नक्रराजः (ट्)** । पुं । महाशिशुमारे, ग्राहे । হাঙ্গর । त्रिका. ।

[याम् । श.र. ।

**नक्रा** । स्त्री । मक्षिकादंशमूच्याम् । नासिका-

**नक्राण्डम्** । क्ली । कुम्भीराण्डे । च.चि.२अ. ।

**नखम्** । क्ली, पुं । शरीरोपधातुविशेषे, करजे । নখ । रा.नि.व.१८ । तत् गर्भस्थस्य षष्ठे मासि भवति । सुखबोधः । नखीनामगन्धद्रव्ये । নখী । तैं नखमुचिप्प । च.द.चन्दनाद्यतैले । नखीभेदे । प.मु. । च.सू.५अ. । क्षुद्रनिष्पावे । বরবটী, ছোট শিম্ । वै.निघ. ।

**नखकुट्टः** । पुं । नापिते । त्रिका. ।

**नखगु(पु)च्छ[ञ्ज]फला** । स्त्री । श्वेतनिष्पाविकायाम् । শ্বেত শিম্, শ্বেত বরবটী । रा.नि.व.७ ।

**नखच्छेदनम्** । क्ली । नखस्य कर्त्तने । নখকাটা । गुणाः—"पौष्टिकं बल्यमायुष्यं शौचरूपविराजनम् । केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम् ॥" राज.१प. ।

**नखच्छेद्या** । स्त्री । मेदायाम् । रा.नि.व.५ ।

**नखनामा** । पुं । नीलवृक्षे । वै.निघ. ।

**नखनिकृन्तनम्** । क्ली । नखच्छेदनास्त्रे । নরুন । श.चि. ।

**नखनिष्पावः (विका)** । पुं,स्त्री । शिम्बीभेदे । ছোট শিম্, শ্বেত বরবটী । रा.नि.व.७ । See निष्पावी ।

[रा.नि.व.५ ।

**नखपर्णी** । स्त्री । वृश्चिकालीक्षुपे । বিছাতি ।

**नखपुङ्खी (ष्पी)** । स्त्री । स्पृक्कायां । পিড়িং । रा.नि.व.१२ ।

**नखपूर्व्विका** । स्त्री । शिम्बीधान्यविशेषे । হরিত বরবটী । रा.नि.व.७ ।

[च.सू.२०अ. ।

**नखभेदः** । पुं । वातरोगभेदे । कुलत्थादौ ।

**नखरः** । पुं । नखे । अम. ।

**नखरञ्जकः** । पुं । नखरञ्जिनीवृक्षे । মেহেদী গাছ । "तिमिरः कोकदन्ता च द्विवृन्तो नखरञ्जकः ।" वै.द्रव्याभि. ।

**नखरञ्ज(ञ्जि)नी** । स्त्री (Myrtus communis.) वृक्षविशेषे । মেহেদী গাছ । वै.द्रव्याभि. । नखकृन्तन्यां । নরুন । उज्ज्वट: ।

**नखरायुधः** / **नखायुधः** । पुं । नखशस्त्रजन्तुमात्रे । सिंहे । ताम्रचूडे । व्याघ्रे । रा.नि.व.१९ । "शशकशल्लकीगोधामार्जाराद्याः ।" अत्रि.२०अ. ।

**नखराह्वः** । पुं । श्वेतकरवीरवृक्षे । रा.नि.व.१० ।

**नखरी** । स्त्री । नखीनामगन्धद्रव्ये । श.मा. । लघुशिम्ब्याम् । वै.निघ. ।

[चि. ।

**नखविष्किरः** । पुं । नखायुधपक्षिमात्रे । श.

**नखवृक्षः** । पुं । नीलवृक्षे । रा.नि.व.९ ।

**नखशङ्खः** । पुं । क्षुद्रशङ्खे । श.र. ।

**नखशस्त्रम्** । क्ली । नखच्छेदनार्थम् अर्द्धैकैषिकीधारायुक्ताष्टाङ्गुलशस्त्रविशेषे । নরুন প্রভৃতি । "वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च ।" सु.सू.८अ. । तस्य फलं द्व्यङ्गुलायामम् एकाङ्गुलविस्तृतम् । सु.टी.ड. । तच्च छेदनभेदनयोः प्रशस्तं नवाङ्गुलम् । तत्रात्रिः । "वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलं । सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छादलेखने ॥" इति ।

**नखाङ्कम्** । क्ली । नखीनामगन्धद्रव्ये । श.र. । नखक्षते ।

**नखाङ्कुरः** । पुं । नखे । वै.निघ. ।

**नखाङ्गम्** । क्ली । नलीनामगन्धद्रव्ये । र.मा. ।

**नखाभ्यङ्गः** । पुं । नखे तैलमर्द्दने । "तद्विशेषो नखाभ्यङ्गः शिरोनासाक्षि(चि)तापजित् ।" पर्य्यायपारिजातः ।

**नखालिः** । पुं । क्षुद्रशङ्खे । श.च. ।

**नखालुः** । पुं । नीलीवृक्षे । रा.नि.व.६ ।

**नखाशी** (इन्) । पुं । पेचके । त्रिका. ।

**नखी** । स्त्री । स्वल्पनखाख्यगन्धद्रव्ये । (छोटि नखी । "नखं स्वल्पं नखी प्रोक्ता ।" भा. । सा रत्नोघ्नीति राजवल्लभः । नखीमात्रे । "नखी पञ्चविधा प्रोक्ता गन्धाढ्या गन्धवत् परैः । काचिदुत्पलपत्राभा तथोत्पलदलोपमा । काचिदश्वखुराभा च गजकर्णसमा तथा । वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता ॥" च.द.टी. । तत्र वराहकर्णाभा न ग्राह्या । सा द्विधा एका शङ्खनखा अन्या शुक्त्याख्या वदरीच्छदा । र.मा. । सा. गुणाः—ग्रहश्लेष्मवातासज्वरकुष्ठघ्नी लघुः उष्णा वर्ण्या शुक्रला स्वादुः व्रणविषालक्ष्मीमुखदौर्गन्ध्यहरी पाके रसे च कटुः । भा. । उष्णा कटुः विषघ्नी कुष्ठकण्डूव्रणघ्नी भूतविद्रावणी च । रा.नि.व.१२ । शुद्धिः यथा—गोविट्क्वाथेकाञ्चिकेचसुस्विन्ना मधपाचिता नखी शुध्यति । सन्निपात् यथालाभं गोमयादिषु गोमयजलं वा पक्तव्या । वृद्धोपदेशेन घृतेन भर्जयित्वा चर्णी कर्त्तव्या । ततः कुङ्कुमादिगन्धद्रव्येण भावना कार्या । सर्व्वेषां गन्धद्रव्याणां गन्धतोयेन प्रक्षालनभावने कृत्वा रौद्रशुष्कं कर्त्तव्यम् । सा.कौ. । च.द. ।

**नखीत्रयम्** । क्ली । त्रिविधनख्यां । नखी, उत्पलपत्राभा, अश्वखुराभा चेति । च.द.वा.व्या.चि. महाराजप्रसारणीतैले ।

**नखीद्वयम्** । क्ली । कानागड़, कुरकराणी, इति द्वये । च.द.वा.व्य.चि. । "विश्वग्रन्थनखीद्वयम् ।"

**नगः** । पुं । वृक्षे । पर्व्वते । अम. ।

**नगकर्णी** । स्त्री । श्वेतापराजितायां । वै.निघ. ।

**नगगन्धा** । स्त्री । रास्नायाम् । वै.निघ. ।

**नगजः** । पुं । हस्तिनि । अ.टी.सा. ।

**नगजा** । स्त्री । हस्वपाषाणभेदे । रा.नि.व.५ ।

**नगजित्** । पुं । पाषाणभेदके । रा.नि.व.५ ।

**नगणा** । स्त्री । पारावतपद्याम् । वनउच्छे वा लताफटकी । र.मा. ।

**नगपतिः** । पुं । तालवृक्षे । वै.निघ. ।

**नगपर्य्यायकर्णी** । स्त्री । अपराजितायाम् । वै.निघ. ।

**नगभित्** । पुं । पाषाणभेदे । पाथरकुचि । रा.नि.व.५ । करञ्जोड़िपाषाणभेदे । वै.निघ. ।

**नगभूः** । पुं । पाषाणभेदे । रा.नि.व.५ ।

**नगभेदनः** । पुं । करञ्जोड़िपाषाणभेदे । वै.निघ. ।

[लिवत् । अर्क.चि. ।

**नगमालः** । पुं । शालिधान्यभेदे । गुणाः शा-

**नगरघातः** । पुं । हस्तिनि । व्याकरणम् ।

**नगराह्वम्** । क्ली । शुण्ठ्याम् । शुंठि । रा.नि.व.६ ।

**नगरीवकः** । पुं । काके । त्रिका. ।

**नगरोत्था** । स्त्री । नागरमुस्तायां । रा.नि.व.६ ।

**नगरौषधिः** । स्त्री । कदलीवृक्षे । श.च. ।

**नगवृत्तिकः** । पुं । गुड़मञ्जनिकायां वृश्चिकाल्यां वा । सु.चि.२०अ. ।

**नगवृत्तिका** । स्त्री । सल्लकीवृक्षे । सु.चि.१५अ. । कल्प.५अ. ।

**नगाटनः** । पुं । वानरे । त्रिका. ।

**नगाश्रयः** । पुं । हस्तिकन्दनामके महाकन्दशाके । रा.नि.व.७ ।

[पर्व्वतेषि । अम. ।

**नगौकाः** । पुं । सिंहे । मे. । काके । श.च. ।

**नग्नहूः** । पुं । स्फीतौ । नानाद्रव्यकृतसुराबीजे । वाखर इति लोके । भ. ।

[नि.व.१८ ।

**नग्निका** । स्त्री । अनागतार्त्तवकन्यायाम् । रा.

**नटः** । पुं । अशोकवृक्षे । रा.नि.व.१०।२३। श्योणाकवृक्षे । अम. । लोध्रवृक्षे । देवनाले । जटा. । क्ली । परिपेलवृक्षे । रा.नि.व.८ ।

**नटपत्रिका** । स्त्री । वार्त्ताकुवृक्षे । वै.निघ. ।

**नटपर्णम्** । क्ली । त्वचि । ठामड़ा । वै.निघ. ।

**नटभूषणम् ।** क्ली । हरिताले । र.मा. ।

**नटमण्डनम् ।** क्ली । हरितालविशेषे । (गो-दन्ता । प.मु. । हरिताले । रा.नि.व.१३ ।

**नटसंज्ञकः ।** पुं । हरिताले । त्रिका. ।

**नटी ।** स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व. १२ । अशोकवृत्ते । वै.निघ. ।

**नड़ः ।** पुं । नले । नलखागड़ा । रा.नि.व.८ ।

**नड़कीयः(प्रायः) ।** त्रि । नलमयदेशे । हे.च. ।

**नड़मीनः ।** पुं । चिलिचिममत्स्ये । अम. ।

**नतम् ।** क्ली । तगरपादिके । तगरपाठ्का । प.मु. । रा.नि.व.१० । वा.सू.१५अ.भद्रदार्व्वादिः । "भद्रदारु नतं कुष्ठं ।" च.द.सि.यो.यक्ष्म.चि.शत-पुष्पादिलेपे । "शणपुष्पं नतं कुष्ठम् ।" सि.यो. पानीयकल्याणघृते । "स्थिरा नतं हरिद्रे द्वे ।" भा.म.४भ. । "नतवार्त्ताकिनीकुष्ठ......।"

**नतद्रुमः ।** पुं । शालशाले । र.मा. ।

**नतनाड़िका ।** स्त्री । प्रहरद्वयात् सन्ध्यावधि-पर्य्यन्तं काले । वै.निघ. । [श्रम. ।

**नतनासिकः ।** त्रि । चुद्रनासायुक्ते । थ्याँदा ।

**नताङ्गी ।** स्त्री । कर्कटशृङ्गयाम् । मद.व.१ ।

**नदनुः ।** पुं । सिंहे । श.मा. ।

**नदीकदम्बः (म्बा) ।** पुं, स्त्री । गोरचमु-ण्ड्यां, महाश्रावणिकायाम् । रा.नि.व.५ ।

**नदीकान्तः ।** पुं । हिज्जलवृत्ते । हिजल गाछ । रा.नि.व.८ । जलवेतसे । वै.निघ. । सिन्धुवारवृत्ते । मे. ।

**नदीकान्ता ।** स्त्री । काकजङ्घाचुपे । रा.नि.व. ४ । जम्बुकारवेल्लके । छोटि उच्छे । जम्बूवृत्ते । जाम गाछ । मे. ।

**नदीकुठेरकः ।** पुं । नन्दीवृत्ते । रा.नि.व.१२ ।

**नदीकूलप्रियः ।** पुं । जलवेतसे । जटा. ।

**नदीजम् ।** क्ली । स्रोतोऽञ्जने । पुं । अर्ज्जुनवृत्ते । प.मु. । यावनाले । हिज्जलवृत्ते । रा.नि.व.८ । नदीनिष्पावे । रा.नि.व.१६ । खर्ज्जूरीवृत्ते । वै. निघ. ।

**नदीजलम् ।** क्ली । नद्या जले । नदीर जल । सर्व्वा एव नद्यः प्राङ्मुखगा गुरुजलाः पश्चिममुख-गा लघुसलिलाः, देशविशेषगुणानुसारेण गुरुल-घुजलाश्च भवन्ति । तथा विन्ध्यान्निर्गत्य पूर्व्वमुखगा वाताटोपं पश्चिममुखगा पित्तश्लेष्मणाञ्च दक्षिणमु-खगा पित्तोद्रेकम् उत्तरमुखगाः पथ्यपाकञ्च कुर्व्व-न्ति । हिमवद्विन्ध्यमलयसह्यादिप्रभवा नद्यः शिरो-रोगादीन् जनयन्ति । पारियात्रप्रभवाश्च तान् ना-शयन्ति । इति देशविशेषान्नदीजलगुणाः । सामा-न्यनदीजलगुणाः —स्वच्छं लघु पाचनं दीपनं रुच्यं तृष्णाघ्नं पथ्यं मधुरम् ईषदुष्णञ्च । कालभेदान्नदी-जलगुणाः —यथा प्रावृट्कालीननदीजलसेवनात् पीनसकफश्वासकासा जायन्ते, शारदीयनदीजल-पानं पथ्यं वातकफघ्नञ्च, हैमन्तनदीजलपानं बुद्धि-प्रदम्, शिशिरवसन्तकालीननदीजलं सन्तापशमनं तृष्णादाहश्रमिश्रमप्रशमनं, तथा ग्रीष्मनदीजलं स-द्गुणमेव करोति । रा.नि.व.१४ । "तथा प्राच्यङ्ग-साश्चान्याः पश्चिमानुगमाश्च या । ससैकता सपाषाणा द्विविधा चाम्बुवाहिनी । एवं चतुर्विधा नद्यो वा-तपित्तकफात्मिकाः ॥" अथ पाषाणनदीगुणाः— "घनविमलाशलानां स्फालनाज्जातफेनं बहलसज-लवीचीक्षुब्धसर्व्वाभिहृत्सम् । ननु लघु च सुशीतं नाति चीर्णं घनञ्च हरति पवनपित्तं श्लेष्मकृद्धारि सम्यक् ॥" सबालुकनदीगुणाः—"न घनविमल-तोयं सैकतायाः प्रवाहो न च भ[illegible] । लघुत्वं श्ले-ष्मकृद्वन्ति पित्तम् । भवति म[illegible]ं किञ्चिदुष्णं कषायं भवति पवनकारी शीरमूर्च्छां निहन्ति ॥ गङ्गा सरस्वती शोणा यमुना सरयूः शची । वेणा सरावती नीला उत्तरा पूर्व्ववाहिनी । हिमवत्प्रभ-वा होना हिमसम्भवशीतलाः । समाः सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥ आसां नवशतैर्युक्ता गङ्गा प्रोक्ता मनीषिभिः । तथा चर्म्मण्वती वेत्रावती पा-रावती तथा । चिप्रा महानदी पीता मूत्सकन्या मनस्विनी । शिवती शैवलिन्यश्च सिन्धुयुक्ताः समुद्र-गाः । वातपित्तहरं नीरं त्रिदोषघ्नं मतं परम् । श्रमग्लानिहरं वृष्यमुत्तराशानुगामि च ।" इति नद्य उत्तरानुगाः । "तापी तापा च गोखीनी गोमती सलिला मही । सरस्वतीयुता नद्यो नर्म्मदापश्चि-मानुगाः । आसां जलं घनं पीतं पित्तघ्नं वाफकृत्त-या । वातदोषहरं हृद्यं कण्डूकुष्ठविनाशनम् । प-

श्चिमाद्रिसमुद्भूता गौतमी पुण्यभावना। आसां शीतं जलं वापि कफवातविकारनुत्। पित्तदं श-मनं बल्यं मूत्रदोषविकारनुत्। पूर्णा पयस्विनी वेता प्रणीता च वरानना। द्राणा गोवर्द्धनी यान्या गौतम्यनुगता इमाः। कावेरी वीरकान्ता च भीमा चैव पयःस्विनी। विभावरी विशाला च गोविन्दी मदनस्वसा। पार्श्वत्यश्चापरा नद्यो दक्षिणा-दिग्गमा इमाः॥" अचि.७अ.।

**नदीजा।** स्त्री। जलशुक्त्याम्। झिनुक। वै. निघ.। अग्निमन्थवृक्षे। रा.नि.व.९।

**नदीनिष्पावः।** पुं। शिम्बीधान्यविशेषे, कटुशिम्बाम्। मं नदीचेंवर्णे। कं तीरे आवरे। गुणाः—तिक्तः कटुः गुरुः रक्तकरः वातकफदः रुचः कषायः विषदोषहरश्च। रा.नि.व.१६।

**नदीवहलः।** पुं। मेषशृङ्ग्याम्। वै.निघ.।

**नदीभल्लातकः।** पुं। भल्लातकविशेषे, पानीयभल्लातके। प.मु.।

**नदीभवः।** पुं। चुद्रशङ्खे। वै.निघ.।

**नदीमातृकः।** पुं। देशभेदे। यो नद्यम्बुभिः पाल्यते। "नद्यम्बुभिर्भृतधान्यैः नदीमातृक उच्यते।" रा.नि.व.२।

**नदीमाषकम्।** क्ली। शाकभेदे। गुणाः—"विषदं गुरु शीतञ्च समभिष्यन्दि चाच्यते।" च. सू.२७अ.। [व.९।

**नदीया।** स्त्री। अग्निमन्थे। गणिरि। रा.नि.

**नदीवटः।** पुं। वटीवृक्षे, ह्रस्वपत्रवटवृक्षविशेषे। नदीवट। मं दुंजावरु। कं गालिआल। गुणाः—कषायः मधुरः शीतलः पित्तघ्नः तृष्णादाह-भ्रमश्वासच्छर्दिहरश्च। रा.नि.व.११।

**नदीसर्ज्जः।** पुं। अर्ज्जुनवृक्षे। रा.नि.व.९।

**नदेयी।** स्त्री। जलवेतसे। वै.निघ.। भूमिजम्बाम्। श.च.।

**नद्यम्।** क्ली। कृष्णाञ्जने। वै.निघ.।

**नद्याम्रः।** पुं। समष्ठीलवृपे। मं कीतुम्बा। रा.नि.व.४।२३। गुणाः—कटुः उष्णः रुच्यः सुख-शोधनः। दाही दीपनः कफवातघ्नश्च। वै.निघ.।

**नद्यावर्त्तः।** पुं। मत्स्यभेदे। वै.निघ.।

**नध्री।** स्त्री। चर्म्मबन्धन्यां, चर्म्मरज्ज्वां। श.च.।

**नन्दकः।** पुं। नन्दीवृक्षे। कुन्दुरी। भेके। चि-का.।

**नन्दकिः।** स्त्री। पिप्पल्याम्। श.च.।

**नन्दगोपिता।** स्त्री। रास्नायाम्। श.च.।

**नन्दनः।** पुं। मधुनिष्पावे। मुकुटशिम्। प.मु.। भेके। श.र.। क्ली। सरलदेवदारौ। रक्ताञ्जने। वै.निघ.।

**नन्दनजम्।** क्ली। हरिचन्दने। रा.नि.व.१२।

**नन्दनविषम्।** क्ली। तन्नामकवृक्षस्य लक्षारनिर्यासविषे। सु.कल्प.२अ.। See लक्षारनिर्यासविषम्।

**नन्दा।** स्त्री। सुरसायाम्। बाबुईतुलसी। प. मु.। योनिरोगविशेषे। बालस्य तन्नामकमातृका-ग्रहे। तथा च प्रथमे दिने मासि वर्षे वा बाल आक्रान्तो भवति। तेन च ज्वरादिर्भवति। च.द.।

**नन्दा(न्द्या)वर्त्तः।** पुं। तगरपुष्पवृक्षे। तगर फुलेर गाछ। र.मा.। मत्स्यविशेषे। गुणाः—नन्द्यावर्त्तस्तु संग्राही कफपित्तविनाशनः। राज.३प.।

**नन्दिकः।** पुं। नन्दिवृक्षे। श.र.।

**नन्दितरुः (द्रुः)।** पुं। धववृक्षे। भा.।

**नन्दिनकः।** पुं। धववृक्षे। वै.निघ.।

**नन्दिनी।** स्त्री। जटामांस्याम्। रेणुकायाम्। रेणुक। रा.नि.व.६। हरीतक्याम्। मद.व.१। नन्दिवृक्षे। प्रियङ्गौ। गुच्छकरञ्जे। शुक्लापामार्गे। वै.निघ.। चन्द्रशूरे। तोकमारी। भा.।

**नन्दिपादपः।** पुं। नन्दिवृक्षे। वै.निघ.।

**नन्दिवृक्षः।** पुं। कलाये। वै.निघ.।

**नन्दिवृक्षः।** पुं। नन्दिके। मेषशृङ्ग्यां। प.मु.।

**नन्दी (इन्)** पुं, स्त्री (न्दी)। नन्दिवृक्षे। वट-वृक्षे। तुन्नवृक्षे। मे.। गुच्छकरञ्जे। रा.नि.व.९। शुक्लापामार्गे। रा.नि.व.४।

**नन्दीकामुकः।** पुं। पानीयामलके। वै.निघ.।

**नन्दीमुखः।** पुं। वंशधान्यविशेषे। दीर्घगोधूमे। वै.निघ.। शवजातीयपक्षिविशेषे। व्रीहिजातिभेदे। सु.सू.४६अ.। गुणाः—"निःशूकौ दीर्घ-गोधूमः क्वचिन्नन्दीमुखाभिधः।"

**नन्दीमुखा (खी)**। स्त्री। शूकशून्यवे। निद्रायाम्। गोधूमे। वै.निघ.। जलचरपक्षिविशेषे। च.सू.२७अ.। निःशूकगोधूमे। "शुक्ला बृंहणी पथ्या तद्वत् नन्दीमुखा स्मृता।" भा.।

**नन्दीवरलः**। पुं। सागरशङ्खकमत्स्ये। वै.निघ.।

**नन्दीवर्त्तः**। पुं। तगरे। वै.निघ.।

**नन्दीवृक्षः**। पुं। अधोमुखपत्रशाखे अश्वत्थविशेषे। गया अश्वथ। प.मु.। कोङ्कणदेशप्रसिद्धे सुगन्धवृक्षविशेषे। तूण गाछ। हिं वेलियापिपर। तें वह्निचेट्टु। वा.सू.३५अ.अम्बष्ठादिव.। "नन्दीवृक्षपलाशकच्छुराः।" सु.सू.३८अ.न्यग्रोधादिव.। गुणाः—"नन्दीवृक्षो लघुः स्वादुः तिक्तस्तुवर उष्णकः। कटुपाकरसो ग्राही विषपित्तकफास्रजित्॥" भा.। कटुस्तिक्तः शीतः पिपासादाहघ्नः शिरःपीडाघ्नः कुष्ठघ्नः सुगन्धिः पुष्टिवीर्यकरश्च। रा.नि.व.१२। गाम्भार्य्याम्, गर्द्दभाण्डे वा। सु.सू.३८अ.अम्बष्ठादिव.। मेषशृङ्ग्याम्। र.मा.।

**नपुंसकम्**। क्ली,पुं। षण्डपुरुषे। क्लीवे। हिजड़े। तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री। साम्यादुभयोः नपुंसकमिति कारणम्। नपुंसके जाते गर्भचिह्नं यथा—यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणश्च तस्या नपुंसकमिति विद्यात्। नपुंसकं चतुर्विधम्। यथा—आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः। सु.शा.२अ.। तेषां लक्षणादिकं तत्तत्शब्दे द्रष्टव्यम्।

**नप्तृका**। स्त्री। चटकविशेषे। सु.सू.४६अ.। गुडूचिकायाम्। वै.निघ.।

**नभम्**। क्ली। कमले। रा.नि.व.१०।

**नभः**। पुं। श्रावणमासे। श.र.। अम.। (स्) क्ली। आकाशे। पद्मे। अभ्रधातौ। वै.निघ.।

**नभःक्रान्ती** (इन्)। पुं। सिंहे। श.मा.।

**नभःसङ्गमः**। पुं। पक्षिणि। अम.।

**नभश्चमसः**। पुं। चित्रापूपे। मे.।

**नभस्यः**। पुं। भाद्रपदे मासि। अम.।

**नभाः**। पुं। श्रावणमासि। घ्राणे। विसतन्तौ। मे.। पलितशीर्षे। धरणि.।

**नभोऽम्बुपः**। पुं। चातकपक्षिणि। हे.च.।

**नभोरेणुः**। पुं। नीहारे। त्रिका.।

**नभोलयः**। पुं। धूमे। श.र.।

**नमस्कारी**। स्त्री। खदिरिकाशाके, वराहक्रान्तायाम्। वराक्रान्ता। प.मु.। शुक्लज्वालुकायाम्। रा.नि.व.५। वा.सू.३५अ.अम्बष्ठादिव.। "अम्बष्ठामधुकं नमस्कारी।" नीलदूर्व्वायाम्। वै.निघ.।

**नमेरुः**। पुं। सुरपुन्नागवृक्षे। सुरपुन्नाग। छलना। रा.नि.व.१०। सरलदेवदारौ। वै.निघ.। रुद्राक्षे। भूरिप.। भा.।

**नम्रः (कः)**। पुं। वेतसवृक्षे। मद.व.५।

**नयनम्**। क्ली। नेत्रे। रा.नि.व.१८।

**नयनचन्द्रलोहः**। पुं। नेत्ररोगे लौहः। त्रिकटु त्रिफला शृङ्गी शठी रास्ना शुण्ठी द्राक्षा नीलोत्पलं काकोली यष्टिमधुकं बला नागकेशरं बृहती कण्टकारी एषां प्र. २ प. कान्तलौहं १ प. अभ्रं १ प.। आदौ त्रिफलाक्वाथेन ततः तिलतैलेन अन्ते भृङ्गराजरसेन भावयेत्। वटी बदरास्थिवत्। ত্রিকটু, ত্রিফলা, কাঁকড়াশৃঙ্গী, শঠী, রাস্না, শুণ্ঠী, দ্রাক্ষা, নীলোৎপল, কাঁকলা, যষ্টিমধু, বেলেড়া, নাগেশ্বর, বৃহতী, কণ্টিকারী প্রত্যেকে ২ প. কান্তলৌহ ১ প. অভ্র ১ প.। অগ্রে ত্রি[illegible]ক্বাথ তৎপরে তিলতৈল এবং ভীমরাজরস ভাবনা দিবে। বটী কুল আঁটির ন্যায়। भैष.।

**नयनचिन्तकः**। त्रि। दृष्टिविज्ञानकुशले। भा.नै.रा.चि.।

**नयनप्रसादः**। पुं। कतकवृक्षे। वै.निघ.।

**नयनप्लवः**। पुं। नेत्रयोरश्रुपूर्णत्वे। मा.नि.।

**नयनबुद्बुदः**। पुं। नेत्रबुद्बुदे। "विद्याद्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितं। द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदम्॥" सु.उ.१अ.।

**नयनशाणाञ्जनम्**। क्ली। नेत्ररोगे अञ्जनम्। पिप्पलीतण्डुलं सैन्धवलवणं मरिचं रसाञ्जनं कृष्णाञ्जनं समुद्रफेनः शर्करा पुनर्नवा हरिद्रा रक्तचन्दनं यष्टिमधु तुत्थं हरीतकी मनःशिला नि-

स्वपत्रं रौप्यं फटिकारी शङ्खनाभिः कर्पूरं एषां चूर्णं प्र. समं लौहपात्रे ताम्रखण्डेन मधुना मर्द्दयेत्। পিপুলদানা, সৈন্ধব, মরিচ, রসাঞ্জন, শুর্মা, সমুদ্রফেনা, চিনি, শ্বেতপুন্না, হরিদ্রা, রক্তচন্দন, যষ্টিমধু, তুঁতে, হরীতকী, মনছাল, নিমপাতা, লোধ, ফট্‌কিরি, শঙ্খনাভি, কর্পূর—সমভাগ সূক্ষ্মচূর্ণ করিয়া লৌহপাত্রে তাম্র খণ্ড দ্বারা মধুর সহিত মর্দ্দন করিবে। भा.।

**नयनापाङ्गः** । पुं । नेत्रप्रान्ते । अम. ।

**नयनी** । स्त्री । कनीनिकायां । श.च. ।

**नयनोपान्तः** । पुं । अपाङ्गे । रा.नि.व.१८ ।

**नयनोर्द्धगरोमराजिः** । स्त्री । भ्रुवि । ভ্রূ । रा.नि.व.१८ ।

**नयनौषधम्** । क्ली। स्रोतधातुकाशीषे । हे.च.।

**नरः** । पुं । मनुष्ये । नीलवृन्ते । रा.नि.व.९ । क्ली । गन्धतृणे । রামকর্পূর । मे. ।

**नरङ्गम्** । क्ली । शिश्ने । पुं । वरण्डके । নারাঙ্গা । उग्रा. । [याम् । श.र. । त्रिका. ।

**नरनामिका (नी)** । स्त्री । श्मश्रुमत्यां स्त्रि-

**नरप्रियः** । पुं । नीलीवृन्ते । रा.नि.व.९ । पारावते । वै.निघ. । [याम् । हे.च. ।

**नरमालि(नि)नी** । स्त्री । श्मश्रुमत्यां स्त्रि-

**नरमूत्रम्** । क्ली। मानुषमूत्रे । মানুষের মূত্র । गुणाः—आमघ्नं क्रमिविषघ्नं तिक्तोष्णं लवणं रूक्षं भूतघ्नं त्वग्दोषहरं वातहरञ्च । रा.नि.व.१५। "मानुषं चारकटुकं तिक्तोष्णं लघु चोच्यते। चक्षूरोगहरं बल्यं दीपनं कफनाशनम् ॥" "अप्रसूताया घनं मूत्रं प्रसूताया द्रवं लघु । न किं गुणविशेषः स्यात् समता पाकवीर्य्ययोः ॥" अत्रि.९अ. ।

**नरवल्लभः** । पुं । कपोते । वै.निघ. ।

**नरवृन्तः** । पुं । नीलीवृन्ते । रा.नि.व.९ ।

**नरषण्डः** । पुं । गर्भविकारजन्यपुरुषभेदे । পুং নপুংসক । यथा—'मन्दाल्पबीजाल्पबलावहर्षौ क्लीबे च हेतुर्विकृतद्वयस्य ।" च.शा.२अ. ।

**नरसादरः** । पुं । नरसारे । নিষাদল । भैष. महाशङ्खद्रावके ।

**नरसारः** । पुं । निशादल इति ख्याते द्रव्ये । हिं नौसादर । तत्करणविधिः—"औष्ट्रं वा माहिषं गव्यं पुरीषं भस्मतां गतं । चारपाकविधानेन नृसारसिद्धिरुच्यते ॥" गुणाः—"पटुप्रवृत्तिशीलानां स्रावणः शोथहृद्गिमः । यकृद्दोषे ज्वरे प्लीह्नि शिरःशूलेऽर्व्वुदादिषु । स्तनरोगे रक्तपित्ते कासे भग्नामये तथा । योनिव्यापत्सु च ज्ञेयो नरसारः सुखावहः ॥" र.सा.सं. । तच्छुद्धिः—"नरसारो भवेच्छुद्धश्चूर्णतोये विपाचितः । दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये ॥" अत्रि. । सा.कौ. ।

**नरसिंहरूपज्वरः** । पुं । विषमज्वरभेदे । "विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते । तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते ॥" निदा. ।

**नरहरिः** । पुं । राजनिघण्टुकारे ।

**नराधिपः** । पुं। महारग्वधवृक्षे । सु.चि.३७अ.।

**नरी** । स्त्री । मानुष्याम् । जटा. । त्वचायाम् । চামড়া । वै.निघ. ।

**नरेन्द्रः** । पुं । आरग्वधे । काष्टागुरुवृक्षे । सु. चि.१६अ. । विषवैद्ये । मे. । राजिके । त्रिका. ।

**नरेन्द्रद्रुमः** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । भैष.कुष्ठ-चि. । "पूतीकार्कस्नुक्नरेन्द्रद्रुमाणाम् ।" च.द.कुष्ठ-चि. ।

**नरेन्द्राह्वः** । पुं, क्ली । काष्ठागुरुणि । वै.निघ.।

**नर्कुटकम्** । क्ली । नासिकायाम् । हे.च. ।

**नर्त्तकः** । पुं । मयूरे । करिणि । हे.च. । देवनले । श.र. । [रा.नि.व.१२ ।

**नर्त्तका (की)** । स्त्री । नलिकानामगन्धद्रव्ये।

**नर्त्तनप्रियः** । पुं । मयूरे । वै.निघ. ।

**नर्त्तोपहारकः** । पुं। धूलीकदम्बे । वै.निघ.।

**नर्म्मटः** । पुं । खर्परे । খাপর । हारा. ।

**नर्म्मठः** । पुं। कुचाग्रे । श.र.। मैथुने । वै.निघ.।

**नर्म्मदा** । स्त्री । भारतवर्षीयनदीविशेषे । सा विन्ध्यपादवाहिनी । तज्जलगुणाः—लघु शीतलं पथ्यं कफपित्तप्रकोपकरं सर्व्वरोगघ्नं रूच्यं मधुरञ्च । रा.नि.व.१४ । स्पृक्कायाम् । हे.च. ।

**नर्म्मरा** । स्त्री । सरलायाम् । निष्फलायाम् । भस्त्रायाम् । मे. ।

**नलः** । पुं । (Phragmites karka. Syn. Arundo karka.) स्वनामख्यातहणे । दूर्व्वाकाराङ्कुरोऽन्तःशुषिरः स्वनामख्यातः । सु.सू. ३८अ.उ. । नल । मं देवनलु । कं देवनाल । तें किक्केशगडि । अयं द्विविधः क्षुद्रदीर्घभेदात् । तयोः प्रथमः शीतकषायः मधुरः रुचिकरः रक्तपित्तघ्नः दीपनः बलदश्च । देवनलः मधुरः वृष्यः ईषत्कषायः वीर्य्याधिकः रक्षकर्म्मणि प्रशस्तश्च । रा.नि.व.८ । वा.सू.१५अ.वीरतरादिः । "इक्षा-दनीनलकुशद्वयगुण्ड्रगुन्द्राः ।" खग्गड़े । खागड़ा । सु.सु.३८अ.तृणपञ्चमूले । तालीशपत्रे । वै.निघ. वा.व्या.दशमूलादितैले । कदम्बवृक्षे । मातुलुङ्गवृक्षे । देवधान्ये । सुगन्धे । वै.निघ. । क्ली । पद्मे । रा.नि.व.१० ।

**नलकम्** । क्ली । शाखास्थनि । हे.च. । पृष्ठास्थनि । पिठेर हाड़ । रा.नि.व.१८ । पद्मार्च्चे । पद्मबीज । वै.निघ. । भा.म.३भ. ।

**नलकास्थि** । क्ली । नाड़ीवत्सरन्ध्रास्थिपर्व्वसु ।

**नलकिनी** । स्त्री । जानुदेशे । जान्वस्थनि । जङ्घायाम् । हे.च. ।

**नलकीलः** । पुं । जानुदेशे । हे.च. ।

**नलदम्** । क्ली । उशीरवत्पीतक्षविलामज्जके । उशीरभेदे । भा.रेवतीय चि. । "पलङ्कषायं नलदं ।" प्रलापकज्व.चि. । "नलदतुरगगन्धा ।" पुष्परसे । उशीरे । मं. । वै.निघ.दाह.चि.रसादिगुट्याम् । वा.व्या.चि.दशमूलादितैले । जटामांस्यां । सु.सू.३८अ. । च.सू.४अ.अञ्जनादिः । वै. निघ.र.पि.चि.चन्दनादिचूर्णे । च.द.यक्ष्म.चि. लवङ्गाद्यचूर्णे । वा.व्या.एलादितैले ।

**नलदम्बुः** । पुं । निम्बवृक्षे । भूरिप्र. ।

**नलदा** । स्त्री । जटामांस्याम् । रा.नि.व.१२ । उशीरे । परागे । वै.निघ. ।

**नलदाम्बु** । क्ली । उशीरजले । वै.निघ. ।

**नलपट्टिका** । स्त्री । नलनिर्म्मितपट्टिकायाम् । नलेर पाटी, चेटा, माद्रुर । द्वारा. ।

**नलमीनः** । पुं । चिलिचिममत्स्ये । अम. । गुणः—कफकरत्वम् । अत्रि.२२अ. ।

**नलमूलम्** । क्ली । वीरणमूले । वेणार मूल । सु.सू.३६अ. ।

**नलिकः** । पुं । नले । वै.निघ. ।

**नलिका** । स्त्री । इन्दीवरालतायाम् । रा.नि. व.३ । सि.यो.यक्ष्म.चि.चन्दनादितैले । नाड़ीशाके । वै.निघ. । स्वनामख्यातसुगन्धवल्कले । सा च उत्तरापथे तन्नाम्ना प्रसिद्धा सुगन्धा प्रबालाकृतिः प्रबाली इति क्वचित् प्रसिद्धा, पवारी इति च क्वचित् ख्याता । नालुका । मं नलिकाजाई । कं वेतललिके । ते पक्केसुक. सुगन्धिद्रव्यम् । लक्षणम्—"मध्ये सारविहीना या सरसा कीटवर्ज्जिता । नलिका सा भवेच्छ्रेष्ठा··· ॥" भैष. । गुणाः —तिक्ता कटुका तीक्ष्णा मधुरा हिमा क्रिमिघ्नी वार्त्तोदरघ्नी अर्शःशूलघ्नी मलशोधनी च । रा.नि. व.१२ । "नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् । कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डूज्वरापहा ॥" भा. । तन्नामके उदररोगशमनार्थयन्त्रविशेषे । लक्षणं यथा—"द्विद्वारा नलिका पिच्छनलिका वा दकोदरे ।" अत्रि. ।

**नलितः** । पुं । तिक्तपट्टशाके । तेतो पाट वा नालिता पाता । तत्पत्रं तिक्तं पित्तघ्नं शुक्रलञ्च । राज. ।

**नलिनः** । पुं । सारसपक्षिणि । अम. । पानीयामलके । श.च. । क्ली । कमले । रा.नि.व.१० । श्वेतसौगन्धिके । श्वेत शुन्दि । [illegible]अ. । नील्याम् । जले । हे.च. । पद्मकिञ्जल्के । च.सू.३अ. ।

**नलिनकेशरम्** । क्ली । पद्मकेशरे । सु.सू.३८ अ.अञ्जनादिः ।

**नलिनी** । स्त्री । पद्मिन्याम् । पद्मेर झाड़ । रा.नि.व.१० । नलिकायाम् । नालुका । वै. निघ.२भ.अर्शः-चि.विड़ङ्गादिचूर्णलेहे । नारिकेलासवे । चिका. । टी । रा.नि.व.१० ।

**नलिनीरुहम्** । क्ली । मृणाले । पद्मेर डाँ-

**नली** । स्त्री । नलिकानामके गन्धद्रव्ये । रा.नि. व.१२ । मनःशिलायां । विश्व. ।

**नलुका** । स्त्री । नलिकायाम् । नालुका । जातीवृक्षे । वै.निघ. ।

**नलोत्तमः** । पुं । देवनले । रा.नि.व.८ ।

**नल्वकी** (इन्) । पुं । नलै । नल । भैष.यो. व्या.चि. । [१ख. । वा.उ.२८अ. ।

**नल्वण:** । पुं । द्रोणपरिमाणे । १६ शे. । प.प्र.

**नल्ववर्त्मगा** । स्त्री । काकनासायां । श.च. ।

**नव:** । त्रि । नूतने । पुं । रक्तपुनर्नवायाम् । रा. नि.व.५ ।

**नवकार्षिकगुग्गुलु:** । पुं । भगन्दरे हित: । "त्रिफलापुरकृष्णाभिस्त्रिपदैःकांशयोजिता । गुड़िका शोथगुल्मार्शोभगन्दरवतां हिता ।" रस.र.। भा.।

**नवज्वरहरी(वटी)** । स्त्री । नवज्वरे रस: । पारद-गन्धक-विष-त्रिकटु-त्रिफला-शुद्धदन्तीवीजानि प्र. समानि । द्रोणपुष्पीरसे मर्द्दनं गजपुटे पाकश्च । পারা, গন্ধক, বিষ, শুঁট, পিপুল, মরিচ, হরিতকী, বহেড়া, আমলা, শুদ্ধ দন্তীবাজ প্রত্যেকে সমাংশ, হলকষার রসে মর্দ্দন ও গজপুটে পাক করিবে। মাত্রা মাষবৎ। भा. ।

**नवज्वरेभसिंह:** । पुं । नवज्वरे रस: । "शुद्धसूतं तथा गन्धं लौहं ताम्रञ्च सीषकम् । मरिचं पिप्पली विश्वं समभागं विचूर्णयेत् । अर्द्धभागं विषं दद्यात् मर्द्दयेद्वासरद्वयम् ।" পারা, গন্ধক, লৌহ, তামা, সীষ, মরিচ, পিপুল, শুঁট প্রত্যেকে ১ তো. বিষ ।০ তো. জল দিয়া ২ দিন মাড়িবে। र.सा.सं. ।

**नवदलम्** । क्ली । कोमलपत्रे । हड्डचन्द्र: । पद्मकेशरसमीपस्थदले । अम. ।

**नवधान्यम्** । क्ली। प्रत्यग्रधान्ये । নূতন ধান্য । गुणा:—तच्च मालिन्यात् स्रोतसां स्रुतिकफश्लेष्माणं करोति गुरु च । वा.सू.६अ. । अरुणा: । "चणास्तु यवगोधूमतिलमाषा नवा हिता: ।" रा.नि.व.१६।

**नवनी(तम्)** । स्त्री,क्ली। दुग्धजसारे। টাট্কা ননি, মাখন্ । तन्नानादुग्धजत्वात् दशविधं । गव्यं माहिषमाजमाविकं गार्द्दभजमौष्ट्रम् ऐड़कं हास्तिकं मानुष्यमश्वीजञ्चेति। विशेषा: स्वस्वपर्य्याये मृग्या: । सा. गुणा:—शीतं वर्णदं बलदं मधुरं वृष्यं संग्राहकं वातघ्नं कफघ्नं रुच्यं सर्व्वार्शःशूलघ्नं कासघ्नं श्रमघ्नं सुखजनकं कान्तिप्रदं पुष्टिकरं चक्षुष्यञ्च । गव्यं नवनीतं—सर्व्वदोषघ्नम् । नवोद्धृतं —शीतलं रुच्यं मधुरं वृष्यं वातघ्नं कासघ्नं क्रिमिहरं कफजनकं संग्राहि शूलघ्नं । दधिजं नवनीतं —बलपुष्टिकरं तृष्णासन्तापहरं चक्षुष्यं श्रमघ्नं तर्पणं पित्तघ्नञ्च। तथा—"एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धदम् । अहृद्यं सर्व्वरोगाढ्यं दधिजं तद्ध घृतं सममिति ॥" रा.नि.व.१५ । (नीतम्) कुन्दुरुखोटी । भैष.ग्रह.चि.वृहज्जीरकाद्यमोदके ।

**नवनीतकम्** । क्ली, पुं । गन्धके । আমলাসার গন্ধক । र.सा.सं. ।

**नवनीतजम्** । क्ली । घृते । रा.नि.व.१५ ।

**नवनीताह्वयगन्ध:** । पुं । आमलासार, वा लाउया गन्धक इति लोके ख्याते गन्धके । र.सा. सं.नेत्राशनिरसे । [भिष. ।

**नवनीतोद्भवम्** । क्ली । दधनि । घृते । वै.

**नवपल्लव:** । पुं । कोमलपल्लवे । भूरिप्र. ।

**नवफलिका** । स्त्री । अचिरजातरजस्कायां स्त्रियि । मे. ।

**नवमल्लिका (ल्ली) (मालिका)** । स्त्री ! (J. Zambac floribus multiplicatis.) स्वनामख्याते पुष्पवृक्षविशेषे । सा ग्रीष्मोद्भवा । वासन्ती नेयाली सेउती नेवारी इति लोके । বাসন্তী গাছ । मं रोमाली । कं विरवन्तिभेद । वम्. मोगरा । गुणा:—अतिशीता सुरभि: सर्व्वरोगघ्नी च । रा.नि.व.१० ।

**नवयौवना** । स्त्री । युवत्याम् । हारा. ।

**नवरत्नम्** । क्ली । वज्र-मौक्तिक-माणिक्य-नीलमरकत-गोमेद-पद्मराग-वैदुर्य्य-प्रबालेषु नवमणिषु। प.मु. । तद्दैवतानि सूर्य्यादय: । तद्धारणविधि:—"वैदूर्य्यं धारयेत् सूर्य्ये नीलञ्च मृगलाञ्छने । आवनेयेऽपि माणिक्यं पद्मरागं शशाङ्कजे । गुरौ मुक्ता भृगौ वज्रं शनौ नीलं विदुर्बुधा: ॥" दीपिका । तच्छुद्धि:—"विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतस्तथा । पुष्परागञ्च सन्धानै: कुलत्थक्वाथसंयुतै: । तण्डुलीयजलैर्व्वज्रं नीलं नीलीरसेन वा । रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलै: ॥" मारणं यथा—"लकुचक्षारसम्पिष्टै: शिलागन्धकतालकै: । वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटै: खलु ॥" र. वि.७अ. । [तद्दैवते । See नवरत्नम् ।

**नवरत्नदेवता** । त्रि । वज्रादिरत्नानामधिष्ठा-

**नववल्लभम् ।** क्ली । दाहागुरुणि । रा.नि.व. १२ ।

**नवविधानम् ।** क्ली । सूपशाकव्यञ्जनमिष्टौदनोपदंशवितर्दिशसन्धानरोचनेषु । वै.निघ. ।

**नवशस्यम् ।** क्ली । नवीनधान्ये । वै.निघ. ।

**नवसागरम् ।** क्ली । वज्रक्षारे । वै.निघ.२भ. क्षय.चि.च्यवकेसरिरसे । [भ. ।

**नवसूतिका ।** त्रि । नवप्रसूतायां । वा.उ.३३

**नवाङ्गम् ।** क्ली । वातपित्तज्वरे विश्वादिनवद्रव्यजकषाये । "विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः । कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥" শুঁঠ, গুলঞ্চ, মুতা, চিরাতা, শালপাণি, চাকুলিয়া, বৃহতী, কণ্টিকারী, গোক্ষুর । सा.कौ. । अन्यत्—त्रिकटुत्रिफलाचित्रकमुस्तविडङ्गकृतकषाये । च.द.हन्द.ज्व.चि. ।

**नवान्नम् ।** क्ली । नूतनान्ने । See अन्नम् ।

**नवाम्बरम् ।** क्ली । नूतनवस्त्रे । अम. ।

**नवायसचूर्णम् (लौहम्) ।** क्ली । पाण्डुरोगे । त्र्यूषणत्रिफलामुस्तविडङ्गचित्रकाः समाः । नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा । भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् । শুঁঠ, পিপুল, মরিচ, ত্রিফলা, মুতা, বিড়ঙ্গ, চিতা প্রত্যেকে ১ তো. জারিতলৌহ ৯ তো. মাত্রা ১ মা. । सा.कौ. ।

**नवोद्धृतम् ।** क्ली । सद्योजातनवनीते । अम. ।

**नव्यः ।** पुं । रक्तपुनर्नवायाम् । रा.नि.व.५ ।

**नशाकः ।** पुं । काकसदृशपक्षिविशेषे । वै.निघ. । काकभेदे । उणा. । [च. ।

**नश्यत्प्रसूतिका ।** स्त्री । मृतवत्सायाम् । हे.

**नष्टचेष्टता ।** स्त्री । मूर्च्छायाम् । [त्रिका. ।

**नस् (सा) ।** स्त्री । नासिकायाम् । नाड्याम् ।

**नसवल्कः ।** पुं । मत्स्यजातिज्वरे । गजवै. ।

**नस्तः ।** पुं । नासिकायाम् । भा.म.४भ.शि.री. चि. । "सर्पिर्वा नस्ततस्तयोः ।" क्ली । नस्ये । र. मा. ।

**नस्तकर्म्म ।** क्ली । प्रतिमर्षावपीडनस्यप्रधमनशिरोविरेचनेषु पञ्चसु । "नावनञ्चावपीडश्च ध्मानं धूम एव च । प्रतिमर्षश्च विज्ञेयं नस्तकर्म्म च पञ्चधा ॥" च.सिद्धिस्था. । [नेषु । च.सू.१अ. ।

**नस्तप्रच्छर्दनम् ।** क्ली । पञ्चशिरोविरेच-

**नस्तो(स्यो)तः ।** पुं । सनासारज्जुवृषे । नाकफोँड़ा बलद । भ.टी.र. ।

**नस्यम् ।** क्ली । नासायाह्यौषधे । नास, नश्य । नासयौषधस्य आक्रष्यते यत् । "नस्यं तत्कथ्यते धीरैः नासायाह्यं यदौषधम् ॥" नस्यं रेचनस्नेहनभेदेन द्विविधम् । तयो रेचनं कर्षणं, स्नेहनं बृंहणञ्च । तस्य कालः—"कफपित्तानिलध्वंसे पूर्व्वे, मध्येऽपराह्णिके । दिनस्य गृह्यते नस्यं रात्रौ चात्युत्कटे गदे ॥" तच्च नस्यं प्रतिमर्षावपीडनस्यप्रधमनशिरोविरेचनभेदेन पञ्चधा । ऊर्द्ध्वजत्रुादिरोगे अरोचकादौ च वैरेचनिकं नस्यं हितम् । भीरुस्त्रीकृशबालानां स्नेहननस्यं देयम् । बालरोगादौ अवपीड़नम् अत्युत्कटदोषादौ प्रधमनम् । स्नेहिकनस्यमानम् अष्टबिन्दवः । निषेधकालः—"नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चावतर्पितः । तथा नवप्रतिश्यायी गर्भिणी गरदूषितः । अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः । क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ । वेगावधारी श्रान्तश्च स्नातुकामश्च वर्ज्जयेत् ॥" अष्टवर्षात् पूर्व्वं अशीतेरूर्द्ध्वं च न देयम् । भा. । [सर्पं । वै.निघ. ।

**नहुषम् ।** क्ली । तगरे । रा.नि.व.१० । पुं ।

**नहुषाख्यम् ।** क्ली । तगरपुष्पे । रा.नि.व.१० ।

**नक्षत्रम् ।** क्ली । अश्विन्यादिसप्तविंशतितारकासु । सु.सू.५अ. । मौक्तिके । रा.नि.व.१३ ।

**नक्षत्रकान्तिविस्तारः ।** पुं । धवलयावनालाख्यशिम्बीधान्यभेदे । रा.नि.व.१६ । [निघ. ।

**नक्षत्रमालिनी ।** स्त्री । जातीपुष्पवृक्षे । वै.

**नक्षत्रेशः ।** पुं । कर्पूरे । अम. । शुक्तौ । त्रिका. । खण्डे । है.च. ।

**नाकनः ।** पुं । वंशधान्यविशेषे । प.मु. ।

**नाकुः ।** पुं । वल्मीकमृत्तिकायाम् । উইমাটি । भैष.भा.वा.चि.स्वेदे ।

**नाकुली ।** स्त्री । (Vanda roxburghii.) A variety of rásná. स्वनामख्यातमहाकन्द-

शाकविशेषे, रास्नाहये। रास्ना,गन्धरास्ना। प.मु.। नाकुली नायि विषमुंगरीति च लोके। हिं चन्द्रा। तें सर्पच्चिचेट्टु,पत्रचेट्टु। नाकुली द्विधा—नाकुली गन्धनाकुली च। गुणाः—नाकुलीयुगलं तिक्तं कटूष्णं त्रिदोषघ्नं नानाविषघ्नञ्च। द्वितीया तु किञ्चिच्छ्रेष्ठा। रा.नि.व.७। यवतिक्तालतायाम्। श्वेतकण्टकार्य्याम्। रा.नि.व.४। चव्ये। प.मु। मरिचे। शाल्मलिवृचे। मे.।

**नाकुलीद्वयम्।** क्ली। गन्धरास्नायां रास्नायाञ्च। सि.यो.उन्मा.चि.महापैशाचघृते। "वयस्था नाकुलीद्वयम्।"

**नागः।** पुं, क्ली (गं)। शीषधातौ। वत्सनाभे। काटविष। नागकेशरवृचे। प.मु.। वङ्गे। ऊर्द्ध्ववायौ। नागबलायाम्। मेदायाम्। करिदन्ते। मुस्तके। सुरपुन्नागवृचे। रक्ताभ्रके। मे.। हस्तिनि। नागवल्लीलतायाम्। भ.टी.भ.। सि.यो.समशर्करचूर्णे। भैष.भ.पि.चि.पिप्पलीखण्डे। सर्पे। त्रिका.। वीजद्रुमे। अमन वृक्ष। रा.नि.व.२३।

**नागकन्दः।** पु। हस्तिकन्दाख्यमहाकन्दशाके। रा.नि.व.७।

**नागकर्णः।** पुं। रक्तैरण्डे। रा.नि.व.८।

**नागकर्णी।** स्त्री। आखुकर्णीलतायाम्। रा.नि.व.३। श्वेतापराजितायाम्। श.चि.।

**नागकिञ्जल्कम्।** क्ली। नागकेशरपुष्पे। रा.नि.व.८।

**नागकुमारिका (री)।** स्त्री। गुडूच्याम्। रा.नि.व.३। मञ्जिष्ठायाम्। रा.नि.व.६।

**नागकुसुमम्।** क्ली। नागकेशरपुष्पे। वै.निघ. २भ.ज्व.चि.चन्दनबलातैले।

**नागकृष्णा।** स्त्री। गजपिप्पल्याम्। वै.निघ.।

**नागकेश(स)रः (कः)।** पुं। (Mesuaferrea.) स्वनामख्यातपुष्पवृचे। नागेश्वर चाँपा फुलेर गाछ। हिं कावावचिनी। तें नागकेसरालु। ता. नांगल। बम्. नागचम्प। गुणाः—दीपनः पाचनः आमपाचनः अग्निमान्द्यकरश्च। तत्कुसुमं वस्तिवातघ्नं कण्ठशिरोरुजापहञ्च। रा.नि.व.६। "नागपुष्पञ्चषायोष्णं रुचं लघ्वामपाचनम्। ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम्। दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्॥" भा.। "कीटादिकैम रहितमभिनवमिह केवलं ग्राह्यम्।" भैष.। [नागदमन्यां। नागदना। वै.निघ.।

**नागगन्धा।** स्त्री। नाकुलीकन्दे। रा.नि.व.७।

**नागगर्भम्।** क्ली। सिन्दूरे। रा.नि.व.१३।

**नागचम्पकः।** पुं। वनचम्पकवृचे। नागेश्वर चाँपा, बुनो चाँपार गाछ। रा.नि.व.१०।

**नागच्छत्रः (त्रा)।** पुं, स्त्री। नागदन्त्याम्। रा.नि.व.५। (त्रा) नागवल्ल्याम्। वै.निघ.।

**नागजम्।** क्ली। सिन्दूरे। प.मु.। वङ्गे। हे.च.।

**नागजिह्वा।** स्त्री। अनन्तायां। अनन्तमूल। भैष वा.व्या.चि.। र.मा.। मनःशिलायाम्। रा.नि.व.१३।

**नागजिह्विका।** स्त्री। मनःशिलायां। प.मु.।

**नागजीवनम्।** क्ली। वङ्गे। हे.च.।

**नागजीवनशत्रुः।** पुं। हरिताले। वै.निघ.।

**नागतुम्बी।** स्त्री। तुम्ब्याम्। वै.निघ.।

**नागदन्तः (कः)।** पुं। हस्तिदन्ते। मे.।

**नागदन्तिका (न्ती)।** स्त्री। महाराष्ट्रकर्णाटयोः स्वनामख्यातमहाक्षुपे। हातिशुँड़। गुणाः—कटुः तिक्ता रुचा वातकफघ्नी विषघ्नी मेधाकरी पाचनी गुल्मशूलोदरघ्नी च। रा.नि.व.५। स्थूलमूलदन्त्याम्। च.द.। भैष.ना.व्र.चि.। सु.चि.१७अ.। च.वि.८अ.। (का) वृश्चिकाल्यां। विछाति। र.मा.।

**नागदमनी।** स्त्री। (Artemisia vulgaris. Syn. A. Indica.) Indian worm wood. स्वनामख्यातक्षुपे। नागदना। हिं नागचुनी, नागदवन। तें ईश्वरिचेट्टु, दरणम। ता. माचिपत्री। बम्. दवणा। नेपाले तितापात। गुणाः—"बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा। मूत्रकृच्छ्रव्रणान् रक्तौ नाशयेज्जालगर्दभम्। सर्वग्रहप्रशमनी विशेषविषनाशिनी। जयं सर्वत्र कुरुते धनदा सुमतिप्रदा॥" भा.। त्रिदोषघ्नी तीक्ष्णोष्णा कटुः तिक्ता उदराध्मानघ्नी कोष्ठशोधनी च। रा.नि.व.५। वन्ध्याकर्कोटक्याम्। वै.निघ.। [भैष.तक्षराजतैले। पर्णे। पाण।

**नागदलम्।** क्ली। नागदमन्यां। नागदना।

**नागदन्तोपम:** । पुं । पद्मपत्रवृक्षे । पद्मचल फल वा फलमा गाछ । प.मु. । [भैरवरसे ।

**नागदा** । स्त्री । हरीतक्याम् । र.सा.सं.सखन्द ।

**नागद्रु:** । पुं । वृक्षविशेषे । ( तेकाँटा सिजू गाछ । वम्. भैषज्यकाळा । म.च. ।

**नागनामकम्** । क्ली । सीसके । भा. ।

**नागनामा** (न्) । पुं । श्वेततुलसीवृक्षे । कृष्णतुलसीवृक्षे । वै.निघ. । [रा.नि.व.७ ।

**नागपल्ली** । स्त्री । लक्ष्मणाकन्दे । लक्ष्मणामूल ।

**नागपत्रम्** । क्ली । ताम्बूलदले । पान । वै. निघ श्वास-चि.त्रिकटुवटी ।

**नागपत्रा** । स्त्री । नागदमन्याम् । भा. ।

**नागपत्री** । स्त्री । नागदमन्याम् । वै.निघ. ।

**नागपर्णी** । स्त्री । नागवल्लीलतायाम् । वै निघ. ।

**नागपर्यायकर्णी** । स्त्री । श्वेतापराजितायाम् । रा.नि.व.३ । [नायाम् । वै.निघ. ।

**नागपुटभावना** । स्त्री । षोडशपर्णेन भाव

**नागपुरगम्** । क्ली । सीसधातौ । रा.नि.व.१३ ।

**नागपुरीषच्छत्रम्** । क्ली । गजपुरीषजाते छत्राके । वा.उ.३७अ. ।

**नागपुष्प:** । पुं । पुन्नागवृक्षे । मे. । नागकेशरवृक्षे । प.मु. । नागकेसरपुष्पसमपुष्पे महातर्कौ । सु.सू.३८अ.एलादि. । क्ली । नागकेसरपुष्पे । च. द.र.पि.चि.कामदेवघृते । सु.कल्प.२अ. । भा.फ रङ्गरोगे । च.चि.९अ. । नागचम्पके । मे. ।

**नागपुष्पक:** । पुं । कपित्थवृक्षे । स्वर्णयूथिकायाम् । कुष्माण्डे । रा.नि.व.२३ । पुन्नागवृक्षे । नागकेसरवृक्षे । वै.निघ. । [रा.नि.व.७ ।

**नागपुष्पफला** । स्त्री । कुष्माण्डीलतायाम् ।

**नागपुष्पा** । स्त्री । नागदमन्याम् । मन:शिलायाम् । वै.निघ. । [नि.व.१० ।

**नागपुष्पिका** । स्त्री । स्वर्णयूथिकायां । रा.

**नागपुष्पी** । स्त्री । नागदमन्याम् । भा. । स्वर्णयूथिकायाम् । रा.नि.व.१० । पुष्पवृक्षविशेषे । गुणा: —"नागिनी रेचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत् । विनिहन्ति विषं शूलं योनिदोषवमिक्रिमीन् ॥" भा.चर्क.चि. ।

**नागफण:** । पुं । (Opuntia Dillenii, Syn. Cactus Indicus.) वृक्षविशेषे । फणिमनसा । तें ता. नागदलि ।

**नागफल:** । पुं । पटोले । रा.नि.व.३ । कटुपटोले । वै.निघ. । [च.सा.चि.कुङ्कुमवटी ।

**नागफेनम्** । क्ली । अहिफेने । वै.निघ.२भ.

**नागमधूप्रिय:** । पुं । सल्लकीनिर्यासे । धूना । वै.निघ. । [त्यवृक्षे । म.च. ।

**नागबन्धु:** । पुं । उदुम्बरवृक्षे । श.चि. । अश्व-

**नागबला** । स्त्री । (Sida spinosa, Syn. Sida alba.) गौरक्षतण्डुलायाम् । गोरक्षचाकुलिया । हिं गलशकरी ककही । च.द यक्ष्म चि [illegible] । च.चि.१अ.नागबलारसायने । सा.कौ.महाक [illegible] मोदके । नागानामिव बलं यस्या: सा । [illegible] । भा.मु. क्र.चि.नागबलातैले । गौरक्ष.उ.ख. । गुणा: — मधुराम्ला कषाया उष्णा गुरु: कण्डूकुष्ठवातव्रणपित्तघ्नी च । स्निग्धा आयुष्या ग्राहिणी हृद्या मूत्रकृच्छ्रेऽत्ययर्गेषु हिता च । भा. । मधुराम्ला कषाया उष्णा गुरु: कण्डू[illegible]वातव्रणपित्तघ्नी वाजीकरणी च । रा.नि.व

**नागबलातैलम्** क्ली । वातरक्ते तैलम् । तिलतैलं १६ श. । क्वाथार्थं—गोरक्षतण्डुलामूलं १२॥० श. वारि ६४ श. शे. १६ श. छागदुग्धं १६ श. । कल्कार्थं—तगरं यष्टिमधु प्र. ५ प. वा २ श. । तुलाद्रव्ये जलद्रोणा: इति । प.प्र. । तिलतैल १६ श. । काथार्थ—गोरक्षचाकुलिया १२॥० श. जल ६४ श. शे. १६ श. छागदुग्ध १६ श. । कल्कार्थ—तगरपादुका, यष्टिमधु प्रत्येके ८ प. वा २ श. । च.द. ।

**नागभू:** । स्त्री । [illegible] । छोटो पाथरकुचा । रा.नि.व.५ ।

**नागभृत्** । पुं । डुण्डुभसर्पे । चिका. ।

**नागमती** । स्त्री । कृष्णतुलस्याम् । वै.निघ. ।

**नागमाता** । स्त्री । शारिवायाम् । वै.निघ. । मन:शिलायाम् । है.च. । मनसादेव्याम् । श.र. ।

**नागमारः** । पुं । भङ्गराजे । कृष्णराजे । (के-उते । चिका. । चि । हलिमारके ।

**नागरम्** । क्ली । मुस्तायां । मे. । च.सू.२अ. । शुण्ठ्याम् । रा.नि.व.६ । भा. । वा.सू.१५अ.वचादिव. । "नागरातिविषाभया: ।" वा.चि.१अ.दुरालभादि: । शुण्ठ्यां । हरीतक्यां । च.द.सन्निपातज्व.चि.षडङ्गपानीये । च.सू.४अ. । पुं । नागरङ्गवृक्षे । श.र. ।

**नागरकः** । पुं । नागरङ्गवृक्षे । वै.निघ. ।

**नागरक्तम्** । क्ली । सिन्दूरे । हे.च. ।

**नागरघनः** । पुं । नागरमुस्तायाम् । नागरमुता । रा.नि.व.६ ।

**नागरङ्गः** । पुं । (Citrus aurantium.) Orange. जम्बीरविशेषे । कमला लेबु । हिं नाराङ्गी, संत्रा । मं नारङ्ग । तें गंजनिम्म, नारंजिचेट्टु । ता. किचिलिचेट्टु । उत्. नारिङ्गी । गुणा:—तत्फलम् अम्लम् अत्युष्णं वातपित्तहरं सरञ्च । पक्वं स्वाद्वम्लं हृद्यं दुर्जरं वातघ्नञ्च । मद.व.६। मधुरमम्लं गुरु उष्णं रोचनम् आमवातक्रिमिशूलघ्नं श्रमघ्नं बलकरं वृष्यञ्च । रा.नि.व.११ । सुरभि पाके गुरु दुर्जरम् अत्यम्लं मधुरकल्पं हृद्यं वातघ्नञ्च । तत्केशरं रुच्यं वातहरञ्च । राज. । वातघ्नं दुर्जरं गुरु च । सु.सू.४६अ. ।

**नागरमुस्तकम् (स्ता)** । क्ली,स्त्री । (Cyperus pertenuis. Syn. Mariscus cyperus.) नागरदेशप्रसिद्धमुस्तायाम् । नागरमुता। हिं नागरमोथा । तें तुङ्गगड्डलविम् । ता. कुट्टकाच । दा. नगरमोटा । गुणा: – तिक्ता कटु: कषाया शीतला कफघ्नी पित्तज्वरातिसारारुचितृष्णादाहघ्नी श्रमघ्नी च । रा.नि.व.६ ।

**नागरा** । स्त्री । पानीयामलके । वै.निघ. ।

**नागरादिः** । पुं । कषायभेदे । "नागरातिविषामुस्तभूनिम्बामृतवत्सकै: । सर्व्वज्वरहर: क्वाथ: सर्व्वातीसारनाशन: ॥" च.द.अ.सा.चि. । अन्य: —"नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम् ।" च.द.सामान्यज्व चि. । शुण्ठ्यादीनां प्रत्येकं रक्तिद्वयाधिकमाषकत्रयं चतुष्पलजलेन प्रक्वा चतुर्थावशेषयेत् । सा.क्रौ. । अपर:—"नागरं सुरतरुञ्च धान्यकं कुण्टली वृहतिकायुगं निशि ।" अचि.ज्व.चि. । नागरमुस्तायाम् । वै.निघ. ।

**नागराह्वम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**नागरी** । स्त्री । स्नुहीवृक्षे । मनसा गाछ । श.च. । [निघ. ।

**नागरीकन्या** । स्त्री । वन्ध्याकर्कोटिकायाम् । वै.

**नागरुकः** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । श.र. ।

**नागरूपप्रभम्** । क्ली । हरिताले । वै.निघ. ।

**नागरेणुः (कः)** । पुं । सिन्दूरे । रा.नि.व. १३ । (क:) नागकेसरवृक्षे । वै.निघ. ।

**नागरोत्था** । स्त्री । नागरमुस्तायाम् । "नागरोत्था कच्छरुहा ।" रा.नि.व.६ ।

**नागलता** । स्त्री । शिश्ने । त्रिका. ।

**नागवल्लरी** । स्त्री । नागवल्ल्याम् । भा. ।

**नागवल्लिका (ल्ली)** । स्त्री । पत्रशाकविशेषे । नागिता गाछ । ताम्बूलीलतायाम् । पान गाछ । गुणा: – कटुस्तीक्ष्णा तिक्ता पीनसवातघ्नी कफकासहरा रुच्या दाहकृद्दीपनी च । सा स्थानविशेषजातत्वात् बहुधा भिन्नगुणा । तत्र श्रीवाट्यम्लवाटीसातसीसदाशिराम्लसरादय: प्रसिद्धा: । तत्र अम्लसरा मालवे अंगरापर्ण इति ख्याता, आन्ध्रे पोटकलिपर्ण हेसनीया च, घोरसमुद्रदेशे घोरसमुद्रदेशपर्ण इति प्रसिद्धा । श्रीवाटीगुणा:—मधुरा तीक्ष्णा रसाढ्या सरसा रुच्या च। अम्लवाटी—कटुकाम्लतीक्ष्णतिक्ता उष्णा विष्टम्भकरी वातघ्नी च। सातसी—मधुरा तीक्ष्णा कटुरुष्णा पाचनी रुच्या दीपनी च । सदाशिरा –अतिरसा सुगन्धि: रुच्या तीक्ष्णा मधुरा दीपनी पुंस्त्वकरी अतिबल्या विरेचनी मुखसौगन्ध्यकरी च । अम्लसरा—तीक्ष्णा मधुरा रुच्या हिमा दीपनी बल्या मुखामोदिनी गुल्माध्मानादिजिच्च । पटुलिका—कषाया उष्णा कटु: मलकर्षिणी पित्तहृत् वातघ्नी च । हेसनीया —कटुस्तीक्ष्णा हृद्या दीर्घपत्रा रुच्या दीपनी पाचनी च । ताम्बूलं सद्यस्त्रोटितं मुखरोगादिजननं दाहारोचकरक्तदं मलकरं विष्टम्भि वान्तिजननम्। चिरत्रोटितं ताम्बूलदलं जलपोषितं गुणकरं रुच्यं बल्यञ्च । कृष्णं पर्णं तिक्तमुष्णं कषायं दाहजनकं

सुखजाड्यकरं मलजननञ्च । शुष्कं पर्णं वातश्लेष्मरोगघ्नं वृष्यं पथ्यं दीपनं पाचनञ्च । शिरापर्णं रक्तकृत् शैथिल्यजनकञ्च । रा.नि.व.११ । नागवल्लीफलं हृद्यं सुगन्धि कफवातजिच्च । चि.१७अ. ।

**नागवारिकः** । पुं । मयूरे । करीन्द्रे । मे. ।

**नागविद्या** । स्त्री । नागदमनायाम् । नागदन्त्यां । वा.उ.६अ. ।

**नागबीजम्** । क्ली । सीसककृतरसवेधकबीजविशेषे । यथा —"माक्षिकेण हतं ताम्रं नागश्च रञ्जयेन्मुहुः । तं नागं वाहयद्बीजे विंशोऽष्टगुणानि च । बीजन्त्विदं वरं श्रेष्ठं नागबीजमुदीरितम् ॥" र.चि.३अ. । [क्षुपे । प.मु. ।

**नागवृन्ता (न्तिका)** । स्त्री । हस्तिकाली-

**नागशुण्डी** । स्त्री । हस्तिशुण्ड्याम् । वै.निघ.। तामालाख्याम्, डङ्गरीफले । रा.नि.व.७। [निघ.।

**नागश्रीवल्लभः** । पुं । सल्लकीनिर्यासे । वै.

**नागसत्त्वः** । पुं । सिन्दूराख्याम् । वै.निघ. ।

**नागसम्भवम्** । क्ली । सिन्दूरे । अम. ।

**नागसिन्दूरम्** । क्ली । सीसककृतसिन्दूरे । तत्प्रकारं यथा —"भुजङ्गममगस्त्यञ्च पिष्ट्वा पत्रम्प्रलेपयेत् । तत्र संविद्रुते नागे वासामार्गसमुद्भवम् । क्षारं वा मिश्रयेत्तत्र चतुर्थांशं गुरूक्तितः । प्रहरं पाचयेच्चुल्ल्यां वासादर्व्याविघट्टितं । तत उद्धृत्य तच्चूर्णं वासानीरैर्विमर्दयेत् । पुटेत् पुनः समुद्धृत्य तेनैव परिमर्दयेत् । एवं सप्तपुटैर्नागः सिन्दूरं जायते ध्रुवम् । तारस्य रञ्जनो नागः वातपित्तकफापहः । ग्रहणीकुष्ठगुल्मार्शःशोथव्रणविषापहः ॥" र.स.चि.६अ. । [अ.टी.भ.स्वा. ।

**नागसुगन्धा** । स्त्री। रास्नायाम्, सर्पगन्धायां ।

**नागस्फोता** । स्त्री । दन्तीक्षुपे । रा.नि.व.६ । नागदन्तीक्षुपे । रा.नि.व ५ । [व.१२ ।

**नागहनुः** । पुं । नखीनामगन्धद्रव्ये । रा.नि.

**नागहन्त्री** । स्त्री । बन्ध्याकर्कोटक्याम् । रा.नि.व.७ । [कुलीवृक्षे । वै.निघ. ।

**नागा** । स्त्री । नाकुल्याम् । पुत्रदात्र्याम् । ला-

**नागाख्यः** । पुं । नागकेसरे । त्रिका. । अत्रि. १स्थान.२अ. ।

**नागान्तकः** । पुं । मयूरे । गरुड़े । अम. ।

**नागारातिः** । पुं । बन्ध्याकर्कोटकायाम् । रा.नि.व.७ ।

**नागारिः** । पुं। देवदालीलतायाम् । वै.निघ.। बन्ध्याकर्कोटक्याम् । रा.नि.व.३ ।

**नागार्जुनयोगः** । पुं अर्शःप्रभृतिरोगेषु योगविशेषे । त्रिफला पञ्चलवणं कुष्ठं कटुकी देवदारु विडङ्गं निम्बफलं बला गोरक्षतण्डुला हरिद्रा दारुहरिद्रा सौवर्चललवणं प्र. समम् । करञ्जत्वग्रसेन पिष्ट्वा बदरास्थिप्रमाणा गुडी कार्या । तृष्णाजलमार्गेण अर्शसां काञ्जिकेन गुल्मं खदिरजलेन त्वग्रोगं जलेन मूत्रकृच्छ्रं तैलेन हृद्रोगं निगृह्य सर्वज्वरश्च हन्ति । ত্রিফলা, পঞ্চলবণ, কুড়, কটুকী, দেবদারু, বিড়ঙ্গ, নিমফল, বেলেড়া, গোরক্ষচাকুলি, হরিদ্রা, দারুহরিদ্রা, সচললবণ প্রত্যেক সমভাগ। করঞ্জছালের রসে মর্দন। কুলপ্রমাণ গুলী হইবে। च.द. ।

**नागार्जुनवटिका** । स्त्री। नेत्ररोगे हिता। "त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनं । प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश । द्रव्याण्येतानि संचूर्ण्य वर्त्तिः कार्या नताम्बुना ॥" रस.र. । नताम्बु तगरवारि ।

**नागार्जुनाभ्रम्** । । हृद्रोगे औषधम् । "सहस्रपुटनैः शुद्धं वज्राभ्रमर्ज्जुनत्वचः । सत्वैर्विमर्दितं सप्तदिनं खल्ले विशोषितं । छायाशुष्का वटी कार्या नागार्जुनाभ्रकं त्विदम् ॥" रसा.स. ।

**नागार्जुनी** । स्त्री । दुग्धिकायाम् । थिरुई । वै.निघ. । [व.७ ।

**नागालाबुः** । स्त्री,क्ली । कुम्भतुम्ब्यां । रा.नि.

**नागाह्वः** । पुं। वनचम्पकवृक्षे । रा.नि.व.१० । क्ली । नागकेसरपुष्पे । वा.सू.१५अ.अञ्जनादिः । "सैलामधुकनागाह्वम् ।" सि.यो.बाहुशालगुडे । "नागाह्वञ्चापि षट्पलम् ।" च.द.मू.कृ.चि. ।

**नागाह्वयम्** । क्ली । नागकेसरपुष्पे । वा.सू.१५अ.एलादिः । "पुन्नागनागाह्वयम् ।"

**नागाह्वा** । स्त्री । लक्ष्मणाकन्दे । रा.नि.व.७ । नागवल्लीलतायाम् । नागदमन्याम् । वै.निघ. ।

**नागिनी ।** स्त्री । नागदन्तीक्षुपे । रा.नि.व.६। लक्ष्मणाकन्दे । रा.नि.व.७ ।

**नागी ।** स्त्री । बन्ध्याकर्कोटक्याम् । वै.निघ.२भ. जीर्णज्व.चि.कल्याणघृते ।

**नागीयः ।** पुं । नागकेशरे । रा.नि.व.६ ।

**नागेश्वररसः ।** पुं । गुल्मे रसः । पारदः गन्धकः शीषः रङ्गं मनःशिला नृसारदः यवक्षारः सर्ज्जिक्षारः टङ्कणं लौहं ताम्रम् अभ्रं प्र. समम् । वज्रीक्षीरेण मर्द्दनं । पश्चात् वासाचित्रकदन्तीमूलक्वाथेन दिवसं मर्द्दयेत् । मात्रा माषप्रमाणा । পারা, গন্ধক, সীষ, রঙ্গ, মনছাল, নিশাদল, যবক্ষার, সাচিক্ষার, সোহাগা, লৌহ, তাম্র, অভ্র সমভাগ । সিজুর আঠায় মর্দ্দন । পরে বাসক, চিতা ও দন্তীর মূল সমভাগ লইয়া একত্র ক্বাথ করিয়া ১ দিন মর্দ্দন করিবে । মাত্রা ১ মাষ কলায় । भैष. ।

**नागोद(र)म् ।** क्ली । गर्भजरोगविशेषे । "शुक्रशोणितं वायुनाभिप्रपन्नम् अवक्रान्तजीवमाध्मापयत्युदरम्, तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः ।" सु.शा.१०अ. ।

**नाटाम्रः ।** पुं । कालिङ्गकलतायाम् । তরমুজ । त्रिका. ।

**नाड़ः ।** पुं । नले । नল গাছ । रा.नि.व.८ । नाड़ीवल्लतायाम् । च.सू.१अ. ।

**नाड़िः ।** स्त्री । शरीरान्तर्नाड़िकायाम् । अ.टी.भ. । सिंहपिप्पल्याम् । कालशाके । दूर्व्वाभेदे । नाड़ीव्रणे । নালি ঘা । वै.निघ. ।

**नाड़िकम् ।** क्ली । कालशाके । কালকাসুন্দা শাক । भा.पू.१भ.शा.व. । [वै.निघ. ।

**नाड़िका ।** स्त्री । कालशाके । घटपरिमाणे ।

**नाड़िकायन्त्रम् ।** क्ली । यन्त्रविशेषे । বকযন্ত্র, ভাটীযন্ত্র । तस्य लक्षणं यथा—"विनिधाय घटे द्रव्यं कनीयांसमधोमुखं । घटमन्यमुखे तस्य स्थापयित्वोभयोर्मुखं । मृदम्बुभिः समालिप्य नाड़िकां विनिवेशयेत् । यस्मात् कुण्डलिताङ्गित्वा जलद्रोण्यां महीसमां । आधारभाण्डपय्यन्तं ततस्तुच्छ्रां विधारयेत् । अधस्ताज्ज्वालयेदग्निं यावद्बाष्पविशेषतः । गृह्णीयादाधारगतं निर्म्मलं रसमुत्तमम् । नाड़िकायन्त्रमेतद्धि मुनिभिः परिकीर्त्तितम् ॥" इति । अत्रि. । [टी.भ. ।

**नाड़िकेरः (लः) ।** पुं । नारिकेलवृक्षे । अ.

**नाड़िचीरम् ।** क्ली । निर्वेष्टने । नली । हारा. ।

**नाड़िन्धमः ।** पुं । स्वर्णकारे । त्रिका. ।

**नाड़िपत्रम् ।** क्ली । नाड़ीचशाके । श.मा. ।

**नाड़ी ।** स्त्री । शिरायाम् । रा.नि.व.१८ । नासायाम् । नक्षत्रे । रा.नि.व.२३ । नाले । गण्डदूर्व्वायां । मे. । नाड़ीव्रणे । रा.नि.व.२० । ६० पलात्मककाले ।

**नाड़ीकः ।** पुं । पट्टशाके । পাটশাক । কোষ্টার শাক । हिं पटुया । भा.पू.१भ.शा.व. । तत्पत्रं तिक्तमधुरभेदेन द्विविधं, तयोस्तिक्तं क्रिमिकुष्ठहरं ; मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृच्च । शुष्कपत्रं—नलितमित्युच्यते । নালিতা । ज्वरघ्नं पित्तकफज्वरघ्नञ्च । तज्जलञ्च पित्तघ्नं रोचनं व्यञ्जने हितञ्च । राज. । क्ली । कालशाके । हिं कालशाक । गुणाः—"कालशाकं सरं रुच्यं वातकृत्कफशोथहृत् । बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥" भा. ।

**नाड़ीकलापकः ।** पुं । सर्पाक्ष्यां । भा. ।

**नाड़ीकल्पनविधिः ।** पुं । भूमिष्ठस्य नाड़ीच्छेदनविधौ । "नाभिबन्धनात् प्रभृति ह्यष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदनानामन्यतमेन अर्द्धधारेण छेदयेत् । तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत् । तस्य चेन्नाभिः पच्येत तां लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यञ्ज्यात् एषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति ।" च.शा.८अ. ।

**नाड़ीकेर:(लः) ।** पुं । नारिकेलवृक्षे । श.र. ।

**नाड़ीचः ।** पुं । तिक्तपट्टशाके । নালিতা পাতা । "नाड़ीचबीजकल्कः ।" भैष.क्षुद्ररो.चि. । पेचुके । कचू । त्रिका. ।

**नाड़ीचक्रम् ।** क्ली । नाड़ीनिर्णायकग्रन्थे ।

**नाड़ीचरणः ।** पुं । पक्षिणि । त्रिका. ।

कपित्रहीने। गुणा: —बीजवृच्चौ कटू शीतौ कषायौ कुष्ठघ्नौ सारकौ कण्डूदद्रुघ्नौ। तयोरसित: श्रेष्ठ:। रा.नि.व.९। [णे। प.मु.।

**नीलवृन्ता** । स्त्री। कृष्णलाम्बराम्। नील (बो-

**नीलवृन्तकम्** । क्ली। तूणकाष्ठे। तूलि। रा. नि.व.९।

**नीलवृषा** । स्त्री। वार्त्ताकौ। रा.नि.व ७।

**नीलवृच्च:** । पुं। कोङ्कणमालवयो: स्वनामप्रसिद्धे वृचे। गुणा:—"नीलवृचस्तु कटुक: कषायोष्णो लघुस्तथा। वातामयप्रशमनो नानाश्वयथुनाशन:॥" रा.नि.व.९।

**नीलशिग्रु:** । पुं। शोभाञ्जनवृचे। रा.नि.व.७

**नीलशिम्बिका** । स्त्री। शिम्बीभेदे। वै.निघ.।

**नीलशुक:** । पुं। महाविषवृश्चिकजातिभेदे। सु.कल्प.८अ.। [निघ.।

**नीलशोधनी** । स्त्री। नील्याम्। नील। वै.

**नीलषष्टिक:** । पुं। षष्टिकशालिविशेषे। नील-वर्ण सेटे धान। गुणै: गौरषष्टिकात्किञ्चिद्न:। रा.नि.व.१६।

**नीलसस्यम्** । क्ली। वाजरा इति ख्याते शस्ये। वाजरा। वै.निघ.।

**नीलसहाचर:** । पुं। नीलपुष्पझिण्टाम्। हिं नीलपुष्पकटसरैया। भा.म.४भ.मुखरा.चि.। "तुलाघृतं नीलसहाचरन्तु।" भैष.। [व.९।

**नीलसार:** । पुं। नीलवीजासनवृचे। रा.नि.

**नीलसिन्दुक: (का) (वार:)** । पुं, स्त्री। नीलनिर्गुण्ड्याम्। नील निशिन्दा। रा.नि.व.४।

**नीलस्पन्दा** । स्त्री। नीलापराजितायाम्। रा.नि.व.७।

**नीला** । स्त्री। नीलीचुपे। नकुल.१५अ.। नीलपुनर्नवायाम्। लाचायाम्। रा.नि.व.४।५।६। स्पृक्कायाम्। कृष्णजीरके। वै.निघ.। तन्नामकोष्ठे-जत्रुगतमर्मद्वये। तत्स्थानं कण्ठनाडीमुभयत:। सु.शा.६अ.। नीलमक्षिकायाम्। अम.।

**नीलाख्य:** । पुं। नीलमणौ। वै.निघ.।

**नीलाङ्ग:** । पुं। नीलक्रौञ्चपक्षिणि। पारावते। वै निघ.। सारसपक्षिणि। चाषपक्षिणि। रा.नि. व.१९। [क्रिमौ। अम.।

**नीलाङ्गु:** । पुं, स्त्री। गोमक्षिकायाम्। द्वि.।

**नीलाञ्जनम्** । क्ली। रसाञ्जने। तुत्थके। रा. नि.व.१३। सौवीराञ्जने। सफेद सुर्मा। र.मा.। गुणा:—उष्णं रसायनं तिक्तं कटु श्लेष्ममुखनेत्ररोगव्रणदाहघ्नं भेदकञ्च। रा.नि.व.१३। तच्छोधनं —"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं। दिनैकमातपे शुद्धिर्भवेत्कार्य्येषु योजयेत्॥" र.सा. सं.। [कुल। वै.निघ.।

**नीलाञ्जनच्छदा** । स्त्री। जम्बूवृचे। जाम-

**नीलाञ्जना** । स्त्री। वीजवृचे। वै.निघ.।

**नीलाञ्जनी** । स्त्री। कालाञ्जन्याम्। नील कापास। रा.नि.व.४।

**नीलाण्डक:** । पुं। रोहितमत्स्ये। वै.निघ.।

**नीलाद्रिकर्णी** । स्त्री। नीलापराजितायाम्। रा.नि.व.३।

**नीलापराजिता** । स्त्री। नीलपुष्पापराजितायाम्। नील अपराजिता। मं नीलमपली। कं नीलगिरिकर्णिके। गुणा:—शीतला तिक्ता ज्वरदाहरक्तातिसारघ्नी विच्छर्दिकोन्मादमदभ्रमश्वासातिकासघ्नी आमाम्लघ्नी च। रा.नि.व.३।

**नीलाब्जम्** । क्ली। [illegible]कमले। रा.नि.व.१०

**नीलाभ्रम्** । क्ली। कृष्णाभ्रे। नील अभ्र। रा. नि.व.१३। [illegible] अभ्रकम्। [व.६

**नीलाम्बरम्** । क्ली। तालीशपत्रे। रा.नि.

**नीलाम्बुजम् (न्म)** । क्ली। नीलपद्मे। प मु.।

**नीलाम्लान:** । पुं। नीलपुष्पझिण्टीचुपे। नील झाँटी। मं कालाकोराण्ट। कं करियगोरटे गुणा:—कटु: तिक्त: कफवातशूलघ्न: कण्डूकुष्ठव्रणघ्न: शोफत्वग्दोषघ्नश्च। रा.नि.व.१०।

**नीलाम्ली** । स्त्री। स्वनामख्यातफलवृचे। [illegible] नल्लवुलगुड़, कालीपिठोलि। मं अनगन्धि। [illegible] वेलियगिडु। सा श्वेतनीलभेदेन द्विधा। गुणा:-मधुरा रुच्या कफवातहरी च। रा.नि.व.४।

**नीलालुः** । पुं । नीलवर्णालुकविशेषे । नील आलू । मं नीलालु । कं करियगेणसु । गुणाः—मधुरः शीतः पित्तदाहश्रमघ्नश्च । रा.नि.व.७ ।

**नीलाशी** । स्त्री । नीलनिर्गुण्ड्याम् । वै.निघ. ।

**नीलाश्मजम्** । क्ली । तुत्थके । वै.निघ. ।

**नीलाश्मा** । पुं । नीलमणौ । रा.नि.व.१३ ।

**नीलासनः** । पुं । नीलबीजासनभेदे । पियाशालविशेष । गुणाः—कटुः शीतः कषायः कुष्ठकण्डूदद्रुघ्नः सारकश्च । रा.नि.व.६ । [निघ. ।

**नीलाह्वा** । स्त्री । कृष्णापराजितायाम् । वै.

**नीलाक्षः** । पुं । हंसे । वै.निघ. ।

**नीलिका** । स्त्री । कृष्णलौहे । विद्रीतिभाषा। नील्याम् । नील । रा.नि.व.४ । नीलनिर्गुण्ड्याम् । वर्त्तलोहे । रा.नि.व.१३ । क्षुद्ररोगविशेषे । लक्षणं—"कृष्णमेवंगुणं वक्त्रे गात्रे वा नीलिकां विदुः ।" मा.नि. । "शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु । श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥" वा.उ.३१अ. । लिङ्गनाशनामकपैत्तिकदृष्टिरोगे । भा. । See काचः । इन्दीवरालतायाम् । वङ्गे । कान्तलौहे । वै.निघ. । वारिज्वरे । गजवै. ।

**नीलिनी** । स्त्री । नील्याम् । च.सू.२अ. । नीलवृन्ताकायाम् । रा.नि.व.४ । सु.सू.३९अ. । सि.यो.च.श्वा.चि.पञ्चगव्यघृते । "नीलिनीं कटुरोहिणीम् ।" च.द.ज्व.चि. । "नीलिनीमजगन्धाञ्च ।" नीलपुनर्नवायाम् । रा.नि.व.५ । वा.सू.१५अ. । "सुकुशङ्खिनीनीलिनीतिल्वकानि ।" श्वेतबलायां । च.द.गुल्म चि. । "सप्तला नीलिनी वचा ।" श्यामत्रिवृतायां । श.र. । सिंहपिप्पल्याम् । वै.निघ. ।

**नीलिनीफलम्** । क्ली । नीलीबीजे । नीलेर बीज । सु.सू.१अ. ।

**नीली** । स्त्री । स्वनामख्यातक्षुपे । नील गाछ । रा.नि.व.४ । See श्रञ्जिका । नीलवृन्तायाम् । नील वोण । च.द.सन्निपातज्व.चि.अष्टादशाङ्गे । "नीली कम्पिल्लकं त्रिवृत् ।" तन्नामकौषधी, यस्याः चीरं नीलं पुष्पञ्चापि नीलम् । या चानेक लताप्रतानवती भवति । च.चि.१अ. । नीलाञ्जनिकायां, शारदफलायां, सिंहपिप्पलीति डल्वणः । सु.चि.२५अ. । कालाञ्जन्याम् । काल कार्पास । वा.टी.हेमा. । श्रीफलिकायाम् । বেল গাছ । वृन्दारके । "नीलीतुल्यं त्वगेलञ्च ।" "चूर्णं श्यामा त्रिवृन्नीली ।" सु.सू.४अ. ।

**नीलीफलम्** । क्ली । श्रीफले । सु.चि.१७अ. ।

**नीलीवृन्ताकृतिः** । स्त्री । शरपुङ्खायाम् । शरपुङ्खा, वन नील । वै.निघ. ।

**नीलोत्पलम्** । क्ली । (Nymphaea stellata or N. Caerulea.) नीलकमले । नील पद्म, नीलोৎপল । नीलकुमुदे । নীল শুন্দি । हिं नीलोफर । मं नीलोत्पल । कं नेइदिलु । तें नल्लकुलुव । गुणाः—अतिस्वादु शीतलं सुरभि सुखकृत् पाकेऽतितिक्तं रक्तपित्तघ्नञ्च । रा.नि.व.१० । "नीलोत्पलमतिस्वादु शीतं सुखकरं मतं । पाकेऽतितिक्तं सुरभि रक्तपित्तस्य नाशकम् ॥" द्रव्यगुणः । च.अर्शः चि. । तन्मूलगुणाः—गुरु विष्टम्भि शीतलञ्च । राज.३प. ।

**नीलोत्पलिनी (ली)** । स्त्री । नीलकमलिन्यां । নীল পদ্মের ঝাড় । कुमुदिन्यां । শুন্দী বা কুমুদফুলের ঝাড় । रा.नि.व.१० ।

**नीलोदरः** । पुं । महाविषवृश्चिकजातिभेदे । सु.कल्प.८अ. । [नि । रा.नि.व.१३ ।

**नीलोपलः** । पुं । नीलमणौ । নীলকান্ত ম-

**नीवरम्** । क्ली । जले । वै.निघ. ।

**नीवारः** । पुं । Wild variety of Oryza sativa. तृणधान्यविशेषे । উড়ি ধান । हिं तीनी । तें निवरिवड्लु । गुणाः—मधुरः स्निग्धः लघुः पवित्रः पथ्यदश्च । रा.नि.व.१६ । "नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ।" भा.धा.व. । तदन्नगुणाः—"नीवारभक्तं रुचिदो लघुर्दीपनकृद्गुरुः । वातकारी यकृत्प्लीहामव्रणनाशनः ॥" वै.निघ. । रक्तपित्ते हितः । सि.यो.र.पि.चि.खण्डखाद्ये । [धान । र.मा. ।

**नीवारतुण्डिका** । स्त्री । नीवारे । উড়ি

**नीहारः** । पुं । हिमे । শিশির । स च कफवातवर्द्धकः । "शीताधिकः सनीहारः सविद्युत्स्तनयित्नुवान् ।" राज.२प. ।

**नुत्तः** । पुं । क्षुद्रपनसवृक्षे । लकुचवृक्षे । वै.निघ. ।

**नूतनगुड़ः** । पुं । अभिनवगुड़े । नूतन गुड़ । गुणाः—दाहघ्नः तापघ्नः रसनेन्द्रियतर्पणः शीतः सुमधुरश्च । रा.नि.व.१४ । [श्लथ । श्रम. ।

**नूदः** । पुं । ब्रह्मदारुवृक्षे, अश्वत्थभेदे । गंधा अ-

**नूदन्ता (न्ती)** । स्त्री । महामेदायाम् । वै. निघ. ।

**नृपः** । पुं । ऋषभके । ऋषभक । प.मु. । राजादनवृक्षे । खिर्नी गाछ । वै.निघ.२भ.चन्दनादितैले । "चन्दनाम्बु नृपं वाप्यम् ।" नागरपाद-कायाम् । वै.निघ. । [ज । रा.नि.व.७ ।

**नृपकन्दः** । पुं । राजपलाण्डौ । लाल पेयाज

**नृपतरुः** । पुं । आरग्वधवृक्षे । राजादनीवृक्षे । खिर्नी । चि.क.क.४५. ।

**नृपद्रुमः (पादपः)** । पुं । स्वल्पारग्वधवृक्षे । वड़ सोंदाल् । रा.नि.व.६ । भा.ता.र.चि.विफलागुग्गुलौ । राजादनीवृक्षे । खिर्नी । रा.नि.व.११ ।

**नृपप्रियः** । पुं । राजपलाण्डौ । रा.नि.व.७ । रामशरे । रामशर । रा.नि.व.८ । आम्रवृक्षे । रा. नि.व.११ । सारसपक्षिणि । वै.निघ. । वंशभेदे । वेड़ बाँश । श.च. । [व.७ ।

**नृपप्रियफला** । स्त्री । वार्त्ताकीवृक्षे । रा.नि.

**नृपप्रिया** । स्त्री । केतकीवृक्षे । केया गाछ । रा.नि.व.१० । पिण्डीखर्जूरे । शालिधान्ये । वै. निघ. ।

**नृपबदरः** । पुं । राजबदरवृक्षे । रा.नि.व.११ ।

**नृपमाङ्गल्यकम्** । क्ली । आढ़ल्यतर्प । रा. नि.व.४ ।

**नृपमाषः** । पुं । राजमाषे । रा.नि.व.१६ ।

**नृपवल्लभः** । पुं । राजाम्रवृक्षे । राजबदरे । रा.नि.व.११ । ग्रहण्यां रसविशेषे । कज्जलिः ८ तो. जातीफलं (जायफल) लवङ्गं (लवङ्ग) मुस्ता (मुथा) गुड़त्वक् एला टङ्कणक्षारः (सोहागार खइ) जीरकं (जीरा) तेजपत्रं यमानी शुण्ठी सैन्धवं लौहम् अभ्रं ताम्रम् एषां प्र. ४ तो. मरिचं ८ तो. छागीदुग्धेन धात्रीरसेन वा मर्दयेत् । वृहन् यथा—पारदः गन्धकः लौहम् अभ्रं शीषकं चित्रकमूलं चिवन्मूलं टङ्कणक्षारः जातीफलं हिङ्गु गुड़त्वक् एला मुस्ता लवङ्गं तेजपत्रं यमानीद्वयं शुण्ठी सैन्धवं मरिचं रौप्यं प्र. १ तो. स्वर्णभस्म १२ रक्तिकं । आर्द्रकरसेन आमलकीरसेन वा भावयेत् । मात्रा माषकलायमिता । र.सा.सं. ।

**नृपवल्लभघृतम् (तैलम्)** । क्ली । नेत्ररोगे घृतं तैलञ्च । [illegible], तैलं ॥० श. दुग्धं २ श. । कल्कार्थं [illegible] (कुलुथ) ऋषभकः (तरुलोचन) मेदा (अभावे) द्राक्षा (किसमिस) शालपर्णी काष्टकारी वृहती यष्टिमधु वाक्यालकं (वेणुड़) विडङ्गं मञ्जिष्ठा शर्करा (चिनि) रास्ना नीलोत्पलं गोक्षुरं पुण्डरीकं (पुण्डरिया) पुनर्नवा सैन्धवं पिप्पली (पिपुल) प्रत्येकं ॥० तो. । तैलनस्यं घृतसेवनञ्च । भैष. । अथवा तैलघृतयोः प्र. ४ श. दुग्धं १६ श. कल्कद्रव्यं प्र. २ तो । रस.र. ।

**नृपवल्लभा** । स्त्री । केविकापुष्पवृक्षे । रा.नि. व.१० । महाराजचूतवृक्षे । वै.निघ. ।

**नृपात्मजः** । पुं । महाराजचूतवृक्षे । रा.नि. व.११ । आम्रातकवृक्षे । वै.निघ. । स्त्री (जा) । कटुतुम्ब्याम् । र.मा. ।

**नृपान्नम्** । क्ली । शालिधान्यविशेषे, राजान्ने । गुणाः—त्रिदोषघ्नं सुस्निग्धं मधुरं लघु दीपनं बल्यं पथ्यं कान्तिदं वीर्यवर्द्धनञ्च । रा.नि.व.१६ ।

**नृपामयः** । पुं । राजयक्ष्मणि, क्षयरोगे । रा. नि.व.२० । [न्] । प.मु. ।

**नृपार्हम्** । क्ली । शालिधान्ये । दैश्वस्तिक धा-

**नृपावर्त्तः** । पुं, क्ली । राजावर्त्तमणौ । रा. नि.व.१३ । [जपलाण्डौ । रा.नि.व.७ ।

**नृपाह्वयः** । पुं । राजावर्त्तमणौ । प.मु. । रा-

**नृपेष्टः** । पुं । राजपलाण्डौ । रा.नि.व.७ राजबदरवृक्षे । रा.नि.व.११ । नीलीवृक्षे । वै.निघ. ।

**नृपोचितः** । पुं । राजमाषे । बर्बटी । प.मु. । रा.नि.व.१६ । [णौ । रा.नि.व.१८ ।

**नृमाणम्** । क्ली । पादात् ऊर्द्धविस्तृतदोःप्रा-

**नृसारः** । पुं । निषादल इति ख्याते द्रव्ये । महाद्रावके ।

**नेता** । पुं । सिन्धुवारवृक्षे । निशिन्दा । रा.नि. व.४ । निम्बवृक्षे । रा.नि.व.६ ।

**नेत्रम्** । क्ली । दर्शनेन्द्रिये । चक्षुः । रा.नि.व.१८। नेत्रपरीक्षा यथा—वातेन रूक्षं धूम्रमरुणञ्च । पित्तात् पीतरक्तहरितवर्णं सदाहञ्च । कफेन धवलं ज्योतिर्हीनञ्च । भा. । तदुक्तं—"विद्याद्द्व्यङ्गुलबाहल्यं स्वाङ्गुष्ठोदरसम्मतं । द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदं । सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम् । जलं भुवोऽग्निती रक्तं वातात् कृष्णं सितं जलात् । आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे । दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः । नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते । कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः । मण्डलानि च सन्धींश्च पटलानि च लोचने ।" सु.उ.१अ. । तरुमूले । गाछेर शिकड़ । रा.नि.व.२ । च.द.वि.ज्व.चि. । "दीर्घपत्रककर्णाख्यनेत्रम् ।" वस्तिशलाकायाम् । शला इति लोके । यथा—नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढ़ानि गोपुच्छाकाराणि ऋजूनि गुटिकामुखानि । तदभावे नलवंशास्थिसम्भवा । नेत्रप्रणिधानदोषाः षट्, पार्श्वावपीड़ितमत्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तं चलितं विवर्त्तितमिति । अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्रस्वमित्येकादशनेत्रदोषाः । सु.चि.३५अ. । See अनुवासनवस्तिः ।

**नेत्रकर्म्म (प्रसाधनेम्)** । क्ली । सप्तविधनेत्रोपचारेषु । यथा—"सेकश्चाश्च्योतसम्पिण्डी विड़ालस्तर्पणस्तथा । पुटपाकोऽञ्जनं नेत्रे यथावस्थं प्रयोजयेत् ॥" तोड़. । भा. । [अम. ।

**नेत्रच्छदः** । पुं । नेत्रावरणे । चक्षेर पाता ।

**नेत्रधावनम्** । क्ली । चक्षुर्धावने । तस्य विधिः—"दन्तमूर्द्धमधो छन्ना प्रातः सिञ्चेच्च लोचने । तोयपूर्णमुखस्तेन दृष्टिराशु प्रसीदति॥" राज.१प.।

**नेत्रनैर्मल्यकारी** । पुं। खर्परधातौ। वै.निघ.।

**नेत्रपर्य्यन्तः** । पुं । अपाङ्गदेशे । रा.नि.व.१८।

**नेत्रपाकः** । पुं । चक्षुषः पाके। लक्षणं—"कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः । संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ॥" मा.नि. ।

**नेत्रपाषाणः** । पुं । कटुकायाम् । र.मा. ।

**नेत्रपिण्डः** । पुं । विड़ाले । नेत्रगोलके । हारा. । [१ ।

**नेत्रपुष्करा** । स्त्री । रुद्रजटायाम् । रा.नि.व.

**नेत्रबलम्** । क्ली । रसाञ्जने । वै.निघ. ।

**नेत्रभूषणम्** । क्ली । कृष्णाञ्जने । काल सुर्मा । वै.निघ. । [वै.निघ. ।

**नेत्रमङ्गलकारी** (इन्) । पुं । खर्परधातौ ।

**नेत्रमलम्** । क्ली। पिच्चटे । पिचुटी । वै.निघ.।

**नेत्रमीला** । स्त्री । यवतिक्तालतायाम् । रा.नि.व.३ ।

**नेत्ररोगः** । पुं। दृष्टिगतरोगे । चक्षेर रोग । तस्य निदानं—सन्ततदूरेक्षणरोदनकोपशोकाभिघातादिभिर्वातादयः कुपिता नेत्रविकारान् जनयन्ति । ते च रोगाः षट्सप्ततिः । यथा—वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजाः षोड़श, त्रिदोषजाः पञ्चविंशतिः, बाह्यौ द्वौ । ते च पुनः षट्सप्ततिप्रकारा अवयवभेदेन षट्सप्ततिर्भवन्ति । यथा—सन्ध्याश्रया नव, वर्त्मजा एकविंशतिः, शुक्लजा एकादश, कृष्णजाश्चत्वारः, सर्व्वस्थाः सप्तदश, दृष्टिजाः द्वादश, बहिर्जातौ द्वौ चेति । मा.नि. । अपरञ्च नेत्ररोगा यथा—"तोयस्रावः प्रसन्नान्धो नक्तान्धस्तिमिरस्तथा । शुक्लको मुद्गजालञ्च पटलम्बुद्बुदस्तथा ॥ पूयस्रावश्च काचाख्यो रक्तस्रावस्तथैव च । चिपिटी वर्त्मरोगश्च अभिष्यन्दस्तथैव च ॥ वातपित्तकफैर्द्वन्द्वैर्नेत्ररोगा भवन्त्यमी । लिङ्गं चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्व्वशः॥"ज.द.।

**नेत्ररोगहा** । पुं । वृश्चिकाल्याम् । विछाति । रा.नि.व.८ ।

**नेत्ररोम** । क्ली । नेत्रपक्ष्मणि । वै.निघ. ।

**नेत्रवती** । स्त्री । पश्चिमदेशप्रसिद्धभारतवर्षीयनद्याम् । एतज्जलगुणाः—सुमधुरं कान्तिजननं वृष्यं पुष्टिकरं दीपनं पाचनं बल्यञ्च । रा.नि.व.१४।

**नेत्रवर्त्म** । क्ली । दृष्टौ, नेत्रे । वै.निघ. ।

**नेत्रवर्त्मबन्धः** । पुं। नेत्ररोगविशेषे । वै.निघ.।

**नेत्रवस्तिः** । पुं । नेत्रे वस्तिदानप्रकरणे । "नेत्रदेशं परित्यज्य सार्द्धञ्च द्व्यङ्गुलम् । सर्व्वतश्चापि वममीं जलं दत्त्वा प्रमर्द्दयेत्॥ तेन पिष्टेनालवालं

दृढ़ं सन्धिविवर्जितम्। कृत्वालवालं दृक्प्रान्ते शुक्लभागं द्रवेण वै। पूरयेच्च यथापक्ष्म पूरित श्चैव जायते। नेत्रे पर्ण प्रकुर्व्वीत विकारस्तु तथैव च॥ स्वस्थे कफे सन्धिरोगे मात्रा पञ्चशतं विदुः। कफे वाते कृष्णरोगे मात्रा सप्तशतं मता। दृष्टिरोगेष्वष्टशतं अधिमन्थे सहस्रकम्। शुक्लेऽति कुटिले ह्रस्वे स्यात् द्वादशशती मता॥ पित्तरोगे नवशतं सहस्रं वातरोगिणाम्। एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यतेऽथवा॥ द्रवञ्चापाङ्गतो नीत्वा नीलद्रव्यं विलोक्य च। सुखं निरीक्षयेत् पश्चात् नेत्रस्निविधिस्त्वयम्॥ निर्वृत्तिर्व्याधिशान्तिश्च क्रियालाघवमेव च। सम्यक् रोगे सुखसुप्तिर्वैशद्यं वर्णपाटवम्॥ शोकाश्रुपातगुरुता स्नैग्ध्यं स्यादतितर्पिते। रुक्षाविलं सरक्तञ्च नेत्रं स्याद्धीनतर्पितं॥ रुक्षे स्निग्धः क्रमश्चात्र प्रयोज्यः सम्प्रदायतः।" तोड़.। See सु.उ.१८अ.।

**नेत्रविभूषणम्**। क्ली। नीलाञ्जने। वै.निघ.।

**नेत्रवैमल्यकारी** (इन्)। पुं। खर्परधातौ। वै.निघ.।

**नेत्राभिष्यन्दः**। पुं। नेत्रसर्व्वगतरोगे। নেত্র শূল বা চক উঠা। स चतुर्विधः वाताभिष्यन्दः, पित्ताभिष्यन्दः, कफाभिष्यन्दः रक्तजश्चेति। अयं रोगः प्रायेणाधिमन्थादिसर्व्वविधनेत्ररोगाणामाकरः। लक्षणं यथा—"प्रायेण सर्व्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूलाः। वातात्पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः। प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः॥ निस्तोदनस्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोभितापाः। विशुष्कभावाः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति॥ दाहप्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च। उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति॥ उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूपदेहावतिशीतता च। स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥ ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥" सु.उ.६अ.।

**नेत्रामयः**। पुं। नेत्ररोगे। रा.नि.व.२०।

**नेत्रामयहरः**। पुं, स्त्री। खर्परे। वै.निघ.।

**नेत्राम्बु**। क्ली। अश्रुणि। চক্ষের জল। अम.।

**नेत्रारिः**। पुं। स्नुहीवृक्षे। মনসা গাছ। रा.नि.व.८।

**नेत्रार्शः**। क्ली। अक्षिजातार्शसि। तत्र वर्त्माविरोधः वेदनास्रावौ दर्शननाशश्च। सु.नि.२अ.।

**नेत्रास्थि**। क्ली। नयनाधिष्ठाने घ्राणाख्यास्थित्रये। च.शा.७अ.।

**नेत्री**। स्त्री। नाड्यां। श.र.।

**नेत्रोपमः**। पुं। वातामे। বাদাম। भा.।

**नेत्रोपमफलः**। पुं। वातामवृक्षे। भा.।

**नेत्रौषधी**। स्त्री। अजशृङ्ग्याम्। তীত পুঞ্জী, কাঁগা। प.मु.। र.मा.। क्ली। नेत्रहितौषधमात्रे। पुष्पकाशीषे। नीलाञ्जने। নীল শৈরাকস। रा.नि.व.१३।

**नेत्र्यवर्गः**। पुं चक्षुर्हितकरद्रव्यगणे। यथा—"द्विधा रसाञ्जनम्प्रोक्तं त्रिफला लोध्रकद्वयं। कुमारिका च विमला गणोऽयं नेत्र्यसंज्ञकः॥" अर्क.चि.।

**नेदिष्ठः**। पुं। अङ्कोटवृक्षे। जटा.।

**नेपालः**। पुं। कृष्णाक्षौ। वै.निघ.। [नि.व.१३।

**नेपालकम्**। क्ली। ताम्रधातौ। তামা। रा.

**नेपालनिम्बः**। पुं। [illegible]ालतिक्तके। চিরাতা। चिरतिक्ता, नेपालनिंब [illegible] चराइते इति च लोके। गुणाः—"नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा। तिक्तोऽग्निकफपित्तास्रशोफतृष्णाज्वरापहः।" रा.नि.व.९। [कभेदे। भा.पू.१भ.शा.व.।

**नेपालमूलकम्**। क्ली। गजदन्ताकारे मूल-

**नेपालशृङ्गी**। स्त्री। नेपालदेशीयशृङ्गीविषे। নেপালদেশীয় গিঠা বিষ। गुणाः—"नेपालशृङ्गी नैपाली हन्ति सा कफजान् गदान्। वातजान्निखिलांश्चापि सन्निपातोद्भवं ज्वरम्। आमवातं महाघोरं हृद्रोगमपि दारुणम्।" अत्रि.। [निघ.।

**नेपालि(ली)का**। स्त्री। सोमलतायां। वै.

**नेपा**। स्त्री। नवमल्लिकायाम्। সেউতী। रा.नि.व.१०। कस्तूर्याम्। वा.उ.५अ.। मनःशिलायाम्। वै.निघ.हिक्का.चि.धूमे।

**नेपालीयम्** । क्ली । ताम्रे । वै.निघ. ।

**नेपालेक्षुः** । पुं । पुण्ड्रकेक्षौ । পুঁড়ি ইক্ষু । रा.नि.व.१४ ।

**नेमिः (मी)** (इन्) । पुं । शुक्लखदिरे । रा.नि.व.८ । चक्रवाकपक्षिणि । च.द.१अ. । तिनिशवृक्षे । अम. । र.मा. ।

**नेमिवृक्षः** । पुं । श्वेतखदिरवृक्षे । रा.नि.व.८।

**नैकुम्भम्** । क्ली । जैपालवीजे । सा.कौ. ।

**नैगमेषः** । पुं । पितृग्रहसंज्ञके बालरोगे । तदाविष्ट लक्षणं यथा—"यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत प्रततमथो वसासगन्धि र्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥" नैगमेषस्तु पार्व्वत्या सृष्टो मेषाननो ग्रहः । कुमारधारी देवस्य गुहस्यात्मसमः सखा । सु.उ.२७अ. । [त । सु.शा.१०अ. ।

**नैगमेषापहृतः** । पुं । नागोदरे । নাগোদ-

**नैचिकी** । स्त्री । उत्तमायां गवि । अम. ।

**नैचुलम्** । क्ली। हिज्जलवीजे। च.सू.२अ वमन.।

**नैदानिकः** । त्रि । निदानशास्त्रकुशले ।

**नैपालः** । पुं । नेपालनिम्बे । চিরেতা । रा.नि.व.६ ।

**नैपालिकम्** । क्ली। ताम्रधातौ। रा.नि.व.१३।

**नैपाली** । स्त्री । मनःशिलाभेदे । নেপালি মন ছাল । मे. । सु.चि.२अ. । मनःशिलायां। र.मा. । रा.नि.व.१३ । नील्यां । श.र. । नवमल्लिकायाम् । সেউতী । वसन्ती नेवारीति लोके । भा. । रा.नि.व.१० । शेफालिकायाम् । मे. । इक्षुभेदे, नेपालेक्षौ । गुणाः—वातकरः कफपित्तघ्नः कषायो विदाही च । सु.सू.४५अ. । [म. ।

**नैयग्रोधम्** । क्ली। वटवृक्षफले । বটফল । अ-

**नैर्झरजलम्** । क्ली। निर्झरवारिणि । ঝর্ণার জল । "शैलसानुस्रवद्वारिप्रवाहे निर्झरो झरः । स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ।" भा. ।

**नैषधकः** । पुं । निषधदेशीये शालिधान्यभेदे । गुणाः—शालिवत् । च.सू.२७अ. ।

**नोदयन्ती** । स्त्री । नवमल्लिकायां । र.मा. ।

**न्यक्कारुका** । स्त्री । पतङ्गविशेषे, विष्ठाकीटे । हारा. ।

**न्यग्रोधः** । पुं । वटवृक्षे । বট গাছ । रा.नि.व.२३।११ । सु.सू.३८अ.न्यग्रोधादिः । शृतश्रेण्यां, आखुकर्णीलतायाम् । মূষাকাণী । रा.नि.व.२३। शमीवृक्षे । मे. । विषपर्ण्यां । मोहननामौषधौ । विश्व. । [याम् । श.मा. ।

**न्यग्रोधपरिमण्डला** । स्त्री । सुन्दरस्त्रि-

**न्यग्रोधपुटपाकः** । पुं । वटकल्कादिसाध्यपुटपाके । यथा—"न्यग्रोधादेश्च कल्केन पूरयेद्गौरतित्तिरैः । निरन्त्रमुदरं सम्यक् पुटपाकेन तत्पचेत् ॥" अस्य रसो मधुना सर्व्वातिसारे हितः । शार्ङ्ग.म.ख.१अ. ।

**न्यग्रोधादिगणः** । पुं । तदादिद्रव्यवर्गे । यथा—"न्यग्रोधपिप्पलसदाफलरोध्रयुग्म जम्बूद्वयार्ज्जुनकपीतनसोमवल्क-प्लक्षाम्रवञ्जुलपियालपलाशनन्दि-कोलीकदम्बविरलामधुकं मधूकम् ।" इति द्रव्याणि । अन्यः—"न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुककपीतनककुभकोशाम्रचोरकपत्रजम्बूद्वयपियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीशल्लकीरोध्रसावररोध्रभल्लातकपलाशनन्दिवृक्षाश्चेति । गुणाः—"न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः । रक्तपित्तहरो दाहमेदघ्नो योनिदोषहृत् ॥" वा.सू. १५अ. । सु.सू.३८अ. । [रा.नि.व.३ ।

**न्यग्रोधिका** । स्त्री । आखुकर्णीलतायाम्।

**न्यग्रोधी** । स्त्री । द्रवन्त्याम् । বড় দন্তী । रा.नि.व.५ । आखुकर्णीलतायाम् । शृतश्रेण्याम् । रा.नि.व.४ । घुलकुड़ीति कश्चित् । अम.भ. ।

**न्यङ्कुः** । पुं । शम्बरमृगे । शाम्बर इति भाषा । हिं बराहशिङ्गा । मांसगुणाः- स्वादु लघु बल्यं वृष्यं त्रिदोषघ्नञ्च । भा.मांसव. । मणिविशेषे । मे.।

**न्यङ्कुभूरुहः** । पुं । आरग्वधवृक्षे । वै.निघ. । श्योणाकवृक्षे। শোণাপাঠা । त्रिका. ।

**न्यच्छम्** । क्ली । क्षुद्ररोगभेदे । तल्लक्षणं—"मण्डलं महदल्पं वा श्यामं वा यदि वा सितं । सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥" सु.नि. १३अ. । [द्रिषे । क्ली । घासे, तृणे । मे. ।

**न्यचः** । पुं । गण्डके । গণ্ডার । वै.निघ. । म-

**पङ्करुट् (रुहम्)** । क्ली । पद्मे । रा.नि.व.१०।

**पङ्कवारि** । क्ली । काञ्जिके । वै.निघ.।

**पङ्कवासः** । पुं । कर्कटे । रा.नि.व.१९ ।

**पङ्कशुक्तिः** । स्त्री । शुक्तौ । झिनुक । त्रिका.।

**पङ्कशू(षू,सू)रणः** । पुं। पद्मकन्दे । शालूक । त्रिका. ।

**पङ्कारः** । पुं । (Vallisneria, or Tropa bispinosa.) जलजवृत्तविशेषे, कण्टकसेवत्यां । मे. ।

**पङ्किलः** । त्रि । पङ्कमये । मलिने ।

**पङ्कीरः** । पुं । टिट्टिभपक्षिणि । टिटिर पाखी । वै.निघ. ।

**पङ्किज(रुह)म्** । क्ली । कमले । रा.नि.व.१०।

**पङ्क्तिकण्टकः** । पुं । अपामार्गक्षुपे । रा.नि.व.४ ।

**पङ्क्तिकन्दः** । मालाकन्दे । रा.नि.व.७।

**पङ्क्तिचरः** । पुं । कुररपक्षिणि । रा.नि.व.१९ । क्रौञ्चपक्षिणि । श.चि. ।

**पङ्क्तिवीजः (कः)** । पुं । वर्वूरकवृक्षे । बाबला गाछ । रा.नि.व.८ । आरग्वधवृक्षे । कर्णिकारवृक्षे । शोन्दाल, चीनेर करवी गाछ । रा.नि.व.९ ।

**पङ्क्तिशूलः** । पुं,क्ली । परिणामशूले । निदानलक्षणं । "स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा । कफपित्ते समावृत्य शूलकारी भवेद्वली । भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम् । तस्य लक्षणमप्येतत् समासेनाभिधीयते । आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः । स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् । तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तमम् । शूलं शीतशमप्रायं पैत्तिकं तद्वदेद्भिषक् । छर्दिहृल्लाससम्मोहस्वल्परुग्दीर्घसन्ततिः । कटुतिक्तोपशान्तौ च विज्ञेयञ्च कफात्मकम् ॥" इत्यादि । [योविधात् ।" सु.नि.१अ. ।

**पङ्गुः** । पुं । वातव्याधिविशेषे । "पङ्गुः सकथ्नो-

**पङ्गुल(ल्य)हारिणी** । स्त्री । शिगडीक्षुपे । रा.नि.व.४ । [र्य्योर्दिः । शक्ताख्ये ।

**पङ्गुलः** । पुं । एरण्डवृक्षे । वा.सू.१५अ.विदा-

**पङ्गुल्यम्** । क्ली । पङ्गुभावे । रा.नि.व.४ ।

**पचनम्** । क्ली । पाके । पुं । अग्नौ । श.च. । स्त्री (नी) । वनवीजपूरे । रा.नि.व.११ ।

**पचम्पचा** । स्त्री । दारुहरिद्रायाम् । प.मु. । भा.म.१भ.तन्द्रिकज्व.चि. । "मरिचकचपचम्पचावचारुक ।"

**पचा** । स्त्री । पाके । अम. ।

**पचेलुकः** । पुं । पाचके । त्रिका. ।

**पच्यमानज्वरः** । पुं । ज्वरविशेषे । परिणत ज्वर । लक्षणम् —"ज्वरवेगोऽधिकस्तृष्णा क्वर्यतीसारविड्ग्रहाः । मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥" मा.नि. ।

**पञ्चः** । पुं । तिक्तपटोले । वै.निघ. ।

**पञ्चकद्वयम्** । क्ली । जीवनपञ्चमूले ह्रस्वपञ्चमूले च । वा.सू.१५अ. ।

**पञ्चकन्दाः** । पुं । पञ्चसिद्धौषधिविशेषेषु । ते च तैलकन्दक्रोड़कन्दसुधाकन्दरुदन्तीसर्पाख्यात्मकाः । रा.नि.व.२२ । See सिद्धौषधिः ।

**पञ्चकपित्थम्** । क्ली । कपित्थस्य मूलत्वक्पत्रफलपुष्पेषु । वा.उ.३८अ. ।

**पञ्चकर्म्म** । क्ली । वमनविरेकनस्यनिरूहानुवासनेषु । वमनादि पाँचप्रकार क्रिया । "प्रथमं वमनं पश्चात् विरेकश्चानुवासनं । एतानि पञ्चकर्म्माणि निरूहो नावनं तथा ॥" भा. । तेषु न्यूनसप्ताब्दे अतीताशीत्यब्दे च नस्यं, ऊनद्वादशे धूमः, ऊनपञ्चमे कवलः, ऊनदशमे अतिक्रान्तसप्ततौ च शोधनं, न्यूनषोड़शे सप्ततिवार्षिके च रक्तमोक्षणं न देयम् । एतानि दोषनिर्हरणार्थं यथाकालं प्रयोज्यानि । प.प्र.४ख.। विशेषास्तत्तच्छब्दे मृग्याः ।

**पञ्चकषायः** । पुं । वचावासापटोलप्रियङ्गुनिम्बात्मकद्रव्यवर्गे । भा.म.४भ.यो.व्या.चि. । "चूर्णैः पञ्चकषायजैः ।" भैष.कर्णरो.चि. ।

**पञ्चकोरः** । पुं । जलकुक्कुभे । त्रिका. ।

**पञ्चक्षत् (त्यः)** । पुं । पर्कटीवृक्षे, पक्षौड़वृक्षे । रा.नि.व.८ ।

**पञ्चकृष्णः** । पुं । सौम्यकीटभेदे । सु.कल्प.८अ. । See कीटः ।

**पञ्चकोलम्** । क्ली । पिप्पल्यादिपञ्चद्रव्यकृतकषाये । পিপুল, পিপুলমূল, চই, চিত্রকমূল, শুঁট সমভাগ । "पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् । कोलमात्रीपर्यायित्वात् पञ्चकोलकसंज्ञितम् ॥" सि.यो.च.द.वा.कफज्व.चि. । गुणाः—रसे पाके कटुकं रुच्यं तीक्ष्णोष्णं पाचनं दीपनं वातकफघ्नं गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनञ्च । भा.पू.१भ. ।

**पञ्चकोलघृतम्** । क्ली । गुल्मे घृतम् । "पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः । पलिकैः सयवक्षारैः घृतप्रस्थं विपाचयेत् । क्षीरप्रस्थञ्च तत्सर्पिर्हन्ति गुल्माङ्कफात्मकम् ॥" गव्यघृत ४श. । কল্কার্থ—পঞ্চকোল যবক্ষার প্রত্যেকে ১প.। দুগ্ধ ৪শ । च.चि.५अ. ।

**पञ्चगणः** । पुं । विदारीकन्दः बृहती पृश्निपर्णी निदिग्धिका श्वदंष्ट्रा चेति गणविशेषे । ভুঁই কুমড়া, বৃহতী, চাকুলে, কণ্টিকারী, গোক্ষুর । रा.नि.व.२२ ।

**पञ्चगव्यम्** । क्ली । समभागगोमूत्रगोमयदधिदुग्धघृतेषु । গোময়, গোমূত্র, দধি, দুগ্ধ, ঘৃত সমান । "गोमूत्रङ्गोमयङ्क्षीरं गव्यमाज्यं दधीति च । युक्तैतद्यथायोगं पञ्चगव्यमुदाहृतम् ॥" रा.नि.व.२२ । अत्र दुग्धगोजलघृतानां प्र. १ प. गोमयं ३ तो. दधि २ प. । गारुडम् ।

**पञ्चगव्यघृतम्** । क्ली । अपस्मारे घृतम् । गव्यघृतं ४ श. गोमयरसः अम्लदधि दुग्धं गोमूत्रं प्र.४श. यथाविधि पचेत् । बृहद्यथा—गव्यघृतं ४ श. क्काथार्थे—दशमूलं प्र.२प. त्रिफला प्र. २ प. हरिद्रा दारुहरिद्रा कुटजत्वक् सप्तपर्णत्वक् अपामार्गमूलं नीलीमूलं कटुकी आरग्वधफलमज्जा काकोदुम्बरिकामूलं कुष्ठं दुरालभा च, एषां प्र. २प. वारि ६४ श. शे. १६ श. । कल्कार्थे—भार्गीमूलं पाठामूलं त्रिकटु त्रिवृता हिज्जलबीजं गजपिप्पली तुवरीमूलं (অরহরমূল) मूर्व्वामूलं दन्तीमूलं भूनिम्बं चित्रकमूलं श्यामालता अनन्तमूलं मञ्जिष्ठा गन्धतृणं (রামকর্পূর) मदनफलम्, एषां प्र. २ तो. गोमयरसः गोमूत्रम् अम्लदधि दुग्धम् एषां प्र.४श. यथाविधि पचेत् । च.द.। च.चि ३५अ. ।

**पञ्चगुप्तः** । पुं । कच्छपे । श.र. ।

**पञ्चगुप्ता (प्तिः, रसा)** । स्त्री । स्पृक्कायाम् । পিড়িং শাক । रा.नि.व.१२ ।

**पञ्चजटा** । स्त्री । पञ्चमूली । च.द. । "पञ्चजटा घृतदुग्धजनस्यम् ।"

**पञ्चजनः** । पुं । पुरुषे । वै.निघ. ।

**पञ्चतत्त्वम्** । क्ली । क्षित्यप्तेजोमरुद्व्योमसु पञ्चभूतेषु । मद्यमांसमत्स्यमुद्रामैथुनेषु । तन्त्रम् ।

**पञ्चता (त्वम्)** । स्त्री, क्ली । मृत्यौ । अम. ।

**पञ्चतिक्तः (कः)** । पुं । पञ्चविधतिक्तद्रव्यगणे, तत्कषाये वा । तद्विधा—कण्टकारी गुडूची शुण्ठी कुष्ठं किराततिक्तञ्च । च.द.पि.श्लेष्म.ज्व.चि. । अन्यः—निम्बमूलत्वक् पटोलपत्रं वासात्वक् कण्टकारी गुडूची चेति । भा. ।

**पञ्चतिक्तघृतम्** । क्ली । कुष्ठाधिकारे घृतम् । गव्यघृतं ४ श. । क्काथार्थे—निम्बमूलत्वक् पटोलपत्रं कण्टकारी गुडूची वासामूलम्, एषां प्र. १० प. वारि ६४ श. शे. १६ श.। कल्कार्थे—त्रिफला १ श. यथाविधि पचेत् । भैष. । अन्यत् विस्फोटाधिकारे—गव्यघृतं ४ श. । क्काथार्थे—पटोलपत्रं सप्तपर्णमूलत्वक् निम्बमूलत्वक् वासामूलत्वक् गुडूची त्रिफला, एषां प्र. ६ प. २ तो. वारि ६४ श. शे. १६ श. । कल्कार्थे त्रिफला १ श. यथावत्पाच्यम् । रस.र. ।

**पञ्चतिक्तघृतगुग्गुलुः** पुं । कुष्ठाधिकारे । गव्यघृतं ४ श. । क्काथार्थे—निम्बत्वक् (নিমছাল) गुडूची (গুলঞ্চ) वासामूलं (বাসকমূল) पटोलपत्रं कण्टकारी, एषां प्र.१० प. जलं ६४ श. शे. ८श. । कल्कार्थे—पाकनादीमूलं विडङ्गं देवदारु गजपिप्पली यवक्षारः सर्ज्जिक्षारः (সাজিমাটী) शुण्ठी हरिद्रा शतपुष्पा चव्यं (চই) कुष्ठं (কুড়) ज्योतिष्मती (লতাফট্কী) मरिचम् इन्द्रयवः यमानी चित्रकमूलं (চিতামূল) कटुकी भल्लातकं (ভেলা মুটি) वचा पिप्पलीमूलं मञ्जिष्ठा अतिविषा (আতইচ) त्रिफला वनयमानी, एषां प्र. १ तो. शुद्धगुग्गुलुः ५ प. । (गुग्गुलोः पोट्टलं बद्धा दोलायन्त्रेण कल्कैः सह घृतं पक्तव्यम्) । पाके सति कल्कं क्षालयित्वा पुनर्गुग्गुलुना सह पक्का गृहीतव्यम् । सा.कौ. ।

**ञ्चतृणम्** । क्ली । कुशकाशशरदर्भेक्षुस्वल्पतृण ञ्चमूले । "कुशः काशः शरो दर्भ इक्षुश्चैव तृणो-द्भवम् । पञ्चतृणमिदं ख्यातं तृणजम्पञ्चमूलकम् ॥" ।.प्र.१ख. । अन्यच्च—"शालीक्षुकुशकाशौ स्यात् ारेण तृणपञ्चकम् । एषां मूलं तृषादाहपित्तास्र-मूत्रसङ्गहृत् ॥" भा. ।

**ञ्चथः** । पुं । कोकिले । वै.निघ. ।

**ञ्चनखः** । पुं । व्याघ्रे । रा.नि.व.१९ । कच्छ-। । जटा. । गजे । त्रिका. । व्याघ्रशरभशार्दूलगो-ाककच्छपशरटसिंहेषु । भक्ष्यपञ्चनखाः—"शशकः ल्लको गोधा खड्गी कूर्म्मश्च पञ्चमः ।" स्मृतिः ।

**ञ्चनखरः** । पुं । गोधायाम् । গোসাপ । .निघ. ।

**ञ्चनिदानम्** । क्ली । रोगज्ञानस्य पञ्चविधो-ायेषु । यथा—"निदानं पूर्व्वरूपाणि रूपाण्युप-यस्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा ातम् ॥" मा.नि. ।

**ञ्चनिम्बम्** । क्ली । समभागत्वक्पत्रफलपुष्प-लरूपे निम्बपञ्चके । "निम्बस्य पत्रत्वक्पुष्पफल-ूलैविमिश्रितैः । पञ्चनिम्बं समाख्यातं तत्तिक्तं म्बपञ्चकम् ॥" रा.नि.व.२२ ।

**ञ्चपत्रः** । पुं । चण्डालकन्दे । रा.नि.व.७ ।

**ञ्चपत्रिका** । स्त्री । गोरक्ष्याम् । रा.नि.व.५।

**ञ्चपर्णि(र्णी)का** । स्त्री । गोरक्ष्यां, गोरक्ष-ञ्चायाम् । रा.नि.व.५ ।

**ञ्चपल्लवम्** । क्ली । आम्रजम्बूकपित्थवीजपूर-ल्वपल्लवेषु । আম, জাম, কয়েৎ, টাবা ও ল্বপত্র । "आम्रजम्बूकपित्थानां वीजपूरकविल्व-ः । गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम् ॥" .प्र.१ख. ।

**ञ्चपित्तम्** । क्ली । मत्स्यमहिषवराहमयूरच्छा-पित्तेषु । মাছ, মহিষ, শূকর, ময়ূর, ছাগ ই-দের পিত্ত । "वराहच्छागमहिषमत्स्यमायूर-त्तकं । पञ्चपित्तमिति ख्यातं सर्व्वेष्वेव हि कर्म्म-॥" वै.संग्रहः । तेषां शुद्धिः—मत्स्यादिपित्तं म्बद्रावैर्विभावितं शुद्धिमायाति । सा.कौ. ।

**ञ्चप्राणाः** । पुं । प्राणापानव्यानोदानसमाना-षु पञ्चविधदेहान्तर्वायुषु । सु. ।

**पञ्चबला** । स्त्री । बलातिबलानागबलाराजब-लामहाबलासु । वै.निघ. ।

**पञ्चबुद्धीन्द्रियम्** । क्ली । पञ्चज्ञानेन्द्रियेषु । स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रञ्चेति । च. ।

**पञ्चभद्रम्** । क्ली, पुं । गुडूचीपर्पटमुस्तकिरात-विश्वभेषजेषु । গুলঞ্চ, ক্ষেৎপাপড়া, মুতা, চি-রাতা ও শুঁট । "गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् । पञ्चभद्रम् ।" सि.यो.च.द.ज्व.चि. ।

**पञ्चभूतम्** । क्ली । क्षित्यप्तेजोमरुद्व्योमसु । च. ।

**पञ्चभृङ्गम्** । क्ली । देवताड़शमीभङ्गातालीश-निर्गुण्डीषु । দেয়াতাড়া, শাঁই, সিদ্ধি, তালীশ-পত্র ও নিশিন্দা । वै.निघ. ।

**पञ्चमम्** । क्ली । मैथुने । तन्त्रम् ।

**पञ्चमकारम्** । क्ली । मद्यमांसमत्स्यमुद्रामैथुन-रूपे मकारपञ्चके । तन्त्रम् ।

**पञ्चमास्यः** । पुं । कोकिले । श.र. । [व.१९।

**पञ्चमुखः** । पुं । सिंहे । पिङ्गलसिंहे । रा.नि.

**पञ्चमुखी** । स्त्री । वासकक्षुपे । বাসক গাছ । रा.नि.व.४ ।

**पञ्चमुष्टिः (कः) (ष्टी)** । पुं,स्त्री । सान्निपा-तिकज्वरे यूषविशेषे । আহার দ্রব্যবিশেষ । स च यवबदरीफलकुलत्थमुद्गकाष्ठामलकानामेकैकां मुष्टिं गृहीत्वाष्टगुणतोये पक्वः । च.द.सन्निपात-ज्व.चि. । "यवकोलकुलत्थानां मुद्गमूलकशुष्कयोः । एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले । पञ्चमुष्टिक इत्येष वातपित्तकफापहः । शूलं प्रशस्यते गुल्मे कासे श्वासे क्षये ज्वरे ॥" ८ तोलके । वै.निघ.२ भ.क्षय.चि.सूर्य्यप्रभायां । स्पृक्कायाम् । वै.निघ. ।

**पञ्चमूत्रम्** । क्ली । मूत्रपञ्चके, तत्र गर्द्दभोगो-मेषीच्छागीमहिषीजमिश्रितमूत्रे । "गवामजानां मे-षीणां महिषीणाञ्च मिश्रितम् । मूत्रेण गर्द्दभीना-ञ्च तन्मतं मूत्रपञ्चकम् ॥" रा.नि.व.२२ । गुणास्त-त्तच्छब्दे मृग्याः ।

**पञ्चमूलम् (ली)** । क्ली,स्त्री । पञ्चानां मूलानां समष्टौ । तानि च वृहत्स्वल्पतृण-शतावरी-जीवन-बला-गोक्षुर-गुड़ूच्यादिकानि नवविधानि प्रत्येकं पञ्चपञ्चमूलात्मकानि भवन्ति । १ । "बिल्वश्योणा-

**पञ्चशुक्लः ।** पुं । सौम्यकीटजातौ । सु.कल्प.८ अ. । See कीटः ।

**पञ्चशूरणम् ।** क्ली । शूरणपञ्चके अत्यम्लपर्णीकाण्डीरमालाकन्दशूरणारण्यशूरणात्मके । "अत्यम्लपर्णीकाण्डीरमालाकन्दद्विशूरणैः । प्रोक्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥" रा.नि.व.२२।

**पञ्चशैरीषम् ।** क्ली । शिरीषवृक्षस्य फलपत्रत्वङ्मूलपुष्पेषु समभागेषु । "शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययं । कीटारिः कथितो योगः पञ्चशैरीषकाभिधः ॥" रा.नि.व.२२ ।

**पञ्चसर्पिणी ।** स्त्री । ओषधिविशेषे । लक्षणं— मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चसर्पिणी । पञ्चारत्निप्रमाणा ।" सु.चि.३०अ. ।

**पञ्चसार(राख्य)पानकम् ।** क्ली, पुं । पानकभेदे । पानाविशेषे । स चाभिनवमृत्पात्रस्थः कदलीपनसामिर्श्रोऽम्लरसमिश्रश्च । तदुक्तं —"द्राक्षामधूकखर्ज्जूरकाश्मर्य्यैः सपरूषकैः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ।" वा.सू.५अ. । काश्मीरमधुखर्ज्जूरमृद्वीकाफालसाफलं । तेषां जलं गृहीत्वा तु एकीकृत्य चिपेदमून् । चातुर्जातेन्दुमरिचशर्करार्द्रकादिकान् । वस्त्रेण गालयित्वा तत् पञ्चसाराख्यपानकम् । गुरु हृद्यं धातुकरं पित्तहृत् श्रमदाहनुत् ॥" वै.द्रव्यगुणः ।

**पञ्चसाराम्बु ।** क्ली । खर्ज्जूरादाम्बुनि । "मधुखर्ज्जूरमृद्वीकापरूषकासिताम्भसा ।" वा.चि.२अ. ।

**पञ्चसिद्धौषधी ।** स्त्री । पञ्चकन्दात्मकसिद्धौषिषु । रा.नि.व.२२ । See सिद्धौषधी ।

**पञ्चसुगन्धिकम् ।** क्ली । कर्पूरकक्कोललवङ्गजातीफलपूगेषु । "कर्पूरकक्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन । समांशभागेन च योजितेन मोहरं पञ्चसुगन्धिकं स्यात् ॥" रा.नि.व.२२ ।

**पञ्चक्षारम् ।** क्ली । यवपलाशसर्ज्जतिलमुष्कजक्षारेषु । "यवमुष्ककसर्जानां पलाशतिलयोस्तथा । क्षारैश्च पञ्चभिः प्रोक्तं पञ्चक्षाराभिधो गणः ॥" रा.नि.व.२२ । पञ्चलवणे । वै.निघ. ।

**पञ्चक्षीरवृक्षः ।** पुं । वटाश्वत्थोदुम्बरपर्कटीप्लक्षाख्येषु । बट, अश्वथ, यज्ञडुमुर, पाकुड़, पाकुड़ । सि.यो.यक्ष्म.चि.सर्पिर्गुडे । अन्यः उदुम्बरवटाश्वत्थवेतसप्लक्षेषु वर्णते । "उदुम्बरो वटो-ऽश्वत्थो वेतसः प्लक्ष एव च ।" प.प्र.१ख. । वेतसोऽत्र गन्धमुण्ड इति उत्तरदेशे प्रसिद्धः । प्लक्ष इति वटः । अथवा पर्कटीत्यश्वत्थभेदः । प.प्र.१ख. । See क्षीरवृक्षः ।

**पञ्चाङ्गम् ।** क्ली । योगविशेषः । स चैकस्य वृक्षस्य समभागमिलितत्वक्पत्रफलमूलपुष्पात्मकः । "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः । एकत्र मिलितं तच्चेत् पञ्चाङ्गमिति संज्ञितम् ॥" रा.नि.व.२२ । पुं । कच्छपे । श.मा. ।

**पञ्चाङ्गगुप्तः ।** पुं । कच्छपे । त्रिका. ।

**पञ्चाङ्गिकपञ्चगणः ।** पुं । स्वल्पमहत्तृणवल्लीकण्टकसंज्ञकेषु पञ्चमूलेषु । सि.यो.तृष्णा.चि. ।

**पञ्चाङ्गीबन्धः ।** पुं । पञ्चाङ्गुलाकारव्रणबन्धविशेषे । "चिवुके चापि पञ्चाङ्गी हनुसन्धौ विसंश्लिते । स्वेदयित्वा स्थिते सन्धौ कुर्यात्पञ्चाङ्गुलाकृतिम् ॥" सु.शा.उ. । सु.चि.३अ. ।

**पञ्चाङ्गुलः ।** पुं । श्वेतैरण्डे । एरण्डवृक्षे । रा.नि.व.८ । क्ली । तेजपत्रे । वै.निघ. ।

**पञ्चाङ्गुली ।** स्त्री । तजाक्षुपे । रा.नि.व.४ । ऊर्द्ध्वजत्रुजव्रणस्य बन्धनविशेषे । सु.सू.१८अ. ।

**पञ्चाज्यम् ।** क्ली । छागदध्यादिपञ्चके । वै.निघ.२भ.जीर्णज्व.चि. ।

**पञ्चात्मा ।** पुं । शरीरान्तर्वायौ । यथा —"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।" निदा. ।

**पञ्चाननः ।** पुं । शिवे । सिंहे । मे. ।

**पञ्चाननरसः ।** पुं । हृद्रोगाधिकारे रसः । पाठः —"सूतगन्धौ द्रवैर्धात्र्या मर्दयेद्वीतवीद्रवैः । यष्टिखर्ज्जूरसलिलैर्दिनं हृद्रोगजिद्रसः । धात्रीचूर्णं सिताचानु पिबेद्रोगापनुत्तये ॥" रस.चि. ।

**पञ्चामृतम् ।** क्ली । दुग्धादिपञ्चविधद्रव्यसमवाये । गुडूचीगोक्षुरतालमूलीमुण्डिकाशतावरीणां मिलितसमभागे । "गुडूची गोक्षुरश्चैव मुषली मुण्डिका तथा । शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥" गुलञ्च, गोक्षुर, तालमूली, मुण्डीरी, शतमूली । रा.नि.व.२२ । इदमौषधं पञ्चामृतमुच्यते । द्वितीयं देवपूजनार्थम् । घृतमधुशर्कराद‍धिदुग्धेषु । दुग्ध, दधि, घृत, चिनि, मधु ।

**पञ्चामृतपर्पटी ।** स्त्री । ग्रहण्यधिकारे । गन्धकं ८ तो. रसः २ तो. लौहं १ तो. अभ्रं ४ मा. ताम्रं ४ मा. पर्पटीवत् पाकः । रस.र. ।

**पञ्चामृतपिण्डः ।** पुं । अश्वस्य बलपुष्टिकरपिण्डविशेषे । "कटुका च जयन्ती च भ्रामरी सुरसा घनः । पञ्चामृतमयः पिण्डः...... ॥" नकुल. १३अ. ।

**पञ्चामृतयूषः ।** पुं । कुलत्थादिपञ्चद्रव्यकृतयूषविशेषे । कुलथ, मुग, अरहर, माषकलाय, वबटी (वा राजशिशीर वीज) । यथा—"कुलियमुद्गाढ़कमाषकाणां निष्पावयुक्तश्च कृतोहि यूषः । सन्दीपनः पाचनधातुवृद्धिकरो लघुः स्यादरुचिप्रणाशः । ज्वरं बलासं चयमङ्गमर्दं चीयेत पञ्चामृतयूषकोऽयम् ॥" वै.निघ. ।

**पञ्चाम्ल(फल)म् ।** क्ली । १ । समभागमिश्रितकोलदाड़िमतिन्तिड़ीचुक्रकाम्लवेतसेषु । कुल, दाड़िम, तेँतुल, चुक्र, अम्लवेतस । २ । समभागमिलितजम्बीरनारङ्गाम्लवेतसतिन्तिड़ीवीजपूरकेषु । गोँड़ा, नारङ्गा, अम्लवेतस, तेँतुल, टावालेबु । ३ । "कोलदाड़िम्ववृचाम्लचुक्रकः साम्लवेतसाः । फलम्पञ्चाम्लमुद्दिष्टमल्पपञ्चफलं स्मृतम् ॥" ४ । "जम्बीरनारङ्गसहाम्लवेतसैः सतिन्तिड़ीकैश्च सवीजपूरकैः । समांशभागेन तु सेवितैरिदं द्वितीयमुक्तञ्च फलाम्लपञ्चकम् ॥" रा.नि.व.२२ । भा. । ५ । "कोलदाड़िमवृचाम्लचुक्रीकाचुक्रिकारसः । पञ्चाम्लको मुखे लेपः सदा तृष्णां नियच्छति ॥" सा.कौ. ।

**पञ्चारविन्दम् ।** क्ली । अरविन्दस्य मृणालविसकेसरपत्रबीजेषु । वा.उ.३८अ. ।

**पञ्चालकः ।** पुं । अग्निप्रकृतिकीटविशेषे । सु.कल्प.८अ. । See कीटः ।

**पञ्चावस्थः ।** त्रि । मृते ।

**पञ्चाविकम् ।** क्ली । मेषीदधिदुग्धघृतमूत्रमलेषु । वै.निघ.२भ.जीर्णज्व.चि. ।

**पञ्चास्यः ।** पुं । सिंहे । अम. ।

**पञ्चेन्द्रियम् ।** क्ली । इन्द्रियपञ्चके । चक्षुः, कर्ण, नासा, जिह्वा, त्वक् । वाक्पाणिपादपायूपस्थेषु ।

**पञ्चोपविषम् ।** क्ली । स्नुह्यर्ककरवीरलाङ्गलिविषमुष्टिकेषु । मनसा, अर्क, करवी, विषलाङ्गलि, विषमुष्टि । "स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिकं । एतान्युपविषाण्याहुः ।" रा.नि.व.२२ ।

**पञ्चोषणम् ।** क्ली । पञ्चकोले । पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठीषु । वै.निघ.ज्व.चि.अर्कादिः ।

**पञ्चोष्माणः ।** पुं । शरीरान्तःपञ्चविधपाचकाग्निषु । यथा—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यमी । पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥" सा.कौ. ।

**पञ्जरः (लः) ।** पुं । कोलकन्दे । रा.नि.व.७। क्ली । शरीरे । शरीरास्थिसमूहे । त्रिका. ।

**पञ्जरास्थि ।** क्ली । पञ्जरस्य चतुर्विंशत्यस्थिषु । च.शा.७अ. ।

**पटम् ।** क्ली । भूतृणे । गन्धतृण । र.मा. । पुं । कार्पासे । वै.निघ. । प्रियालवृक्षे । मे. । रस.र. बाल.चि. ।

**पटच्चरम् ।** क्ली । जीर्णवस्त्रे । वै.निघ. ।

**पटदः ।** पुं, स्त्री (दा) । कार्पासक्षुपे । रमा. ।

**पटरकः ।** पुं । गुन्द्रतृणे । रा.नि.व.८ ।

**पटलः ।** पुं । कासमर्दे । कार्पासवृक्षे । वै.निघ. । पटोलवृक्षे । ल.च । वृक् । भा. । क्ली । दृष्ट्यावरकच्छदिरूपे नेत्ररोगे, तिमिरादौ । मा.नि. । तच्चतुर्विधम् । तत्र प्रथमं वाह्यं पटलं रसरक्ताश्रयम्, द्वितीयं मांसाश्रयं, तृतीयं मेदःसंश्रयं, चतुर्थञ्च कालकास्थिसंश्रयम् । "अधस्तादुपरिष्टाद्वा पटलं यस्य जायते । रुणद्धि नयने सद्यः ...... ॥" ज.द.३०अ. । See तिमिरः ।

**पटालुका ।** स्त्री । जलौकायाम् । त्रिका. ।

**पटिः ।** स्त्री । कुम्भिकावृक्षे । मे. ।

**पटीरम् ।** क्ली । मूलके । भा.म.४भ.अश्म.चि. । चन्दने । प.मु. । पुं । खदिरवृक्षे । उदरे । "उणा. । वंशलोचने । सञ्चिवायौ । वै.निघ. ।

**पटुः (कः) ।** पुं । पटोललतायाम् । प.मु. । कारवेल्लयां । उच्छे गाछ । रा.नि.व.३ । शिम्बी ।

रा.नि.व.१८। चीनकर्पूरे। चीरकनामगन्धद्रव्ये। रा.नि.व.१२। लवणे। मे। क्ली। पटोलपत्रे। विश्व.। पांशुजलवणे। प.मु.। जीरके। वचायां। বচ। छिक्किन्याम्। ইঁচেতা। वै.निघ.। (कं) पटोलविशेषे। त्रि। रोगमुक्ते। रा.नि.व.२०।

**पटुतूलकम्** । क्ली। लवणतृणे। रा.नि.व.८।

**पटुत्रयम्** । क्ली। लवणत्रये, विट्सैन्धवसौवर्च्चललवणेषु। वै.निघ.२भ.संग्रहणीचि.।

**पटुपञ्चकम्** । क्ली। लवणपञ्चके। পঞ্চলবণ। See पञ्चलवणम्। [रा.नि.व.४।

**पटुपत्रिका** । स्त्री। चीरिकायां। क्षुद्रचञ्चुक्षुपे।

**पटुपर्णिका** । स्त्री। चीरिणीक्षुपे। শিকুই। रा.नि.व.४। [শেয়ালকাঁটা। अम.।

**पटुपर्णी** । स्त्री। स्वर्णक्षीर्य्याम्। সোনাথিকুই,

**पटुभेदनिका** । स्त्री। कृष्णजीरके। रा.नि.व.६।

**पटुलिका** । स्त्री। नागवल्लीभेदे। पीटकुलिकेति ख्याते। रा.नि.व.११। See नागवल्ली।

**पटूत्तमम्** । क्ली। सैन्धवलवणे। रा.नि.व.६।

**पटेरकम्** । क्ली। मुस्तकतृणे। वै.सं.।

**पटोटजम्** । क्ली। छत्राके। श.र.।

**पटोलः** । पुं। (Trichosanthes dioica Roxb.) स्वनामख्यातफलशाकविशेषे। পলতা লতা। हिं परवल। मं कडूपडवल, कतुपडील। कं सोगवल्ली। तें कोम्मुपोटल। गुर्ज. चुरनिहारकपिलवर्णी। ता. कोम्बुपुडलै। कान्यकुब्जे मीरछड़ी। गुणाः—"पटोलः कटुतिक्तोष्णः रसपित्तबलासजित्। कफकण्डूतिकुष्ठास्रज्वरदाहार्त्तिनाशनः॥" रा.नि.व.३। तन्मूलादिगुणाः—"पटोलस्य भवेन्मूलं विरेचनकरं सुखात्। नालं श्लेष्महरम्पत्रम्पित्तहारि फलं पुनः। दोषत्रयहरम्प्रोक्तं तद्वत्तिक्ता पटोलिका॥" भा.। फलं रक्तपित्तघ्नम्। सि.यो.र.पि.चि.। पत्रं पित्तघ्नं नालं कफघ्नं, फलं त्रिदोषघ्नं मूलं विरेचनम्। रा.नि.व.७। क्ली। पाण्डुफले। পটোল। वा.सू.१५ अ.।

**पटोलकः** । पुं। शुक्ती। श.मा.।

**पटोलपत्रम्** । क्ली। वल्लीशाकभेदे। পল্তা-নতি। रा.नि.व.७। See पटोलः।

**पटोलादिः** । पुं। पटोलचन्दनकुचन्दनमूर्व्वागुडूचीपाठाकटुरोहिणीकृते पञ्चद्रव्यकषाये। गुणाः—"पटोलादिर्गणः पित्तकफारोचकनाशनः। ज्वरोपशमनो वल्यः छर्द्दिकण्डूविनाशनः॥" सु.। अन्यः—पटोलसारिवामुस्तपाठाकटुकरोहिणीसाधितकषाये। अयं सततकज्वरशमनः। वा.चि.१ अ.। अन्यश्च—पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सककृते कषाये। अयं अन्येद्युष्के हितः। अपरः—पटोलरक्तचन्दनमूर्व्वातिक्तापाठाश्वगन्धासु। च.द.।

**पटोलिका (ली)** । स्त्री। स्वादुपटोलनामफलशाकविशेषे। স্বাদুপটোল। हिं भिङ्गपोड़लि। मे.। गुणाः—स्वादुः पित्तघ्नी रुचिकृत् ज्वरघ्नी बलकरी दीपनी पाचनी च। रा.नि.व.७। च.द.व्रण-चि.।

**पट्टः** । पुं। पेषणशिलायाम्। व्रणबन्धनद्रव्ये। পটি। सु.सू.५ अ। पट्टशाके। পাটশাক। श.मा.।

**पट्टर(ङ्ग)म् (रञ्जक[न,क]म्) (रागम्)।** क्ली, पुं। पत्राङ्गचन्दने। বকম কাঠ। रा.नि.व.१२।

**पट्टशाकः** । पुं। (Corchorus capsularis or C. olitorius.) शाकविशेषे। পাটশাক, নালিতাপাতা। हिं पटुया। गुणाः—रक्तपित्तहरः विष्टम्भी वातकोपनश्च। भा.।

**पट्टिकः** । पुं। ताम्रवर्णरोध्रे। अ.टी.रा.।

**पट्टिका (ख्यः)** । स्त्री पुं। ताम्ररोध्रे। রক্তবর্ন লোধ। अम.।

**पट्टिकारो(लो)ध्रः** । पुं। स्वनामख्यातलोध्रे, रक्तरोध्रे। পাটিয়া লোধ। गुणाः—ग्राही लघुः पित्तरक्तपित्तातिसारशोथघ्नश्च। भा.। कषायः शीतलः वातकफरक्तविषघ्नः चक्षुष्यः। तत्र कल्करोध्र एव श्रेष्ठः। रा.नि.व.६।

**पट्टिलः** । पुं। (Coesalpinia bonduccella.) वृक्षविशेषे। পূতিকরঞ্জ। जटा.।

**पट्टिलोध्रः (कः)** । पुं। पट्टिकालोध्रे। श.र.।

**पट्टी** (ट्टिन्) । पुं, स्त्री । लोध्रवृक्षे । श.टी.भ. । रक्तरोध्रे । रा.नि.व.६ ।

**पण:** । पुं । कपर्द्दे । वै.निघ.२भ.मधुरज्व.चि. विषमच्चिकाकषाये । ५गुञ्जामाने । प.प्र. ।

**पणद्रा** । स्त्री । पण्याम्बायाम् । रा.नि.व.२३ ।

**पणस:** (स:) । पुं । (Artocarpus integrifolia.) कण्टालुफलवृक्षे । কাঁটাল গাছ । हिं कटहर । मं फणस । कं हलसिन । तें उत्. पणस । ता. पिला । गुणा:—फलं मधुरं पिच्छिलं गुरु हृद्यं बलवीर्य्यवृद्धिकरं श्रमदाहशोषघ्नं रुचिकरं ग्राहि दुर्ज्जरञ्च । तद्बीजम् ईषत्कषायं मधुरं वातलं गुरु तत्फलविकारघ्नं त्वग्दोषघ्नञ्च । बालपणसफलन्तु नीरसं हृद्यञ्च । मध्यपक्वं तत् दीपनं रुचिदं लवणादियुक्तञ्च । रा.नि.व.११ । पक्वफलं रक्तवर्द्धकं मधुरं शीतलं दुर्जरं वातपित्तघ्नं श्लेष्मशुक्रबलकरञ्च। तद्बीजं रक्तपित्तघ्नं स्वादु फलतुल्यगुणञ्च। तदपक्वफलं कषायं स्वादु वातलं शीतलञ्च । राज. । तन्मज्ज(ভূঁতি)गुणा:—शुक्लं त्रिदोषघ्नं विशेषेण गुल्मिनां न हितम् । रा.नि.व. ११ । अस्य क्वाथ: मांसग्रन्थिशोफे, तन्मज्ज(ভূঁতি) अण्डवृद्धौ, कोमलपल्लव: चर्म्मरोगे च हित: ।

**पणास्थिकम्** । क्ली । वराटके । কড়ি । त्रिका. । है.च. । [See आवर्त्त: ।

**पणिकावर्त्त:** । पुं । राजावर्त्तमणौ । प.मु. ।

**पण्ड:** (क:) । पुं । नपुंसके । अम. ।

**पण्यविलासिनी** । स्त्री । नखीनामगन्धद्रव्ये । रा.नि.व.१२ । [टिकौ । वै.निघ. ।

**पण्या** । स्त्री । ज्योतिष्मतीलतायाम् । लताक-

**पण्यान्ध:** (न्धा) । पुं, स्त्री । स्वनामख्याततृणे । मं पणधि । कं हनजेमूरु । सा दीर्घा मध्या ह्रस्वा च इति त्रिधा । एतासु मध्यमा रसवीर्य्यविपाकेषु गुणाधिका । अपरद्वयं समवीर्य्यं, तिक्तं क्षारं सारणञ्च, तत्कालशस्त्रघातव्रणरोपणञ्च । रा.नि.व.८ ।

**पतग:** । पुं । पक्षिणि । अम. ।

**पतङ्ग:** (म:) । पुं । पक्षिणि । अम. । तण्डुले । जलमधूकवृक्षे । रा.नि.व.१६ । रक्तशालौ । मे. । वा.सू.६भ. । च.सू.२७भ. । क्ली । पारदे । मे. । पतङ्गचन्दने । বকম কাঠ । श.च. ।

**पतङ्गम:** । पुं । पक्षिणि । व्याकरणम् ।

**पतङ्गिका** । स्त्री । पुत्तिकानाममधुमक्षिकायाम् । अम. ।

**पतत्रम्** । क्ली । पक्षे । अम. ।

**पतत्रि:** (त्री) । पुं । पक्षिणि । अम. ।

**पतत्रीरु:** । पुं । श्येनपक्षिणि । বাজ । श.र. ।

**पतस:** (स:) । पुं । पक्षिणि । पतङ्गे । उणा. ।

**पताका** । स्त्री । चिह्ने । जटा. ।

**पति:** । पुं । मूले । गतौ । अम. ।

**पतिम्बरा** । स्त्री । कृष्णजीरके । श.च. ।

**पतिश्याय:** । पुं । प्रतिश्याये । हि. ।

**पतेर:** । पुं । पक्षिणि । आढ़के । उणा. ।

**पत्** । पुं । पादे । रा.नि.व.१८ ।

**पत्त(त्र)ङ्गम्** । क्ली । (Caesalpinia sappan.) रक्तकाष्ठविशेषे, पत्राङ्गे । বকম্ কাঠ । हिं पतङ्ग । तें ओकनकट्टु । उत्. वकमो । गुर्ज. पारस्य. ता. वट्टङ्गी । र.मा. । भा.उ.वाजी. । गुणा:—"पत्तङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् । चन्दनानि च सर्व्वाणि सदृशानि रसादिभि: । ... न तु विशेषोऽस्ति पूर्व्व: श्रेष्ठतमो गुणै: ... । रक्तचन्दने । श.र. । सु.चि.२१अ. । "पतङ्गं रक्तचन्दनम् ।" भा.क्षुद्र.रो.चि.कुङ्कुमादितैले । काष्ठक्वाथ: रजोबाहुल्यकारी मलसंग्राही च । पुं । भृङ्गराजे । ভীমরাজ । र.मा. । केशराजे । কেশুত্তে ।

**पत्तूर:** (रा) । पुं, स्त्री । शालिञ्चशाके । र.मा. । च.द.सि.यो.क्रमि चि. । सु.चि.१९अ. । जलपिप्पल्याम् । पर्कटीवृक्षे । वै.निघ. । शमीवृक्षे । भैष. ने.रो.चि. । क्ली । कुचन्दने । भा. । सु.सू.३९अ. वातशमने । पत्तङ्गे । वै.निघ. ।

**पत्रम्** । क्ली । छदे । পাতা । अम. । तेजपत्रे । रा.नि.व.६ । सु.सू.३८अ एलादि: । बा.चि.१अ. । "पत्रं कटुकरोहिणी ।" पक्षिपक्षे । मे. ।

**पत्रक:** । पुं । पलाशवृक्षे । रा.नि.व.२१ ।

**पांसुलः** । पुं । केतकवृक्षे । लावपक्षिणि । वै.निघ. । [वण ।

**पांसुलवणम्** । क्ली । पांशुलवणे । पांशु ल-

**पांसुला** । स्त्री । श्वेतकेतके । व्यभिचारिण्यां । वै.निघ. ।

**पाकः** । पुं । केशशौक्ले । पेचके । मे. । चलसत्त्वे परिणामे । "कण्ठौष्ठमुखनासानां पाकः ।" मा.नि. । मासजाते शिशौ । रा.नि.व.१८ । पचने । पचा । अम. । रन्धने । स सप्तविधः—भर्ज्जनतलनस्वेदनपचनक्वथनतान्दूरपुटपाकभेदात् । तत्र भर्ज्जनं केवलपात्रे, तलनं स्नेहद्रव्ये, स्वेदनमम्बुत्ताप्ते, पचनं जले, क्वथनं सिद्धद्रव्यरसग्रहणे, तान्दूरं द्वारबद्धतप्तयन्त्रे, पुटपाकः अधोर्द्धाग्नितापे च ज्ञेयः । पाकराज. । षष्टिकशालिधान्ये । ষেটে ধান । शोणितविकारे । द्रव्यपरिणतिजन्यरसे द्विविध एव पाकः, मधुरः कटुकश्च, तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुरिति । तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्वाः शेषा लघवः, तस्माद्द्विविध एव पाकः । "द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः । निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु । निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥" सु.सू. ४०अ. । घृतादीनां पचनसाधने । फेणोपशमः घृतस्य पाकसिद्धिः । फेणोत्पत्ती तैलस्य पाकसिद्धिः । तल्लमत्ता स्नेहस्य पाकसिद्धिः । अस्य मज्जनं पाकलक्षणम् । पाकश्च त्रिविधः मन्दः चिक्कणः खरश्चेति । स्नेहपाकस्याङ्गुलियाह्विता मन्दपाकः । वा. कल्प.६अ. । [श.च. । करञ्जवृक्षे । वै.निघ. ।

**पाककृष्णः (-फलः)** । पुं । पानीयामलके ।

**पाकजम्** । क्ली । परिणामशूले । रा.नि.व.२० । बिड़लवणे । रा.नि.व.६ । कुष्ठौषधे । वै.निघ. ।

**पाकनाड़ी** । स्त्री । अन्नपाचकनाड्याम् ।

**पाकपात्रम्** । क्ली । हण्डिकादौ ।

**पाकपुटी** । स्त्री । कुम्भशालायां । পোয়ান् । हे.च. । [स्नकरञ्जे । अम. ।

**पाकफलः** । पुं । पानीयामलके । श.च. । अ-

**पाकभाण्डम्** । क्ली । पाकपात्रे ।

**पाकमत्स्यः** । पुं । अर्भकैः सह सञ्चरणशीले मत्स्यविशेषे । পোঁকো মাছ, লেঠা, চ্যাং, শউল, মাগুর প্রভৃতি । सु.कल्प.३अ. । अग्निप्रकृतिकीटविशेषे । सु.कल्प.८अ. । See कीटः । मत्स्यकृतव्यञ्जने । মাছের তরকারি । श.च. ।

**पाकरञ्जनम्** । क्ली । तेजपत्रे । श.च. ।

**पाकलम्** । क्ली । कुष्ठौषधौ । कुड़ । अम. । पुं । हस्तिज्वरे । मे. । प्रवृद्धमध्यक्षीणवातादिजसन्निपातज्वरे । तस्य निदानलक्षणे—"यस्य प्रवृद्धक्षीणेस्तु वातपित्तकफैश्चयः । तेन रोगास्त्रयोऽस्माद्यथा दोषबलाश्रयाः । मोहप्रलापमूर्च्छाः स्युः मन्यास्तम्भः शिरोग्रहः । कासः श्वासो भ्रमस्तन्द्रा संज्ञानाशो हृदि व्यथा । स्रोतोभ्यो रक्तं विसृजति संरक्तस्तम्भनेत्रता । तत्राप्येते विशेषाः स्युरर्व्वाक् सप्तत्रिवासरात् । भिषग्भिः सन्निपातोऽयं कथितः पाकलाभिधः ।" भा.म.१भ.ज्व.चि. । त्रि । व्रणादिपाककारिणि । [मा. ।

**पाकलिः (ली)** । स्त्री । कर्कटिकायाम् । श.

**पाकशाला** । स्त्री । रन्धनशालायां । রাঁধুনি ঘর । जटा. । "प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि । सजालकं गवाक्षाढ्यम् आप्तवर्गनिषेवितं । विकक्षसुष्टसंसृष्टं सवितानं कृतार्चनं । परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् ॥ तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितं । शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः । संविभक्ताः सुमनसः नीचकेशनखाः स्थिराः । स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः । तस्य चाज्ञा विधेयाः स्युर्विविधाः परिकर्म्मिणः । आहारस्थितयश्चापि भवन्ति प्राणिनो यतः । तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् । माहानसिकवोढारः सौपौदनिकपौपिकाः । भवेयुर्वैद्यवशगा ये चाप्यन्ये च केचन ॥" सु.कल्प.१अ. ।

**पाकशुक्लः (क्ला)** । पुं,स्त्री । कठिन्याम् । खड़ी । प.मु. ।

**पाकात्ययः** । पुं । सर्व्वगताक्षिरोगे । विदीपजनेत्ररोगे । लक्षणं—"उष्णाश्रुपातः पिड़का च कृष्णे यस्मिन् भवेत् कृष्णनिभश्च शुक्रं । तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरपक्षतुल्यं । संज्ञायते श्वेतनिभेन सर्व्वदोषेण यस्यासितमण्डलन्तु । तम॰

विपाकात्ययमचिरोयं समुत्थितं तीव्ररुजं वदन्ति ।" सु.उ.६अ. ।

**पाकारिः** । पुं । श्वेतकाञ्चने । प.मु. । र.मा. ।

**पाकिमः** । त्रि । पक्वे । सु.चि.१९अ. । "लवणं त्वथ पाकिमं ।"

**पाकुकः** । पुं । सूपकारे । उणा. ।

**पाक्यम्** । क्ली । पांशुलवणे । कुला लवण । र.मा.च.वि.८अ. । सौवर्चललवणे । त्रि । शृते । वा.चि.१अ. । [अम. ।

**पाक्यः** । पुं । यवक्षारे । यवक्षार, सोरा ।

**पाक्यजम्** । क्ली । काचलवणे । रा.नि.व.६ ।

**पाक्यक्षारः** । पुं । यवक्षारे । प.मु. ।

**पाक्या** । स्त्री । सर्जिक्षारे । यवक्षारे । सोरा। सौवर्चललवणे । मृत्तिकालवणे । वै.निघ. ।

**पाक्यापटु** । क्ली । पाक्यलवणे । वै.निघ. ।

**पाक्याह्वः** । पुं । यवक्षारे । वै.निघ. ।

**पागलः** । पुं । वातुले । [सोम: ।

**पाङ्क्तः** । पुं । सोमलताभेदे । सु.चि.२९। See

**पाङ्क्त्यम्** । क्ली । पङ्क्तायाम् । वै.निघ. ।

**पाचकः** । पुं । अग्नौ । इला. । सूपकारे । पित्ते, तन्नामकाग्नौ, यो भुक्तं पचति । तस्य तिलप्रमाणं—"पाचकं तिलमात्रं स्यात् ।" वा. । तस्य स्थानं पक्वामाशयमध्यस्थम् । सु.सू.२१अ. । स आहारं पचति, दोषरसमूत्रपुरीषाणि पृथक् करोति । भा. । "तत्रस्थमेव स्वशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणानुग्रहं करोति, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा ॥" सु.सू.२१अ. । See अग्निः ।

**पाचका** । स्त्री । कर्कटिकायाम् । वै.निघ. ।

**पाचनम्** । क्ली । आमपाचके अवज्ञिकृति द्रव्ये, नागकेशरचित्रकादौ । पाचकद्रव्यवर्गः यथा—"पाषाणभेदो मरिचं यवानी जलशीर्षकम् । शुण्ठी चव्यं गजकणा यन्यादिः पाचनो गणः ॥" अर्क. । पाचककषाये । পাচন । "प्रयुक्तं पाचयेदामं यत्तत्पाचनमुच्यते ।" वा.चि.१अ. । "दशरक्तिकमानेन गृहीत्वा कर्षकद्वये । दत्त्वाम्भः षोडशगुणं ग्राह्यं पादावशेषितम् ॥" प.प्र.१ख. । ज्वरे तस्य दानकालमाह चक्रपाणिः । "ज्वरितः षडहेऽतीते लघ्वन्नप्रतिभोजितं । सप्ताहात्परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे ॥" इति । च.द.ज्व.चि. । व्रणोपक्रमविशेषे । तत्र विरेचनादि । सु. । अर्द्धावशिष्टक्वाथे । "पाचनोऽर्द्धावशेषस्तु ।" रा.नि.व.२० ।

**पाचनः** । पुं । अम्लतायाम् । अम्लरस । हे.च. । अग्नौ । मे. । रक्तैरण्डे । रा.नि.व.८ । त्रि । पाचके । मे. ।

**पाचनकः** । पुं । टङ्कणक्षारे । हे.च. ।

**पाचनी** । स्त्री । हरीतक्याम् । मे. ।

**पाचलः** । पुं । अग्नौ । श.र. । पाकशक्तौ । वायौ । श.र. । क्ली । पाचने । मे. ।

**पाची** । स्त्री । स्वनामख्यातपत्रशाके । पाटी, पचि इति महाराष्ट्रादौ । गुणाः—"पाची कटुस्तिक्तोष्णा सकषाया वातदोषहन्त्री च । ग्रहभूतविकारकरी त्वग्दोषप्रशमनी व्रणेषु हिता ॥" रा.नि.व.१० ।

**पाजः (स)** । क्ली । बले । उणा. । [मे. ।

**पाञ्चजन्यः** । पुं । शङ्खे । मत्स्यभेदे । अग्नौ ।

**पाञ्चप्रसृतिकी** । स्त्री । [illegible]विशेषे । "सर्पिस्तैलं वसा मज्जा तण्डुलप्रसृ[illegible] शृता । पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥" च.सू.१३अ. ।

**पाञ्चालः** । पुं । देशविशेषे । "कुरुक्षेत्रात्पश्चिमे तु तथाचोत्तरभागतः । इन्द्रप्रस्थान्महेशानि दशयोजनकद्वये । पाञ्चालदेशः···।" शक्तिसङ्गमतन्त्रं ।

**पाञ्चाली** । स्त्री । पिप्पल्याम् । वै.निघ. ।

**पाटः (कः)** । पुं । विस्तारे । (कः) वितर्ती ।

**पाटनम्** । क्ली । छेदने ।

**पाटलः** । पुं । नादेयमत्स्यभेदे । See मत्स्यः । श्वेतरक्तवर्णे । अम. । पुन्नागवृक्षे । पाटलव्रीहौ । त्रिका. । सु.सू.४६अ. । क्ली । तन्नामकपुष्पे । পারুল ফুল । अम. । रोहितवर्णे । वै.निघ. ।

**पाटलच्छदः (द्रुमः)** । पुं । सुरपुन्नागवृक्षे । रा.नि.व.१० ।

**पाटल(ला)व्रीहिः** । पुं । वर्षापाकिव्रीहिभेदे, आशुधान्ये । আউশ ধান । "पाटलः पाट-

लापुष्पवर्णकी व्रीहिरुच्यते ।" भा.पू.१भ.धा.व. । गुणाः—"मधुरो बहुनिष्यन्दी पाटलस्तु त्रिदोष-हृत् ।" राज.३प. । "बहुमूत्रपुरीषोष्मा त्रिदोष-घ्नश्च पाटलः ।" च.सू.२७अ. ।

**पाटला** ([ड़]लिः) । स्त्री, पुं । (Stereospermum suaveolens or Chelonioides. Syn. Bignonia suaveolens.) स्वनामख्यातवृक्षे । पारुल गाछ । बम. । हिं पाढ़ । मं पाड़ली । कं हादरि । तें कलगोरु, कलिगोटु चेट्टु । उत्. पाटुड़ि । ता. पद्रि । पाटला पीतपुष्पश्वेतपुष्पभेदेन द्विधा । सा. गुणाः—तिक्ता कटूष्णा कफवातघ्नी शोथाध्मानवमिश्वाससन्निपातघ्नी च । रा.नि.व.१० । घण्टापाटलकाष्ठपाटलभेदेन च द्विधा । सा. गुणाः—तुवरा तिक्ता शीतला त्रिदोषहरा तथारुचिशोथरक्तच्छर्द्दिहिक्कातृष्णाघ्नी । तत्पुष्पं कषायं मधुरं हिमं हृद्यं कफरक्तघ्नम् । तत्फलं पित्तातिसारघ्नं हिक्कारक्तपित्तघ्नञ्च । मधुमर्द्दितं हिक्काघ्नम् । भा. । सु.सू.३८अ.। च.द.सन्निपातज्व.चि.। "पाटला गणिकारिका: ।" वा.सू.१५अ.आरग्वधादिः । "आरग्वधेन्द्रयवपाटलिकाकतिक्ता: ।" श्वेतपाटलवृक्षे । वै.निघ. । रक्तलोध्रे । श.च. । मुष्ककवृक्षे । अम. । शालिधान्यभेदे । रा.नि.व.२३ ।

**पाटलादिः** । पुं । बिल्वादिदशमूलकषाये । अयं शोथहरकषायः । च.सू.४अ. । [वै.निघ. ।

**पाटलापुष्पः** । पुं । सुरपुन्नागवृक्षे । छलना ।

**पाटलापुष्पवर्णकम्** । क्ली । पद्मकाष्ठे । वै.निघ. । [शुकाष्ठे । रा.नि.व.१२ ।

**पटलापुष्पसन्निभम्** । क्ली । पद्मकाष्ठे । प-

**पाटलाभः** । पुं । रक्तालुके । वै.निघ. ।

**पाटलिका** । स्त्री। रक्तकरवीरवृक्षे । वै.निघ.।

**पाटालिपिण्डिका** । स्त्री । महाश्वेतकिणिहीवृक्षे । वै.निघ. ।

**पाटली** । स्त्री । पाण्डुरफल्याम् । रा.नि.व.५ । पाटलावृक्षे । कृष्णकटभीवृक्षे । कृष्णमुष्कके । रा.नि.व.९ । भूमिचम्पकवृक्षे । रक्तपाटलिवृक्षे । रक्तलोध्रे । वै.निघ. । [वृक्षे । वै.निघ. ।

**पाटलीकुसुमः** (**पुष्पः**) । पुं । पुन्नागपुष्प

**पाटलोपमः** । पुं। सर्जरसे । धूना । वै.निघ.।

**पाटलोपलम्** । क्ली । माणिक्ये । वै.निघ. ।

**पाटवम्** । क्ली । आरोग्ये । रा.नि.व.२० ।

**पाटह्लिका** । स्त्री । गुञ्जायाम् । हारा. ।

**पाटितम्** । क्ली। काण्डभग्नास्थिभेदे । "पाटितमणुबहुविदारितं वेदनावच्च ।" इति लक्षणम् । सु.नि.१५अ. । [गाछ । वै.निघ. ।

**पाटी** (इन्) । पुं । पाठीनमत्स्ये। वोयाल

**पाटीरः** । पुं,क्ली । वंशलोचने । वङ्गे । चन्दनवृक्षे । वायुरोगभेदे । वै.निघ. ।

**पाटेयकम्** । क्ली । लवणविशेषे । च.चि.८अ.।

**पाट्यम्** । क्ली । पट्टशाके। पाटशाक । राज. ।

**पाठः** । पुं । पाठायाम् । वै.निघ. ।

**पाठकः** । पुं । चित्रकवृक्षे । वै.निघ. ।

**पाठमञ्जरी** (**शालिनी**) । स्त्री। सारिकापक्षिणि। श.मा. ।

**पाठा** । स्त्री । (Stephania hernandifolia. Syn. Cissampelos hernandifolia.) स्वनामख्याताविद्धकर्णलतायाम् । ईषद्रोमशा श्वेतपुष्पगुच्छा चेति ड. । चक्रपाठा इति देशविशेषे ख्याता । आकनादि, आशोदि । हिं निमुका । तें पाठचेट्टु । उत्. अकानविन्दि । गुणाः—तिक्ता गुरूष्णा वातपित्तज्वरघ्नी भग्नसन्धानकरी पित्तदाहातीसारशूलघ्नी च । रा.नि.व. ६ । [रा.नि.व.६ ।

**पाठा**(**ठी**)**कुटः** (**ठः**) । पुं । चित्रकवृक्षे।

**पाठादशकम्** । क्ली । स्तन्यशोधकगणभेदे । पाठामहौषधदेवदारुमुस्तामूर्व्वागुडूचीन्द्रयवकिराततिक्तकटुरोहिणीसारिवा इति स्तन्यशोधनाः । च.सू.४अ. ।

**पाठादिकषायः** । पुं । पाठोशीरबालकक्वथिते कषाये । गुणाः—दीपपाचनः ज्वरारोचकतृष्णामुखवैरस्यापक्वघ्नश्च । वा.चि.१अ.। "पाठोशीरं सबालकम् ।" अन्यः—कषायभेदे । "पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः । जयन्त्याममतीसारम् ।" च.द.अ.सा चि. ।

**पाठाद्यचूर्णम्** । क्ली । ग्रहण्यां चूर्णम् । पाठा (আকনাদি) বিল্বশলাটুঃ (বেলশুঁটা) चित्रक-मूलं त्रिकटु जम्बुत्वक् (জাম ফলের আঁটির ছাল) (जम्बुः जम्बूफलास्थिवल्कलम् । च.द. ।) दाड़िमत्वक् धातकीपुष्पं (ধাই ফুল) कटुकी (কটকী) अतिविषा (আতইচ্) मुस्ता दारुह-रिद्रा भूनिम्बं (চিরাতা) इन्द्रयवः, प्र. चूर्णं समं समष्टितुल्यं कुटजत्वक्चूर्णम् । तण्डुलाम्बुमधुना पिबेत् ।

**पाठाद्वयम्** । क्ली । पाठापाटलयोः । আক-নাদি ও পারুল । वै.निघ कास चि.चूषणाद्य-घृते ।

**पाठानः** । पुं । गुग्गुलौ । मत्स्यभेदे । বোয়াল [গাছ । वै.निघ. ।

**पाठासप्तकः** । पुं । पाठादिसप्तद्रव्यसिद्धक-षाये । स च किराततनागरमुस्तगुडूचीपाठोदीच्यो-शीरद्रव्यसाधितः । च.द.कफाधिकपि.श्लै.ज्व.चि. ।

**पाठिका** । स्त्री । पाठायाम् । আকনাদি । रा.नि.व.६ ।

**पाठी** (इन्) । पुं । चित्रकवृक्षे । रा.नि.व.६ । कृष्णचित्रके । রাংচিতা । श.च. ।

**पाठीनः** । पुं । मत्स्यविशेषे । বোয়াল মাছ । गुणाः—श्लेष्मलः वृष्यः कुष्ठजनकास्रपित्तकरश्च । सु.सू.४६अ. । "पाठीनः श्लेष्मलो वर्ल्यो निद्रालुः पिशिताशिनः । दूषयेद्रुधिरं पित्तं कुष्ठरोगं करोति च ॥" भा.पू.२भ.मांसव. । गुग्गुलौ । चित्रकवृ-क्षे । मे. ।

**पाड़िनी** । स्त्री । मृद्भाण्डे । वै.निघ. । [प.प्र.।

**पाणिः** । पुं । हस्ते । कर्षपरिमाणे । २ तो. ।

**पाणिजः** । पुं । नखे । नखी । रा.नि.व.१२ । भा.म १भ.चित्तभ्रमज्व.चि. । "पुरपाणिजपांशु-भिः ।" नखे । नख । रा.नि.व.१८ । [१ख. ।

**पाणितलः** । पुं, क्ली । कर्षपरिमाणे । प.प्र.

**पाणिनी** । स्त्री । नीलापराजितायाम् । वै. निघ. ।

**पाणिन्धयः** । त्रि । पाणिना पानकर्त्तरि ।

**पाणिपृष्ठम्** । क्ली । करपृष्ठे । च.शा.७अ. ।

**पाणिभुक्** । पुं । उदुम्बरवृक्षे । श.च. ।

**पाणिमणिका** । स्त्री । मणिबन्धास्थीनि । तानि संख्यया चत्वारि । च.शा.७अ. ।

**पाणिमन्थः** । पुं । करञ्जवृक्षे । वै.निघ.२भ. कर्णकसन्निपातज्व.चि. । सु.चि.४अ. । [व.९ ।

**पाणिमर्दः (कः)** । पुं । करञ्जवृक्षे । रा.नि

**पाणिमानिकः (का)** । पुं । तोलकद्वये, कर्षे वा । प.प्र.१ख. ।

**पाणियालुः** । पुं । स्वनामख्यातकन्दशाकवि-शेषे, रक्तालौ । পাণি আলু। गुणाः—त्रिदोषघ्नः सन्तर्पणकरश्च । रा.नि.व.७ ।

**पाणिरुहः** । पुं । नखे । नखीनामगन्धद्रव्ये । रा.नि.व १८।११ ।

**पाणीतलम्** । क्ली । तोलकद्वये । श.मा. ।

**पाणीसर्य्या** । स्त्री । वल्लजतृणे । উলূ । रा. नि.व.८ । [पुं । कुरुवकवृक्षे । वै.निघ. ।

**पाण्डरम्** । क्ली । गैरिके । कुन्दपुष्पे । श.च. ।

**पाण्डरपुष्पिका** । स्त्री । शीतलावृक्षे । श.च. ।

**पाण्डवः** । पुं । अर्ज्जुनवृक्षे । वै.निघ. ।

**पाण्डविकः (का)** । पुं, स्त्री । कृष्णचटके । च.सू.२७अ. ।

**पाण्डिः** । पुं । लौह[illegible]शे । रा.नि.व.१३ ।

**पाण्डुः** । पटोले । रा.नि.व.३ । तन्नामकरोगे । পাণ্ডুরোগ, পাণ্ডুশোথ । रा.नि.व.२० । निदा-नलक्षणं—"पाण्डुरोगाः स्मृताः पञ्च वातपित्तक-फैस्त्रयः। चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णं । निषेव्यमाणस्य विदूष्य रक्तं कुर्व्वन्ति दो-षास्त्वचि पाण्डुभावम् ॥" इति निदानसंप्राप्तिः । पू-र्व्वरूपं त्वक्स्फोटनादिकं भवति । वातजलक्षणं—"त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणात्मता । वातपा-ण्ड्वामये कम्पतोदानाहभ्रमादयः । पीतमूत्रशकृन्ने-त्रो दाहतृष्णाज्वरान्वितः । भिन्नविट्कोऽतिपीता-भः पित्तपाण्ड्वामयी नरः । कफप्रसेकश्वयथुतन्द्रा-लस्यातिगौरवैः । पाण्डुरोगी कफाच्छुक्लैः त्वङ्मूत्र-नयनाननैः । ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वि-तः । पाण्डुरोगी त्रिभिर्दोषैः त्याज्यः क्षीणो हते-न्द्रियः । मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।

कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥" भा. नि. । शालिधान्यभेदे । च.सू.२७अ. । पारावते । मरुवकवृक्षे । वै.निघ. । स्त्री । माषपर्ण्याम् । श. च. । वनमुद्गे । खर्जूरीवृक्षे । भा. ।

**पाण्डुकः** । पुं । पाण्डुरोगे । श.र. । तिक्तपटोले । सर्जरसे । धूना । वै.निघ. । पाण्डुशालिधान्ये । सु.सू.४६अ. । अर्क.चि. । क्ली । अभ्रे । वै.निघ. ।

**पाण्डुकण्टकः** । पुं । अपामार्गे । रा.नि.व.४।

**पाण्डुकम्बलः** । पुं । प्रस्तरभेदे । मे. ।

**पाण्डुकर्कशा** । स्त्री । ओषधिविशेषे । वै. निघ. । [सु.चि.१अ. ।

**पाण्डुकर्म्म** । क्ली। क्रणानां पाण्डुवर्णतापादने।

**पाण्डुतरुः** । पुं । धववृक्षे । धाओया गाछ । रा.नि.व.६ ।

**पाण्डुनागः** । पुं । पुन्नागवृक्षे । श.र. ।

**पाण्डुपत्री (पत्री) (पुत्री)** । स्त्री । रेणुकायाम् । रेणुक बीज । रा.नि.व.६ ।

**पाण्डुपुत्रा** । स्त्री । कर्कटिकायाम् । वै.निघ.।

**पाण्डुप्रहारिणी** । स्त्री । शियुडीवृक्षे । वै. निघ. । [तिक्तपटोले । भा प्र.१भ. शा.व. ।

**पाण्डुफलम्** । क्ली, पुं । पटोले । रा.नि.व.७।

**पाण्डुफला** । स्त्री । चिर्भिटायां । फूटी । रा. नि.व.५ । वम्.कडुसेन्दार । [व.५ ।

**पाण्डुफली** । स्त्री । पाण्डुफलायाम् । रा.नि.

**पाण्डुभूमिः** । स्त्री । पाण्डुवर्णस्थले । रा.नि. व.२ ।

**पाण्डुमत्स्यः** । पुं । शुक्लमत्स्ये । See मत्स्यः ।

**पाण्डुमृत् (त्तिका)** । स्त्री । पाण्डुवर्णमृत्तिकायाम् । रा.नि.व.२ । खटिकायाम् । खड़ी । रा.नि.व.१३ ।

**पाण्डुरः** । पुं । धववृक्षे । धाओया गाछ । रा. नि.व.६ । धवलयावनाले । रा.नि.व.१६ । पाण्डुरोगे । श.र. । कपोते । शुक्लवर्णे । मरुवकवृक्षे । शुक्लखड़िकायाम् । वके । वै.निघ. । क्ली । श्वेत कुष्ठरोगे । ध्वल । हला. ।

**पाण्डुरङ्गः** । पुं। पटरङ्गे । पाटि शाक । गुणाः —क्रमिश्लेष्मपित्तनाशित्वं तिक्तत्वं लघुत्वञ्च। राज. ।

**पाण्डुरच्छदः** । पुं । केतकवृक्षे । प.मु. ।

**पाण्डुरद्रुमः** । पुं। कुटजवृक्षे । कुड़चि गाछ। रा.नि.व.६ । चिका. ।

**पाण्डुरफली** । स्त्री । स्वनामख्यातक्षुपे । म पोटरफलमिति प्रसिद्धं । म.मणमर्रुः । क पाण्डुरफालरे । गुणाः—शीतला गौल्या बल्या पित्तघ्नी तृष्या मूत्राघातघ्नी च । रा.नि.व.५ ।

**पाण्डुरा** । स्त्री । माषपर्ण्याम् । मासानी । रा.नि.व.३ । शुक्लयूथिकवृक्षे । कर्कटिकायाम् । वै.निघ. । [नि.व.१० ।

**पाण्डुरागः** । पुं । दमनकक्षुपे । दना । रा.

**पाण्डुरागप्रियः** । पुं । वकुलवृक्षे । वै.निघ.।

**पाण्डुरेक्षुः** । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

**पाण्डुलोमशा (मा)** । स्त्री। माषपर्ण्याम् । जटा.र.मा. । [वैद्यकम् ।

**पाण्डुशर्करा** । स्त्री । तन्नामकरोगविशेषे ।

**पाण्डुसूदनरसः** । पुं । पाण्डुरोगघ्नरसविशेषे। "रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलम् । समांशमाज्यसंयुक्तं गुडिकां कारयेन्मिताम् । एकैकां खादयेद्वैद्यः शोथपाण्डुप्रशान्तये । शीतलञ्च जलं चाम्लं वर्ज्जयेत् पाण्डुसूदने ।" पारदः गन्धकः जारितताम्रं जैपालबीजं गुग्गुलुः प्र.समं । घृतेन वटी कार्य्या । रस.स. । भैष. ।

**पातम्** । क्ली । हरिताले । र.सा.सं.रस.प्र. ।

**पातनम्** । क्ली । ऊर्द्धाधस्तिर्य्यगूपे त्रिविधे पारदनिष्काशनप्रकारे। प्रथमखण्डे तत्तत्पर्य्यायं पश्य । शेषे पारदशब्दं पश्य ।

**पातयन्त्रम्** । क्ली । पातनयन्त्रे । र.सा.सं. ।

**पाता (तृ)** । पुं । गन्धर्वे । तावुइ । श.च. ।

**पातालयन्त्रम्** । क्ली । भेषजपाकाय यन्त्रविशेषे । पाताल यन्त्र । लक्षणं यथा—ऊर्द्धभाण्डे वह्निमध्ये तु रससंग्रहः । पातालयन्त्रमेतद्धि शोधयेत् सूतकादिकम् ।" रसग्रन्थः ।

**पातालगरुड़ाह्वयः** । पुं पातालगरुड़ीलतायाम् । वै.निघ. ।

**पातालगरुड़ी** । स्त्री । छिन्नालाव्वाम् । छि-ड लाडे । र.सा.सं.ब्रह्मरसे । छिलिहिण्टवृक्षे । छिलिन्दा । हिं छिउड़ा। तें दूसरतीगे । गुणाः— "छिलिहिण्टः परं वृष्यः कफघ्नः पवनापहः ।" भा.पू.१भ.गु.व. । पातालगरुड़ी वृष्या पित्तदाहरक्तदोषविषदोषघ्नी रुच्या सन्तर्पणी च । रा.नि.व. ३ । मद. ।

**पातालनृपतिः** । पुं । सीसके । शीस । र स.कौ. । भैष.वा र.चि.द्वादशायसे । रस.र. ।

**पातालवासिनी** । स्त्री । नागवल्ल्याम् । वै. निघ. । [शिशुमारे । शुशुक । श.मा. ।

**पातिकः** । पुं । (Gangetic porpoise.)

**पातितम्** । क्ली । शरीरात्पतितसद्योव्रणे । वा. उ.२६अ. ।

**पात्रम् (पात्रापात्रम्)** । क्ली । आढकपरिमाणे । ६४ प. । प.प्र.१ख. । च.चि.१अ. । शरीरे । भाण्डे । वै.निघ. । [टके । श.र. ।

**पात्रटः** । त्रि । कृशाङ्गे । वै.निघ. । पुं । कर्प-

**पात्रटीरः** । पुं । काके । श.र. । लौहकिट्टे । क्रौञ्चपक्षिणि । वै निघ. । कङ्कपक्षिणि । श.र. ।

**पाथम् (स्)** । क्ली । वारिणि । मे. । रा.नि. व.४ । बालके । वाला । भा.म.१भ. रक्तष्ठीवी ज्व.चि. । "मधुकमधूकपरूषकपाथः ।"

**पाथिस्** । क्ली । लोचने । उणा. ।

**पाथोजम् (रुहम्)** । क्ली । कमले । पद्म । रा.नि.व.१० ।

**पादः** । पुं । चरणे । रा.नि.व.१८ । तरुमूले । रा.नि.व.२ । चतुर्थांशे । अम. ।

**पादगण्डि(ण्डी)रः** । पुं। श्लीपदरोगे । पायेर गोद । चिका. । [ते । मे. ।

**पादचत्वरः** । पुं । छागे । अश्वत्थवृक्षे । सैक-

**पादत्रधारणम्** । क्ली । उपानद्धारणे । जूता परा । गुणाः—"पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनं । सुखप्रचारमोजस्यं सदा पादत्रधारणम् ॥" सु.चि.२४अ. ।

**पादत्राणम्** । क्ली । उपानहादौ । जूता. ।

**पाददारिका (री)** । स्त्री । पादगतक्षुद्ररोगे । पायेर तला फाटा रोग । लक्षणं—"परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः । पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् ॥" सु.नि.१३अ. ।

**पाददाहः** । पुं । पादरोगविशेषे । पाज्वाला। लक्षणं—"पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः । विशेषतश्चंक्रमणात् पाददाहं समादिशेत् ।" मा.नि.। सु.वा.व्या.चि.१अ.। "वातरक्तक्रमं कुर्य्यात् पाददाहे विशेषतः । मसूरविदलैः पिष्टैः शतशीतेन वारिणा । चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तये । नवनीतेन संलिप्तौ वह्निना परितापितौ । मुच्यते चरणौ क्षिप्रं परितापात् सुदारुणात् ॥" संग्रहः । [अम. ।

**पादपः** । पुं । द्रुमोत्पले । वै.निघ. । वृक्षे ।

**पादपरुहा** । स्त्री । वन्दाकक्षुपे । रा.नि.व.५।

**पादपुष्पकः** । पुं। भूमिचम्पकवृक्षे । वै.निघ.।

**पादपृष्ठम्** । क्ली । पादपृष्ठभागे । ते च द्वे । च.शा.७अ. ।

**पादप्रक्षालनम्** । क्ली । पादधावने । गुणाः —"पादप्रक्षालनं पादमलरोगश्रमापहम् । चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ।" सु.चि. २४अ. ।

**पादमूलम्** । क्ली । चरणाधोभागे । हे च. ।

**पादरोगः** । पुं । पादगतरोगे, चिप्पोपनखकुनखादौ । सु.नि.१३अ. ।

**पादरोह(हि)णः** । पुं । वटवृक्षे । रा.नि. व.११ । [वै.निघ. ।

**पादरोहिणी** । स्त्री। वन्दायाम् । परगाछा ।

**पादरोही (इन्)** । पुं । वटवृक्षे । वै.निघ. ।

**पादवल्मीकम्** । क्ली । श्लीपदरोगे । रा.नि. व.२० ।

**पादविदारिका** । स्त्री । अश्वस्य पादरोगविशेषे । लक्षणं—"पार्ष्णिजा पिडिका यस्य दृश्यते तीव्रवेदना । तस्य विद्यात्क्षिपव्याधिं घोरं पादविदारिकाम् ॥" ज.द.३९अ. ।

**पादविरजा** । स्त्री। चर्मपादुकायाम्। वै.निघ.।

**पादवृक्षः** । पुं । मेषशृङ्गाम् । वै.निघ. ।

**पादशलाका** । स्त्री । शलाकावत्पादास्थनि । পায়ের নলি । ते च द्वे । च.शा.७अ. ।

**पादशाखा** । स्त्री । पादाग्रे । পায়ের পাতা। वै.निघ. ।

**पादशिष्टजलम्** । क्ली । चतुर्थांशावशिष्टे पक्वजले । तद्गुणः त्रिदोषनाशित्वम् । रा.नि.व.१४ ।

**पादशृङ्गा** । स्त्री । मेषशृङ्गाम् वै.निघ. ।

**पादशोथः** । पुं । पादगतशोफे । পাদশোথ। यथा—"अनन्योपद्रवकृतः शोथः पादसमुत्थितः । पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥" मा.नि. । [पाड़ हओया । वै.निघ. ।

**पादसुप्तिः** । स्त्री । पादस्पर्शशून्यता । পা অ

**पादस्फोटः** । पुं । पादरोगविशेषे । পাদস্ফোট । পা ফুটিয়া যাওয়া । रा.नि.व.२० । लक्षणं—"भिन्नस्याक्राम्यमानस्य कण्डूरक्तकफोद्भवाः। कण्डूयनात्ततः चिप्रं स्फोटः स्रावश्च जायते ॥" सु.नि.१३अ. । पादगतक्षुद्रकुष्ठभेदे । लक्षणं— "कण्डूमती दाहरुजोपपन्ना विपादिका पादगतेयमेव ।" सु.नि.५अ. ।

**पादहर्षः** । पुं । तन्नामकपादरोगविशेषे । পায়ের ঝিঝিনী। लक्षणं—"हृष्येते चरणौ यस्य भवतश्च प्रसुप्तकौ । पादहर्षः स विज्ञेयः कफवातप्रकोपजः । पादहर्षे तु कर्त्तव्यः कफवातहरो विधिः ॥" सु.नि.वा.व्या.चि.१अ. ।

**पादहीनजलम्** । क्ली । चतुर्थांशेन हीने पक्वजले । वातजरोगमात्रे हितम् । रा.नि.व.१४ ।

**पादहीना** । स्त्री । अकाशलतायाम् । আলোক লতা । वै.निघ. ।

**पादाग्रम्** । क्ली । प्रपदे । "पादाग्रं प्रपदं मतम् ।" रा.नि.व.१८ ।

**पादाभ्यङ्गः** । पुं । पादयोस्तैलमर्दने । "शीतसौकुमार्य्यकरः कफवातविनाशनः । धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥ निद्राकरो देहसुखः स्वरव्यः पादरोगहा। पादलक्ष्मदुकर्त्ता च पादाभ्यङ्गः प्रशस्यते ॥" तोड़. ।

**पादिनः** । पुं । कुम्भीरादिजलजन्तुषु । ते च कुम्भीरकूर्म्मनक्रगोधामकरशङ्करशिशुमारादयः । "कूर्म्मकुम्भीरकर्कटकतृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ।" सु.सू.४६अ. ।

**पादुका** । स्त्री । चर्म्मकृतपादत्राणे । জুতা । तद्धारणगुणाः—उपानद्धारणशब्दे द्रष्टव्याः ।

**पादूः** । स्त्री । पादुकायाम् । अम. ।

**पादोत्पलः** । पुं । दुर्मोत्पलवृक्षे । वै.निघ. ।

**पाद्दृ** । पुं । पादे । जटा. ।

**पानम्** । क्ली । पीतौ, द्रवद्रव्यगलाधःकरणव्यापारे । रा.नि.व.२० । प्राशवस्तुमात्रे । भाजने । मे. । पुं । निःश्वासे । हे.च. । शौण्डिके । जटा. ।

**पानकम्** । क्ली । मत्स्याण्डिकादिमिष्टद्रव्यकृतपानीये । परिमितशर्करानिम्बूरसयुक्ते अन्यविधास्लरसयुक्ते वा पक्वरसे । পানা, শরবৎ । गुणाः —"श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु । विष्टम्भि मूत्रलं हृद्यं पित्तघ्नं शीतलं तथा ॥" वा.सू. ।

**पानकर्पूरः** । पुं । स्वनामख्यातवृक्षे । পানকর্পূর । वै.निघ. ।

**पानकी** । स्त्री। पाण्डुरोगभेदे । लक्षणं—"सन्तापे भिन्नवर्चस्त्वं वहिरन्तश्च शीतता । पाण्डुता नेत्रयोर्यस्य पानकीलक्षणं भवेत् ॥" मा.नि. ।

**पानगोष्ठिका** । स्त्री । सुरापानालये । अम.।

**पानपात्रम्** । क्ली । सुरापानपात्रे । अम. ।

**पानभाजनम्** । क्ली। सुरापानपात्रे । त्रिका.।

**पानवणिक्** । पुं । शौण्डिके । हे.च. ।

**पानमात्रा** । स्त्री । सुरापाने प्रशस्तमात्रायां । यथा—"यावन्न चलते दृष्टिः यावन्न क्षुभ्यते मनः। पानमात्रा परा तावत् विपरीता विषोपमा ॥" शौनकः ।

**पानविभ्रमः** । पुं । मदात्ययभेदे । लक्षणं— "हृद्गात्रतोदकफसंस्रवकण्ठधूममूर्च्छावमिज्वरशिरोरुजनप्रदाहाः । द्वेषः सुरान्नविकृतेष्वपि तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः ॥" मा.नि. ।

**पानसम्** । क्ली । पनसमद्ये । কাঁটালের মদ । जटा. ।

**पानाजीर्णः** । पुं । तन्नामकरोगभेदे । लक्षणं

यथा —"आध्मानमुग्रमथ शीर्ष्णरुजं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि । ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च कारणानि ॥" मा.नि. ।

**पानात्ययः** । पुं । मदात्ययरोगे । तस्य निदानम् --मदात्ययशब्दे द्रष्टव्यम् ।

**पानिलम्** । क्ली । पानपात्रे । श.च. ।

**पानीयम्** । क्ली । जले । रा.नि.व.४ । See जलम् । पानकै । पानी । चण्डिकापानीयं पित्तवमिहरं । मधुरदाडिमजं प्रतिश्यायकासघ्नं अम्लदाडिमजं जठरविकारे धारकं सुधावर्द्धकञ्च । निम्बूजं छर्दिहृल्लासपित्तज्वरहरं सर्व्वाहारपाचकञ्च । नागरङ्गपानीयं पित्तकासहरञ्च । पाकराजः । [निघ. ।

**पानीयकुक्कुटः** । पुं । जलकुक्कुटे । डाक् । वै.निघ. ।

**पानीयचूर्णिका** । स्त्री । बालुकायाम् । वै.

**पानीयतण्डुलम् (ली)** । क्ली, स्त्री । कच्चटशाके । कँचड़ा दाम । वै.निघ. ।

**पानीयनकुलः** । पुं । जलविडाले । उद्बिड़ाल । हे.च. ।

**पानीयपृष्ठजः** । पुं, स्त्री । कुम्भिकायाम् । टोका पाना । प.मु. । र.मा. ।

**पानीयफलम्** । क्ली । मखान्ने । पानिफल । हिं मखाना । भा.मि. ।

**पानीयभक्तवटिका** । स्त्री । ग्रहण्यधिकारे रसः । अभ्रभस्म शुद्धमण्डूरं विडङ्गं प्र. १ प. चव्यं त्रिकटु फलत्रयं केशराजमूलं दन्तीमूलं मुस्ता पिप्पलीमूलं चित्रकमूलं घण्टाकर्णमूलं (घेटुमूल) मानमूलम् ओलमूलं शुक्लहस्तीमूलं सूर्य्यावर्त्तमूलं त्रिहृन्मूलं पुनर्नवामूलं प्र. २ तो. पारदः ॥० तो. गन्धः ॥० तो. आर्द्रकरसेन मर्द्दा । संग्रहान्तरे (पर्यायस्थाने यमानी, तथा सूर्य्यावर्त्तपुनर्नवयोरग्रहणम्) एषामेकैकशोधितानां प्र. २ तो. रसगन्धकयोः प्र. ४ माषा जलेन (मतान्तरे आर्द्रकरसेन) सम्पिष्य माषमिता वटी कार्य्या । [श.च. ।

**पानीयमूलकम्** । क्ली । सीमराजवीजे ।

**पानीयवर्णिका** । स्त्री । बालुकायाम् । रा. नि.व.४ ।

**पानीयशाकः** । पुं । पानीयकन्दभेदे । शोला कचू । उत्. पाणिसारु । प.मु. ।

**पानीयशाला (लिका)** । स्त्री । उदकशालायाम् । जल छत्र । अम. । वै.निघ. ।

**पानीयशिरीषिका** । स्त्री । जलशिरीषे । वै.निघ. । [ली । रा.नि.व.८ ।

**पानीयाभा (म्रा)** । स्त्री । वल्वजायां । उ-

**पानीयामलकम्** । क्ली । (Flacourtia cataphracta.) स्वनामख्यातवृत्ते । पानि आमला । र.मा. । हिं पानि अम्बरा । तें प्राचीनामलकमु । गुणाः—त्रिदोषघ्नं ज्वरघ्नञ्च । भा. । अम्लं स्वादु मलवर्द्धकं त्रिदोषज्वरघ्नं मुखशोधनञ्च । राज. । [निघ. ।

**पानीयालुः** । पुं । कन्दशाके । वनालौ । वै.

**पापः** । पुं । मापपर्य्याम् । मायाणी । वै.निघ. । पापकर्म्मणि, अदत्तादानादौ । तच्च दशविधं यथा —"अदत्तानामुपादानं हिंसा चैवाभिधानतः । परदारोपसेवा च कायिकं त्रिविधं मतम् ॥ पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः । असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधं ॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनं । वितथाभिनिवेशश्च त्रिविधं मानसं स्मृतम् ॥" च.द.' [illegible] वर्ग्या. ।

**पापघ्नः** । पुं । तिले । रा.नि.व.१६ ।

**पापघ्नी** । स्त्री । तुलसीवृक्षे । वै.निघ. ।

**पापचेलिकम् (का) (ली) (चैला)** । क्ली,स्त्री । पाठायाम् । आकनादि मूल । प.मु. । रा.नि.व.६ । भैष. । च.चि.३७. ।

**पापनाशिनी** । स्त्री । शमीवृक्षे । रा.नि.व.८ । कृष्णतुलसीवृक्षे । वै.निघ. । [त्रिका. ।

**पापरोगः** । पुं । मसूरिकायाम् । वसन्तरोग ।

**पापशमनी** । स्त्री । शमीवृक्षे । रा.नि.व.८ ।

**पापोदकम्** । क्ली । विष्ठाकृमिकीटादियुक्तजले । अत्रि. । See जलम् । [रोगे । वै.निघ. ।

**पाप्मा** । पुं । ज्वरे । रस.र.ज्व.चि.वाड़वरसे ।

**पामघ्नः** । पुं । गन्धके । र.मा. । [व.६ ।

**पामघ्नी** । स्त्री । कटुकायां । कटकी । रा.नि.

**पामनः ।** त्रि । कच्छूरोगिणि । খসো । अम. ।

**पामन् ।** क्ली । पामरोगे । থস্, পাঁচড়া । अम. ।

**पामरोद्धारा ।** स्त्री । गुडूच्याम् । श.च. ।

**पामा** (न्) **।** स्त्री । क्षुद्रकुष्ठरोगविशेषे । খস্-রোগ, পাঁচড়া । लक्षणम्—"सूक्ष्मा बाह्याः स्रावबत्यः प्रदाहाः पामेत्युक्ताः पिड़काः कण्डुमत्यः ॥" मा.नि. । सु.नि.१३अ. ।

**पामारिः ।** पुं । गन्धके । हे.च. । र.सा.सं. ।

**पाय(य्य)म् ।** क्ली । जले । विश्व. । परिमाणे । अम. । पाने । उणा. ।

**पायना ।** स्त्री । शस्त्रधाराया मृदुमध्यतीक्ष्णीकरणप्रक्रियायाम् । পেনোনা । सा च क्षारोदकतैलनिमज्जनभेदेन त्रिधा । तत्र क्षारपायितं शल्यादिच्छेदने । उदकपायितं मांसादिपाटने । तैलपायितं शिराव्यधनादौ च । सु.सू.८अ. ।

**पायसः ।** पुं, क्ली । पयःसिद्धयवाग्वाम् । পরমান্ন । प.मु. । पायसपाकप्रकारगुणाः यथा—"अतप्ततण्डुलो धौतः परिभृष्टो घृतेन च । खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत्॥" पुराणम् । श्रीवासे । তার্পিণ । अम. ।

**पायुः ।** पुं । गुदे, मलद्वारे । रा.नि.व.१८ । स गर्भस्थशिशोः सप्तमे मासि भवति । सुखबोधः ।

**पारः ।** पुं । पारदे । अ.टी.सा. ।

**पारक्** (ज्) **।** पुं । सुवर्णे । उणा. ।

**पारटीटः ।** पुं । प्रस्तरे । त्रिका. ।

**पारतः ।** पारदे । हे.च. ।

**पारतन्त्र्यम् ।** क्ली । पराधीनतायां । मा.नि. ।

**पारदः ।** पुं । (Hydrargyrum.) स्वनामख्यातखनिजतरलधातुविशेषे । পারা । स अन्तर्नीलो बाह्योज्ज्वल औषधयोग्यः श्रेष्ठश्च । "असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ।" र.सा.सं. । केवलः पारदस्त्रिदोषघ्नः प्रधानतो बलदश्च । द्रव्यान्तरमिश्रितश्च स सर्व्वरोगघ्नो बलदायुष्यश्च । रोगमोचकत्वात्पारद उच्यते । तल्लक्षणं—"अन्तःसुनीलो बहिरुज्ज्वलो यो मध्याह्नसूर्य्यप्रतिमप्रकाशः । शस्तोऽथ धूम्रः परिपाण्डुरश्च चित्रो न योज्यो रसकर्म्मसिद्धौ ॥" रसदोषः यथा—"नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः । असह्याग्निर्महादोषा निसर्गात् पारदे स्थिता इति । दोषहीनो यदा सूतस्तदा मृत्युज्वरापहः । शुद्धोऽयममृतं साक्षात् दोषयुक्तो रसो विषम्॥" र.सा.सं. । "शिवाङ्गात् प्रच्युतं रेतः पतितं धरणीतले । तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत् ।" पारदभस्म चतुर्धा कृष्णश्वेतपीतरक्तभेदात् । तेषु रक्तभस्म रससिन्दूरं, कृष्णभस्म कज्जलिश्च प्रधानतो व्यवहार्य्यः, शुभ्रोऽशुद्धः । "वर्णभेदेन विज्ञेयं शिववीर्य्यं चतुर्विधम् । श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत् क्रमात् ।............श्वेतं शस्तं रुजां नाशे रक्तं किल रसायनम् । धातुवादे च तत्पीतं खगतौ कृष्णमेव च ॥" गुणाः—"योगवाही महावृष्यः सदा दृष्टिबलप्रदः । सर्व्वामयहरः प्रोक्तो विशेषात् सर्व्वकुष्ठनुत् । संस्कारहीनं खलु सूतराजं यः सेवते तस्य करोति बाधाम् । देहस्य नाशं विदधाति नूनं कष्टांश्च रोगान् जनयेन्नराणाम् ॥" भा.पू.१भ.धा.व. । धान्याम्लेन एतदभावे अत्यम्लारणालेन वा रसं स्वेदयेत् । द्वितीयं यथा—त्रिकटुलवणराजिकारजनीत्रिफलार्द्रकमहाबलानागबलामेघनादपुनर्नवामेषशृङ्गीचित्रकाणि समभागानि, समस्तानि व्यस्तानि वा पूर्व्वाम्लेनैव पिष्ट्वा तेन कल्केनाङ्गुलमात्रं वस्त्रमालिप्य तन्मध्ये सूतं दत्वा बद्धा च दिनत्रयं दोलायन्त्रेण काञ्जिके पचेत् । इति स्वेदः । रसमर्दनम्—इष्टकाचूर्णचूर्णाभ्यामादौ मर्द्यः । ततोदध्ना गुड़ेन सिन्धूत्थराजिकागृहधूमैर्मर्द्यः ॥ अथवा बृहतीकुमारिकाचित्रकरक्तसर्षपसाधितैः कषायैर्मर्द्यः । "रक्तेष्टकानिशाधूमसारोर्णाभस्मतुम्बिकैः । जम्बीरद्रवसंयुक्तैर्नागदोषापनुत्तये ।" र.चि.३अ. । "त्रिफलाकन्यकातोयैः विषदोषोपशान्तये ।" अथ मूर्च्छना—"त्र्यूषणत्रिफलावन्ध्याकन्दैः क्षुद्राद्वयान्वितैः । चित्रकार्णोनिशाक्षारकन्यार्ककनकद्रवैः । सूतं कृतेन यूषेण वारान्सप्ताभिमर्दयेत् । इत्थं संमूर्च्छितः सूतस्त्यजेत् सप्तापि कञ्चुकम् ॥" इति । "अपामार्गस्य बीजानां मूषायुग्मं प्रकल्पयेत् । तत्सम्पुटे क्षिपेत् सूतमलाबूदुग्धमिश्रितम् । द्रोणपुष्पीप्रसूनानि विड़ङ्गमरिमेदकः । एतच्चूर्णमधश्चोर्द्धं दत्त्वा मुद्रां प्रदीयते । तद्गोलं स्थापयेत्सम्यक् मन्मूषासंपुटे पचेत् । एवमेकपुटेनैव सूतकं भस्मतां व्रजेत् ॥" इति सूतभस्म । भा. ?

एतत्साधकानि ऊनविंशकर्म्माणि भवन्ति, तद्यथा —स्वेदनमर्दनमूर्च्छनोत्थापनपातनबोधननियमनदीपनानुवासनगगनादिग्रासप्रमाणचारणगर्भद्रुतिबाह्यद्रुतियोगजारणरञ्जनसारणक्रामणवेधभक्षणानि। ऊर्द्धपातनाधःपातने पर्य्याये द्रष्टव्ये। "घटे रसं विनिक्षिप्य सजलं घटमन्यकम्। तिर्य्यङ्मुखं द्वयं कृत्वा तन्मुखं रोधयेत् सुधीः। रसाधो ज्वालयेदग्निं यावत् सूतो जलं विशेत्। तिर्य्यक्पातनमित्युक्तम्···॥" इति तिर्य्यक्पातनम्। "लवणेनाम्लपिष्टेन हण्डिकान्तर्गतं रसं। आच्छाद्य सजलं किञ्चित् क्षिप्त्वा स्रावेण रोधयेत्। ऊर्द्धं लघुपुटी देयो लब्धग्रासो भवेद्रसः॥" इति बोधनम्। "सर्पाक्षी चिञ्चिका कन्या भृङ्गारकनकाम्बुभिः। दिनं संस्वेदितः सूतो नियमात् स्थिरतां व्रजेत्॥" इति नियमनं। "काशीसं पञ्चलवणं राजिकामरिचानि च। शिग्रुवीजमेकत्र टङ्कणेन समन्वितम्। आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभिः। दीपनं जायते सम्यक् सूतराजस्य जारणे॥" इति दीपनम्। "दीपितं रसराजन्तु जम्बीररससंयुतम्। दिनैकं धारयेद्घर्म्मे मृत्पात्रे वासितो भवेत्॥" इत्यनुवासनम्। रसजारणाहि पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्व्वकं पूर्व्वावस्थापन्नत्वम्। जारणा। र.चि.३अ.। जारितरसगुणाः—"शुद्धगन्धेषु जीर्णन्तु शुद्धाच्छतगुणाधिकः। षड्गुणे गन्धके जीर्णो रसो भवति रोगहा। तस्माच्छतगुणो व्योमसत्त्वे जीर्णस्तु तत्समे। ताप्यखर्परतालादिसत्त्वे जीर्णो गुणावहः। हेम्नि जीर्णे सहस्रैकगुणसङ्घप्रदायकः।" इति। अथ ग्रासयोग्यरसः—मूर्च्छाध्यायोक्तषड्गुणबलिजीर्णपिष्टिकोत्थितो रसः खल्वेऽत्यन्तबुभुक्षितो घनहेमवज्रादि त्वरितमेव ग्रसति॥ इति। मूर्च्छना यथा—व्यवहारिकतोलकद्वयप्रमाणेनापि परिशुद्धो रसो मूर्च्छयितव्यः। मूर्च्छनाप्रकारस्तु बहुविधः। तत्र षड्गुणगन्धकजारणप्रक्रिया साधीयसी। रसगुणबलिजारणं विनायं न खलु रुजाहरणक्षमो रसेन्द्रः। न जलदकलधौतपाकहीनः स्पृशति रसायनतामिति प्रसिद्धिः॥ तन्निमित्तकं सिकतायन्त्रद्वयं कथ्यते। यथा—निरवधिनिपीड़ितमृच्छरावादिपरिलिप्तामतिकठिनकाचघटीमस्यां वक्ष्यमाणप्रकाररसगर्भितामधस्ताज्जन्यङ्गुलिप्रमाणितास्वच्छद्राग्रामनुरूपस्थालिकायामारोप्य पारतस्तां द्वित्र्यङ्गुलिमितेन निरन्तराखीकरणपुरःसरं सिकताभिरापूर्य्य वर्द्धमानकमारोपणीयम्। क्रमतश्च त्रिचतुराणि पञ्च वापि वासराणि ज्वलनज्वालया पचनीयमित्येकं यन्त्रम्। र.चि.३अ.। रसभक्षणमात्रा—"गुञ्जामात्रं रसं देवि हेमजीर्णन्तु भक्षयेत्। त्रिगुणं तारजीर्णस्य रविजीर्णस्य च त्रयम्। तीक्ष्णाभ्रकान्तमाषैका प्रायोमात्रेति कीर्त्तिता।" र.चि.। (आभ्यन्तरिकप्रयोगे)—परिवर्त्तकः लालानिःसारकः रजोनिःसारकः पित्तनिःसारकः घर्म्मकारकः मूत्रकारकः विरेचकः अवसादकः शोषकः प्रदाहनाशकः। (बाह्यप्रयोगे)—परिवर्त्तकः लालानिःसारकः शोषकः पचननिवारकः प्रत्युग्रतासाधकः दाहकश्च।

**पारदबन्धनम्।** क्ली। सारलौहे। वै.निघ.।

**पारशवम्।** क्ली। लौहे। वै.निघ.।

**पारश्वयः।** क्ली। सुवर्णे। वै.निघ.।

**पारसीकयमानी।** स्त्री। तद्देशीययमानीविशेषे, खोरासानीयमान्यां। किरमानी ओवा इति महाराष्ट्रादौ। सि.यो.च.द.क्रमि.चि.। गुणाः—"पारसीकयमानी तु यमानीसदृशी गुणैः। विशेषात्पाचनी रुच्या ग्राहिणी मादिनी गुरुः॥" भा.। "पारसीकयमानी तु तिक्तोष्णा कटुचोषणा। अग्निदीप्तिकरी वृष्या ···· चैव प्रकीर्त्तिता। त्रिदोषाजीर्णक्रिमिनुत्कूला ···· च नाशिनी॥" वै.निघ.।

**पारसीकवचा।** स्त्री। श्वेतवचायाम्, खोरासानीवचायाम्। শ্বেত বচ। गुणाः—"हैमवत्युदिता तद्वत् वातं हन्ति विशेषतः।" भा.।

**पारसीकाश्वः।** पुं। तद्देशजघोटके।

**पारापतः।** पुं। कपोते। अ.टी.र.।

**पाराम्बकः।** पुं। प्रस्तरे। श.र.।

**पारावतम्।** क्ली। परूषकफले। পরুষ ফল। পেয়ারা ফল। गुणाः—"पारावतं समधुरं रुच्यमत्यग्निवातनुत्।" सु.सू.४६अ.। "द्विविधं शीतमुष्णञ्च मधुरञ्चाम्लमेव च। गुरु पारावतं ज्ञेयमरुच्यत्यग्निनाशनम्॥" च.सू.२७अ.।

**पारावतः।** पुं। कपोतजातिभेदे। गृहकपोते। পায়রা। तें पावुरापिट्ट। तन्मांसगुणाः—स्निग्धं मधुरं गुरु शीतलं रक्तपित्तदाहघ्नं बल्य-

च्च । रा.नि.व.१७ । विपाके मधुरं गुरु च । सु.सू.४६अ. । "तथा पारावतो ज्ञेयो वातश्लेष्मकरो गुरुः ।" अत्रि.२१अ.। See कपोतः । परूषकवृक्षे । च.सू.२७अ. । लौहे । नीलाञ्जने । साराम्ले । वै.निघ.। वृक्षविशेषे । পেয়ারা । सु.सू.४६अ.। तिन्दुके । আবলুষ, কেন্দ । मे.। मण्डलिसर्पविशेषे । सु.कल्प.४अ.। [४६अ. ।

**पारावतकः** । पुं । व्रीहिधान्यविशेषे । सु.सू.

**पारावतकलिका** । स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাকট্কী । वै.निघ. ।

**पारावतपदी** । स्त्री । ज्योतिष्मतीलतायाम् । লতাকট্কী । र.मा.। काकजङ्घायां । रा.नि.व.४।

**पारावतशकृत्** । क्ली । कपोतविष्ठायाम् । পায়রার গু । गुणः —ग्रथितरक्तदोषघ्नम् । वा.चि.२अ. ।

**पारावताङ्घ्रिः** । स्त्री । ज्योतिष्मतीलतायां । লতাকট্কী । বন উচ্ছে । प.मु. । र.सा.सं. । महाज्योतिष्मतीलतायाम् । रा.नि.व.३ । काकजङ्घायाम् । रा.नि.व.४ ।

**पारावताङ्घ्रिपिच्छः** । पुं । वङ्गदेशीयपारावते । বোন্দাদী পায়রা । रा.नि.व.१९ ।

**पारावती** । स्त्री । लवलीफले । मे. ।

**पारावरः** । पुं । भूधामनवृक्षे । वै.निघ. ।

**पारि** । क्ली । सुरापानपात्रे । त्रिका. ।

**पारिगर्भिकः** । पुं । कपोते । परिगर्भिकरोगे । वै.निघ. ।

**पारिजातः** । पुं । पारिभद्रकवृक्षे । পালতে মান্দার । रा.नि.व.८ । र.मा.सु.चि११अ. ।

**पारिजातकः** । पुं । श्वेतजवावृक्षे । শাদা জবা । प.मु. । रोहितकवृक्षे । निम्बवृक्षे । सुरवरी । वै.निघ. । कण्टकपारिजाते । পারিভদ্র গাছ । सु.चि.११अ. ।

**पारिजाता** । स्त्री । तेजोवल्याम् । তেজবল। वै.निघ.। [उ.३९अ. ।

**पारिणामः** । त्रि । वयःपरिणतिजन्ये । वा.

**पारि(री)न्द्रः** । पुं । सिंहे । अजगरसर्पे । हे.च. । त्रिका. ।

**पारिभद्रः** । पुं । निम्बवृक्षे । रा.नि.व.९ । वै.निघ.२भ.वा.व्या.चि. कण्टकनादेयादिकषाये । (Erithrina Indica.) The Indian coral tree. पारिजातवृक्षे । পাল্তে মান্দার গাছ । हिं फरहद । मं दा. पाङ्गरा, पञ्जीर । कं हरिवाल । तें मोदुगु, बारिदेचेट्टु । ता. मुराक । गुणाः—कटूष्णः कफवातघ्नः अरोचकघ्नः पथ्यः दीपनश्च । रा.नि.व.८ । पित्तरोगघ्नः कर्णरोगघ्नश्च भा. । प्रलेपोऽस्य सन्धिवातघ्नः नेत्ररोगे च हितः । कज्जलं चक्षुष्यं । पत्रं वहिःप्रयोगात् सन्धिवेदनाघ्नञ्च । देवदारुणि । मे. । सु.सू.११अ.। सरलदेवदारौ । श.च. ।

**पारिभद्रकः** । पुं । पर्व्वतनिम्बे । सि.यो.क्रिमि चि. । निम्बवृक्षे । रा.नि.व.९ । वै.निघ.वा.व्या.चि.नारायणतैले । पारिभद्रवृक्षे । শ্বেত আকন্দ গাছ । राजार्कवृक्षे । देवदारौ । अम. । क्ली । कुष्ठौषधौ । কুড় । रा.नि.व.१२ ।

**पारिभद्रकजटा** । स्त्री । पालिधामूले । পালিতামান্দারের শিকড় । च.द.गुल्म.चि.। "व्याघ्रीकिंशुकपारिभद्रकजटा ॥"

**पारिभद्ररसः** । पुं । दद्रुकुष्ठे हितः । "मूर्च्छितं सूतकं धात्रीफलं निम्बस्य चाहरेत् । तुल्यांशं खदिरक्वाथैः दिनं मर्द्यञ्च भक्षयेत् ॥" मात्रा निष्कमिता । रस.चि. । [सु. ।

**पारिभ(भा)व्यम्** । क्ली । कुष्ठे । কুড় । प.

**पारिश्रः (सः)** । पुं । अश्वत्थविशेषे । পলাশপিপুল । हिं गजहुण्ड । भा. । वै.निघ. । See पारीशः । [निघ. ।

**पारिहार्य्यम्** । क्ली । कुष्ठौषधौ । কুড় । वै.

**पारिचि:** । पुं । स्तूपविशेषे । च. ।

**पारी** । स्त्री । जातीपत्राम् । জায়ত্রী । वै.निघ. । दोहन्याम् । पानपात्रे । त्रिका. । परागे । विश्व. ।

**पारीशः (षः)** । पुं (Thespesia populneoides, or populnea.) The tulip tree. प्लक्षवृक्षे । পাকুড় গাছ । गर्द्दभाण्डवृक्षे । গাজাভাঁট্ । क्रस्वप्लक्षभेदे । अश्वत्थविशेषे । গয়া অশ্বথ । পলাশপিপুল, পলাশপিপুল । गजद-

नसहोरा इति च लोके । हिं परशपिपुल, पर्शि-पु । तें. गङ्गरय । बम्. भेन्टि । ता. पोरिश । गुणा:—"पारीषो दुर्जर: स्निग्ध: क्रमिशुक्रकफप्रद: । फलेऽम्लो मधुरो मूले कषायस्वादुमज्जक: ॥" भा. ।

**पारुष:** । पुं । नखे । वै.निघ. ।

**पारु(रू)षकतैलम्** । क्ली । वातरक्ते तैलम् । तिलतैलं परुषकफलरस: द्राक्षारस: गाम्भारीरस: इक्षुरस: भूमिकुष्माण्डरस:, एषां प्र. ४ श. दुग्धं १६ श. । पाच्यम् ।

**पारुष्यम्** । क्ली । अगुरुणि । श.च. ।

**पारेवत:** । पुं, क्ली । फलवृक्षभेदे । পেয়ারা । उत्, प्याड़ा । वृक्षविशेषे, कामरूपे रेवात इति ख्याते, यस्य फलं महाकालफलवद्भवति । तच्च द्विविधं सामान्यं महापारेवतं स्वर्णपारेवतं चेति । सामान्यगुणा: — मधुरं क्रमिहरं वातहरं वृष्यं तृष्णाज्वरविदाहहरं हृद्यं मूर्च्छाभ्रमश्रमशोषहरं स्निग्धं रुच्यं बहुवीर्य्यकरञ्च । महापारेवतं गौल्यं बल्यं पुष्टिवर्द्धनं वृष्यं मूर्च्छाज्वरहरं पूर्व्वोक्तात् गुणाधिकञ्च । रा.नि.व.११ । स्वाद्वम्लं शीतलमुष्णञ्च । वा.सू. । द्वीपान्तरखर्ज्जूरे । वै.निघ. ।

**पार्घटम्** । क्ली । भस्मनि । ছাই । हारा. ।

**पार्थ:** । पुं । अर्ज्जुनवृक्षे । प.मु. । भा.हृद्रो.चि. ।

**पार्थकी** । स्त्री । चीरशुक्लायाम् । পাঁড়কুমড়া । श.चि. । [अर्ज्जुनघृते प्रयोज्य: ।

**पार्थवल्क:** । पुं । अर्ज्जुनत्वचि । অর্জ্জুনছাল ।

**पार्था** । स्त्री । सुवर्चलायाम् । হুড়হুড়িয়া । वा. सू.१५अ.वीरतर्वादि: । "मल्लूकमोरटकुरण्टकरम्भपार्था: ।" ब्राह्मीक्षुपे । वै.निघ. ।

**पार्थिवम्** । क्ली । तगरपुष्पे । তগরপাদুক । कोङ्कणे पिण्डीतगर । रा.नि.व.१०।२३ । पुं । शरावे । শরা । घटादौ । चिका. । अर्ज्जुनवृक्षे । त्रि । मृद्विनिर्म्मिते । पृथ्वीगुणभूयिष्ठे । सु.सू.४१अ. ।

**पार्थिवजम्** । क्ली । अर्ज्जुनत्वचि । অর্জ্জুন ছাল । च.द.हृद्रो.चि. ।

**पार्थिवा (वी)** । स्त्री । सौराष्ट्रमृत्तिकायाम् । পঙ্কপর্পটী । मन:शिलायाम् । वै.निघ. । वाजि-देहगतच्छायाविशेषे । "सुस्निग्धा पार्थिवी छाया वामाज्योति:समन्विता ।" ज.द.३अ. ।

**पार्व्वण:** । पुं । हरिणभेदे । श.च. ।

**पार्व्वत:** । पुं । निम्बवृक्षे । प.मु. । महानिम्बवृक्षे । ঘোড়ানিম্ । र.मा. । क्ली । हिङ्गुले । शिलाजतुके । शीषके । वै.निघ. ।

**पार्व्वतपीलु:** । पुं । अक्षोटवृक्षे ।

**पार्व्वती** । स्त्री । क्षुद्रपाषाणभेदायाम् । ছোট পাথরকুচা । रा.नि.व.५ । सौराष्ट्रमृत्तिकायाम् । পঙ্কপর্পটী, বেড়া মাটী । हे.च. । र.मा. । भैष. भग.चि.वृषगजाङ्कुशे । पिप्पल्याम् । धातकीवृक्षे । सिंहपिप्पल्याम् । रा.नि.व.६ । गजपिप्पल्याम् । रा.नि.व.२३ । अतस्याम् । भा. । शल्लकीवृक्षे । मे. ।

**पार्व्वतीय:** । पुं । अक्षोटवृक्षे । আখরোট গাছ । वै.निघ. । मशकजातिविशेषे । सु.कल्प.८अ. । शालिधान्यभेदे । अर्क.चि. । क्ली । नीलाञ्जने । वै.निघ. । [क्षितीरसे ।

**पार्व्वतीसम्भूत:** । पुं । गन्धके । र.मा.सं.प ।

**पार्व्वतेय:** । पुं । गजपिप्पल्याम् । प.मु. । विचकक्षुपे । रा.नि.व.६ । मर्य्यावर्त्तवृक्षे । হুড়হুড়িয়া । र.मा. । क्ली । [illegible]राञ्जने । सुर्म्मा इति लोके । र.मा.श.च. [illegible] । धातकीवृक्षे । जिङ्गिन्याम् । वै.निघ. ।

**पार्श्व:** । पुं, क्ली । कक्षाया अधोभागे । পাশ । रा.नि.व.१८ । क्ली । पार्श्वास्थिसमूहे । পাঁজরার হাড় । मे. ।

**पार्श्वकम्** । क्ली । पार्श्वास्थनि । পাঁজরার হাড় । रा.नि.व.१८ ।

**पार्श्वपिप्पलम्** । क्ली, पुं । हरीतकीभेदे, पारीषवृक्षे । गजहड़ इति पश्चिमदेशे । भा.म. ४भ.योनिरो.चि. । चि.क्र.क.वन्ध्याप्रतीकारे ।

**पार्श्वशूल:** । पुं, क्ली । शूलरोगभेदे, पार्श्वदेशस्थशूलरोगे । পার্শ্ববেদনা বা পার্শ্বশূল । तस्य निदानलक्षणे—"कफं निरुध्य पवन: सूचीभिरिव निस्तुदन् । पार्श्वस्थ: पार्श्वयो: शूलं कुर्य्यादाध्मातसंयुतम् । तेन श्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति । निद्राञ्च प्राप्नुयादेव पार्श्वशूल: प्रकीर्त्तित: ॥" भा.म.३भ. ।

**पार्श्वसंहतिः** । स्त्री । पार्श्वभागे । भा. ।

**पार्श्वसन्धिः** । स्त्री । जघनात्तिर्य्यगूर्द्धमधःपार्श्वान्तरप्रतिबद्धपृष्ठमर्म्मणि । सु.शा.६अ. ।

**पार्श्वारुणः** । पुं । बालरोगभेदे । वै.निघ. ।

**पार्श्वास्थि (कास्थि)** । क्ली । चतुर्विंशतिपञ्जरास्थनि । रा.नि.व.१८ । च.शा.७अ. ।

**पार्श्वोदरप्रियः** । पुं । कर्कटे । हे.च. ।

**पार्षतः** । त्रि । मृगसम्बन्धिनि । श्वेतविन्दुहरिणसम्बन्धिनि । सु.कल्प.१अ. ।

**पार्ष्णिः** । पुं, स्त्री । गुल्फस्याधोभागे । গোড়ভূড়া, গোড়ালি । रा.नि.व.१८ । स गर्भस्थस्य मासद्वयेन भवति । सुखबोधः । पृष्ठभागे । हला. ।

**पार्ष्ण्यस्थि** । क्ली । गुल्फाधोभागास्थनि । तच्च द्वे । च.शा.७अ. । [पात्रे । हे.च. ।

**पालः** । पुं । चित्रकवृक्षे । वै.निघ. । निष्ठीवन-

**पालकः** । पुं,क्ली । चित्रकवृक्षे । रा.नि.व.६ । गजज्वरे । गजवै. । कुष्ठे । कुड़ । र.सा.सं.प्रदरारिरसे । हिङ्गुले । वै.निघ. ।

**पालकविषम्** । क्ली । तन्नामकस्थावरकन्दविषे । सु.कल्प.२अ. । See कन्दविषं ।

**पालकाख्यः** । पुं । गजवैद्यकप्रणेतरि ऋषौ । त्रिका. । [त्रि. । धन्वन्तरौ । त्रिका. ।

**पालकाप्यः** । पुं । चरकोक्ते, मुनिविशेषे ।

**पालक्या (क्या)** । पुं । वास्तूकाकारपालङ्कशाके । পালং শাক । प.मु. । गुणाः—वातला शीता श्लेष्मला भेदिनी गुरुः विष्टम्भिनी मदघ्नी श्वासपित्तरक्तकफघ्नी च । भा.पू.१भ.शा.व. । कफपित्तवातविबन्धघ्नी रुच्या च । राज. । कुन्दुरुखोटौ । अम. ।

**पालङ्कः (ङ्का:)** । पुं,क्ली । (Beta bengolensis.) A sort of Beet root. स्वनामख्यातपत्रशाके । पालक्यशाक इति दाक्षिणात्यभाषा । পালং শাক । हिं पलकी । पालं शाक इति चित्रकूटे प्रसिद्धम् । गुणाः—ईषत् कटुकं मधुरं पथ्यं शीतलं रक्तपित्तघ्नं ग्राहि सन्तर्पणम् । रा.नि.व.७ । शल्लकीवृक्षे । पाजिपक्षिणि । বাজপাখী । मे. ।

**पालङ्की** । स्त्री । कुन्दुरौ । कुन्दुरुखोटौ । भ. टी.भ. । उपोदिकायां । পুঁই । पालङ्के । পালং শাক ।

**पालघ्नः (घ्नाः)** । पुं । छत्राके । ছাতা, কোঁড়ক । अम. । जलतृणे, छत्रातिच्छत्रे । श.र. ।

**पालनम्** । क्ली । नवप्रसूतायाः गोः दुग्धे । গাঁজলা দুধ । श.च. ।

**पालनिका (ल[लि]नी)** । स्त्री । त्रायमाणायाम् । বনলতা । रा.नि.व.५ । वा.चि.१अ. ।

**पालाग्रम्** । क्ली । तेजपत्रे । रा.नि.व.६ ।

**पालाशी** । स्त्री । चोरीवृक्षे । र.मा. ।

**पालासः** । पुं । पलासवृक्षे । वै.निघ. ।

**पालिंहिरः** । पुं । मण्डलिसर्पभेदे । सु.कल्प. ४अ. ।

**पालिः (ली)** । स्त्री । कर्णलतायभागे । मे. । जलौकायाम् । कल्पितभोजने । हे.च. । कर्णरोगविशेषे । কাণের পাতার রোগ । पाली पञ्चविधा । "परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः । पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः ॥" तेषां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि । चिकित्सा —अभ्यङ्गपरिषेकप्रदेहरक्तमोक्षणानि । (स्त्री) श्मश्रुयुक्तस्त्रियाम् । हारा. । पाकपात्रे । चित्रकवृक्षे । वै.निघ. । परिमाणभेदे । পালি । त्रिका । प्रस्थपरिमाणे । हे.च. । आलवाले । च.द. । "यवमाषमयीं पालीं ।"

**पालिका** । स्त्री । पाल्याम् । श.च. ।

**पालिधा** । स्त्री । पारिभद्रवृक्षे । (जयमङ्गलरसे) ।

**पालिन्दः** । पुं । कुन्दुरुखोटौ, सल्लकीनिर्यासे । वै.निघ. ।

**पालिन्दा (न्दिः,न्दी) (न्धा,न्धिः,न्धी)** । स्त्री । श्यामालतायाम् । प.मु. । च.सू.४अ. । कृष्णत्रिवृति । अम. । सु.कल्प.१अ. । कुन्दुरुखोटौ । रा.नि.व.१२ । अम. । भार्ग्याम् । বামনহাটী । श्वेतापराजितायाम् । त्रायमाणालतायाम् । নাগলতা । वै.निघ. । मालविकाविवृतायां । वा.उ. ३५अ । कारवेल्लां । করলা । सु.चि.१७अ. ।

**पालि(ली)शोषः** । पुं । कर्णरोगविशेषे ।

लक्षणं — "शिरास्थः कुरुते वायुः पार्ल्लीशोषं तदाह्वयम् ।" वा.उ.१०अ. ।

**पार्ल्लीकुटः** । पुं । चित्रकवृक्षे । वै.निघ. ।

**पालिवतः** । पुं । द्वीपान्तरखर्ज्जूरीवृक्षे । वै.निघ

**पावकः** । पुं । रक्तचित्रके । चित्रके । रा.नि.व.६ । मे. । वै.निघ.२भ.ज्व.चि. । शुक्लाग्नौ । सूर्य्यकान्तमणौ । वै.निघ. । कुसुम्भवृक्षे । रा.नि.व.४ । अग्निमन्थवृक्षे । भल्लातकवृक्षे । विडङ्गे । सदाचारे । मे. । हेमतापे ।

**पावकमणिः** । पुं । सूर्य्यकान्तमणौ । वै.निघ. ।

**पावकमन्थनः** । पुं । अग्निमन्थक्षुपे । वै.निघ. ।

**पावकारणिः** । पुं । अग्निमन्थक्षुपे । प.मु. ।

**पावकाह्वः** । पुं । अग्निमन्थे । वै.निघ. ।

**पावकोष्मा (न्)** । पुं । सूर्य्यकान्तमणौ । वै.निघ. ।

**पावनम्** । क्ली । कुष्ठौषधे । कुड । रा.नि.व.१२ । रुद्राक्षे । रा.नि.व.११ । जले । मे. । चन्दने । वै.निघ. । गोमये । श.च. । पुं । चित्रके । सिह्लके । शिलारसे । विश्व. । पीतभृङ्गराजे । रा.नि.व.४ । शङ्खे । वै.निघ. ।

**पावनध्वनिः** । पुं । शङ्खे । रा.नि.व.६ ।

**पावनी** । स्त्री । तुलसीवृक्षे । रा.नि.व.१० । हरीतक्याम् । विश्व. । गोरोचनायाम् । नागवल्लीलतायाम् । वै.निघ. ।

**पावासः** । पुं । क्षुद्रपनसे । वै.निघ. ।

**पाशः** । पुं । कचे । जाले । चिका. ।

**पाशवपालनम्** । क्ली । घासे । श.च. ।

**पाशी (इन्)** । पुं । वरुणवृक्षे । अम. । रस.र. उद.चि.वह्निभल्लातकरसे ।

**पाशुपतः (कः)** । पुं । श्वेतरक्तवकपुष्पवृक्षे । रा.नि.व.५ । मे. । अगस्तिपुष्पवृक्षे । प.मु. । रा.नि.व.१० । महावकुलवृक्षे । वै.निघ. । [र.मा. ।

**पाश्चात्याकरसम्भवम्** । क्ली । शाम्भरलवणे ।

**पाषाणः** । पुं । गन्धके । प.मु. । करञ्जोडि पाषाणभेदे । वै.निघ.२भ.अ.सा.चि.धातक्यादिमोदके । च.द.अ.श्म.नि. । प्रस्तरे । अम. ।

**पाषाणकदली** । स्त्री । कदलीभेदे । काष्ठकदली । वै.निघ. ।

**पाषाणकुट्ट(न्द)कः** । पुं । पाषाणभेदके । पाथरकुचा । वै.निघ. ।

**पाषाणगर्दभः** । पुं । हनुसन्धिजक्षुद्ररोगे । ... । निदानलक्षणं — "वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः । स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥" मा.नि. । भा.म.४भ. । "हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरं । पाषाणगर्दभं विद्यात् बलासपवनात्मकम् ॥" सु.नि.१३अ. ।

**पाषाणगैरिकम्** । क्ली । गिरिमृत्तिकायाम् । गेरिमाटी । वै.निघ. । [चि.रसामृतसुन्दरे ।

**पाषाणजतु** । क्ली । शिलाजतुनि । भैष.शोथ-

**पाषाणभित्** । पुं । पाषाणभेदे । पाथरचूर । र.मा. । कुलत्थे । एरण्डसप्तके । करञ्जोडिपाषाणभेदे । वै.निघ. ।

**पाषाणभेदः (कः) (नः) (दी (इन्))** । पुं (Coleus amboinicus Syn. Coleus aromaticus.) स्वनामख्यातहस्वक्षुपे । पाथरचुनीति लोके । च.मृ.४अ. । पाथरकुचा, हिमसागर । हिं पाथरचुर । मं कं पाषाणभेदि । तें पिण्डिचेट्टु । सा द्विधा वटपत्री ... लावल्कक्षुद्रभेदेन । सा. गुणाः—मधुरः ... मेहघ्नः दड्दाहमूत्रकृच्छ्रघ्नः शीतलः अश्मरीघ्नश्च । रा.नि.व.५ । "अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः । भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः । योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि च ॥" भा.पू.१भ.ह.व. । श्वासहरः सञ्चितश्लेष्मणि अपक्कातिसारे पक्वे हितः वातशान्तिकरश्च । अवशिष्टैर्गुणाः स्वस्वपर्य्याये मन्तव्याः । [श्र.चि. ।

**पाषाणरोगः** । पुं । अश्मरीरोगे । च.द.अ-

**पाषाणवज्रकरसः** । पुं । अश्मर्य्यधिकारे रसः । पारदः १भ. गन्धकः २भ. श्वेतपुनर्नवारसैः दिनं मर्दयित्वा भूधरयन्त्रे पचेत् । उद्धृत्य शुष्कां चूर्णयेत् । तुल्येन पाषाणभेदचूर्णेन यथाबलं मात्रा देया । रस.र. ।

**पाषाणविषम्** । क्ली । दारुमोचभेदे । दारमुज । प.मु. ।

**पाषाणसम्भववल्ली** । स्त्री । प्रवाले । वै. निघ. । [इति लोके । रा.नि.व.६

**पाषाणान्तकः** । पुं । अश्मन्तकवृक्षे । আপটা

**पाहाड़ः (तः)** । पुं । ब्रह्मदारुवृक्षे । श.च. ।

**पिकः** । पुं । कोकिले । स्त्री । कोकिलायाम् । अम. ।

**पिकदेवः** } पुं । आम्रवृक्षे । वै.निघ. ।
**पिकप्रियः** }

**पिकप्रिया** । स्त्री । महाजम्बूवृक्षे । रा.नि.व. ११ ।

**पिकबन्धुः** । पुं । आम्रवृक्षे । त्रिका. ।

**पिकभक्षका (क्ष्या)** । स्त्री । भूमिजम्बूवृक्षे । বন জাম । रा.नि.व.११ ।

**पिकमहोत्सवः** । पुं । आम्रवृक्षे । वै.निघ. ।

**पिकरागः** । पुं । आम्रवृक्षे । रा.नि.व.११ ।

**पिकवल्लभः** । पुं । आम्रवृक्षे । भा. ।

**पिकाङ्गः** । पुं । चातकपक्षिणि । श.च. ।

**पिकाक्षः** । पुं । कोकिलाक्षे । কুলিয়াখাড়া। रा.नि.व.२३ । रोचनीवनस्पतौ । श.च. ।

**पिकुरसः** । पुं । मद्ये । वै.निघ. ।

**पिकेक्षणा** । स्त्री । कोकिलाक्षक्षुपे । কুলেখা- ড়া । रा.नि.व.४ ।

**पिक्कः** । पुं । करिपोते । श.मा. ।

**पिङ्गम्** । क्ली । शोणपिप्पल्यां । वै.निघ. । बालके । বালা । हरिताले । पुं । वनमूषिके । रा.नि.व. १०।१३।१६ । त्रि । पिङ्गलवर्णे ।

**पिङ्गकपिशा** । स्त्री । तैलपायिकायां । তেলা পোকা । हे.च. ।

**पिङ्गचक्षुः** । पुं । कुम्भीरे । हे.च. ।

**पिङ्गभासः** । पुं । गैरिकजातिभेदे । सु.कल्प. ८अ. । See कीटः । [रा.नि.व.७ ।

**पिङ्ग(ल)मूलम्** । क्ली । गर्जरे । গাজর ।

**पिङ्गलम्** । क्ली । रीतौ । পিতল । रा.नि.व. १३ । हरिताले । पुं । नकुले । स्थावरविषभेदे । हे.च. । पेचके । কুটুরে পেঁচা । रा.नि.व.१९ ।

उशीरे । राखायाम् । वै.निघ. । मण्डलिसर्पविशेषे । सु कल्प.४अ. । वानरे । त्रिका. ।

**पिङ्गजनामकः** । पुं । शिलारसे । वै.निघ. ।

**पिङ्गललोहम्** । क्ली । रीतौ । পিতল । रा. नि.व.१३ ।

**पिङ्गला** । स्त्री । शिंशपावृक्षे । শিশু গাছ । र.मा. । गोरोचनायाम् । रा.नि.व.१२ । मकल. १४अ. । राजरीतौ । পিতলবিশেষ । रा.नि.व. १३ । ज्योतिष्मतीलतायाम् । वै.निघ. । निर्विषजलौकायाम् । सु.सू.१३अ. । पाशभेदे । পিঙ্গলা পাখী । रा.नि.व.१९ । कर्णिकायाम् । नाड़ीविशेष । हे.च. । सा च दक्षिणाङ्गाधःस्था धमनीका दक्षिणनासान्तं गता । (सारदातिलके) । "पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रिता ।" योगार्णवः ।

**पिङ्गलाक्षः** । पुं । पिङ्गलापक्षिणि । वै.निघ. ।

**पिङ्गलिका** । स्त्री । वकपक्षिणि । जटा. । मक्षिकाविशेषे । सु.कल्प.८अ. । [वै.निघ. ।

**पिङ्गवर्णकम्** । क्ली । गर्जरमूले । গাজরমূল ।

**पिङ्गसारः** । पुं । हरिताले । रा.नि.व.१३ ।

**पिङ्गस्फटिकः** । पुं । गोमेदमणौ । रा.नि. व.१३ ।

**पिङ्गा** । स्त्री । वंशे । वंशरोचने । रा.नि.व.६ । शमीवृक्षे । र.मा. । हिङ्गुनि । मे. । गोरोचनायाम् । रा.नि.व.१२ । हरिद्रायाम् । रा.नि.व.२३ । रक्तवाहिनाड्याम् । वै.निघ. ।

**पिङ्गाणः** । पुं । काचे । वै.निघ. ।

**पिङ्गाशः** । पुं । मत्स्यविशेषे । পাঙ্গাশ মাছ । क्ली । स्वर्णे । পাকা সোনা । मे. ।

**पिङ्गाशी** । स्त्री । नीलीवृक्षे । मे. ।

**पिङ्गास्यः** । पुं । पिङ्गाशमत्स्य । श.र. ।

**पिङ्गाह्वः** । पुं । पक्षिविशेषे । वम्. कालबट- पक्षी । वै.निघ. ।

**पिङ्गाक्षः** । पुं । विड़ाले । वै.निघ. ।

**पिङ्गी** । स्त्री । शमीवृक्षे । प.मु. ।

**पिच(चि)ण्डः** । पुं । उदरे । रा.नि.व.१८ । पशुपृष्ठभागे । हे.च. ।

**प्रकरम्** । क्ली । अगुरुकाष्ठे । मे. ।

**प्रकरी** । स्त्री । शूकरोगे । निदानम् ।

**प्रकाण्ड:** । पुं । तरो: स्कन्धपर्य्यन्तभागे । गुँड़ि । रा.नि.व.२ ।

**प्रकाण्डर:** । पुं । वृत्ते । श.च. ।

**प्रकाश(क)म्** । क्ली । कांस्ये । काँसा । हे.च.।

**प्रकाश(क)ज्ञाता** । पुं । कुक्कुटे । श.च. ।

**प्रकीर्ण:** । पुं,क्ली। पूतिकरञ्जे । नाटा करञ्ज। रा.नि.व.९ । चामरे । त्रिका. । [मे. ।

**प्रकीर्णकम्** । क्ली। चामरे । अम.। पुं । अश्वे ।

**प्रकीर्य्य:(क:)** । पुं, स्त्री । पूतिकरञ्जे । नाटा करञ्ज। र.मा. । वा.सू.१५अ. । "श्वेतवाहप्रकीर्य्या ।" गोधाकरञ्जे । त्रिटी । रा.नि.व. ९।२३ । कण्टकीकरञ्जे । "कण्टकीविटपकरञ्जे ।" सु.सू.३९अ.कफशमने । ड. । च.सू.१अ. फलिनीव. ।

**प्रकुञ्च:** । पुं । पले । ८ तो. । प.प्र.१ख ।

**प्रकुलम्** । क्ली । सुन्दरदेहे । त्रिका. ।

**प्रकृति:** । स्त्री । शक्तौ । शिश्ने । योनौ । त्रिका. । आहारौषधद्रव्याणां स्वाभाविके गुर्वादिगुणयोगे । च.वि.१अ. । आकाशादिपञ्चतन्मात्रं बुद्धि: अव्यक्तमिरहङ्कारश्चेत्यष्टमहाभूतसमुदायरूपे कारणे । च.शा.१अ. । अष्टरूपमखिलस्य जगत: सम्भवहेतुरव्यक्तं नाम । महत्तत्त्वादय: सप्त महानहङ्कार: पञ्चतन्मात्रश्चेति । प्रकृतिर्महानहङ्कार: पञ्च तन्मात्राणीति अष्ट प्रकृतय: । प्रकृतिपुरुषसाधर्म्याम्—अनादित्वम् अनन्तत्वम् अलिङ्गत्वं नित्यत्वं सर्व्वगतत्वञ्च । वैधर्म्यं यथा—सा च अचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिणी अमध्यस्थधर्म्मिणी चेति । पुरुषस्तु तद्विपरीतधर्म्मेति । तस्या गुणा:—सत्त्वरजस्तमांसीति । भा.पू.१भ. । स्वभावे । वातादिभेदेन प्रकृतय: सप्त । "शुक्रशोणितसंयोगे यो दोषस्तूत्कटो भवेत् । प्रकृतिर्जायते तेन...... ।" सु.शा.४अ. । "शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयान्तरे । य: स्याद्दोषोऽधिकस्तेन प्रकृति: सप्तधोदिता ।" तेषु—जागरूकोऽल्पकेशश्च वातप्रकृति: । अकालपलितादि: पित्तप्रकृति: श्यामकेशादि: श्लेष्मप्रकृति: । एवं द्विरूपादिदर्शी द्विप्रकृति: । वा. । [च.सू.१५अ.

**प्रकृतिभोजनम्** । क्ली । स्वाभाविकाहारे

**प्रकृतिवर्ण:** । त्रि । गात्रसवर्णे । च.सू.१८अ.।

**प्रकृतिविघात:** । पुं । प्रकृतेर्विकृतिजनकोपयोगे । स च कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगरूप: । यस्मात्सदपि किञ्चित् श्लेष्मपुरीषप्रत्यनीकभूतं तस्मादिति । च.वि.७अ. ।

**प्रकोथ:** । त्रि । पूतिभावापन्ने । पचा । "प्रकोथोदकावगाहनात् ।" सु.चि.२३अ. ।

**प्रकोप:(नम्)** । पुं, क्ली । चोभे । चाञ्चल्ये । वै.निघ. । वातादीनां सञ्चीभहेतौ । ते च बहुधा तत्र वातस्य प्रकोपनं बलवद्विग्रहादि । पित्तस्य क्रोधशोकभयादि । कफस्य दिवास्वप्नादि । पित्तप्रकोपनमेव पित्तस्येति । ऋतुभेदे वातादिप्रकोप: यथा—"वर्षासु वायु: कुप्यतेऽन्त: शरत्सु लौनो वायु: कुप्यते पित्तरोगे । लौयेत् पित्तं शैशिरे श्लेष्मकुम्भे हेमन्ते वा चीयमानस्तथापि । कोपं याति ग्रीष्मरोगो वसन्ते तस्माच्छान्ति: श्लेष्मरोगस्य चोष्णे। पित्तं याति कोपितां ग्रीष्मकाले दृष्टा शान्ति: पैत्तिकी वार्षिके च ॥" अथ वायुप्रकोप:—"तथा वातमूत्रपुरीषस्य रोधात् कषायातिशीतातिनिशाजागरेषु । व्यवायेऽथ वाहश्रमातातिभुक्त्वाध्वानि प्रायशो भाषणेनातिभीत्या । गुरुर्व्वरतिचारातिक्षै: कटुभिस्तथा दोलाश्वकोष्ट्रैर्यानमार्गे । रथे वा खरे कुञ्जरे मन्दिरे वा भवेन्मारुतस्य प्रकोपो नरस्य । सुशीते दिने दुर्द्दिने स्नानपीते परार्द्धे निशाजागरे वासरे च । वर्षासु वै केवलं य कोपं मरुत्सेवितो याति वै भुक्तजीर्णे । मसूरा: कलायाश्च निष्पावकाश्च महामाषमुद्गा: प्रवालामला: स्यु: । सहा चामला कृष्णकाद्या: प्रदिष्टा द्विमा: कङ्गुनीवारकाश्च शाल्या: । तथा कोरदूषश्च श्यामाक एतै: कृतं चौदनश्च यवागूकृतं वा । कलिङ्गानि वास्तूकचिल्लीकपूत्य: पलाण्डुस्तथा गृञ्जनं कन्दशाकम् । इमान् सेवितात्यर्थमेति प्रकोपं समीरस्य चोक्ता: सुरासम्भवस्तु । अतो यत्नतो रक्षणीयं मनुष्यै: शुभं वेहस्य त्वं सदा रोगशान्तिम् ॥" अथ पित्तप्रकोप: —"अत्युष्णकटुम्लरूक्षैर्विदाहै: द्रव्यै: ससिन्धुसुरासेवनेन । घर्म्मेण क्रोधेन वा स्वेदनेन व्यवायेन वा

याति कोपश्च पित्तम्। कुलत्थाढकीयूषमूलार्कशिग्रुसटीसर्षपाराजिकाशाकमेव। निशाजागरेणापि युद्धे श्रमे वा घनान्ते शरत्सु प्रकोपः प्रदिष्टः। श्रक्लेन वा चोष्णकाले शरत्सु श्रमे वासरे मध्यमे वा निशीथे। जीर्णे रसे भुक्तमात्रे प्रकोपः प्रदिष्टः कोविदैः स्यात्पित्तकोपः॥" अथ कफप्रकोपः—"निशाजागरे वासरे वातिनिद्रासुशीतोदकासेवने शीतले वा। पयःपानपीयूषेक्षुभिस्तिलैश्च तथा गञ्जनैः कन्दशाकैरथापि। अतिस्निग्धसंसेवने भोजने च प्रदिष्टः कफस्य प्रकोपो वसन्ते। दिनान्ते प्रभाते निशान्ते नरस्य प्रकोपः प्रदिष्टोऽप भुक्ते न जीर्णे। प्रदिष्टो बुधैः कोविदैरेव रोगः कफोत्पत्तिजन्यो हि कष्टप्रयुक्तः। सशीतेऽथवा शीतकाले निशान्ते नरस्य प्रकोपः प्रदिष्टोऽपि भुक्तेः। न जीर्णे प्रदिष्टः सुधी रोगवेगः निदानं कफस्येति चोक्तं सुधीभिः॥" अथ द्वन्द्वजप्रकोपः—"यदा विपर्यासगते ऋतौ च प्रकोपनं यस्य यथा प्रदिष्टं। तत्सेवमानस्य नरस्य रोगः स्याद्द्वन्द्वजो नाम विकारकारी। यस्मिन् ऋतौ वातविकार उक्तस्तस्मिन् यदि श्लेष्मविकोपनानि। संसेवते वा मनुजस्तदा च भवेत् प्रकोपः कफपित्तयोश्च॥ यस्मिन् मरुत्कुप्यति सेवते यः पित्तस्य कोपप्रकराणि यानि। विपर्ययो वा ऋतुधात्वयोश्च स पित्तवातप्रभवस्तदा स्यात्॥" अथ सन्निपातोत्पत्तिः—"विपर्यासागते काले रसे विपरिसेविते। तदा स्यात् सन्निपातो हि रोगोपद्रवकारकः॥" इति। अत्रि.५अ। [१८।

**प्रकोष्ठः** । पुं । कूर्परपाणिमध्यभागे। रा.नि.व.।

**प्रक्रिया** । स्त्री। औषधादिक्रियायाम्। चिकित्सायाम्।

**प्रक्लिन्नः** । त्रि। अतिक्लेदयुक्ते। [रोगे। भा.।

**प्रक्लिन्नवर्त्मा** । पुं। नेत्ररोगविशेषे, क्लिन्नवर्त्म

**प्रक्लेदः** । पुं। आर्द्रतायाम्। भा.४भ.ना.रो.चि.। "प्रक्लेदमायाति च धूप्यते च।" [वा.चि.९अ.।

**प्रक्वथितः** । त्रि। श्रते। प्रमथ्यारूपेण श्रते।

**प्रखरः** । पुं। सन्नाहे। त्रिका.। कुक्कुरे। अश्वतरे। मे.।

**प्रगण्डः** । पुं। कूर्परांसमध्यभागे। कनुइ इ-हेते वगल पर्य्यन्त। रा.नि.व.१८।

**प्रगतजानुः (कः)** । त्रि। दूरगतजानौ।

**प्रगन्धः** । पुं। पर्पटके। रा.नि.व.५।

**प्रग्रहः** । पुं। कृतमालवृक्षे। मे.। सु.काव्य.७अ.। तुलासूत्रे। अम.। हले। सुवर्णे। वै.निघ.। कर्णिकारवृक्षे। रा.नि.व.९।

**प्रग्राहः** । पुं। तुलासूत्रे। मे.।

**प्रघणः** । पुं। ताम्रपात्रे। लौहमुद्गरे। मे.।

**प्रघनः** । पुं। मुद्गजातिभेदे। वै.निघ.।

**प्रचण्डः** । पुं। शुक्लकरवीरे। मे.। त्रि। असह्ये।

**प्रचण्डमूर्त्तिः** । पुं। वरुणवृक्षे। श.च.।

**प्रचण्डा** । स्त्री। श्वेतदूर्व्वायाम्। रा.नि.व.८।

**प्रचयः** । पुं। उत्कर्षे। भा.।

**प्रचलः** । पुं। मयूरे। वै.निघ.। (कः)। सौम्यकीटविशेषे। सु.कल्प.८अ.।

**प्रचला** । स्त्री। सरटे। गिरगिटा। वै.निघ.।

**प्रचलाकः** । पुं। सर्पे। मयूरपुच्छे। मे.। सु.चि.१८अ.।

**प्रचलाकी** (इन्)। पुं। सर्पे। मयूरे। त्रिका.।

**प्रचलाङ्गः** । पुं। मयूरशिखायाम्। वै.निघ.।

**प्रचलितः** । पुं। मर्य्यादावृषविशेषे। वै.निघ.।

**प्रचारः** । पुं। अश्वस्य श्लैष्मिकाक्षिरोगे। लक्षणं—"प्रच्छादयति यद्दृष्टिं मांसं पक्ष्मान्तवर्द्धितम्। प्रचारकाख्यं तं विद्यान्नेत्ररोगं कफान्वितम्।" ज.द.३० अ.।

**प्रचेतसी** । स्त्री। कट्फलवृक्षे। रा.नि.व.९।

**प्रचेलम्** । क्ली। पीतचन्दने। श.च.। पीतमुद्गे। वै.निघ.।

**प्रचेलकः** । पुं। अश्वे। श.मा.।

**प्रचेलुकः** । पुं। मानभेदे। पालि। त्रिका.।

**प्रचोद(दि)नी** । स्त्री। कण्टकार्य्याम्। अम.। दुरालभायाम्। वै.निघ.।

**प्रच्छर्द्दनम्** । क्ली। वमने। भैष.।

**प्रच्छर्द्दिका** । स्त्री। वान्तौ। हे.च.।

**प्रच्छादनम्** । क्ली। नेत्रच्छदे। ज.द.६अ.। उत्तरीयवस्त्रे। हे.च.।

**प्रच्छानम्** । क्ली । छेदने, रक्तस्रावे । सु.कल्प. १ष.। सु.चि.चुद्री.चि.''प्रच्छानैर्वा जलौकाभिः।''

**प्रजननम्** । क्ली । गर्भधारणे । योनौ । मे. ।

**प्रजल्पः** । पुं । अतिभाषणे । वै.निघ. ।

**प्रजाता** । स्त्री । प्रसूतायाम् । अम. ।

**प्रजादा** । स्त्री। पुत्रदाचौलतायाम्। रा.नि.व.४।

**प्रजादानम्** । क्ली । रौप्ये । श.च. ।

**प्रजाहितम्** । क्ली । जले । श.मा. । [१६ ।

**प्रज्ञविप्रियः** । पुं । षष्टिकधान्ये । रा.नि.व.

**प्रज्ञापराधः** । पुं । अहितसेवनातिव्यवाया दौ । तदुक्तं —''धीधृतिस्मृतिविभ्रष्टः कर्म्म यत् कुरुतेऽशुभम् । प्रज्ञापराधं तं विद्यात् सर्व्वदोष-प्रकोपनम् । कर्म्मकालातिपातश्च मिथ्यारम्भश्च क र्म्मणाम् । ज्ञातानां स्वयमर्थानामहितानां निषेव-णम् ।'' च. । [प.मु. ।

**प्रणा(ना)लसः** । पुं । जीवशाके । वास्तूके ।

**प्रणालिका (ली)** । स्त्री । जलनिर्गममार्गे । हारा. । नस्यनलिकायां । नस्य दिवार नलि । च.द.नस्याधिकारे ।

**प्रतना (नी)** । स्त्री। गोजिह्वायाम् । गोजिया शाक । रा.नि.व.४ । वाच्यालके । वै.निघ. ।

**प्रतमकः** । पुं । श्वासरोगभेदे । तमकश्वास । लक्षणं —''ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकन्तु तम् । उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः । तमसा वर्द्धतेऽर्थं शीतैश्चाशु प्रशाम्यति । मज्जतस्त-मसीवास्य विद्यात् प्रतमकं तु तम् ॥'' मा.नि. ।

**प्रतरः (सन्धिः)** । पुं । ग्रीवोर्द्धगतसन्धौ । स च ग्रीवापृष्ठदण्डयोः सन्धिः । भा. । सु.श.५अ. ।

**प्रतलः** । पुं । संहतविस्तृताङ्गुलिकरे । रा.नि.व. १८ । [भ. । See सोमः ।

**प्रतानवान्** । पुं । सोमलताभेदे । सु.चि.२६

**प्रतानिका (निनी)** । स्त्री । प्रसारण्याम् । गन्धभादुलिया । शारिवायाम् । अनन्तमूल । रा.नि.व.३।१२ । [रा.नि.व.१० ।

**प्रतापः (वान्)** । पुं । अर्कवृक्षे । शुक्लार्के ।

**प्रतापतपनः (रसः)** । पुं । सन्निपातज्वरा धिकारे रसः । ''गन्धकं हिङ्गुलं सूतं तालकं लौ टङ्कणे । खर्परं साचिकाक्षारं मञ्जिष्ठां हिङ्ग समं । रसेन मर्द्दितम्पिण्डं निर्गुण्डीहस्तिशुण्ड्योः। अष्टयामम्पचेत्कूप्यां निरुध्य सिकताह्वये । त सिद्धं समादाय रक्तिकामार्द्रकेण च । सें ...... ॥'' रस.कौ. । [अम

**प्रतापसः** । पुं । श्वेतार्के । श्वेत आकन्द

**प्रतिकर्म्म** । क्ली । प्रतिक्रियायाम् । उपाये सु.कल्प.५अ. । प्रसाधने । अम. ।

**प्रतिकीर्णः** । त्रि । मलादिव्याप्ते । च.इ. ।

**प्रतिखुरः** । पुं । मूढगर्भभेदे । ''निःसृतहस्त पादशिराः कायसङ्गी प्रतिखुरः ।'' सु.शा.८अ. ।

**प्रतिगन्धा** । स्त्री । सोमराज्याम् । रा.नि.व.४

**प्रतिघः** । पुं । मूर्च्छायाम् । श.र. ।

**प्रतिघ्नम्** । क्ली । अङ्गे । श.च. ।

**प्रतिच्छाया** । स्त्री । जलादर्शातपादिषु प्रति-फलितशरीरच्छायायाम् । प्रतिबिम्बित शरीरे-र छाया । ''प्रतिप्रमाणसंस्थाना जलादर्शातपादि षु । छाया या सा प्रतिच्छाया या च वर्णप्रभाश्र-या ॥'' च.इ.७अ. ।

**प्रतिजिह्वा (ह्विका)** । स्त्री । मूलजिह्वा याम् । आल जिह्वा । रा.नि.व.१८ । त्रिका. ।

**प्रतिज्ञा** । स्त्री । साध्यवचने । ''प्रतिज्ञा नाम साध्यवचनं, यथा नित्यः पुरुष इति ।'' च.वि. ८अ. ।

**प्रतिज्ञाहानिः** । पुं । प्रतिगृहीतायाः प्रतिज्ञायाः पर्य्यनुयोगेन परित्यागे । च.वि.८अ ।

**प्रतितन्त्रसिद्धान्तः** । पुं । सिद्धान्तविशेषे । See सिद्धान्तः ।

**प्रतितूणी** । स्त्री । वातव्याधिविशेषे । लक्षणं —''गुदोपस्थोत्थिता सैव प्रतिलोमं विधाविता । वेगैः पक्वाशयं याति प्रतूणी चेह सोच्यते ॥'' मा.नि । ''तूण्याञ्च प्रतितूण्याञ्च प्रशस्ताः स्नेहव-स्तयः । पिबेद्वा स्नेहलवणं पिप्पल्यादिमथाम्बुना । उष्णेन रामठक्षारप्रगाढमथवा घृतम् ॥'' सु.नि. १अ. । [रा.नि.व.७ ।

**प्रतिपत्रफला** । स्त्री । क्षुद्रकारवेल्लिकायाम् ।

**प्रतिपर्णशिफा** । स्त्री। द्रवन्त्यां । रा.नि.व.५।

**प्रतिपिष्टः** । त्रि । अस्थिद्वयपिष्टे, उत्पिष्टे । भा.म.३भ. । [मद.चि. ।

**प्रतिबला** । स्त्री । अतिबलायाम् । चि.क्र.क.

**प्रतिमर्षः** । पुं । शिरोवस्तिविशेषे । स चाबालं प्रयोज्यः । "जन्मप्रभृति बालस्य प्रतिमर्षो विधीयते ।" रत्नमालासंग्रहः । "ईषदुच्छिङ्घनात् स्नेहो यावद्वक्त्रं प्रपद्यते । नस्ये निषिक्तन्तं विद्यात्प्रतिमर्षं प्रमाणतः । प्रतिमर्षश्च नस्यार्थं करोति न च दोषभाक् ॥" प.प्र.४ख. । तत्र चत्वारः षट् अष्टौ वा बिन्दवः यथाबलं शिरोविरेकस्नेहस्य मात्रा । सु.चि.४०अ.वा.उ.२अ. । स चतुर्द्दशसु कालेषूपादेयः । तद्यथा—"तल्पोत्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्द्दितवता दिवास्वप्नोत्थितेन सायञ्चेति । तल्पोत्थितादौ यथाक्रमं गुणाः—तल्पोत्थितेनासेवितः प्रतिमर्षः रात्रावुपचितनासास्रोतोगतं मलमुपहन्ति मनःप्रसादञ्च करोति । प्रक्षालितदन्तेनासेवितः दन्तानां दृढतां वदनसौगन्ध्यञ्चापादयति । गृहान्निर्गच्छता सेवितः नासास्रोतसः क्लिन्नतया रजोधूमौ वा नाबाधते । व्यायाममैथुनाध्वपरिश्रान्तेन सेवितः श्रममुपहन्ति । मूत्रोच्चारान्ते वा सेवितः दृष्टिगुरुत्वमपनयति । कवलाञ्जनान्ते दृष्टिं प्रसादयति । अभुक्तवता सेवितः स्रोतसां विशुद्धिं लघुताञ्चापादयति । वान्तेनासेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्तकाङ्क्षामापादयति । दिवास्वप्नोत्थितेनासेवितः निद्राशेषं गुरुत्वं मलञ्चापोह्य चित्तैकाग्र्यं जनयति । सायञ्चासेवितः सुखनिद्राप्रबोधञ्चेति ।" सु.चि.४०अ. ।

**प्रतिमा (नम्)** । स्त्री, क्ली । करिणो दन्तद्वयमध्यवर्त्तिशुण्डाभागे । गजदन्तबन्धे । त्रिका. ।

**प्रतिमूषिका** । स्त्री । छुछुन्दर्य्यां । वै.निघ. ।

**प्रतियत्नः** । पुं । रचनायाम् । त्रिका. ।

**प्रतिरम्भः** । पुं । सन्तापे । निदा. ।

**प्रतिलोमः** । पुं । विलोमे ।

**प्रति(ती)वापः** । पुं । कषाये चूर्णादिप्रक्षेपे । र.चि.३अ. । कल्के । सु.चि.२१अ. । धातुभस्मीकरणे । गलितस्य धातोः द्रव्यान्तरेणावचूर्णने । अ.टी.रत्ना. । पानीयौषधविशेषे । च.द.विद्र.चि. ।

**प्रतिविम्बदर्शकः** । पुं । दर्पणे । वै.निघ. ।

**प्रतिविषा** । स्त्री । अतिविषायाम् । अं Aconite. च.द.अ.सा.चि. । "हिङ्गुप्रतिविषाभयाः ।"

**प्रतिविष्णुकः** । पुं । मुचुकुन्दवृक्षे । रा.नि.व.१० । चौरिणीभेदे । वै.निघ. ।

**प्रतिवीजम्** । क्ली । तारनागाभ्रहेमकृतपारदनिबन्धनद्रव्ये । "नागाभ्रं वाहयेत्तारे हेम्नि च द्वादशे गुणे । प्रतिवीजमिदं श्रेष्ठं पारदस्य निबन्धनं ॥" र.चि.३अ. ।

**प्रतिश्या (स्या) (यः)** । स्त्री, पुं । नासारोगविशेषे । तस्य निदानम्—"अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः । नीचात्युच्चोपधानेन पीतेनान्येन वारिणा । अत्यम्बुपानरमणच्छर्दिवाष्पग्रहादिभिः । क्रुद्धा वातोल्वणा दोषा नासायां स्त्यानतां गताः । जनयन्ति प्रतिश्यायं वर्द्धमानं क्षयप्रदम् । तत्र वातात् प्रतिश्याये मुखशोषो भृशक्षवः । घ्राणोपरोधनिस्तोददन्तशङ्खशिरोव्यथाः । कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ । स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः । पित्तात्तृष्णाज्वरघ्राणपिटिकासम्भवभ्रमाः । नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः । कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम् । माधुर्य्यं वदने कण्डूः स्निग्धशुक्लघना स्रुतिः । सर्व्वजो लक्षणैः सर्व्वैरकस्माद्वृद्धिशान्तिमान् । दुष्टं नासाशिरां प्राप्य प्रतिश्यायं करोत्यसृक् । उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता । सर्व्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिताः ।" वा.उ.१९अ. । रस.र.बाल.चि. । "प्रतिश्यायश्वासकासके ।" भा.म.१भ.श्लेष्म.ज्व.चि. । "प्रतिश्यायोऽरुचिः कासः ।" पीनसरोगे । निदा. ।

**प्रतिष्ठा** । स्त्री । जनोपादेयतयावस्थाने । च.सू.१अ. ।

**प्रतिष्ठापना** । स्त्री । परप्रतिज्ञायाः प्रतिविपरीतार्थायाः स्थापनायाम् । यथा—अनित्यः पुरुष इति । च.वि.८अ. । [वै.निघ. ।

**प्रतिसमाधानम्** । क्ली । रोगमुक्तकरणे ।

**प्रतिसरः** । पुं । व्रणशुद्धौ । प्रभातकाले । वै. निघ. ।

**प्रतिसारः (णम्)** । पुं, क्ली । लवणैः कटुचूर्णैश्च व्रणघर्षणे । "लवणैः कटुचूर्णैश्च घृष्यते यद्रणं बुधैः । प्रतिसारस्ततः प्रोक्तः…… ॥" अ.द. १२अ. । घर्षणे । सु.चि.२२अ. । दन्तजिह्वामुखानां चूर्णकल्कावलेहैरङ्गुल्या शनैः घर्षणे । "वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम् । अरुचिं दन्तपीड़ाञ्च निहन्ति प्रतिसारणम् ॥" भा. ।

**प्रतिसारी (इन्)** । त्रि । सारकद्रव्यमात्रे । वै. निघ. ।

**प्रतिसूर्य्यः (कः)** । पुं । सरटे । त्रिका. । विश्व. । तन्नामकगोधेरकजातौ । सु.कल्प.८अ. ।

**प्रतिसोमा** । स्त्री । महिषवल्लीलतायाम् । रा. नि.व.३ । लघुसोमलतायाम् । वै.निघ. ।

**प्रति(ती)हासः** । पुं । करवीरवृक्षे । करवीरश्च । रा.नि.व.१० । अम. । शुक्लकरवीरे । वै. निघ. ।

**प्रतिक्षुत्** । स्त्री । क्षिकायां । हाँचि । वै.निघ. ।

**प्रतीकः** । पुं । शरीरावयवे । रा.नि.व.१८ । पटोले । भा.पू १भ.शा.व. । विलासे । मे. ।

**प्रतीकारः** । पुं । चिकित्सायाम् । श.मा. ।

**प्रतीनाहः** । पुं । कर्णरोगे । लक्षणम्—"वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् । कर्णगौरवं पिधानञ्च स प्रतीनाहसंज्ञकः ॥" वा.उ. १७अ. ।

**प्रतुण्डकः** । पुं । जीवकशाके । वै.निघ. ।

**प्रतुदः** । पुं । श्येनकाकादिपक्षिजातौ । ते प्रतुद्य निष्कृष्य भक्षयन्तीति प्रतुदसंज्ञा प्राप्ताः । तन्मांसगुणाः—सद्यःस्वादु गुरुष्णं स्निग्धं बल्यं पित्तदाहरक्तकरञ्च । रा.नि.व.१७ । एतदर्कगुणाः—"कफपित्तहरो ग्राही बद्धविण्मूत्रको भवेत् ।" अर्क.चि. ।

**प्रतूणी** । स्त्री । See प्रतितूणी ।

**प्रतोली** । स्त्री । ग्रीवासिद्ध्योर्व्रणबन्धनभेदे । सु. सू.१८अ. । लक्षणं—"सुप्तोली पुटिका प्रोक्ता जालबद्धहरस्तुका ।" इति भानुमती.टी. । "कौपीनाकारा मध्यधारवाजालवत्नवत् बहुच्छिद्रा सुप्तोली प्रतोली वा ।" वा. ।

**प्रत्यक्पर्णी** । स्त्री । रक्तापामार्गे । भा.पू भ. । द्रवन्त्याम् । रा.नि.व ५ ।

**प्रत्यक्पुष्पी** । स्त्री । अपामार्गक्षुपे । रा.नि. ४ । सु.सू ४३अ । च.सू.१।४अ. । वा.सू १५ । अर्कादि: । "प्रत्यक्पुष्पी पीततैलोदकीर्य्या ।"

**प्रत्यक्श्रेणी** । स्त्री । दन्त्याम् । अम. । च.सू. अ. । मुतश्रेणीक्षुपे । रा.नि.व.४ । द्रवन्तीक्षुपे रा.नि.व.५ । आखुकर्ण्याम् । इन्दूरकाणी । मूषाकाणी । रा.नि.व.३ । क्षुद्रदन्तीक्षुपे । र.मा

**प्रत्यग्गन्धा** । स्त्री । स्वर्णयूथिकायाम् । वै. निघ. ।

**प्रत्यङ्गम्** । क्ली । अङ्गावयवेषु । तानि मस्तकोदरपृष्ठनाभिललाटनासाचिबुकवस्तिग्रीवाः इत्येत एकैकाः । कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे विंशतिरङ्गुलयः । एष प्रत्यङ्गविभागः । तस्य पुनः सङ्ख्यानम् । यथा—त्वचः कलाः धातवः मलाः दोषाः यकृत् प्लीहा फुसफुसः उण्डुकः हृदयम् आशयाः अन्त्राणि वृक्कद्वयं स्रोतांसि कण्डराः जालानि कूर्चाः रज्जवः सेवन्यः सङ्घाताः सीमन्ताः अस्थीनि सन्धयः स्नायवः पेश्यः मर्म्माणि शिराः धमन्यः योगवहानि च । विशेषाः पर्य्यायेषु द्रष्टव्याः । सु.शा.५अ. ।

**प्रत्यङ्गिरा** । स्त्री । करञ्जौषधवृक्षे । "पिबति यः प्रत्यङ्गिरासम्भवम् । च.द.भैष.विष.चि. ।

**प्रत्यञ्जनम्** । क्ली । अञ्जनेन नेत्रप्रसाधने । च. द. । [निघ. ।

**प्रत्यनीकः** । त्रि । प्रतिकूले । असाध्ये । वै.

**प्रत्यनुयोगः** । पुं । अनुयोगस्यानुयोगे । यथा—"अनुयोगस्य पुनः को हेतुः इति ।" च.वि.८अ. ।

**प्रत्ययः** । पुं । हेतौ । भा. । रन्ध्रे । शब्दे । अम. । त्रि । ख्याते । है.च. । [नि.व.२० ।

**प्रत्यवसानम्** । क्ली । भोजने । र.मा. । रा.

**प्रत्यश्मा (न्)** । पुं । गिरिमृत्तिकायाम् । गैरिमाटी । त्रिका. ।

**प्रत्यष्ठीला** । स्त्री । वातव्याधिविशेषे । लक्षणं यथा – "एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीं । प्रत्यष्ठीलामिति वदेत् जठरे तिर्य्यगुत्थिताम् ॥" मा.नि. । सु.नि.१अ. । "प्रत्यष्ठीलाष्ठीलकयोः गुल्मेऽभ्यन्तरविद्रधौ । क्रियाहिङ्गादिचूर्णञ्च शस्यतेऽत्र विशेषतः ॥"

**प्रत्यक्षम्** । क्ली । इन्द्रियग्राह्ये । अम. । तच्च षड्विधं चाक्षुषादिभेदेन । "प्रत्यक्षं नाम तद्यदात्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते ।" तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः । शब्दादयस्तु इन्द्रियप्रत्यक्षाः ।" च.वि.८अ. ।

**प्रत्याध्मानः** । पुं । वातव्याधिविशेषे । लक्षणम् —"विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितं । प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ॥" मा.नि. । सा. चिकित्सा —"प्रत्याध्माने समुत्पन्ने कुर्य्याद्वमनलङ्घने । दीपनादि प्रयुञ्जीत पूर्ब्ववद्बस्तिकर्म्म च ॥"

**प्रत्यानाहः** । पुं । आनाहवाते । निदा. ।

**प्रत्युद्गारः** । पुं । वायुजन्यरोगभेदे । वै.निघ. ।

**प्रत्यु(त्यू)षः** । पुं, क्ली । प्रभाते । अ.टी.भ. ।

**प्रथमकुसुमः** । पुं । शुक्लमरुवकवृक्षे । वै.निघ. ।

**प्रथमनवनीतम्** । क्ली । प्रसवात् शतदिनाभ्यन्तरजातनवनीते । वै.निघ. ।

**प्रथितालुकी** । स्त्री । रक्तालुभेदे । भा. ।

**प्रदरः** । पुं । (Fluor albus.) तन्नामकस्त्रीरक्तादिस्रावरोगे । প্রদর, পরদর । निदानादि —"विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च । यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च । तं श्लेष्मपित्तानिलसन्निपातैश्चतुःप्रकारं प्रदरं वदन्ति ।" इति । लक्षणं यथा – "असृग्दरं भवेत्सर्व्वं साङ्गमर्द्दं सवेदनम् । शश्वत्स्रवन्तीमास्रावं तृष्णादाहज्वरान्वितां । दुर्ब्बलां क्षीणरक्ताञ्च तामसाध्यां विवर्ज्जयेत् ॥" कफाद्यथा — आमं पिच्छं पाण्डु तुषोदकाभं स्रवति । पित्तात् पीतनीलश्यामसुष्णं सवेगं रक्तं स्रवति । वातात् रूक्षम् अरुणं फेनिलमल्पमल्पञ्च स्रवति । अन्यच्च — सक्षौद्रसर्पिर्हरितालवर्णं कुणपं मज्जप्रकाशञ्च स्रवेत् । मा.नि. ।

**प्रदरान्तकलौहम्** । क्ली । प्रदराधिकारे लौहे । "लौहं ताम्रं हरीतालं वङ्गमभ्रं वराटिका । त्रिकटु त्रिफला चित्रं विडङ्गं पटुपञ्चकम् । चविका पिप्पली शङ्खं वचाहबुषपाकलम् । शटी पाठा देवदारु एला च वृद्धदारकम् । एतानि समभागानि संचूर्ण्य वटिकां कुरु । शर्करामधुसंयुक्तं घृतेन भावयेत् पुनः । रक्तं श्वेतं तथा नीलं पीतं प्रदरदुस्तरम्...।" লৌহ, তামা, হরিতাল, বঙ্গ, অভ্র, কড়িভস্ম, ত্রিকটু, ত্রিফলা, চিতারমূল, বিড়ঙ্গ, পঞ্চলবণ, চই, পিপুল, শঙ্খভস্ম, বচ, হবুষফল, কুড়, শটী, আকনাদি, দেবদারু, এলাইচ, বীজতাড়কের বীজ, প্রত্যেকে চূর্ণ সমভাগ মধু ও চিনি সংযোগে ঘৃতের সহিত ভাবনা দিয়া বটী করিবে । रस.र. ।

**प्रदिग्धमांसम्** । क्ली । पक्वमांसव्यञ्जनविशेषे । See मांसम् ।

**प्रदीपनः** । पुं । चित्रकवृक्षे । वै.निघ.२भ.अर्शः चि.राजवल्लभरसे । स्थावरविषभेदे । लक्षणं यथा —"वर्णतो लोहितो यः स्याद्दीप्तिमान्दहनप्रभः । महादाहकरः पूर्व्वैः कथितः स प्रदीपनः ॥" भा. ।

**प्रदीप्ता** । स्त्री । लाङ्गलिकायाम् । विषलाङ्गलियां । वै.निघ. ।

**प्रदेशः** । पुं । आरब्धस्यातीतेन सम्पादने । "प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्ययमेव उद्धरिष्यतीति ।" सु.उ.६५अ. ।

**प्रदेश(शि)नी** । स्त्री । तर्ज्जन्यङ्गुली । रा.नि.व.१८ । शस्त्रविशेषे । सा च अग्रपर्व्वप्रदेशप्रमाणा मुद्रिका दशाङ्गुला च कर्त्तरीति कथ्यते । सु.सू.८अ. ।

**प्रदेहः** । पुं । अनुलेपनाभ्यङ्गादौ । सु.सू.१८अ. ।

**प्रधमनम्** । क्ली । नस्यविशेषे । "षडङ्गुला द्विवक्त्रा या नाड़ी चूर्णं तया धमेत् । तीक्ष्णकोलमितं वक्त्रवातैः प्रधमनं हितम् ॥" भा. । "घ्राणमार्गेण यच्चूर्णम्प्रेर्य्यते मुखवायुना । प्रधमनं तद्विख्यातम् ।" ज.द.१२अ. । सु.सू.७अ.मूर्च्छाचि.त्रिकट्वादिनस्ये ।

**प्रधानकर्म्म** । क्ली । रोगोत्पत्तौ यत्क्रियते द्वितीयं कर्म्म तत्र । व्रणपाचनरोपणादौ वा । वमनविरेचनबस्तिनस्यशिरामोक्षणेषु वा । आतङ्कोत्पत्तौ यत् क्रियते कर्म्म तत्र वा । सु.सू.५अ. ।

**प्रनाल(ग्र)क:** । पुं । वास्तुकशाके । जीवशाके । वै.निघ. ।

**प्रपथ्या** । स्त्री । हरीतक्याम् । रा.नि.व.११ ।

**प्रपदम्** । क्ली । पादाग्रभागे । "पादाग्रं प्रपदं मतम् ।" रा.नि.व.१८ । [अम. ।

**प्रपा** । स्त्री । पानीयशालायाम् । জলের ঘর ।

**प्रपाणम्** । क्ली । उत्तरौष्ठे । "उत्तरौष्ठं प्रपाणं स्यात् ।" ज.द.३ग्र. ।

**प्रपाणि: (क:)** । पुं । करस्याधोभागे, पाणितले । হাতের তেলো । "करस्याध: प्रपाणि: स्यात् ।" रा.नि.व.१८ । च.वि.८अ. । (क:) मणिबन्धात्कर्पोणिपर्यन्ते करभागे । च.द.८अ. ।

**प्रपात:** । पुं । भृगौ, प्रपतनस्थाने । सु.कल्प.५अ. ।

**प्रपादिक:** । पुं । मयूरे । वै.निघ. ।

**प्रपानकम्** । क्ली । पाना इति शरबत् इति च ख्याते नानारसपेयद्रव्ये । यथाम्रपानकादि । পানা, শরবৎ । भा. ।

**प्रपुण्डरीकम्** । क्ली । पौण्डरीके । পুণ্ডরিয়া । च.चि.४अ. ।

**प्रपुना(न्न,न्ना)ट: (ड:)** । पुं । (Cassia Tora) चक्रमर्द्दक्षुपे । চাকন্দা । तै तगरिशचेट्ट । ता. उषित्तगरयी । द्रा. टरोट । रा.नि.व.४।

**प्रपुन्नाटच्छद:** । पुं । चक्रमर्द्दपत्रे । वै.निघ. । चक्रमर्द्दपत्रे ।

**प्रपुराणघृतम्** । क्ली । अतिपुरातनघृते । খুব পুরাণ ঘৃত । "लाक्षारसनिभं शीतं प्रपुराणमत: परम् ।" सि.यो.उन्माद.चि. ।

**प्रपुराणधान्यम्** । क्ली । पुराणधान्यके । অতি পুরাতন ধান । च.चि.५अ. ।

**प्रपूरिका** । स्त्री । कण्टकार्य्याम् । श.च. ।

**प्रपोटक:** । पुं । अश्वस्य पादरोगभेदे । लक्षणं यथा—"प्रपोटकं विजानीयात् ग्रन्थिभि: कूर्चसम्भवै: । आमण्डकास्थिसङ्काशै: ग्रन्थिभिश्चातिकण्टकै: ॥" ज.द.३८अ. ।

**प्रपौण्डरी(ण्ड्र)कम्** । क्ली । (Root stock of nymphaea lotus.) शालपर्णीपत्रतुल्यपत्रे क्षुद्रविटपिनि । পুণ্ডরিয়া । हिं पुंडेरी । मं पुण्डरीक । तै पुंडरीकमनुवेविध्यानमु । गुणा:— मधुरं कटिनरचक्षुष्यं तिक्तं शीतलं रक्तपित्तव्रणघ्नं ज्वरदाहहरञ्च । रा.नि.व.१२ । च.द.छागाद्यघृते । तन्नामककन्दविषे । सु.कल्प.२अ. । See कन्दविषम् ।

**प्रबल:** । त्रि । बलवति । पुं । पल्लवे । श.मा. । स्त्री । प्रसारणीलतायाम् । वै.निघ. ।

**प्रबला** । स्त्री । प्रसारण्याम् । रा.नि.व.५ ।

**प्रबलाकी** (इन्) । पुं । सर्पे । विश्व. ।

**प्रबाल:** । पुं क्ली । स्वनामख्याते रत्नभेदे । পলা, মুঙ্গা । अम. । गुणा:—मधुर: अम्ल: कफपित्तादिदोषघ्न: स्त्रीवीर्य्यकान्तिकर: धारणात् माङ्गल्यश्च । सूक्ष्म: घन: शिराहीन: इत्त:—शुभकर: । गौर: कृष्णरुच: श्वेत: वक्रसूक्ष्म:—अशुभकर: । रा.नि.व.१३ । सारक: शीतल: कषाय: स्वादु: कान्तिकर: चक्षुष्यश्च । राज. । किशलये । मे. ।

**प्रबालफलम्** । क्ली । रक्तचन्दने । भा. ।

**प्रबालिक:** । पुं । जीवशाके । रा.नि.व.७ ।

**प्रबोधनी** । स्त्री । [illegible]लभायाम् । रा.नि.व.४।

**प्रबोधिका** । स्त्री । कुक्कुट्याम् । কুকড়া । वै.निघ. ।

**प्रभद्र: (क:)** । पुं । निम्बवृक्षे । নিম গাছ । रा.नि.व.९ । पारिभद्रवृक्षे । পালিদা মান্দার গাছ । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । रा.नि.व.५ ।

**प्रभव:** । पुं । कारणे । जन्महेतौ । अम. । जन्मनि । श.र. । [अम. ।

**प्रभाकर:** । पुं । अर्कवृक्षे । আকন্দ গাছ ।

**प्रभाकरक्षीरम्** । क्ली । अर्कक्षीरे । আকন্দ আঠা । वै.निघ.२भ.कर्णकल्प.चि. ।

**प्रभाकीट:** । पुं । खद्योते । रा.नि.व.१९ ।

**प्रभाञ्जन:** । पुं । शोभाञ्जनवृक्षे । সজিনা গাছ । चिका. ।

**प्रभातम्** । क्ली । प्रात:काले । तत्र द्रष्टव्यं यथा—"वैद्य: पुरोहितो मन्त्री दैवज्ञोऽथ चतुर्थक: ।

प्रभातकाले द्रष्टव्यौ नित्यं स्वश्रियमिच्छता ॥" राज.१प. ।

**प्रमाभासः** । पुं । काकविशेषे । वै.निघ. ।

**प्रभावः** । पुं । स्वभावे । सामर्थ्ये । "रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् । दन्तीरसाद्यैस्तुल्यापि चित्रकस्य विरेचनी । मधूकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥" इत्यादि । "क्वचित्तु केवलं द्रव्यं कर्म्म कुर्य्यात्प्रभावतः । ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा ॥" भा. ।

**प्रभुः** । पुं । पारदे । रा.नि.व.१३ ।

**प्रभूततीक्ष्णगन्धा** । स्त्री । राजिकायाम् । সরিষা । वै.निघ. ।

**प्रभूतिः** । स्त्री । प्रकृष्टायोजने । च.सू.१६अ. ।

**प्रभेषजा** । स्त्री । काकोदुम्बरिकायाम् । रा.नि.व.११ ।

**प्रमत्तः** । पुं । भासपक्षिणि । काकविशेषे । स्त्री । लाङ्गलीवृक्षे । বিষলাঙ্গুলিয়া । वै.निघ. ।

**प्रमथः** । पुं । घोटके । श.र. । स्त्री (था) । हरीतक्याम् । मद.व.१ । পাড়ায়াম্ ।

**प्रमथितम्** । क्ली । नवनीते । निर्जलतक्रे । रा.नि.व.१५ ।

**प्रमथ्या** । स्त्री । मन्थभेदे । "शृतः कषायो निर्य्यूहः क्वाथो यूषः कृतश्च यः । कृतयूषः प्रमथ्या च द्रव्यात्कल्कीकृतात् शृता ॥" इति प्रमथ्यालक्षणम् । वा.चि.१अ. । अरुण. । "प्रमथ्या प्रोच्यते द्रव्यं पलमात्रं सुकल्कितम् । किञ्चिदन्येन संयुक्तमथवान्यविवर्ज्जितम् । तोये चाष्टगुणे साध्यं पानमाहुः पलद्वयम् ।" शेषं मन्थवत् । तोडलानन्दे । हारीतः । गुणाः—"प्रमथ्या मध्यदोषिभ्यो दद्याद्दीपनपाचनम् ।" वा. ।

**प्रमदः** । पुं, क्ली । धत्तूरवृक्षे, तत्फले च । श.च. । त्रि । मत्ते । स्त्री । प्रियङ्गौ । चि.क.क.४स्तवकः ।

**प्रमदिनी** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**प्रमाणम्** । क्ली । परिमाणे । मे. । देहपरिमाणे । तच्च मध्याल्पमहद्भेदेन त्रिधा भवति । च.इ.७अ. । शास्त्रे । मे. ।

**प्रमाथी** (न्) । त्रि । सूक्ष्मतीक्ष्णभावात् स्रावकधर्म्मिणि । "स्रोतांसि दोषलिप्तानि प्रमथ्य विवृणोति यत् । प्रविश्य सौक्ष्म्यात्तैक्ष्ण्याच्च तत्प्रमाथीति संज्ञितम् ॥" खरनादः ।

**प्रमार्ज्जनम्** । क्ली । प्रोञ्छने । बालाङ्गुलिवस्त्रैः पक्षिरजःशल्यादिषु प्रोञ्छने । सु.सू.७अ. ।

**प्रमितः** । त्रि । अन्यूनातिरिक्ते । वै.निघ. ।

**प्रमिताशनम्** । क्ली । अत्यल्पमात्रभोजने । অত্যল্প ভোজন । च.शा.८अ. ।

**प्रमीलकः** । पुं । तन्द्रायाम् । शरीरालस्ये । শরীরের আলস্য । भा.म.१भ. ।

**प्रमीला** । स्त्री । तन्द्रायाम् । रा.नि.व.२० ।

**प्रमीलिका** । स्त्री । तन्द्रायां । विसूच्यां शिरोरोगादौ । सि.यो.विसूचि.श्रीकण्ठः ।

**प्रमुखः** । पुं । पुन्नागवृक्षे । श.च. ।

**प्रमेहः** । पुं । स्वनामख्यातरोगे । মেহরোগ । निदानं यथा—"आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि । नवान्नपानं गुडवैकृतञ्च प्रमेहहेतुः कफकृच्च सर्व्वम् ॥ मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतः प्रदूष्य । करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि । क्षीणेषु दोषेष्ववकृष्य धातून् संदूष्य मेहान् कुरुतेऽनिलश्च ॥ साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्यः पवनाच्चतुष्कः । समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः । मज्जा रसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥ दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः । दाहश्चिक्कणता देहे तृट् स्वाद्वास्यञ्च जायते ॥ सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता । दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः...... ॥ अविपाकोऽरुचिश्छर्द्दिर्निद्रा कासः सपीनसः । उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः । दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ वातजानामुदावर्त्तः कम्पहृद्ग्रहलोलताः । शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च । पिडकापीडितं गाढ़

प्रमेही हन्ति मानवम् ॥" इत्यादि। भा.नि.।

**प्रमेहपिड़(पीटि)का।** स्त्री। प्रमेहोपेसाजन्यस्फोटके। ता दश, यथा—"शराविका कच्छपिका जालिनी विनतालजी। मसूरिका सर्षपिका पुत्रिणी सविदारिका। विद्रधिश्चेति पिड़काः प्रमेहोपेक्षया दश॥" सु.नि.६अ.। आसां विशेषाः स्वस्वपर्य्याये मृग्याः।

**प्रमेही** (इन्)। पुं। नन्दिवृक्षे। त्रि। प्रमेहरोगिणि। "किञ्चिन्नाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत्।" सु.नि.६अ.। [जटा.।

**प्रमोचनी।** स्त्री। गोडुम्बायाम्। গোমক।

**प्रमोदः (कः)।** पुं। षष्टिकधान्ये। वैनिघ.। शालिधान्यविशेषे। মেটে ধান। च.सू.२७अ.।

**प्रमोदसट्टकम्।** क्ली। कृतान्नभेदे। यथा—"सान्द्रे दधि मरीचं पिप्पलिशुण्ठीलवङ्गकर्पूरम्। एषां चूर्णं सार्कं शर्करयामर्द्य शुद्धवस्त्रेण॥ गालयित्वा निपेत्तस्मिन् पक्वदाड़िमवीजकं। प्रमोदसट्टकं ह्येतद्वर्द्धमानगुणैः समम्॥" वै.निघ.द्रव्यगुण:।

**प्रमोदिनी।** स्त्री। जिङ्गिन्याम्। भा.।

**प्रमोहः (कः)।** पुं। मूर्च्छायाम्। इन्द्रियापटुत्वे। च.सू.२अ.।

**प्रयत्नः।** पुं। गुणविशेषे। सचात्मन इच्छाजन्या प्रवृत्तिर्द्वेषजन्या निवृत्तिश्च। च.सू.१अ.।

**प्रयस्तः।** त्रि। सुसंस्कृते। त्रिका.।

**प्रयोगवस्तिः।** पुं। रसायने वाजीकर्म्मणि च प्रयोज्ये वस्तौ। सः अष्टविधः। तद्विधिः यथा—आदावेकः स्नेहवस्तिः, ततः त्रयो निरूहवस्तयः, ततश्च चत्वारः स्नेहवस्तयः कार्य्याः। च सिद्धि.१अ.।

**प्रयोजनम्।** क्ली। कार्य्ये। प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः। यथा—"यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्याम्यनायुष्यैः परिहरिष्यामि कथं न मामकालमृत्युः प्रसहेतेति।" च.वि.८अ.। हेतौ। मे.।

**प्ररूढ़ः।** पुं। जठरे। मे.। त्रि। बद्धमूले। जाते। भ.र.।

**प्ररोहः।** पुं। अङ्कुरे। रा.नि.व.२। स्त्री। सिंहल्याम्। शिउलि छोपा। प.मु.।

**प्ररोही** (इन्)। पुं। नन्दिवृक्षे। भा.।

**प्रलम्बः।** पुं। नारीस्तने। अङ्कुरे। तरुशाखायाम्। वङ्गे। वै.निघ.। लताङ्कुरे। मे.। तालाङ्कुरे। र.चि.६अ.। तालस्कन्धे। তালের শোঁটা। च.द.वृष्याधिकारे। क्ली। त्रपुषवीजे। শশার বীজ। मे.। भैष.वाजी.गुड़कुष्माण्डे। [निघ.।

**प्रलम्बकः।** पुं। सुगन्धतृणे। গন্ধ থড়। वै.

**प्रलम्बाण्डः।** त्रि। लम्बमानकोषे। है.च.।

**प्रलयः।** इन्द्रियस्वापे। रा.नि.व.२०। ध्वंसे।

**प्रलापः।** पुं। अनर्थकवचसि। मा.नि.। भा.म.१भ.ज्व.चि.। "प्रलापो वक्त्रकटुता।" "स्वहेतुकुपिताद्वातादसम्बद्धं निरर्थकं। वचनं यन्नरो ब्रूते स प्रलापः प्रकीर्त्तितः॥" वै.निघ.।

**प्रलापकः (पी (इन्))।** पुं। तन्नामकसन्निपातज्वरे। लक्षणम्—"कम्पप्रलापपरितापनशीर्षपीड़ा-प्रौढ़प्रभाववपवनपरोऽन्यचिन्ता। प्रज्ञाप्रणाशविकलप्रचुरप्रलापः क्षिप्रं प्रयाति पितृपालपदं प्रलापी॥" वै.निघ.। "स्वेदभ्रमाङ्गमर्दाः कम्पो दवथुर्वमी व्यथा कण्ठे। गात्रञ्च गुरुतीव प्रलापिजुष्टस्य जायते लिङ्गम्॥" भा.। आविकज्वरे।

**प्रलापहा** (न्)। पुं। कुलत्थाञ्जने। रा.नि.व.१३। [नि.व.२०।

**प्रलीनता।** स्त्री। प्रलये। इन्द्रियस्वापे। रा.

**प्रलेपः (कः)।** पुं। जीर्णज्वरभेदे। लक्षणं—"प्रलिम्पन्निव गात्राणि घर्म्मेण गौरवेण च। मन्दज्वरविलेपी च सशीतः स्यात् प्रलेपकः॥"

**प्रलेहः।** पुं। व्यञ्जनविशेषे। কোরমা। पाकराजः।

**प्रलोभकी।** स्त्री। बालुकायाम्। वै.निघ.। प्रलेहे। कोरमा, दम्पोखता। पाकराजः।

**प्रवटः।** पुं। गोधूमे। वै.निघ.।

**प्रवणः।** पुं। उदरे। मे.।

**प्रवयाः।** पुं, स्त्री। वृद्धे। रा.नि.व.१८।

**प्रवरम्।** क्ली। अगुरुकाष्ठे। भा.। पुं। सुहीतकचे। कृष्णमुद्गे। वै.निघ.।

**प्रवरसत्त्वः।** त्रि। प्रकृष्टसत्त्वपुरुषे। "स्वल्प-

कार्यीऽपि यो निजागन्तुनिमित्तासु महतीष्वपि पीड़ासु कथयी दृश्यते।" च.वि.८श्र.।

**प्रवरा।** स्त्री। पलाशवृक्षे। वै.निघ.।

**प्रवातः।** पुं, क्ली। प्रबलवायौ। गुणाः—प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपाकिनुत्। सु.चि.२४श्र.।

**प्रवातस्थापनम्।** क्ली। प्रवातरक्षणेन जलस्य शीतीकरणोपाये। सु.सू.४५श्र.। प्रवातरक्षणे।

**प्रवालः।** पुं, क्ली। See प्रबालः।

**प्रवालफलम्।** क्ली। See प्रबालफलम्।

**प्रवासिनी।** स्त्री। तिलवासिनीशाली। रा.नि.व.१६। [सु.शा.१०श्र.।

**प्रवाहनम्।** क्ली। कुन्थने। কোঁথ দেওয়া।

**प्रवाहिका।** स्त्री। ग्रहणीरोगे। रा.नि.व.२०। अतीसारभेदे। আমাশা রোগ। निदानलक्षणे—"वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य। प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः। प्रवाहिका वातकृता सशूला पित्तात् सदाहा सकफा कफाच्च। सशोणिता शोणितसम्भवा च ताः स्नेहरूक्षप्रभवा मतास्तु। तासामतीसारवदादिशेच्च लिङ्गं क्रमस्याऽऽमविपक्वताञ्च॥" मा.नि.। "सृते रक्तं पुरीषे च वायुना विड्विवर्जितं। प्रवाहिकेति विख्यातं यत् फेनाभं प्रवर्त्तते॥" इत्यपि लक्षणम्। वा.चि.६श्र.।

**प्रवाही।** स्त्री। वालुकायाम्। रा.नि.व.१३।

**प्रवाहुः (कः)।** पुं। कूर्परस्योर्द्ध्वभागे। प्रवाहिकायाम्। वै.निघ.।

**प्रवाह्लाद्या।** स्त्री। बालुकायाम्। वै.निघ.।

**प्रविचारः।** त्रि। प्रकृष्टसञ्चरणयोग्ये। च.सू.१५श्र.।

**प्रविरम्।** क्ली। पीतचन्दने। श.च.।

**प्रविलम्बि।** क्ली। सद्योव्रणभेदे। "प्रविलम्बि सशेषेऽस्थ्नि।" वा.उ.२६श्र.।

**प्रविलयनम्।** क्ली। द्रवीभावे। च.सू.१५श्र.।

**प्रविषा।** स्त्री। अतिविषायाम्। अम.।

**प्रवृत्तिः।** स्त्री। प्रवर्त्तने। च.सू.१श्र.। "प्रवृत्तिस्तु खलु चेष्टा कार्य्यार्था सैव क्रिया कर्म्मयत्नः कार्य्यसमारम्भश्च।" च.वि.८श्र.।

**प्रवेटः।** पुं। यवे। त्रिका.।

**प्रवेणी।** स्त्री। आस्तरणे। अम.।

**प्रवेलः।** पुं। पीतमुद्गे। সোণা মুগ। है.च.।

**प्रवेष्टः।** पुं। वाहौ। रा.नि.व.१८। वाहुनिम्नभागे। श.च.। करिदन्तमांसे। हारा.।

**प्रव्रजिता।** स्त्री। श्रावण्याम्। মুণ্ডীরী। रा.नि.व.५। जटामांस्याम्। मे.।

**प्रशमः।** पुं। शान्तौ, विरामे। मा.ज्व.नि.।

**प्रशमनः।** त्रि। शान्तिकरे। सु.।

**प्रशस्तः।** पुं। करञ्जोड़िपाषाणभेदे। वै.निघ.।

**प्रशस्या।** स्त्री। आढ़क्याम्। অড়হর। वै.निघ.।

**प्रशा(षा,सा)ति[धि]कः।** पुं, स्त्री(का)। रक्तनीवारे। च.द.र.पि.चि.। स्थलजलजधान्यभेदे। ঝড়া। गुणाः—श्यामाकवत्। च.सू.२७श्र.। अरण्यव्रीहिधान्ये। সরু ধান। र.मा.। देवधान्ये। नीवारे। উড়ি ধান। भा.पू.१भ.धा.व.। "कोरदूषप्रसाधिकाः।"

**प्रश्निः (श्नी)।** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। द्विकोषः। कुम्भिकायाम्। त्रिका.।

**प्रष्टा(ष्ठा)रुः।** पुं। गुदकन्दरोगे। वा.उ.१श्र.।

**प्रष्ठौही।** स्त्री। प्रथमगर्भिण्यां गवि। भ.।

**प्रसक्तम्।** क्ली। नूतनधान्ये। वै.निघ.।

**प्रसङ्गः।** पुं। प्रस्तावे। प्रकरणान्तरेण समापने। सु.उ.६५श्र.। सन्ततसेवायां। मैथुने। भा.म.कुष्ठ.चि.।

**प्रसन्ना।** स्त्री। मद्यविशेषे, सुरामण्डे। सा च सुरामण्डोपर्य्यच्छो भागः। रा.नि.व.१४। "सुरामण्डः प्रसन्ना स्यात्" प.प्र.३ख.। सा.कौ.उदावर्त्ते। गुणाः—"प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी। पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपनी॥" सु.सू.४६श्र.। "प्रसन्ना स्यात्सुरामण्डः तस्मात्कादम्बरी घनः। मद्यस्याद्यविभागोऽसौ प्रसन्ना प्रोच्यते बुधैः॥" तोड़.तद्व.सु.।

**प्रसन्नान्धः।** पुं। श्रान्ध्यस्य नेत्ररोगविशेषे। लक्षणं यथा—'शुद्धस्तु चक्षुषा रूपं नैव पश्यति यो

क्षय: । प्रसन्नाम्ब: स विज्ञेयो नैव शक्यश्चिकित्सितुम् ।'' ज.द.३०अ. ।

**प्रसन्नेरा** । स्त्री । मद्यविशेषे । अ टी.भ. ।

**प्रसर:** । पुं, क्ली । एलबालुके । रा.नि.व.४ । विसर्पे । अ.टी.भ. । वेगे । मे. ।

**प्रसव:** । पुं । रक्ताम्लानवृक्षे । रक्तझाँटी । रा. नि.व.१० । सर्ज्जतरौ । वै.निघ. । गर्भत्यागे । शालाम इउया । अम. । तस्य मास:—नवमदशमैकादशान्यतम: । ततोऽन्यत्र विकार: । भा. । सुखप्रसवमन्त्री यथा—''अस्ति गोदावरीतीरे जम्भला नाम राक्षसी । तस्या: स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥'' अपत्ये । फले । पुष्पे । मे. ।

**प्रसवक:** । पुं । पियालवृक्षे । श्र.मा. ।

**प्रसवबन्धनम्** । क्ली । पुष्पवृन्ते । अम. ।

**प्रसवस्थली** । स्त्री । मातरि । नाटकम् ।

**प्रसह:** । पुं । प्रसह्यभक्षणशीलमृगपक्षिषु । ''गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानरा: । वृकोव्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिका: । लोपाको जम्बुक: श्येनो वान्तादश्चाषवायसौ ॥ शशघ्नी मधुहा भासो गृध्रोलूककुलिङ्गका: । धूमिको कुररश्चेति प्रसहा मृगपक्षिण: ॥'' च.सू.२७अ. । ते च प्रसह्य विनिहत्य भक्षयन्तीति तथोक्ता: । तन्मांसगुणा:—अर्शप्रमेहोदरामयजाड्यहरम् । रा.नि.व १७ । एतज्जातीयाश्च गुहाशयसिंहादिभिस्तुल्यगुणा:, विशेषेण शोषरोगे हिता: । सु.सू.४६अ. । ''गुरूष्णमधुरा: स्निग्धा वातघ्ना: शुक्रवर्द्धना: ।'' राज.३प. ।

**प्रसहन:** । पुं । प्रसहपक्षी । रा.नि.व.१९ ।

**प्रसहा** । स्त्री । लताबृहतिकायां । र.मा. ।

**प्रसाद:** । पुं । प्रसन्नतायां । अम. । स्वास्थ्ये । शुभ्रता । मे. । [বেতো শাক । वै.निघ. ।

**प्रसादक:** । पुं । देवधान्ये । দেধান । वास्तुके ।

**प्रसादधातु:** । पुं । गुर्व्वादिद्रवान्तगुणसमुदायेषु, रसादिशुक्रान्तद्रवधातुसमुदायेषु च । च. शा.६अ. ।

**प्रसादनम्** । क्ली । अन्ने,भक्ते । त्रिका. । स्त्री । (ना) सेवायां, परिचर्य्यायाम् । हे.च. । (नी) महाश्रावणायाम् । वै.निघ. ।

**प्रसादनाञ्जनम्** । क्ली । नेत्राञ्जनविशेषे । ''मधुरस्नेहसम्पन्नमञ्जनन्तु प्रसादनम् ।'' तोड. ।

**प्रसाधनी** । स्त्री । कङ्कतिकायाम् । अम. । भङ्गायाम् । सिद्धि । मे. ।

**प्रसादमन्त्र:** । पुं । माहेश्वरमन्त्रे । यथा—ओं ह्रां ह्रीं ह्रैं ह्रौं शिवाय स्वाहा । रस.र. विपरीतमल्लतैले ।

**प्रसार: (णम्)** । पुं, क्ली । विसर्पणे । हे.च. आकुञ्चनादिपञ्चविधकर्म्मान्यतमे; करपादादिविस्तारे । सु.सू. ।

**प्रसार(रि)णी** । [illegible] (Poederia foetida) स्वनामख्यातलताविशेषे [illegible]म् । গন্ধ ভাদুলিয়া । हिं गन्धालि, गन्धालि [illegible] प्रसारणी । मं चाँदवेलि । कं हेसरणे । [illegible]लिमगोरुचेट्टु, सविरेलचेट्टु । गुणा:—गुरू[illegible] [illegible]का वातघ्नी अर्शःश्वयथुघ्नी मलविष्टम्भहरी [illegible] [illegible].नि.व.५। ''प्रसारणी गुरुर्वृष्या बलसन्धानकृत् [illegible] वीर्य्योष्णा वातहृत् तिक्ता वातरक्तकफापहा [illegible] भा. । देवधान्ये । वै.निघ. । लज्जालुकायाम् [illegible]रा.नि.व.५ ।

**प्रसितम्** । क्ली । पू[illegible] [illegible]च. ।

**प्रसुप्ति:** । स्त्री । प्र[illegible] [illegible]ायाम् । नेत्रादीनां रूपदर्शनाद्यसक्ततायाम् [illegible] श्रुतौ नेत्रे प्रसुप्ति: स्यात्''। मा.ज्व.नि. । [illegible] विशेषे । लक्षणं यथा—''वायुर्नोदीरित: [illegible] त्वचं प्राप्य विशुष्यति । ततस्तत्र जायते पाण्डु: [illegible]मेस्य च विचेतना । अल्पकण्डुरविक्लेदा सा प्रसुप्ति: प्रसुप्तित: ॥'' वा.उ. ३१अ. । [घोटकयाम् । अम. ।

**प्रसू:** । स्त्री । कदलीवृक्षे । लतायाम् । मे. ।

**प्रसूका** । स्त्री । अश्वायाम् । रा.नि.व.१९ ।

**प्रसूतम्** । क्ली । पुष्पे । मे. । [अम. ।

**प्रसूता** । स्त्री । घोटकयाम् । क्षतप्रसवायाम् ।

**प्रसूति: (का)** । स्त्री । उत्पत्तौ । अपत्ये । (का) प्रसवकारिण्याम् । अम. ।

**प्रसूनम्** । क्ली । पुष्पे । फले । अम. । पुं । कदम्बवृक्षे । अश्वस्य मुखरोगभेदे । ज.द.२९अ. ।

**प्रसूनरससम्भवा** । स्त्री । पुष्पशर्करायाम् । वै.निघ. ।

**प्रसृतम्** । क्ली । पलद्वये । प.प्र.१ख. । पुं । च जोऽञ्जलौ । अम. । त्रि । वेगिते । मे. । प्रहृष्टे । प्रसारिते । अम. । स्त्री । जङ्घायाम् । "जङ्घा तु प्रसृता ज्ञेया ।" रा.नि.व.१८ ।

**प्रसृतिः** । स्त्री पलद्वये । १६तो. । "पलाभ्यां प्रसृतिर्ज्ञेया ।" प.प्र.१ख. । मुष्टौ । मुट्ठे । रा. नि.व.१८ । [अ. । सेके । मे. ।

**प्रसेकः** । पुं । कफजन्यलालादिस्रावे । च.शा.८

**प्रसेवकः** । पुं । चर्मखल्लपुटे । सु.सू.६अ. ।

**प्रस्कन्दनम्** । क्ली । विरेचने । जोलाप । र. मा. । पुं । अतीसारे । वै.निघ. ।

**प्रस्कन्दिका** । स्त्री । संग्रहग्रहणीरोगे । निदा. ।

**प्रस्कन्नः** । पुं । अश्वस्य रोगविशेषे । लक्षणं— "गुरु यस्य भवेद्वक्त्रः स्तब्धगात्रपरिक्रमः । कुब्जीभूतेन पृष्ठेन यो वाजी याति बद्धवत्॥" ज.द.४५अ. ।

**प्रस्तरः** । पुं । पाषाणे । मणौ । मे. । पल्लवादिशय्यायाम् । अ.र. ।

**प्रस्तर(रि)णी** । स्त्री । गोलोमिकायाम् । श्वेत दूर्वा । रा.नि.व.५ । गोजिह्वायाम् । वै.निघ. ।

**प्रस्तरभेदः** । पुं । पाषाणभेदे । पाथर कुचा । भैष.मु.क्र.चि. त्रिकण्टकादिचूर्णे ।

**प्रस्तरस्वेदः** । पुं । वातादौ स्वेदविशेषे । शूकशमीधान्यपुलकानां वेशवारपायसोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबुकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदने । च.सू.१४अ. ।

**प्रस्तरोद्भूतम्** । क्ली । प्रस्तरजले । वै.निघ. ।

**प्रस्तरोपलः** । पुं । चन्द्रकान्तमणौ । प.मु. ।

**प्रस्तर्य्यम्** । क्ली । प्रस्तरोदके । वै.निघ. ।

**प्रस्तावम्** । क्ली । पुरातनतण्डुले । वै.निघ. ।

**प्रस्तारः** । पुं । शय्यायाम् । तृणवने । हे.च. ।

**प्रस्तार्य्य(र्य्य)म्** । क्ली । शुक्लभागगतनेत्ररोगविशेषे । लक्षणं यथा—"प्रस्तारि प्रथितमिहार्म्म शुक्लभागे विस्तीर्णं तनु रुधिरप्रभं सनीलम् ।" सु. उ.४अ. ।

**प्रस्थः** । पुं । शरावद्वयपरिमाणे । २श. । १२० तो. । "शरावाभ्यां भवेत्प्रस्थः ।" वमनादौ सार्द्धत्रयोदशपलपरिमाणे । "वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥" प.प्र.१ख. । पाल्यां । त्रिका. ।

**प्रस्थकुसुमः** । पुं । मरुवकवृक्षे । गन्ध तुलसी । रा.नि.व.१० ।

**प्रस्थपुष्पः** । पुं । श्वेतमरुवकवृक्षे । क्षुद्रपत्रकृष्णमरुवके । अम. । जम्बीरवृक्षे । अ.टी.भ. ।

**प्रस्थवान्** । पुं । पर्व्वते । रा.नि.व.२ ।

**प्रस्थिका** । स्त्री । आम्रातकवृक्षे । वै.निघ. । माचिकायां । पुदिना । भा. । [अम. ।

**प्रस्फोटनम्** । क्ली । पवने । हे.च. । सूर्पे ।

**प्रस्नवः** । पुं । दुग्धे । वै.निघ. ।

**प्रस्नवणम्** । क्ली । मूत्रे । दुग्धे । प्रकर्षेण स्रावे । वै.निघ. । पुं । घर्म्मे । त्रिका. ।

**प्रस्नवणजलम्** । क्ली । निर्झरसलिले । गुणाः —स्वच्छं मधुरं लघु रोचनं दीपनकञ्च । रा.नि. व.१४ ।

**प्रस्रावः** । पुं । मूत्रे । रा.नि.व.१८ । [निघ. ।

**प्रस्रुतदधि** । क्ली । वस्त्रगालितदधनि । वै.

**प्रस्वेदः** । पुं । अतिघर्म्मे । वै.निघ. ।

**प्रहरः** । पुं । दिवसाष्टमभागे । प्रहर । अम. ।

**प्रहरकुटुम्बी** । स्त्री । कुटुम्बिनीक्षुपे । रा.नि. व.५ ।

**प्रहर्ष(र्षि)णी** । स्त्री । हरिद्रायाम् । हारा. ।

**प्रहसन्तिका (न्ती)** । स्त्री । शुक्लयूथिकायाम् । त्रिका. । वासन्तीपुष्पवृक्षे । रा.नि.व.१० ।

**प्रहस्तः** । पुं । संहतविस्तृताङ्गुलिकरे । चपेटे । रा.नि.व.१८ ।

**प्रहारवल्ली** । स्त्री । मांसरोहिण्याम् । भा. ।

**प्रहिता** । स्त्री । प्रसारण्याम् । गन्धभादुलिया । वै.निघ. ।

**प्रहीरजा** । स्त्री । कुटुम्बिनीक्षुपे । रा.नि.व.५ ।

**प्रहृष्टकः** । पुं । काके । वै.निघ. ।

**प्रहेण(ल)कम्** । क्ली । पिष्टकभेदे । हारा. ।

**प्रह्लादः** । पुं । कामकृतहर्षे । भा.म.१भ.श्लेष्मकज्व.चि. । "प्रह्लादं चास्य विन्दाय ।"

**प्रह्लादिनी (दी)** । स्त्री । रक्तलज्जालुकायां । वै.निघ. । रा.नि.व.५ । [ज्र्जने ।

**प्रक्षालनम्** । क्ली । धावने । सु.सू.७अ. । मा-

**प्रक्षेपः** । पुं । कषायादौ चूर्णादिक्षेपणे । कल्के तस्य मात्रा कर्षमिता । "प्रक्षेपः पादिकः क्वाथात् स्नेहे कल्कसमो मतः । षोड़शाष्टचतुर्भागं वातपित्तकफार्त्तिषु । क्षौद्रङ्कषाये दातव्यं विपरीता तु शर्करा । मात्रा क्षौद्रघृतादीनां स्नेहे क्वाथे च चूर्णवत् । माषिकं हिङ्गुसिन्धूत्थं जरणाद्यास्तु शाणिकाः । परिभाषामिमामन्यः प्रक्षेपेऽप्यचिरे परम्॥" पातव्यघृततैलादिषु प्रक्षेपः कल्कसमो मतः । प प्र.१ख.। प्रक्षेपकालश्च —"अवतार्य्य यदा द्रव्यां परिघट्य पुनः पुनः । यदा पाणिसहो भूतो निक्षिपेदौषधन्तदा ॥" योगरत्नाकरसमुच्चये ।

**प्राकृतः** । त्रि । प्रकृतिसम्पन्ने । सुखसाध्ये । मा. ज्व.नि. ।

**प्राकृतज्वरः** । पुं । वसन्तशरद्भवे ज्वरे । "कालप्रकृतिमुद्दिश्य प्रोच्यते प्राकृतज्वरः ।" च.चि.३ अ. "वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।" "प्राकृतश्चानिलोद्भवः ।" मा.नि. ।

**प्राकृतदोषः** । पुं । प्रकृतिसम्पन्नवातादौ । यथा —वर्षाशिशिरयोर्वायुकोपः, ग्रीष्मशरदोः पित्तकोपः, हेमन्तवसन्तयोः कफकोपः । इति । च.सू.१०अ. ।

**प्राक्चरणा** । स्त्री । योनिरोगविशेषे ।

**प्राक्फलः** । पुं । पणसवृक्षे । जटा. ।

**प्राग्भागः** । पुं । कायपूर्व्वभागे । वै.निघ. ।

**प्राग्भाटम्** । क्ली । अघनदधनि । पातला दई । त्रिका. । [वायुः ।

**प्राग्वातः** । पुं । पूर्व्वदिग्भववायौ । See पूर्व्व

**प्राचिका** । स्त्री । श्येनपक्षिण्याम् । वै.निघ. । वनमक्षिकायाम् । डाँश । अम.भ. ।

**प्राची** । स्त्री । पानीयामलके । वै.निघ. ।

**प्राचीनपनसः** । पुं । बिल्ववृक्षे । त्रिका. ।

**प्राचीना** । स्त्री । पाठायाम् । रा.नि.व.६ रास्नायां । श.च. । [नि.व.११

**प्राचीनाकरकः** । पुं । मधुरजम्बीरवृक्षे । रा

**प्राचीनामलकम्** । क्ली । पानीयामलके । पानि आम्ला । प.मु. । गुणः —गरदोषहरा । सु.सू.४६अ. ।

**प्राचीबलः** । पुं । काकतुण्ड्याम् । केउँठी । काकजङ्घायां । नदीपिप्पल्यां । गण्डदूर्व्वायां । सु. सू.३८अ. सुरसादिः । [श.चि.

**प्राच्यकशेरुः (कः)** । पुं । कशेरौ । केशुर ।

**प्राणः** । पुं । तन्नामकदेहस्थवायौ । "वायुर्यो वक्त्रसञ्चारी स प्राणोनाम देहधृक् । सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते । प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ।" सु.नि.१अ. । जीवने "अग्निः सोमो वायुः सत्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मा इति प्राणाः ।" सु.सू.शा.३अ. । बोलि भा. ।

**प्राणकः** । जीवकौषधौ । मे. ।

**प्राणथः** । पुं । बलवति पुरुषे । वायौ । उणा. ।

**प्राणदः** । पुं । जीवकक्षुपे । रा.नि.व.५। क्ली रक्तधातौ । जले । हे.च. ।

**प्राणदा (-प्रदा)** । स्त्री । ऋद्धौ । रा.नि.व.५। महाराष्ट्रीक्षुपे । जलपिप्पल्याम् । रा.नि.व.४ वै.निघ.२ सन्निकज्व.चि । हरीतक्याम् । रा.नि.व. ११ । वा.चि.१अ. । "प्राणदामधुकैः कृता ।"

**प्राणदा (गुड़िका)**। स्त्री । [illegible]सि गुड़िकायां पाठः—"त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च । पिप्पल्याः कुड़वार्द्धञ्च चव्यायाः पलमेव च । तालीशपत्रस्य पल पलार्द्धं केशरस्य च । द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् । सूक्ष्मैलाकर्षमेकन्तु कर्षं लवङ्गमृणालयोः । गुड़ात् पलानि त्रिंशच्च चूर्णमेकत्र कारयेत् । अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता । पूर्व्वं भक्ष्याच्च पश्चाच्च भोजनस्य यथाबलं । मद्यं मांसरसं यूषं क्षीरं तोयं पिबेदनु। केशरं नागकेशरं, चतुर्थं पलमेकमित्यर्थः॥" च.द.। শুঁট ৩প. মরিচ ৪প. পিপুল ২প. চই ১প. তালীশপত্র ১প. নাগেশ্বর ৪তো. পিপুলমূল ২প. তেজপত্র ১তো. ছোট এলাচ ২তো.

গুড়ত্বক্ ২তো. বেনার মূল ২তো. পুরাতন গুড় ৭০প.। এই সমস্ত চূর্ণ ও গুড় একত্র মাড়িয়া গুড়িকা বান্ধিবে। মা. ॥০ তো.। অনুপান দুগ্ধ বা জল। বদ্ধকোষ্ঠতায় শুঁট না দিয়া হরীতকী। পিত্তার্শে গুড়ের পরিবর্ত্তে চূর্ণ। সমষ্টির ৪গুণ চিনি দিবে।

**प्राणनम्** । क्ली । जीवने । जटा. । पुं । गन्ने । श्र.च. ।

**प्राणना** । स्त्री । हरीतक्याम् । रुद्री । वै.निघ.।

**प्राणान्तः** । पुं । रसाञ्जने । उणा. ।

**प्राणान्ती** । स्त्री । हिक्कायाम् । चवर्गी । उणा.।

**प्राणपिण्डः** । पुं । सुगन्धवीजे । वै.निघ. ।

**प्राणप्रिया** । स्त्री । रुद्री । प.मु. ।

**प्राणवहस्रोतः** । क्ली । प्राणवायुनेतरि स्रोतसि । ते च द्वे तयोर्मूलं हृदयं । सु.शा.৯अ. । "हृदयं महास्रोतश्च ।" च.वि.५अ. ।

**प्राणवायुः** । पुं । हृदयस्थवायौ । वै.निघ. ।

**प्राणसंयमः** । पुं । श्वासनिरोधे । वै.निघ. ।

**प्राणसद्म** । क्ली । शरीरे । वै.निघ. ।

**प्राणहारकम्** । क्ली । वत्सनाभे। रा.नि.व.६।

**प्राणाचार्य्यः** । पुं । चिकित्सके । वै.निघ. ।

**प्राणापानौ** । पुं द्वि. । अश्विनीकुमारयोः ।

**प्राणाभिसरः** । त्रि । प्राणायतनेन्द्रियरोगनिदानाद्यभिज्ञे । च.सू.२৯अ. ।

**प्राणायतनम्** । क्ली । नाभ्यादिषु प्राणस्थित्याधारेषु । तच्च दश—"नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा । मूर्द्धांशकण्ठहृदयं प्राणस्यायतनं दश ॥" रस.र. ज्व.चि. ।

**प्राणायामः** । पुं । प्राणवायुरोधे । त्रि.৪ ।

**प्राणिमाता** । स्त्री । पुत्रदात्रीक्षुपे । रा.नि.

**प्राणिहिता** । स्त्री । पादुकायां । त्रिका. ।

**प्राणी** (इन्) । पुं । जन्तौ । त्रि । प्राणविशिष्टे । अम. ।

**प्राणेश्वररसः** । पुं । सन्निपातज्वरे रसः । पाठः—"शुद्धसूतं तथा गन्धं सूताद्धं विषसंयुतम् । समस्तं मर्द्दयेत्तालमूलीनीरैस्त्र्यहं बुधः। पूरयेत् कूपिकान्ते च सन्निरुध्य विशोषयेत्। सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा तु शोषयेत् । पुटेत् कुम्भीप्रमाणेन स्वाङ्गशीतं समुद्धरेत् । गृहीत्वा कूपिकामध्यान्मर्द्दयेच्च दिनत्रयम् । यवानी जीरकौ हिङ्गु सर्जिकाटङ्कणैर्युतम् । गुग्गुलुः पञ्चलवणं यवक्षारो यमानिका । मरिचं पिप्पली चैव प्रत्येकञ्च समांशतः । एषां कषायेण पुनः भावयेत् सप्तधातपे । नागवल्लीदलयुक्तं पञ्चगुञ्जं रसेश्वरम् । दद्यान्नवज्वरे तीव्रे कोष्णं वारि पिबेदनु……॥" পারা, গন্ধক প্রত্যেকে ১ তো. মিঠা ॥০ তো. তালমূলীর রসে ৩ দিন মাড়িয়া কাচকূপীর মধ্যে ভরিয়া কূপীর মুখ রুদ্ধ করিয়া শুকাইবে। পরে সেই কূপী মৃত্তিকার সহিত সাতপুরু নেকড়া দ্বারা লিপ্ত ও শুষ্ক করিবে। পরে ঐ কূপী কুম্ভীপুটে পাক করিয়া শীতল হইলে কূপী হইতে ঔষধ বাহির করিয়া ১ দিন মাড়িবে। পরে ঔষধ যত হইবে কৃষ্ণজীরাদি সমভাগে তত লইয়া দশগুণ জলে অষ্টমাংশ ক্বাথ করিয়া তদ্দ্বারা ৭ বার ভাবনা দিবে। ক্বাথের দ্রব্য—কৃষ্ণজীরা, জীরা, হিং, সাজিমাটী, সোহাগা, গুগ্গুল, পঞ্চলবণ, যবক্ষার, যমানী, মরিচ, পিপুল। র.সা.সং. ।

**प्राणैषणा** । स्त्री । जीवनरक्षणोपायगवेषणायाम् । सा च स्वस्थस्य स्वस्थवृत्तिरूपा आतुरस्य च विकारप्रशमनेऽनवधानतारूपा प्राणानुपालनस्य दीर्घायुष्ट्वावाप्तिः । च.सू.११अ. ।

**प्राण्यङ्गम्** । क्ली । प्राणिनां अङ्गमात्रे मांसास्थ्यादौ । सि.यो.ग्रह.चि. ।

**प्रातः** । क्ली । प्रभाते । अम. ।

**प्रातःकृत्यम्** । क्ली । प्रातरनुष्ठेयकर्म्मणि । च.।

**प्रातःस्नानम्** । क्ली । प्राभातिकावगाहने ।

**प्रातरशनम्**
**प्रातराशः** } क्ली, पुं । प्रातर्भोजने । त्रिका. ।

**प्रातर्भोक्ता** । पु । काके । श्र.च. ।

**प्रातर्भोजनम्** । क्ली । प्रातःकालीनभोजने । जटा. । त्रिका. ।

**प्रातर्विकस्वरा** । स्त्री । मल्लिकाभेदे, या प्रभ-

हर्षिकमति, गुणैर्हर्षिकातुल्या । रा.नि.व.१० ।

**प्रातिका ।** स्त्री । वाईकर्थ । जपापुष्पवृक्षे । रा.नि.व.१० । [नि.व.१८ ।

**प्रादेश: ।** पुं. । तर्ज्जन्यङ्गुष्ठयुतकरविस्तारे । रा.

**प्राधान्यम् ।** क्ली । स्वातन्त्र्यपारतन्त्र्यरूपे स आसंज्ञीपाधिकनामभेदे । यथा—दोषत्रयेषु यः कोऽपि दोषः स्वहेतुभिः कुपितो रोगमुत्पादयेत् तस्यैव प्राधान्यं स्वतन्त्रता, तदधीनयोः प्रकुपितयोः दोषयोरप्राधान्यं पारतन्त्र्यमिति ज्ञेयम् । "स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।" मा.पञ्चनि. ।

**प्रामि: ।** स्त्री । प्रवृत्तौ । "प्रामिश्च विट्पित्तकफानिलानाम् ।" च.द.विरेके । [१६अ. ।

**प्राभृतम् ।** क्ली । उपढौकने । अम. । च.सू.

**प्रामाद्य: ।** पुं । वासकवृक्षे । श.च. ।

**प्राय: ।** क्ली । वयसि । हे.च. ।

**प्रायोगिक: ।** पुं । शमनधूमपाने । भा. । स्नैहिकधूमे । वा.चि.५अ. ।

**प्रालेयम् ।** क्ली । हिमे । अम. ।

**प्रावट: ।** पुं । यवे । जटा. । [हे.च. ।

**प्रावरणम् ।** क्ली । उत्तमवस्त्रे । उत्तरीयवस्त्रे ।

**प्रावार: ।** पुं । उत्तरीयवस्त्रे । अम. ।

**प्रावारकीट: ।** पुं । कीटविशेषे । जटा. ।

**प्रावृज्ज: ।** पुं । पुनर्नवायां । र.चि.८अ. ।

**प्रावृट् ।** स्त्री । वर्षाकाले । पुनर्नवायां । च.द. अमृतसारलौहे ।

**प्रावृड़त्यय: ।** पुं । शरत्समये । रा.नि.व.२१ ।

**प्रावृतम् ।** क्ली । प्रकृष्टावरणे । भ. ।

**प्रावृषा ।** स्त्री । वर्षाकाले । त्रिका. ।

**प्रावृषायणी ।** स्त्री । रक्तपुनर्नवायाम् । प.मु. । कपिकच्छ्वां । आलाकुशी । अम. ।

**प्रावृषिक: ।** पुं । मयूरे । धरणिः ।

**प्रावृषेण्य: ।** पुं । कदम्बवृक्षे । र.मा. । कुटजवृक्षे । कुड़चि गाछ । धाराकदम्बे । केलि कदम । रा.नि.व.९ । स्त्री । कपिकच्छ्वां । रा.नि.व.३ । रक्तपुनर्नवायाम् । गादापुन्नी । रा.नि.व.५ ।

**प्रावृष्य: ।** पुं । कुटजवृक्षे । कुड़चि गाछ । धाराकदम्बे । केलि कदम । रा.नि.व.९ । विकङ्कटकवृक्षे । रा.नि.व.११ । क्ली । वैदूर्य्यमणौ । रा.नि.व.१३ ।

**प्राश: ।** पुं । अवलेहे । प.प्र.१ख. ।

**प्राशनम् ।** क्ली । भक्षणे । लेहने । अन्ने । रा.नि.व.२० ।

**प्राशित: ।** त्रि । भक्षिते । जटा. ।

**प्रासादकुक्कुट: ।** पुं । कपोते । त्रिका. ।

**प्रासादमण्डना ।** स्त्री । हरितालें । वै.निघ. ।

**प्राह्ण: ।** पुं । प्रातःकाले, पूर्व्वाह्णे । अम. ।

**प्रियंवदा ।** स्त्री । जातीपुष्पवृक्षे । वै.निघ. ।

**प्रिय: ।** पुं । जीवके (अभावे गुड़ूची) । रा.नि.व.५ । वेतसलतायां । र.मा. । धाराकदम्बे । केलि कदम । रा.नि.व.९ । ऋषभके (अभावे वंशलोचनम्) । हरितालें । प्रियङ्गौ । कदम्बवृक्षे । असनवृक्षे । दारुचिन्याम् । वै.निघ. । मृगविशेषे । जटा. । ऋद्धौ (अभावे बला) । मे. ।

**प्रियक: ।** पुं । केलिकदम्बे, महाकदम्बे । प.मु. । तिन्दुकवृक्षे । केंद गाछ । र.मा. । पीतशालवृक्षे । पियाशाल । र.मा. । च.सू.२५अ. । विलेशयमृगविशेषे । मे. । सु.चि.८अ. । अयं वाते पथ्यः । प्रियङ्गौ । भ्रमरे । कुङ्कुमे । मे. । असनवृक्षे । रा.नि.व.९ ।

**प्रियकाम्ब: ।** पुं । पीतशालवृक्षे । वै.निघ. ।

**प्रियकोशल: ।** पुं । पि[illegible]वृक्षे, अङ्कोठवृक्षे । प.मु. ।

**प्रियङ्करी ।** स्त्री । हस्तिजीवन्त्यां । रा.नि.व.३ । अश्वगन्धायां । श्वेतकण्टकार्य्याम् । रा.नि.व.४ ।

**प्रियङ्गु: (ङ्गू:) (क:) ।** स्त्री, पुं । (Aglaia Roxburghiana.) स्वनामख्यातसुगन्धलतायां । प्रियङ्गु, गन्धप्रियङ्गु । हिं प्रियंग, गन्धप्रियंग, प्रियङ्गु । कं नेर्पिलगु । बम्.गहुला । तें प्रेंकणपुच्चेट्टु । गुणाः—शीतला तिक्ता दाहरक्तपित्तघ्नी वान्तिभ्रान्तिज्वरघ्नी मुखजाड्यहरी च । रा.नि.व.१२ । तुवरा वातघ्नी रक्तातियोगदौर्गन्ध्यस्वेदगुल्मतृष्णा-

**भिदुरः** । पुं । वज्रभल्लातके । रा.नि.व.११ । स्त्री । पिप्पल्याम् । ছোট পিপুল । वै.निघ. ।

**भिन्नम्** । क्ली । सद्योव्रणविशेषे । "कुन्तशक्तीषु खड्गाग्रविषाणादिभिराशयः । हतः किञ्चित्स्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥" सु.चि.२अ. । वा.उ. २६अ. । त्रि । भेदविशिष्टे । अम. ।

**भिन्नखुरः** । पुं । अश्वस्य पादरोगभेदे । लक्षणं यथा—"विन्द्याद्भिन्नखुरश्चैव यस्यान्यो जायते खुरः ।" ज.द.३६अ. । [कुड़ । श.च. ।

**भिन्नगात्रिका** । स्त्री । कर्कटिकायाम् । कैः ।

**भिन्नदला** । स्त्री । मूर्वालतायां । रा.नि.व.३ ।

**भिन्नभिन्नात्मा (न्)** । पुं । चणकवृक्षे । श.च. ।

**भिन्नयोजनी** । स्त्री । पाषाणभेदकवृक्षे । पाथरकुचा । भा. ।

**भिन्नवर्त्तिः** । पुं । अश्वस्य शूलरोगभेदे । लक्षणं यथा—"अतीसारेण संयुक्तं शूलं यस्योपजायते । भिन्नवर्त्तिन्तु तं विद्यात्तुरङ्गं दीनचेष्टितम् ।" ज. द.४३अ. । [ख्याते कन्दशाके । प.मु. ।

**भिन्नवल्कलः** । पुं । गुच्छकन्दे, तैलमारु इति

**भिन्नविट्कता** । स्त्री । पित्तजन्यमलभेद-रोगे । निदानम् ।

**भिरिण्टिकः** । पुं । श्वेतगुञ्जायाम् । वै.निघ. ।

**भिरिण्टि(ण्डि)का** । स्त्री । श्वेतगुञ्जालतायां । रा.नि.व.३ । अम्बाहल्याम् । वै.निघ. ।

**भिल्लः (तरुः)** । पुं । लोध्रवृक्षे । रा.नि.व.६ । "भिल्लोदककषायेण ।" सु.चि.२४अ. ।

**भिल्लगवी** । स्त्री । वन्यायां गवि । वनगाई । गवयीस्त्री । रा.नि.व.१९ । [व.३ ।

**भिल्लभूषणा** । स्त्री । गुञ्जालतायां । रा.नि.

**भिल्ली** । स्त्री । लोध्रवृक्षे । रा.नि.व.६ । [व.६ ।

**भिल्लीप्रावरकः** । पुं । चम्पकरोध्रे । रा.नि.

**भिषक्** । पुं । वैद्ये, चिकित्सके । रा.नि.व.२० ।

**भिषक्प्रिया** । स्त्री । गुडूच्यां । रा.नि.व.३ ।

**भिषग्जितम्** । क्ली । औषधे । त्रिका. । च. ।

**भिषग्जिता** । स्त्री । कन्दगुडूच्याम् । वै.निघ. ।

**भिषग्भद्रा** । स्त्री । भद्रदन्तिकायाम् । रा.नि. व.६ ।

**भिषग्वरा** । स्त्री । हरीतक्यां । रा.नि.व.११ ।

**भिषङ्माता** । स्त्री । आटरूषके । वासक । रा.नि.व.२३ । [टी.सा. ।

**भिस्सिका (टा) (ष्टा)** । स्त्री । दग्धान्ने । अ-

**भिस्सटः** । पुं । पद्मकन्दे । वै.निघ. ।

**भिस्स(स्सि)टा** । स्त्री । भिस्सिकायाम् । अम. अ.टी.सा. ।

**भिस्सा** । स्त्री । अन्ने । अम. ।

**भिस्साण्डम्** । क्ली । शालूके । पद्मगेंड़ो । भा.पू.१भ.शा.व. ।

**भिक्षुः** । पुं । श्रावणीवृक्षे । ঝাঁতী । रा.नि. व.५ । गोक्षुरे । वै.निघ. । कोकिलाक्षक्षुपे । कुलियाखाड़ा । भा. । ऋषिविशेषे । च.सू.१अ. ।

**भिक्षुकः** । पुं । गोक्षुरे । रा.नि.व.२३ । "भिक्षुको गोक्षुरे ।"

**भीमः** । पुं । अम्लवेतसे । प.मु. ।

**भीमनादः** । पुं । सिंहे । श.च. ।

**भीमरथी** । स्त्री । कृष्णसंज्ञका काचिन्नदी । तज्जलं कृष्णाजलतुल्यम् । लोकानां वयःकालभेदे । स च कालः सप्तसप्ततितमवर्षस्य सप्तममासि कसप्तमरात्रिरिति । ভীমরথী । यथा—"सप्तसप्ततिके वर्षे सप्तमे मासि सप्तमी । रात्रिर्भीमरथी नाम नराणां दुरतिक्रमा ।" श.मा. ।

**भीमविक्रान्तम्** । क्ली । द्राक्षामद्ये । वै.निघ. । पुं । सिंहे । त्रिका. ।

**भीमसेनः** । पुं । (Drybalanops camphora.) Borneo camphor. तन्नामककर्पूरे । ভীমসেনী কর্পূর । यथा—"शीतांशौ भीमसेनस्तदनु शितकरः... ।" गुणाः—वातपित्तघ्नः रसे पाके च मधुरः शीतलः बृंहणः बल्यश्च । भा. । रा.नि.व.१२ ।

**भीमा** । स्त्री । रोचनाख्यसुगन्धद्रव्ये । श.च. ।

**भीरुः** । स्त्री । शतावर्य्यां । प.मु. । भा.म.१भ मस्तिकज्व.चि. । च.द.वा.स.चि. । मल्लिकापुष्प-

क्षुपे। मल्लिका फुलेर गाछ। रा.नि.व.१०। काष्टकार्य्यां। श.च.। छाग्याम्। रा.नि.व.१९। शतपद्यां। श.र.। पुं। व्याघ्रे। रा.नि.व.१९। शृगाले। श.मा.। इक्षुभेदे। र.मा.। मत्स्यविशेषे। मं आहिरु। कं हेमलग। तस्य लक्षणम्—"पृष्ठे पक्षौ द्वौ गले पुच्छके चेत् सर्पाभः स्यात् सर्व्वतो वृत्ततुण्डः। ज्ञेयः शल्की मत्स्यको भीरुकः स्निग्धो वृष्यो दुर्ज्जरो वातकारी॥" रा.नि.व.१७।

**भीरुकः।** पुं। भल्लुके। शल्कीत्वौ। वै.निघ.। पेचके। श.र.। मत्स्यविशेषे। कर्णीत्वौ। अयं पुण्ड्रकगुणः। भा.। त्रि। भयशीले।

**भीरुचेताः** (स्)। पुं। हरिणे। वै.निघ.।

**भीरुपत्रिका (त्री)।** स्त्री। शतावर्य्यां। शतमूली। प.मु.।

**भीरुहृदयः।** पुं। मृगे। जटा.।

**भीलभूषणा।** स्त्री। गुञ्जायाम्। रा.नि.व.७।

**भीलुकः।** पुं। भल्लुके। श.र.।

**भीषणः (णा)।** पुं, स्त्री। कपोते। रा.नि.व.१९। स्त्री। सल्लक्यां। मे.। कुन्दुरौ। कुन्दुरु थोटि। रा.नि.व.१२। हिन्ताले। रा.नि.व.९।

**भीषम्।** क्ली। अन्ने। प.मु.। [निघ.।

**भीषगन्धकः।** पुं। माधवीलतायाम्। वै.

**भुक्तम्।** क्ली। भक्षणे। त्रिका.। त्रि। भक्षिते। अम.।

**भुक्तशेषः।** त्रि। उच्छिष्टे। वै.निघ.।

**भुक्ता।** स्त्री। भूखर्ज्जूरीवृक्षे। छोटि खेजुर। रा.नि.व.११। जने। श.र.।

**भुक्तिः।** स्त्री। उपभोगे। नखे। वै.निघ.। नौ

**भुक्तिप्रदः।** पुं। मुद्गे। मुग। रा.नि.व.१६।

**भुग्नः।** त्रि। रोगादिना वक्रीकृते। अम.।

**भुग्नदृक् (नेत्रः)।** पुं। तन्नामकसन्निपातज्वरविशेषे। लक्षणं यथा—"ज्वरबलापचयस्मृतिसंच्युताश्वसनभुग्नविलोचनमोहितः। प्रलपनभ्रमवेपथुघोषवान् त्यजति जीवितमाशु स भुग्नदृक्॥" भा. ज्व.चि.। तन्नामान्तरं कलक्षणं भावप्रकाशे द्रष्टव्यम्।

**भुग्नी।** स्त्री। भूनागे। भेउ। रा.नि.व.१३।

**भुजः।** पुं। बाहौ। रा.नि.व.१८। भूर्जपत्रवृक्षे। वै.निघ.।

**भुजकोटरः।** पुं। कक्षदेशे। हे.च.।

**भुजगः।** पुं। शीषके। सीसा। भैष.ध्वजभङ्ग चि.पुष्पधन्वरसे। र.सा.सं.वसन्तकुसुमाकरे। सर्पे। (घोड़ा साप। त्रिका.। [नि.व.११।

**भुजगलता।** स्त्री। नागवल्लीलतायाम्। रा.

**भुजगी।** स्त्री। सर्पिण्याम्। रा.नि.व.५।

**भुजगोपभोजी** (इन्)। पुं। मयूरे। रा.नि.व.१९।

**भुजङ्गः।** पुं। शीषके। सर्पे। अम.।

**भुजङ्गघातिनी।** स्त्री। सर्पकङ्कालिकायाम्। रा.नि.व.७। [नि.व.४।

**भुजङ्गजिह्वा।** स्त्री। महासमङ्गाक्षुपे। रा.

**भुजङ्गदमनी।** स्त्री। नाकुलीकन्दे। नागदमन्याम्। वै.निघ. [दमनी। वै.निघ.।

**भुजङ्गदर्शिनी।** स्त्री। नागदमन्याम्। नाकु-

**भुजङ्गदारणः।** पुं। मयूरे। रास्नायाम्। वै.निघ.।

**भुजङ्गभुक् (ज्)।** पुं। मयूरे। अम.।

**भुजङ्गभोजी** (इन्)। पुं। राजसर्पे। हे.च.।

**भुजङ्गमः।** पुं। सर्पे। अम.। क्ली। शीषके। रा.नि.व.१३। [११।

**भुजङ्गलता।** स्त्री। नागवल्ल्याम्। रा.नि.व.

**भुजङ्गवल्ली।** स्त्री। नागवल्लीलतायां। पान गाछ। र.सा.सं.। भैष.चिन्तामणिरसे।

**भुजङ्गाख्यः।** पुं। नागकेशरवृक्षे। श.मा.।

**भुजङ्गान्तकः (शनः)।** पुं। मयूरे। गरुडे। वै.निघ.। [अम.।

**भुजङ्गाक्षी।** स्त्री। सर्पाक्ष्याम्। रास्नायां।

**भुजङ्गी।** स्त्री। सर्पिण्याम्। वै.निघ.।

**भुजमध्यम्।** क्ली। कूर्परे। रा.नि.व.१८।

**भुजमस्तकम्।** क्ली। स्कन्धदेशे। वै.निघ.।

**भुजशिरः।** क्ली। स्कन्धदेशे। अम.।

**भुजा** । स्त्री । बाहौ । रा.नि.व.१८ । चिका. ।

**भुजाकण्टः** । पुं । हस्तनखे । है.च. ।

**भुजागमः** । पुं । वृषे । वै.निघ. ।

**भुजाढ़की** । स्त्री । कलायविशेषे । টোঙর কলায় । रमा.। नीलनिर्गुण्ड्यां । शेफालिकायां । रा.नि.व.४ । [चिका. ।

**भुजादलः** । पुं । करे । হাতের পাঞ্জা ।

**भुजान्तरम्** । क्ली । वक्षसि । रा.नि.व.१८ । क्रोड़ । अम. ।

**भुजिष्यः** । पुं । रोगे । उणा. ।

**भुर्जः** । पुं। भूर्जपत्रवृक्षे । ভুর্জবৃক্ষ । रा.नि.व.६।

**भुवनम्** । क्ली । जले । रा.नि.व.१४ । जने । मे. ।

**भूकः** । पुं,क्ली। छिद्रे । अन्धकारे । मे.। श.मा.।

**भूकदम्बः** । पुं । भूमिकदम्बक्षुपे । कुकुशिमा । हिं कोटिमुण्डी, भुँइकदम्ब । मद.व.२। प.मु.। महाश्रावणिकायां । रा.नि.व.५। भैष.क्षुद्ररो. चि. । यमान्याम् । रा.नि.व.६ । [मद व.२ ।

**भूकदम्बकः** । पुं । यवानीक्षुपे । रा.नि.व.६ ।

**भूकदम्बा (म्बिका)** । स्त्री। गोरक्षमुण्ड्यां। वै.निघ. ।

**भूकन्दः** । पुं । महाश्रावणिकायाम् । रा.नि.व.५। शूरणे । ওল । भैष.कुष्ठ.चि.महाभल्लातकगुड़े ।

**भूकर्वुदारः (कः)** । पुं । श्वेतभूकाञ्चने । हिं कोटालसीड़ा । गुणाः—संग्राही रक्तपित्तहरः मधुरः कृमिशूलघ्नः वातकोपनः ईषच्छीतः स्वर्णमारकश्च । रा.नि.व.५ । [काँकपक्षी । श.र. ।

**भूकाकः** । पुं । नीलकपोते । क्षुद्रकङ्के ।

**भूकुम्बकः** । पुं । कुलहले । कुकुशिमा । वा.सू.१५अ.सुरसादिः ।

**भूकुम्भी** । स्त्री । भूपाटल्याम् । रा.नि.व.५ ।

**भूकुष्माण्डम्** । क्ली । भूमिकुष्माण्डे । ভুঁই কুমড়া । भैष.ध्वजभङ्ग.चि. ।

**भूकुष्माण्डी** । स्त्री । विदारीकन्दे । ভুঁই কুমড়া । रा.नि.व.७ ।

**भूकेशः** । पुं । वटवृक्षे । शैवाले । मे. ।

**भूकेशी** । स्त्री । अवल्गुजनामके वृक्षविशेषे । সোমরাজ । मे. ।

**भूखर्जु(र्जू)रिका (री)** । स्त्री । क्षुद्रखर्जूरीवृक्षे । ছোট খেজুরের গাছ । म. लघुसिंधी । कं किरिइंचुलि । गुणाः—मधुरा शीतला दाहपित्तघ्नी च । रा.नि.व.११ । See खर्जूरी ।

**भूगन्धा** । स्त्री । मुरानामगन्धद्रव्ये । मुरामांसी । श.चि. ।

**भूगरम्** । क्ली । विषे । रा.नि.व.६ ।

**भूघ्नी** । स्त्री । फटिकारिकायां । वै.निघ. ।

**भूचणकः** । पुं । (Arachis hypogaea.) वृक्षभेदे । চীনার বাদাম, মাটি কলায় । हिं मुंफली । तें वरणसनगकाय । ता.वार्कदलइ । एतत्तैलं कोशाम्रतैलगुणम् ।

**भूचम्पकः** । पुं । भूमिचम्पकक्षुपे । ভুঁই চাঁপা । वै.निघ. ।

**भूच्छत्रम्** । क्ली । कवके । পোয়াল ছাতু, ভুঁইকুঁড় ছাতু । वै.निघ. ।

**भूजन्तुः** । पुं । भूनागे । শীষ । रा.नि.व.१३ ।

**भूजम्बुः (म्बूः)** । स्त्री । गोधूमे । গম । विकङ्कतवृक्षे । বইচীগাছ । मे. । भूमिजम्बूवृक्षे । বনজাম । रा.नि.व.११ ।

**भूतः** । पुं । मुस्तायाम् । रा.नि.व.२३ । देवयोनिविशेषे । बालग्रहे । च.टी.भ. । लोभे । वै.निघ.। जन्तौ । मे.। प्राणिमात्रे । च.टी.भ.। क्ली । क्षित्यादिपञ्चके । च.टी.भ. ।

**भूतकेशः (शी)** । पुं, स्त्री । (Corydalis govoniana.) स्वनामख्यातक्षुपविशेषे । गोलोम्यां । শ্বেতদূর্বা । हिं भूतकेश । तें वाविल्लिचेट्टु । प.मु.र.मा. । नीलनिर्गुण्ड्यां । वै.निघ.२भ.ज्व.चि. । शेफालिकायां । रा.नि.व.४ । पुत्रजीवायाम् । वा.सू.१५अ.सुरसादिः । जटामांस्याम् । भा.म.१भ.सन्तातादिज्व.चि.माहेश्वरधूपे । गन्धमांस्यां । সুগন্ধ জটামাংসী । रा.नि.व.१२ । इन्द्रवारुण्याम् । রাখাল শশা । श्वेततुलसीवृक्षे । वै.निघ. ।

**भूतकेसरा** । स्त्री । मेथिकायाम् । মেথি । वै.निघ. । [ভূতাবেশ । रा.नि.व.२० ।

**भूतक्रान्तिः** । स्त्री। भूतोन्मादे । भूतसञ्चारे ।

**भूतगन्धा** । स्त्री । मुरामांस्याम् । अटा. ।

**भूतगुणः** । पुं । शब्दादौ । च.सू.१अ. ।

**भूतग्रामः** । पुं । प्राणिसमूहे । स चतुर्विधः स्वेदजाण्डजोद्भिज्जजरायुजभेदतः । सु.सू.१अ. ।

**भूतघ्नः** । पुं । श्वेतरसोने । শুক্লরশুন । रा.नि.व.७ । भूर्जवृक्षे । ভূর্জপত্র । रा.नि.व.९ । सर्षपवृक्षे । उष्ट्रे । हे.च. ।

**भूतघ्नी** । स्त्री । प्रपौण्डरीके । পুণ্ডরিয়া । प.मु. । मुण्डीरीभेदे । प.मु. । तुलसीवृक्षे । रा.नि.व.१० । शङ्खपुष्प्याम् । वै.निघ. ।

**भूतजटा** । स्त्री । जटामांस्यां । गन्धमांस्यां । সুগন্ধ জটামাংসী । रा.नि.व.१२ ।

**भूततृणः** । पुं । विषभेदे । ছাতারিয়া বিষ । र.मा. । गन्धतृणविशेषे । रा.नि.व.८ ।

**भूतद्रावी** (इन्) । पुं । रक्तकरवीरवृक्षे । रा.नि.व१०। चवकवृक्षे । হেঁচেতা । रा.नि.व.९।

**भूतद्रुमः** । पुं । श्लेष्मान्तकवृक्षे । रा.नि.व.११।

**भूतनाशनः** । पुं,क्ली । सिद्धार्थे । শ্বেত সরিষা । रा.नि.व.१६ । पुं । भल्लातकवृक्षे । र.मा.। हिङ्गुवृक्षे । वै.निघ. । रुद्राक्षवृक्षे । রুদ্রাক্ষ । रा.नि.व.११ ।

**भूतपतिः** । पुं । कृष्णतुलसीवृक्षे । वै.निघ. ।

**भूतपत्री** । स्त्री । तुलसीवृक्षे । रा.नि.व.१० ।

**भूतपादपः** । पुं । भव्यफलवृक्षे । চাল্তা গাছ । वै.निघ. ।

**भूत(ति)पुष्पः** । पुं । श्योणाकवृक्षे । र.मा. ।

**भूत(ति)प्रिया** । स्त्री । कृष्णतुलसीवृक्षे । वै.निघ. ।

**भूतबन्धः** । पुं । पिशाचबन्धने । वै.निघ. ।

**भूतभैरवरसः** । पुं । अपस्माराधिकारे रसः । पाठः —"सूतमभ्रं लौहञ्च शिलागन्धञ्च तालकं । रसाञ्जनञ्च तुल्यांशं नरमूत्रेण मर्दयेत्। तद्गोलद्विगुणं गन्धं लौहपात्रे [illegible]णं पचेत् । पञ्चगुञ्जोन्मितं भक्ष्यम् ··· । व्योषं सौवर्चलं हिङ्गु नरमूत्रेण सर्पिषा । पिबेत् कर्षमितम्··· ।" भा.म.२भ. ।

**भूतमारी** । स्त्री । चीडानामगन्धद्रव्ये, देवदारुभेदे । रा.नि.व.१२ ।

**भूतयज्ञः** । पुं । भूतेभ्यो बलिहरणे । हारीत.।

**भूतलिका** । स्त्री । सूक्ष्मानामगन्धद्रव्ये । रा.नि.व.१२ ।

**भूतवासः** । पुं। बिभीतकवृक्षे । रा.नि.व.११।

**भूतविक्रिया** । स्त्री । अपस्माररोगे । रा.नि.व.२० ।

**भूतविद्या** । स्त्री । अष्टविधतन्त्रान्यतमतन्त्रे । सा देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम् । सु.सू.१अ. । अपि च —"ग्रहभूतपिशाचाश्च शाकिनीडाकिनीग्रहाः । एतेषां निग्रहः सम्यक् भूतविद्या निगद्यते ॥" वैद्य.सं.२अ. । "लक्षयेद् ज्ञानविज्ञानवाक्‌चेष्टाबलपौरुषम् । पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् । भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः । यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत् । सोऽष्टादशविधो देवदानवादिविभेदतः । ग्रह्णन्ति शुक्लप्रतिपत्त्र्योदश्यां सुरा नरम् । शुक्लत्रयोदशीकृष्ण-दशयोर्दानवा ग्रहाः। गन्धर्वास्तु चतुर्दश्यां द्वादश्यां चोरगाः पुनः । पञ्चम्यां शुक्लसप्तम्येकादश्योस्तु धनेश्वराः । शुक्लाष्टपञ्चमीपूर्णमासीषु ब्रह्मराक्षसाः । कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्वसु । दर्शामि [illegible]ष्टनवम्योः पितरोऽपरे । गुरुवृद्धा[illegible] प्रायः कालं सन्ध्यासु लक्षयेत् ।" वा.उ.४अ. ।

**भूतवृक्षः** । पुं । शाखोटवृक्षे । শ্যাওড়া গাছ । रा नि.व.९ । श्योणाकवृक्षे । मे. । अक्षोटवृक्षे । (क:) श्लेष्मान्तकवृक्षे । চাল্তা গাছ । भा. ।

**भूतवेशी** (श्या) । स्त्री । श्वेतशेफालिकावृक्षे। प.मु. । निर्गुण्ड्याम् । वै.निघ. । [वै.निघ. ।

**भूतशिखाग्रणी** । स्त्री। सुगन्धजटामांस्याम् ।

**भूतशिखी** । स्त्री । सुगन्धजटामांस्याम् । वै. निघ. ।

**भूतशिफा** । स्त्री । सुगन्धजटामांस्याम् । वै.

**भूतसञ्चारः** । पुं । ग्रहावेशे । भूतोन्मादे । रा.नि.व.२० ।

**भूतसारः** । पुं । खदिरसारे । रा.नि.व.८ । पृथुशिम्बश्योणाकवृक्षे । रा.नि.व.९ ।

**भूतहन्त्री** । स्त्री । बन्ध्याकर्कोटक्यां । नीलदूर्व्वायां । रा.नि.व.३।८ ।

**भूतहरः** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**भूतहा** (न्) । पुं । भूर्जवृक्षे । वै.निघ. ।

**भूतहारि** (न्) । क्ली । देवदारुकाष्ठे । रा.नि.व.१२ । पुं । रक्तकरवीरे । वै.निघ. ।

**भूतहासः** । पुं । सन्निपातज्वरविशेषे । लक्षणं —"शब्दादीनधिगच्छति न स्वान् विषयान् यदीन्द्रियग्रामैः । हसति प्रलपति परुषं स ज्ञेयो भूतहासार्त्तः ॥" भा.म.१भ. ।

**भूताङ्कुशः** । पुं । (Anisomelis malabarica.) वृक्षविशेषे । हिं गर्भोजुवान । तें मभेबी, किनरणभरि । क्षवकवृक्षे । হেঁচেতা । रा.नि.व.९ । वै.निघ.२भ कास.चि.भूताङ्कुशरसे । अपामार्गे । सुकुमारिणी । পুঁড়ো ইক্ষু । राजिकायाम् । रा.नि.व.२३ । तिलकक्षुपे ।

**भूताङ्कुशरसः** । पुं । कासाधिकारे रसः । शुद्धपारदः १ भ. गन्धः २ भ. ताम्रं ३ भ. मरिचं १० भ. अभ्रभस्म ४ भ. विषं १ भ. श्वेतसर्षपं १ भ. । अम्लरसेन भावयेत् । अन्य उन्मादे—पारदः लौहभस्म रौप्यभस्म ताम्रभस्म मुक्ताभस्म प्र. समं । क्षारं हरितालं गन्धकं मनःशिला तुत्थं शिलाजतु रसाञ्जनं अहिफेनं टङ्कणक्षारः प्र.पारदचतुर्थांशः, पञ्चलवणं प्र. पारदसमभागं । भृङ्गराजदन्तीवज्रीरसैः मर्द्दयित्वा पिण्डितं कृत्वा दिनान्ते गजपुटे पचेत् । रस.कौ. ।

**भूतात्मा** । पुं । शरीरे । प्राणिन आत्मनि । मे. ।

**भूताभिषङ्गः** । पुं । पिशाचकृतपराभवे । भूतावेशजन्यज्वरे । "कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः । भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणम् । भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥" च. । मा.नि. ।

**भूतारि** । क्ली । हिङ्गुनि । रा.नि.व.६ ।

**भूताली** । स्त्री । भूपाटल्यां । रा.नि.व.५ । मुशल्यां । তালমূলী । रा.नि.व.७ ।

**भूतावासः** । पुं । विभीतकवृक्षे । रा.नि.व.११ । शरीरे । वै.निघ. ।

**भूताविष्टः** । त्रि । पिशाचग्रस्ते ।

**भूतावेशः** । पुं । भूतसञ्चारे ।

**भूतावेशा (शी)** । स्त्री । निर्गुण्डीवृक्षे । নিশিন্দা গাছ । वै.निघ. ।

**भूतावेशालता** स्त्री । श्वेततुलसीवृक्षे । वै.निघ. ।

**भूतिः** । स्त्री वृद्धौ । रा.नि.व.५ । रोहिषतृणे । भूतृणे । গন্ধতৃণবিশেষ । रा.नि.व.८ । पक्वमांसे । वै.निघ. ।

**भूति(ती)कः** । पुं, क्ली । यमान्यां । हे.च. । च.द.अ.सा.चि. धान्यपञ्चके । सु.चि.३७अ. । भूनिम्बे । চিরেতা । अम. । कट्फले । हे.च. । कातृणे । গন্ধতৃণ । रा.नि.व.८ । च.द हिक्काश्वास.चि.तेजोवत्यादिघृते । कर्पूरे । हे.च. ।

**भूतिपुष्पिका** । स्त्री । शुक्लकेतकवृक्षे । वै.निघ. ।

**भूतिसितम्** । क्ली । रौप्यधातौ । रा.नि.व.१३ ।

**भूतुम्बी** । स्त्री । स्वनामख्यातफलशाकविशेषे । अलाबुभेदे । মেটে লাউ । हिं भूतुम्बी, तेलसार । गुणाः—कटुरुष्णा सन्निपातघ्नी दन्तार्गलदन्तरोधघनवातादिदोषघ्नी च । रा.नि.व.७ ।

**भूतृणम्** । क्ली, पुं । मरुदेशप्रसिद्धगन्धतृणे । গন্ধতৃণ, রামকর্পূর । मं सुगन्धिरोहिस । कं परिमलदगंजाणि । तें चिप्पगड्डि । गुणाः—कटुतिक्तं वातसन्तापघ्नं भूतग्रहावेशघ्नं विषदोषघ्नञ्च । रा.नि.व.८ । च.सू.२७अ. । सुरसादिगणश्च । सु.सू.३९अ. ।

**भूतेष्टा** । स्त्री । कृष्णतुलस्याम् । वै.निघ. ।

**भूतोदनम्** । क्ली । ओदनविशेषे । यथा—"तिललाजादधियवहरिद्रायुक्तमोदनं । भूतोदनन्तु संप्रोक्तं गुणाः सर्व्वे पदार्थवत् ॥" वै.निघ. ।

**भूतोन्मादः** । पुं । भूतावेशजन्योन्मादे । निदानम् ।

**भूत्तमम्** । क्ली । स्वर्णे । हे.च. । [घ. ।

**भूदराश्रया** । स्त्री । मूषिककर्ण्याम् । वै.नि

**भूदरी(रोद्)भवा** । स्त्री । आखुकर्णीलता याम् । भा. ।

**भूदर्या** । स्त्री । मूषिककर्ण्याम् । वै.निघ. ।

**भूदारः (कः)** । पुं । शूकरे । अम. । प.मु. । वनशूकरे ।

**भूधरयन्त्रम्** । क्ली । औषधपाकार्थयन्त्रविशेषे । लक्षणम् —"बालुकाभिः समस्ताङ्गं गर्त्ते मूषां रसान्विताम् । दीप्तोपलैः संवृणुयात् यन्त्रं भूधरनामकम् ।" भा. । "जलकच्छपपातालदोलाभूधरबालुकाः । वकाद्या यन्त्रभेदाः स्युः वज्राम्भाद्याश्च मूषकाः ॥" श.च. ।

**भूधात्री** । स्त्री भूम्यामलक्यां । भूँइ आमला। मं भूयांवली । कं आरनेल्लि । हिं भद्रआंवरा । तें नेलवुसिरिकचेट्टु । गुणाः — कषाया अम्ला शीता मूत्ररोगदाहघ्नी पित्तमेहघ्नी च। रा.नि.व.५ ।

**भूनागः** । पं । गण्डूपद्याम् । शीषके । रा.नि. व.१३।१६ ।

**भूनिम्बः** । पुं। (Swertia chirata. Syn. gentiana chirayta.) किराततिक्तके । चिरेता । हिं चिरायता । तें नेलवेमु । मं चिराइता । रा.नि.व.६। गुणाः—तिक्तः ज्वरघ्नः दीपनः पित्तप्रसादनः क्रमिचर्म्मरोगघ्नः । अस्य मूलमधिकगुणम् ।

**भूनिम्बादिकषायः** । पुं । भूनिम्बगुडूचीमुस्तनागरकृते कषाये । गुणाः — ज्वरे दोषपाचनः ज्वरादिघ्नश्च । वा.चि.१अ. । [५ ।

**भूनीपः** । पं । भूकदम्बे । भुँइकदम्ब । रा.नि.व.

**भूपतिः** । पुं। वृद्धौषधे । वै.निघ. । ऋषभके । रा.नि.व.५ । [घ. ।

**भूपत्रम्** । क्ली । मृत्तिकाचारे । सोरा । वै.नि

**भूपदः** । पु । वृत्ते । श.च. ।

**भूपदी** । स्त्री । शतदलमल्लिकायाम् । प.मु. । श्वेतमल्लिकायाम् । वै.निघ. ।

**भूपर्णी** । स्त्री । भूमिकरिकायां । वै.निघ. ।

**भूपलाशः** । पुं । आस्फोतगुल्मे । शिवरगाछी र.मा. ।

**भूपाटली** । स्त्री। स्वनामख्यातक्षुद्रक्षुपे । टोको पाना । मं भूयपाडलि । कं नेलवादरि गुणाः—कटूष्णा पारदे प्रयोज्या च । रा.नि.व.५

**भूपाला (ली)** । स्त्री । घोषायाम् । वै.निघ.

**भूपिठरिका (री)** । स्त्री । सोनामुखीति ख्यातलतायाम् । वै.निघ. ।

**भूपुत्री** । स्त्री । भूपिठर्य्यां । वै.निघ. ।

**भूपुष्पा** । स्त्री । भूमिचम्पकवृक्षे । वै.निघ. ।

**भूपेष्टः** । पुं । राजादनीवृक्षे । खिर्नी गाछ । रा.नि.व.११ ।

**भूफलः** । पुं । मुद्गे । हरितमुद्गे । रा.नि.व.१६।

**भूबदरी** । स्त्री । क्षुद्रबदरीविशेषे । भूबोरीति कोलापुरप्रान्ते प्रसिद्धा । मेटो कुल । हिं भड़बेर । गुणाः मधुराम्ला कफवातहरी रुच्या पथ्या दीपनी पाचनी किञ्चित्पित्तास्रजननी च । रा.नि. व.११ । [११ ।

**भूभुक्ता** । स्त्री। भूमिखर्जूरिकायाम् । रा.नि.व.

**भूभृत्** । पुं । पर्व्वते । रा.नि.व.२ ।

**भूमण्डली** । स्त्री। मल्लिकावृक्षे । बेल मल्लिका वनस्पतिभेदे । वै.निघ. ।

**भूमण्डिनी** । स्त्री। मल्लिकायाम् । वै.निघ. ।

**भूमिः** । स्त्री । जिह्वायाम् । [illegible] । चितौ । भूँइ । सा गुणतः पञ्चधा । [illegible] वत् स्वगुणभूयिष्ठा, काचिदम्बुगुणभूयिष्ठा, काचित्तेजोगुणभूयिष्ठा, काचिदग्निगुणभूयिष्ठा, काचिदनिलगुणभूयिष्ठा । तत्र १मा अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया च । २या स्निग्धा शीतला स्वल्पोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्ला च । ३या मृद्वी समा स्वभवती अव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वतवृक्षप्राया श्यामा च । ४र्था नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहा च । ५मी कृष्णा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्षप्राया च । तत्राम्बुगुणभूयिष्ठायां विरेचनद्रव्याणि, अग्निगुणभूयिष्ठायां वमनद्रव्याणि, आकाशगुणभूयिष्ठायां संशमनानि,

सुभगमृणभूमिशायामुभयतो भागान् आददीत। भूमिः गन्धवर्णरसोपेतत्वात् षड्विधा। षड्रसयुक्तत्वाच्च स्वभावतएव सर्व्ववीजवती च। सु.सू.३७अ.।

**भूमि(मी)कदम्बः** । पुं । कदम्बविशेषे, भूकदम्बे । मं भूमिकदम्बु । कं नेलगडवु । गुणाः —कटूष्णः ह्यः दोषघ्नः हिमः कषायतिक्तः पित्तघ्नः वीर्य्यवर्द्धकश्च । रा.नि.व.६ ।

**भूमिकदम्बिका** । स्त्री । मुण्डीर्य्याम्, गोरचमुण्डायाम् । मुण्डीरी । रा.नि.व.५ । [निघ. ।

**भूमिकालिका** । स्त्री । गोधूमिकाशाके । वै.

**भूमिकुष्माण्डः** । पुं । विदारीकन्दे । भूँइकुमड़ा । प.मु. ।

**भूमिखर्ज्जु(र्ज्जू)रिका (री)** । स्त्री । क्षुद्रखर्ज्जूरीवृक्षे, भूखर्ज्जूरिकायाम् । छोट खेजूर । रा.नि.व.११ । See खर्ज्जूरी ।

**भूमिगमः** । पुं । उष्ट्रे । वै.निघ. ।

**भूमिचम्पकः** । पुं । (Koempferia rotunda.) भूचम्पके । भूँइचाँपा । हिं चम्पमूल । श्र.च. । अस्य मूलं व्रणपाककरम् ।

**भूमिच(चा)री** । स्त्री । आखुकर्णीलतायां । मुषाकाणि । रा.नि.व.३ ।

**भूमिच्छत्र(त्र)म्** । क्ली । भूमिनिकच्छत्राके, संस्वेदजशाके । भूकुण्ड छाता । वै.निघ. । भा. पू.१भ.शा.व. ।

**भूमिजः** । पुं । भूमिकदम्बे । रा.नि.व.६ । भूमिजगुग्गुलौ । भूनामे । शीष । रा.नि.व.१२। १३ । यवक्षारे । सोरा । वै.निघ.। क्ली । स्वर्णे । गौरसुवर्णशाके । रा.नि.व.७।१३ ।

**भूमिजगुग्गुलुः** । पुं । आशापुरगुग्गुलौ । महिषाक्ष गुग्गुल । भूमिजगुग्गुलुः काशीदेशे प्रसिद्धः । गुणाः—सौरभ्यदः तिक्तकटूष्णः कफवातघ्नः भूतघ्नः मेध्यः सुगन्धिश्च । रा.नि.व.१२ ।

**भूमिजम्बुः (म्बूः)** । स्त्री । क्षुद्रजम्बूविशेषे । वनजाम, भूँइजाम । र.मा. । मं क्षुद्रजम्बू । कं किरुनेरिलु । गुणाः—कषाया मधुरा श्लेष्मपित्तघ्नी हृद्या संग्राहिणी कण्ठदोषघ्नी वीर्य्यपुष्टिदा च । रा.नि.व.११ ।

**भूमिजम्बूका** । स्त्री । नागरङ्गवृक्षे । नारङ्गेलेबु गाछ । क्षुद्रजम्बूवृक्षे । श्म. ।

**भूमिदण्डा** । स्त्री। मल्लिकापुष्पवृक्षे । वै.निघ.।

**भूमिपिशाचः** । पुं । तालवृक्षे । हारा. ।

**भूमिपुत्रः** । पुं । क्षीणाके । वै.निघ. ।

**भूमिमण्डः** । पुं । आस्फोतकलतायां । अष्टपादिकाइति लोके । मदनमाली, शापरमाली । र.मा. । [याम् । रा.नि.व.१० ।

**भूमिमण्डपभूषणा** । स्त्री । माधवीलता-

**भूमिमण्डा** । स्त्री । शारदमल्लिकायां । र.मा.।

**भूमिलग्ना** । स्त्री । शुक्लगोकर्ण्याम् । शुक्लापराजिता । वै.निघ. ।

**भूमिलता** । स्त्री । शङ्खपुष्पीलतायां । वै.निघ.। किञ्चुलुकायाम् । केँचो । भेष.वीर्य्यस्तम्भे । च.द. वृष्य.चि. । [वै.निघ. ।

**भूमिलवणम्** । क्ली । मृत्तिकालवणे । सोरा।

**भूमिलेपनम्** । क्ली । गोमये । ह.च. ।

**भूमिवल्ली** । स्त्री । मार्कण्डिकालतायाम् । भूँइ आमला, काँकरोलविशेष । भा. । See मार्कण्डिका । [व.१६ ।

**भूमिशयः** । पुं । वनचटके । छातार । रा.नि.

**भूमिसम्पुटः** । पुं । शरावादौ । वै.निघ. काम.चि. ।

**भूमिसरः** । पुं । श्यामाकतृणे । वै.निघ. ।

**भूमि(मी)सहः** । पुं । शाकवृक्षे । हिं भंरसह । गुणौ—शीतलः रक्तपित्तघ्नः । भा. ।

**भूमिस्पृक्** । पुं । मानुषे । मै. । अन्धे । खञ्जे । श.र. । [वै.निघ. ।

**भूमिस्फोटः** । पुं । भूच्छत्राके । भूँइछातु ।

**भूमिषण्डः** । पुं । शारदमल्लिकायाम् । काठमाल्लिका । रत्ना. ।

**भूम्याङ्(ह्)ल्यम्** । क्ली । स्वनामख्यातक्षुपे । हिं भूँइतखड़ । कामवदा, एलङुडि इति देशविशेषे ख्यातम् । गुणाः—तिक्तरसं ज्वरकुष्ठामनिमहरश्च । रा.नि.व.४ ।

**भूम्यामलकी (ली)** । स्त्री । भूधात्र्याम् । भूँइ आमला । रा.नि.व.५ । सुवल्यां । ताल- मूली । प.मु. । [व.२३ ।

**भूम्याहुली** । स्त्री । अपराजितायाम् । रा.नि

**भूम्युदराश्रया** । स्त्री । मूषिककर्णीलतायाम् । मूषाकाणीलता । वै निघ. ।

**भूरि** । क्ली । सुवर्णे । अम. ।

**भूरिगन्धा** । स्त्री । मुरानामगन्धद्रव्ये । मूरा मांसी । रा.नि.व.१२ ।

**भूरिगः (मः)** । पुं । गर्द्दभे । रा.नि.व.१९ ।

**भूरिचन्द्रः (तेजाः)** । पुं । सुवर्णे । रा.नि.व. १३ । [गाछ । रा नि.व.६ ।

**भूरिदुग्धा** । स्त्री । वृश्चिकालीवृक्षे । बिछाति

**भूरिधरः** । पुं । गर्द्दभे । रा.नि व.१९ ।

**भूरिनिष्कम्** । क्ली । स्वर्णे । रा.नि.व.१३ ।

**भूरिपत्रः** । पुं । ऊषरतृणे । উষরতৃণ । रा. नि.व.८ । [नि.व.४ ।

**भूरिपुष्पा** । स्त्री । शताह्वाक्षुपे । शुल्फा । रा.

**भूरिप्रेमा (न्)** । पुं । चक्रवाकपक्षिणि । रा. नि.व.१९ ।

**भूरिफली** । स्त्री । पाण्डुरफल्यां । रा.नि.व.५।

**भूरिफेना** । स्त्री । चर्म्मकषायां । र.मा. । सा गवृक्षे । वै.निघ. ।

**भूरिबला** । स्त्री । अतिबलायाम् । रा.नि.व.४।

**भूरिमञ्जरी** । स्त्री । श्वेततुलसीवृक्षे । रा.नि. व.१० ।

**भूरिमल्ली** । स्त्री । अम्बष्ठाया । रा.नि.व.४ ।

**भूरिमायः (युः)** । पुं । शृगाले । अम. । स्त्री (या,युः) । शृगाल्याम् । रा.नि.व.१९ ।

**भूरिमूलिका** । स्त्री । अम्बष्ठायां । वै.निघ. ।

**भूरिरसः** । पुं । इक्षुवृक्षे । भा. । [निघ.

**भूरिलग्ना** । स्त्री । श्वेतापराजितायाम् । वै.

**भूरुण्डी** । स्त्री । हस्तिशुण्डीवृक्षे । হাতিশুঁড়ে । अम. । महाकरञ्जे । आदित्यभक्तायाम् । वै.निघ. ।

**भूरुहः** । पुं । वृक्षे । श.मा. । अर्ज्जुनवृक्षे । शालवृक्षे । वै.निघ. । [वै.निघ. ।

**भूरुहा** । स्त्री । मांसरोहिण्याम् । दूर्व्वायाम् ।

**भूरोहः** । पुं । किञ्चुलुके । কেঁচো । भैष.भग. चि. ।

**भूर्ज्जः (पत्रः,द्रुमः)** । पुं।(Betula bhojpattra.) The birch. स्वनामख्यातवृक्षे । मृदुकपादः, फटक इति हिमाचलदेशे प्रसिद्धः । ভূর্জ্জপত্র, ভোজপত্র । हिं भूजपत्र । बम्. भूर्जपत्र । र.मा. । गुणाः—कटुकषायोष्णः भूतरक्षाकरः त्रिदोषघ्नः पथ्यश्च । रा.नि.व.९ । कर्णकफपित्तरक्तघ्नः मेदोविषहरश्च । भा. ।

**भूर्ज्जग्रन्थिः** । पुं । तद्वृक्षग्रन्थौ । च.सू.३५.३ प्रदेहः । "ग्रन्थिश्च भौर्ज्जः ।"

**भूर्ज्जपत्रकः** । पुं । आस्फोटवृक्षे । आँउड़ा गाछ । रा.नि.व ८ ।

**भूलग्ना** । स्त्री । शङ्खपुष्प्यां । रा.नि.व ३ ।

**भूलता** । स्त्री । किञ्चुलुके । हे.च. ।

**भूशमी** । स्त्री । ह्रस्वशमीवृक्षे । वै निघ. ।

**भूशयः** । पुं । बिलवासिजन्तुमात्रे, गोधानकुलादौ । गुणाः—गुरू उष्णः मधुरः स्निग्धः वातघ्नः शुक्रलश्च । राज. । [नि.व.११ ।

**भूशेलुः** । पुं । भूकर्बुदारे । ভুঁইচালতা । रा.

**भूषणार्हम्** । क्ली, स्वर्णे । म... । प्रवाले । वै.निघ. । ...छ । वै.निघ. ।

**भूषि(सु)ता** । स्त्री । क...लवृक्षे । ...াঁকোড়

**भूस्तृणः** । पुं, क्ली । गन्धतृणे । गन्धमात्रेति मुक्ता । গন্ধতৃণ । "सौगन्धिकं भूस्तृणकः ।" गुणाः—"भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रेचनं लघु । विदाहि दीपनं रुक्ष्यमनेत्र्यं मुखशोधनम् । अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥" भा.म. १भ.मू.घा.चि. ।

**भूस्थः** । पुं । गण्डूपद्याम् । मनुष्ये । वै.निघ. ।

**भूस्पृक्** । पुं । मानुषे । हे.च. ।

**भूस्वेदः** । पुं । घनाश्मना स्वेदविशेषे । প্রস্তরস্বেদ । विधिः—"शयानस्य प्रमाणेन घनामश्मम-

यीं शिलां । तापयित्वा मारुतघ्नैः दारुभिः संप्रदीपितैः । व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा । तां शिलामथ कुर्व्वीत कौशेयाविकसंस्तरान् । तस्यां स्वभ्यक्तसर्व्वाङ्गः स्वपन् स्विद्यति ना सुखम् ॥" च.सू.१४अ. ।

**भृचित्** । पुं । शूकरे । चिका. ।

**भृकुटी** । स्त्री । मण्डूकजातीयकीटे । सु.कल्प. ८अ. । See कीटः ।

**भृगु(ङ्ग)जा** । स्त्री । भार्ग्याम् । रा.नि.व.६ । वै.निघ.जीर्णज्व.चि.लवङ्गादिकषाये, श्वास.चि. सिंह्यादिकषाये ।

**भृगुभवा** । स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृगूद्भवा** । स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृङ्गम्** । क्ली । त्वचि । गुड़त्वक् । प्र.सु. । सि. यो.अर्श.चि. । भैष.बाल.चि. । "मरीचभृङ्गनिशाकरः ।" अभ्रके । रा.नि.व.१३ । च.द.रा.य.चि. लवङ्गाद्यचूर्णे ।

**भृङ्गः** । पुं । भृङ्गराजे । भीमराज । रा.नि.व.६। च.द.बाल.रो.चि. । र.मा.मं सुधावतीगुट्यां । भ्रमरे । र.मा. । पक्षिविशेषे । फिङा वा भीमराज पाखी । रा.नि.व.२३ । मांसगुणाः—मधुरं स्निग्धं कफशुक्रवर्द्धनञ्च । रा.नि.व.१७ । भृङ्गरोले । भीमरुल । श.र. ।

**भृङ्गकः** । पुं । धूम्याटपक्षिणि । भृङ्गराजपक्षिणि । फिङा वा भीमराज पाखी । श.र. ।

**भृङ्गचुल्ली** । स्त्री । भृङ्गाह्वायाम् । मं भमरमालि । कं उप्पुशके । गुणाः—कटूष्णा तिक्ता दीपनरोचनी च । रा.नि.व.७ ।

**भृङ्गजम्** । क्ली । अगुरुकाष्ठे । र.मा. ।

**भृङ्गजा** । स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृङ्गपर्णिका** । स्त्री । सूक्ष्मैलायाम् । श.च. ।

**भृङ्गप्रियः** । पुं । धूलीकदम्बे । रा.नि.व.८ ।

**भृङ्गप्रिया** । स्त्री । माधवीलतायां । रा.नि.व. १० । [निघ. ।

**भृङ्गबन्धुः** । पुं । कुन्दवृक्षे । कदम्बवृक्षे । वै.

**भृङ्गमारिः (री)** । स्त्री । केविकापुष्पवृक्षे । रा.नि.व.१० । See केविका ।

**भृङ्गमूलिका** । स्त्री । भृङ्गाह्वायां । भ्रमरमालौ । रा.नि.व.७ ।

**भृङ्गमोही (हिन्)** । पुं । चम्पकवृक्षे । रा.नि. व.१० । स्वर्णचम्पके । वै.निघ. ।

**भृङ्गरजः (जाः)** । पुं । भृङ्गराजे । भा.म.४ भ.कर्णरो.चि. । "प्रस्थं भृङ्गरजस्य च ।" च.टी.भ. ।

**भृङ्गरा** । स्त्री । भृङ्गराजे । केशराजे । हिं भांगरा । भा.२भ. ।

**भृङ्गराजः** । पुं । (Wedelia calendulacea. Syn. C. Verbesina.) स्वनामख्यातपत्रशाकविशेषे । भीमराज । हिं भाङ्गरा, भंगरिया । मं पिवलमाका । तें गुगटकलगरचेट्ट । वम्. पिवलभांरा । गुणाः—कटुस्तिक्तः रूक्षः उष्णः वातकफघ्नः केश्यः त्वच्यः क्रिमिश्वासकासशोथामपाण्डुघ्नः रसायनो दन्त्यः बल्यः कुष्ठनेत्रशिरोरोगघ्नश्च । भा. । भ्रमरे । भीमराजपक्षिणि । मैं । अयं प्रतुदः कषायः मधुरः रूक्षो वातजनकश्च । सु.सू.४६अ. । केशराजे । केशराज । नीलभृङ्गराजे । धूम्याटपक्षिणि । फिङे । दारुचिनीति ख्याते सुगन्धद्रव्ये । वै.निघ. ।

**भृङ्गरि(री)टः** । पुं । लौहे । रस.र.रसायने ।

**भृङ्गरोलः** । पुं । कीटविशेषे । भीमरुल । चिका. ।

**भृङ्गवल्लभः** । पुं । धाराकदम्बे । केलिकदम । भूकदम्बे । कुकुशिमा । रा.नि.व.८ ।

**भृङ्गवल्लभा** । स्त्री । भूमिजम्बूवृक्षे । वनजाम । रा.नि.व.११ । तरणीपुष्पवृक्षे । रा.नि.व.१० ।

**भृङ्गवृक्षः** । पुं । भृङ्गराजवृक्षे । भीमराज । भा.म.४भ.मुखमुण्डितिका.चि. । "स्वरसैर्भृङ्गवृक्षाणाम् ।"

**भृङ्गसुहृत्** । पुं । कुन्दपुष्पवृक्षे । वै.निघ. ।

**भृङ्गसोदरः** । पुं । केशराजे । केशुते । चिका. । [वै.निघ. ।

**भृङ्गा** । स्त्री । भृङ्गराजे । त्वचि । दारुचिनि ।

**भृङ्गानन्दा** । स्त्री । यूथिकायां । श्वेतजूई । रा.नि.व.१० । [लि । आमफले । रा.नि.व.११ ।

**भृङ्गाभीष्टः** । पुं । आम्रवृक्षे । क्ली । आम्रमुकु

**भृङ्गारम्** । क्ली । लवङ्गे । स्वर्णे । रा.नि.व.१२। १३ । पुं । भृङ्गराजे । जटा. । नालमुखजलपात्रविशेषे । गाड़ु । च.सू.१५ख. ।

**भृङ्गारकः** । पुं । भृङ्गराजवृक्षे । वै.निघ. ।

**भृङ्गारिः** । स्त्री । केविकापुष्पवृक्षे । भ्रमरमारिवृक्षे । रा.नि.व.१० । पुं । भृङ्गराजे । क्ली । लवङ्गे । [हि.च. ।

**भृङ्गारिका (री)** । स्त्री। झिल्लीकीटे । अम.।

**भृङ्गार्कः** । पुं । भृङ्गराजवृक्षे । वै.निघ. ।

**भृङ्गाह्वः** । पुं । भृङ्गराजक्षुपे । भीमराज । जीवके । रा.नि.व.४।५ । लवङ्गे । वै.निघ. ।

**भृङ्गाह्वा** । स्त्री । मूलशाकविशेषे । मं भ्रमरमाली । कं उप्पुशके । अड़वीश्रील इति कोङ्कणे । गुणाः—कटूष्णा तिक्ता दीपनरोचनी च । रा.नि.व.७ । [महारसे ।

**भृङ्गिः** । पुं । भृङ्गराजे । वै.निघ.२भ.अ.सा.चि.

**भृङ्गिका** । स्त्री । इन्द्रगोपकीटे । वै.निघ. ।

**भृङ्गिणी** । स्त्री । वटीवृक्षे । रा.नि.व.११ ।

**भृङ्गि(ङ्गे)रिटिः** । स्त्री । भृङ्गाम् । त्रिका. ।

**भृङ्गी** । स्त्री । अतिविषायां । आतइच । वटीवृक्षे । रा.नि.व.११। भङ्गायाम् । भाङ् । वै.निघ. २भ.अम्लकज्व.चि.गुरुण्यादिः । तन्नामककर्मचिकायां । कुमिरे पोका। इन्द्रगोपकीटे । वै.निघ.। पुं (इन्) । वटवृक्षे । रा.नि.व.११ ।

**भृङ्गीगृहम्** । क्ली । भृङ्गीमक्षिकागृहे । कुमिरे चाक । वै.निघ.२भ.र.पि.चि.नस्य । [११ ।

**भृङ्गीफलः** । पुं । आम्रातक... । रा.नि.व.

**भृङ्गेष्टः** । पुं । आम्रवृक्षे । वै.निघ. ।

**भृङ्गेष्टा** । स्त्री । घृतकुमार्य्यां । रा.नि.व.५ । भार्ग्यां । रा.नि.व.६। काकजम्बूवृक्षे । रा.नि.व.११ । तरणीपुष्पवृक्षे । रा.नि.व.१० । [उणा. ।

**भृज्जनः** । पुं । भर्ज्जनपात्रे । भाजना खोला ।

**भृशाङ्कवः** । पुं । नासारोगभेदे । लक्षणम्—"...मार्गे... । वातकोपिपिभरत्यर्थं नासिकातरुणास्थनि । विघट्टितेऽनिलः क्रुद्धो ... शृङ्गाटकं व्रजेत् । निहत्य कुरुतेऽत्यर्थं चवथुं स भृशाङ्कवः ॥" वा.उ.१९अ. ।

**भृशपत्रिका** । स्त्री। महानील्यां । रा.नि.व.४।

**भृषत्** । पुं, स्त्री । पाषाणे । श.र. ।

**भृष्टः** । त्रि । भर्ज्जिते । भाजा । हे.च. ।

**भृष्टकुलत्थः** । पुं । भर्ज्जितकुलत्थके । भाजा कुरति कलाय । स ज्वरे स्वेदोद्गमहरः । सा.कौ. ज्व.क्रि. ।

**भृष्टचणकः** । पुं । भर्ज्जितचणके । छोला भाजा । मं फुटाभुंजा । कं हुरुकड़ले । गुणाः—रुच्यः वातघ्नः रक्तदोषकृत् वीर्यघ्नः लघुः कफघ्नः शैत्यापहारकश्च । रा.नि.व.१६ ।

**भृष्टतण्डुलः** । पुं । भर्ज्जिततण्डुले । सिद्ध चाउल । गुणाः—"सुगन्धिः कफहा रुच्यः पित्तलो भृष्टतण्डुलः ।" राज.३प. ।

**भृष्टतण्डुलान्नम्** । क्ली । भर्ज्जिततण्डुलस्यान्ने । सिद्ध चाउलेर भात । चालभाजा । मुड़ि । गुणाः—"भृष्टतण्डुलजञ्चान्नं लघु वह्निप्रदीपनम् ।" राज.३प. । [गुणाः मत्स्यशब्दे ज्ञेयाः ।

**भृष्टमत्स्यः** । पुं । भर्ज्जितमत्स्ये । भाजा माछ ।

**भृष्टमांसम्** । क्ली । घृतादिभर्ज्जितमांसे । भाजा मांस । गुणाः—विदाही रक्तवातादिदोषकृच्च । रा.नि.व.१७ ।

**भृष्टमृत्** । स्त्री । अग्नि... दग्धमृत्तिकायाम् । पोड़ा माटी । च... श. ।

**भृष्टयवः** । पुं । भ... , धानायाम् । भाजा यव, छातु । चिपि...के । चिँड़े । प.मु. ।

**भृष्टान्नम्** । क्ली । भृष्टतण्डुले । मुड़ि । श.च. ।

**भेकः** । पुं । कृ...भे । रस.चि.३अ. । मण्डूके । व्याङ् । तन्मांसगुणाः—सद्योबलकरं श्रमदं... हृत्प्रमेहक्षयकुष्ठच्छर्द्दिघ्नञ्च । राज. । [हि.

**भेकटः** । पुं । मत्स्यभेदे । भेट्की माछ । भ.

**भेकनिः (नी)** । स्त्री । मत्स्यभेदे । भाङ्गर माछ । मांसगुणाः—मधुरं शीतलं हृद्यं श्लेष्मकरं गुरु च । राज. ।

**भेकपर्णी** । स्त्री। मण्डूकपर्ण्याम् । थुलकुड़ि उत्. थालकुड़ि । सा.कौ.रसा...दिलौहे । मञ्जिष्ठेति ज्ञेयाः ।

**भेकभुक्** । पुं । सर्पे । त्रिका ।

**भेकमूत्रम्** । क्ली । मण्डूकमूत्रे । ব্যাঙের মূত । र.मा.सं.वज्रशोधने । [घ. ।

**भेकराजः** । पुं । महाभेके । भृङ्गराजे । वै.नि-

**भेकी** । स्त्री । मण्डूकपर्ण्यां । थुल्कुड़ि । र.मा.। भेकपत्रां । अम. ।

**भेटुलिः** । पुं । वाममस्ते । सु.सू.७अ. ।

**भेड्रः** । पुं । मेषे । त्रिका. ।

**भेड़ः (कः)** । पुं । मेषे । हे.च.। पद्मवीजे । तन्नामकतन्त्रकारे । See तन्त्रकारः ।

**भेड़ा (गड़ा)** । स्त्री । स्वनामख्यातत्तुपे । वं भेड़ । कं वेंड़े । गुणाः—अम्लरसा उष्णा ग्राहिणी अरुचिकारिणी च । रा.नि.व.४ । पद्मवीजे । रा.नि.व.१० ।

**भेड़ी** । स्त्री । मेष्यां । ভেড়ী ।

**भेदः** । पुं । भञ्जने । भञ्जनवत्पीड़ायाम् । विदारणेनेव व्यथायां । मा.नि. । विरेके । জোলাপ ।

**भेदकः** । त्रि । विरेचके । पुं । अम्लवेतसे । वै.निघ. ।

**भेदनम्** । क्ली । हिङ्गुनि । रा.नि.व.६ । वायुजन्यव्रणवेदनायाम् । सु.सू.२२अ. । त्रि । भेदके, अबद्धं बद्धं वा मलादिकं पिण्डितम् भित्वाधः पातयति,यथा कटुकादि । आशयावदारणे । च.सू. १८ अ. । पुं । अम्लवेतसे । प.सु. । रा.नि.व.६ । शूकरे । रा.नि.व.१९ । भल्लातके ।

**भेदन(नि)कः** । पुं । जीरके । वै.निघ. ।

**भेदनीयवर्गः** । पुं । भेदकमहाकषायवर्गे । यथा—"सुवहार्कोरुवुकाग्निमुखीचित्राचित्रकचिरविल्वशङ्खिनीशकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति ।" তেউড়ী, শ্বেতার্ক বা রক্তার্ক, এরণ্ড, বিষলাঙ্গলি, দন্তী, চিত্রক, করঞ্জ, শ্বেতবুহ্না, কটুকী, সোণাথিরুই । च.सू.४अ. ।

**भेदाशी** (इन्) । पुं। प्रतुदपक्षिविशेषे । गुणाः—"सर्व्वदोषकरस्तेषां भेदाशी मलदूषकः ।" सु.सू.४६अ. ।

**भेदिज्वराङ्कुशः** । पुं । ज्वराधिकारे रसः । "रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कणं । रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् । कटफलं दन्तिवीजञ्च प्रत्येकं मरिचान्वितं । ज्वराङ्कुशो रसो ह्येष: चूर्णयेद्यामसमात्रकं । वटिकां कारयेद्धीमान् एकगुञ्जाप्रमाणिकाम् ।" रस.कौ. ।

**भेदिनी** । स्त्री । कृष्णजीरके । रा.नि.व.६ ।

**भेदी** (इन्) । पुं । अम्लवेतसे । रा.नि.व.६ । त्रि । भेदकारके । [रोगे] । सु.सू.५अ. ।

**भेद्यम्** । क्ली । भेदार्हे, भेदनीये (विद्रध्यादौ

**भेरुण्डम्** । क्ली । गर्भधारणे । श.र. । त्रि । भयानके ।

**भेषजम्** । क्ली । औषधे । रा.नि.व.२० । तच्च द्विविधं—"स्वस्थस्योजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् ।" च.सू.१अ. । कृष्णजीरके । लावपक्षिणि । जटा. ।

**भेषजकल्पः** । पुं । औषधयोजनायां । ते च कल्पा मदनादयः । वा.कल्प.६अ. ।

**भेषजाङ्गम्** । क्ली । औषधानुपाने । श.च. ।

**भैरवीवचा** । स्त्री। स्वनामख्यातवचायां । শুক্ল বচ । प.सु. ।

**भैषजम्** । क्ली । औषधे । रा.नि.व.२० ।

**भैषज्यसारः** । पुं । उपेन्द्रमिश्रकृतसंग्रहे ।

**भोगः** । पुं । शालिधान्ये । प.मु. । सम्पूर्णाहारे। रा.नि.व.२० । अहिफणायाम् । सर्पशरीरे । पालने । त्रिका. । क्रोड़े । रा.नि.व.१८ । सर्पे । देहे । माने । श.र. ।

**भोगगृहम्** । क्ली । वासगृहे । हे.च. ।

**भोगधरः** । पुं । सर्पे । वै.निघ. ।

**भोगपिशाचिका** । स्त्री। क्षुधायाम् । हारा.।

**भोगवती** । स्त्री । शुक्लवचायाम् । वै.निघ. ।

**भोगवान्** । पुं । सर्पे । मे. ।

**भोगावासः** । पुं । वासगृहे । हारा. ।

**भोगिगन्धिका** । स्त्री। सर्पगन्धायां। वै.निघ.।

**भोगिभुक्** । पुं । गरुड़े । मयूरे । वै.निघ. ।

**भोगिवल्लभम्** । क्ली । श्रीखण्डचन्दने । प.मु. ।

**भोगी** । स्त्री । सर्पिण्यां । सर्पकङ्कालिका । रा.नि.व.५ । गी (इन्) पुं । सर्पे । अम. ।

**भोजनम्** । क्ली । कठिनद्रव्यस्य गलाधःकरणे । अम. । पादोनाहारे । "पादोनं स्याद्भोजनम् ।" रा.नि.व.२० । भोजनान्तकर्त्तव्यता —"भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैव तद्वारि तिमिराणि व्यपोहति । भुक्त्वाचम्य करं वामं दत्त्वा कुक्षौ ततः पठेत् । भुक्तं माहेन्द्रहस्तेन वैश्वानरमुखेन च । गरुडस्य च कण्ठेन समुद्रस्य च वह्निना । वातापिर्भक्षितो येन पीतो येन महोदधिः । यन्मया खादितं पीतं तदगस्त्यो जरिष्यति । सुखासीनः क्षणं तिष्ठेत् यावन्न लभते सुखं । भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् । एवञ्चाधोगतं चान्नं सुखं तिष्ठति जीर्य्यति ॥" राज.२प. । See आहारः, अन्नञ्च ।

**भोजनकः** । पुं । नदीभल्लातके । प.मु. ।

**भोजनपात्रम्** । क्ली । स्वर्णादिनिर्म्मिताहारपात्रे । पाकराजः ।

**भोजनार्हम्** । क्ली । शालिधान्ये । प.मु. ।

**भोजनीयम्** । क्ली । भोज्यद्रव्यमात्रे ।

**भोजराजः** । पुं । अश्वशास्त्रकारे ।

**भोजराजशुक्लः** । पुं । रससुधानिधिकारे ।

**भोज्यम्** । क्ली । अष्टविधान्नान्यतमे अन्ने । रा.नि.व.२० ।

**भोज्यसम्भवः** । पुं । शरीरस्थरसधातौ । श.च. ।

**भोग्यम्** । क्ली । धान्ये । रा.नि.व.१६ ।

**भोग्यार्हम्** । क्ली । शालिधान्ये । रा.नि.व.१६ ।

**भोलिः** । पुं । उष्ट्रे । त्रिका. ।

**भौतिकम्** । क्ली । मुक्तायां । रा.नि.व.१३ ।

**भौमजलम्** । क्ली । पृथ्वीजले । जाङ्गलानूपसाधारणभेदेन तेषां गुणाः जलशब्दे मृग्याः ।

**भौमरत्नम्** । क्ली । प्रवाले । पला । रा.नि.व.१३ । [सु.कल्प.३अ. ।

**भौमसर्पः** । पुं । पृथ्वीजातसर्पे, दंष्ट्राविषे ।

**भूभौषधम्** । क्ली । पार्थिवौषधे । "सुवर्णं समला पञ्च लौहाः ससिकताः सुधा । मनःशिलाले मण्यो लवणं गैरिकाञ्जने ॥" च.सू.१अ. ।

**भौर्जग्रन्थिः** । पुं । भूर्जग्रन्थौ । "ग्रन्थिश्च भौर्जः ।" च.सू.३अ. । [ज्व.चि. ।

**भ्रंशः** । पुं । वृक्षादिभ्यः पतने । भा.आगन्तु.

**भ्रमः** । पुं । चक्रारूढस्येव ज्ञाने । भा.म.१भ. ज्व.चि. । "रजःपित्तानिलाद्भ्रमः ।" वै.निघ.मूर्च्छा.चि. । मूर्च्छायाम् । भ्रान्तौ । कुन्दयन्त्रे । कुंदे । त्रिका. ।

**भ्रमणम्** । क्ली । पर्य्यटने । हस्त्यादिभ्रमणगुणाः —वातकोपनत्वम् अङ्गस्थैर्य्यकरत्वं बलाग्निवर्द्धनत्वञ्च । राज. ।

**भ्रमणी** । स्त्री । जलौकायाम् । वै.निघ. ।

**भ्रमत्कुटी** । स्त्री । तृणादिच्छत्रे । त्रिका. ।

**भ्रमरः (कः)** । पुं । भृङ्गे । अम. । बालमूषिके । मे. ।

**भ्रमरकीटः** । पुं । कुम्भीरकीटे, अग्निपक्षलिकीटे । सु.कल्प.८अ. । [रा.नि.व.७ ।

**भ्रमरच्छल्ली** । स्त्री । भृङ्गच्छल्लीलतायाम् ।

**भ्रमरत्वचा** । स्त्री । भ्रमरच्छल्ल्याम् । वम्. भ्रमरमाली । वै.निघ. ।

**भ्रमरप्रियः** । पुं । धाराकदम्बे । र.मा. ।

**भ्रमरबान्धवा** । स्त्री । शुक्लजातीवृक्षे । वै.निघ. । [नि.व.१० ।

**भ्रमरमारी** । स्त्री । भ्रमरारिपुष्पवृक्षे । रा.

**भ्रमरा** । स्त्री । भृङ्गच्छल्लीलतायां । .नि.व.७ ।

**भ्रमरातिथिः** । पुं । चम्पकवृक्षे । रा.नि.व.१० ।

**भ्रमरानन्दः** । पुं । बकुलवृक्षे । रक्ताम्लानवृक्षे । ढक्कनांटी । स्त्री । अतिमुक्तकपुष्पवृक्षे । रा.नि.व.१० ।

**भ्रमरारिः** । पुं । पुष्पवृक्षविशेषे । भ्रमरमारी इति मालवे प्रसिद्धः । गुणाः—तिक्तः वात(पित्त)-श्लेष्मज्वरापहः शोथकण्डूकुष्ठव्रणत्रिदोषघ्नश्च । रा.नि.व.१० । [नि.व.८ ।

**भ्रमरालम्बः** । पुं । भूतृणे । गन्धतृणे । रा.

**भ्रमरी ।** स्त्री । जन्तुकायाम् । पुत्रदात्र्याम् । भ्रमर्य्याम् । गुड़त्वचायाम् । रा.नि.व.२३ । भ्रमरारिपुष्पवृक्षे । रा.नि.व.१० ।

**भ्रमरेष्टः ।** पुं । पृथुशिम्बश्योणाकवृक्षे । वड़ सौंटा श्योणा गाछ । रा.नि.व.९ । स्त्री । भार्ग्यां । रा.नि.व.११ । [नि.व.१० ।

**भ्रमरोत्सवा ।** स्त्री । माधवीलतायाम् । रा.

**भ्रमिः ।** स्त्री । मूर्च्छायाम् ।

**भ्रमिका ।** स्त्री । धातकीवृक्षे । वै.निघ. ।

**भ्रष्टगुदः ।** त्रि । गुदभ्रंशरोगिणि । च.द. ।

**भ्रस्थुः ।** पुं । नासारोगभेदे । निदा. ।

**भ्राजकः ।** पुं, क्ली । तन्नामकपित्ते । पित्तविशेष । श.च. । तस्य स्थानं त्वक् । तस्य कर्म्म छायाप्रकाशकत्वम् अभ्यङ्गादिक्रियाणाञ्च पाचकत्वम् । सु.सू.२१अ. ।

**भ्रान्तः ।** पुं । पीतधुस्तूरवृक्षे । रा.नि.व.१० ।

**भ्रान्तिः ।** स्त्री । भ्रमे । सा च रजःपित्तानिलजा भवति । "रजःपित्तानिलैर्भ्रान्तिः ।" शार्ङ्ग. पू.६अ. ।

**भ्राम(मि)कः ।** पुं । सूर्य्यावर्त्ते । शृगाले । चुम्बकप्रस्तरे । मे. । कान्तलौहविशेषे । रा.नि. व.१३ ।

**भ्रामरम् ।** क्ली । भ्रमराहृतमधुनि । नकुल.१२अ. । वृहत्समाम्लतलौहे । तदुक्तं ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः । भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥ गुणाः—मधुरं पिच्छिलं रुच्यं मुखजाड्यहरं श्वेतवर्णञ्च । रा.नि.व.१४ । "शीतं कषायं मधुरं लघु स्यात् सन्दीपनं लेहनमेव शस्तं । संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यं । त्रिदोषनाशं कुरुते च पुष्टिं कासं क्षयं वा सतजं च छर्द्दीं । हिक्काश्रमे शोषणपीनसानां रक्तप्रमेहे सरक्तातिसारे । रक्तातिसारे च सपित्तरक्ते व्रणोद्भवत्पार्श्वगदेऽपि शस्तम् । नेत्रामयं वा ग्रहणीगदे वा विषे प्रशस्तं भ्रमरोत्थितं यत् । भ्रामरं सघनं जाड्यभूयिष्ठं मधुरञ्च यत् । क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेहनम् । भ्रामरं वृक्षसंस्थाने विटपे सारघं भवेत् । रन्ध्रे तु कोटरे वापि क्षौद्रं तत्र प्रशस्यते ॥" अत्रि.१८अ. । पुं । प्रस्तरभेदे । चुम्बक पाथर । मे. ।

**भ्रामरशर्करा ।** स्त्री । भ्रामरमधुकृतशर्करायाम् । गुणाः—भ्रामरमधुतुल्याः । रा.नि.व.१४ ।

**भ्रामरी ।** स्त्री । पुत्रदात्रीलतायां । रा.नि.व.३ । नकुल.१३अ. ।

**भ्रामितः ।** त्रि । रोगिणि । रा.नि.व.२० ।

**भ्रामिताक्षः ।** पुं । अश्वस्य वातव्याधिविशेषे । लक्षणं यथा—"वक्रः पश्चिमकायेन मण्डलैर्यो विचेष्टते । मन्दग्रासश्च दीनश्च भ्रामिताक्षो रजोहतः ॥" ज.द.५५अ. । [श्रम. ।

**भ्राष्टः ।** पुं, क्ली । भर्ज्जनपात्रे । ভাজনাখোলা ।

**भ्राष्ट्रजा ।** स्त्री । खर्परपोलिकायां । वै.निघ. ।

**भ्रुकुटिः ।** स्त्री । भ्रुवि । वै.निघ. ।

**भ्रुकुटीमुखः ।** पुं । दर्व्वीकरसर्पविशेषे । सु. कल्प.४अ. । See सर्पः ।

**भ्रूः ।** स्त्री । भ्रूदेशे । ভুরু । वै.निघ. ।

**भ्रूणः (कः) ।** पुं । बालके । गर्भे । अम. । ह्रीवेरे । বালা । रस.र.तिक्तकघृते ।

---

## म

**मः ।** पुं । ब्रह्मणि । एका.कोषः । विषे । मे. ।

**मकरः ।** पुं । मत्स्यविशेषे । মকর । "मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः । रुचिप्रदः शुक्रकरश्चाश्मरीदोषनाशनः ॥" अत्रि.२२अ. । तन्नामकाग्निप्रकृतिकीटे । सु.कल्प.८अ. ।

**मकरध्वजः ।** पुं । रसायनाधिकारे औषधविशेषे । "स्वर्णस्य भागौ वङ्गञ्च मौक्तिकं कान्तलौहकं । जातीकोषफलं रूप्यं कांस्यकं रससिन्दुरम् । प्रवालं कस्तुरी चन्द्रमभ्रकञ्चैकभागिकम् । स्वर्णसिन्दूरतो मागाश्चत्वारः कल्पयेद्बुधः ॥" সুবর্ণ ২ ভ. বঙ্গ ১ ভ. মুক্তা ১ ভ. লোহ ১ ভ. জায়ফল ১ভ. জয়িত্রী ১ভ. রূপা ১ভ. কাঁসা ১ভ. রসসিন্দূর ১ ভ. প্রবাল ১ ভ. মৃগনাভি ১.ভ.

कर्पूर १ भ. अभ्र १ भ. स्वर्णसिन्दूर ४ भ.। र.सा.सं.।

**मकरन्दः** । पुं । मधुनि । प.मु.। कुन्दपुष्पे। कुन्दफुलेर गाछ। पद्मकेसरे। रा.नि.व.१०। क्ली। किञ्जल्के। रा.नि.व.१०। आम्रभेदे। कोकिले। वै.निघ.। पुष्परसे। भा.।

**मकरन्दजम्** । क्ली। ह्रीवेरे। बाला। प.मु.।

**मकरन्दवती** । स्त्री। पाटलपुष्पवृक्षे। श.च.।

**मकरन्दवासः** । पुं। धूलीकदम्बे। रा.नि.व.६।

**मकराकरः** । पुं। कण्टककरञ्जे। श.च.।

**मकरी** । पुं। सन्निपातज्वरविशेषे।

**मकुरः (लः)** । पुं। वकुलवृक्षे। कोरके। हे.च.। श.र.। [चि.मू.२७अ.।

**मकु(कू)लकः** । पुं। दन्तीवृक्षे। अ.टी.र.।

**मकुष्टः (ष्ठः) (कः)** । पुं। (Phaseolus aconitifolius.) वनमुद्गे। वनमुग। हिं मुहट, मोट, मुगानी। तें वनमुद्गचेट्टु। मकुष्ठक इति मालवदेशे प्रसिद्धः। गुणाः—कषायः मधुरः रक्तपित्तघ्नः ज्वरदाहघ्नः पथ्यः रुचिकृत् त्रिदोषहरश्च। रा.नि.व.१६। "सरक्तपित्तकफवातहन्ता चोक्ताः कषायो मधुरः प्रदिष्टः। ग्राही सुशीतो गुदकीलगुल्मं मकुष्ठकः सर्व्वगदान् निहन्ति॥" अत्रि.१५अ.। तत्सूपगुणाः—"मकुष्ठसूपोऽल्पबलः पाचनो दीपनो लघुः। चक्षुष्यो बृंहणो हृद्यः पित्तश्लेष्मास्ररोगनुत्॥" द्रव्यगुणः। [च.वि.७अ.।

**मकेरुकः** । पुं। क्रिमिरोगे, पुरीषजक्रिमिविशेषे।

**मक्कलः (ल्लः)** । पुं। वातजशूलरोगे। गर्भमोचनान्ते वातशोणितजशूलार्त्तिविशेषे। हेँताल व्यथा। लक्षणं—"वायुः प्रकुपितः कुर्य्यात्संरुध्य रुधिरं सुतम्। सुतायाः हृच्छिरोवस्तिशूलं मक्कलसंज्ञकम्॥" मा.नि.।

**मक्कुलम्** । क्ली। शिलाजतुनि। श.र.।

**मक्कोलः** । पुं। खटिकायाम्। खड़ि। चिका.।

**मखप्रभुः** । पुं। हृहत्सोमलतायाम्। वै.निघ.।

**मखान्नम्** । क्ली। पद्मबीजसदृशबीजे। हिं मखाना। "मखान्नं पद्मबीजाभं पानीयफलमित्यपि।" गुणाः—"मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्।" भा.। [चि.मूत्रादिगुल्मा।

**मगधम्** । क्ली। पिप्पलीमूले। वै.निघ.चर.

**मगधजा** । स्त्री। पिप्पल्याम्। पिपुल गाछ। वै.निघ.वि.ज्व.चि.।

**मगधजाफलम्** । क्ली। पिप्पल्यां। पिपुल। च.द.गुल्म.चि.भार्गीषट्पलकघृते।

**मगधा** । स्त्री। पिप्पल्यां। प.मु.। वै.निघ.२भ.कर्णकज्व.चि.। [सि.यो अग्निमान्द्यचि.।

**मगधोद्भवा** । स्त्री। पिप्पल्यां। रा.नि.व.६।

**मघम्** । क्ली। औषधे। पुष्पविशेषे। श.र.।

**मघा (घी)** । स्त्री। औषधविशेषे। धरणिः। धान्यविशेषे। मे.।

**मङ्गलच्छदा (च्छायः)** । स्त्री, पुं। प्लक्षवृक्षे। पाकुड़ गाछ। रा.नि.व.११। [निघ।

**मङ्गलप्रदा** । स्त्री। हरिद्रायां। शमीवृक्षे। वै.

**मङ्गला** । स्त्री। शुक्लदूर्व्वायां। श.र.। हरिद्रायां। रा.नि.व.६। नीलदूर्व्वायां। रा.नि.व.८। करञ्जभेदे। श.च.। मङ्गलागुरुणि। रा.नि.व.१२। रुद्रजटायाम्। ब्राह्मी। त्रायमाणायाम्। वै.निघ.। [१२।

**मङ्गलागुरु** । क्ली। मङ्गल्यागुरुणि। रा.नि.व.

**मङ्गल्यम्** । क्ली। दधनि। अम्लदर्शनि। मे.। स्वर्णे। सिन्दूरे। रा.नि.व.१३। कृष्णागुरुकाष्ठे। प.मु.। श्रीखण्डचन्दने। श्वेत चन्दन। रा.नि.व.१२। पुं। बिल्ववृक्षे। र. । मसूरके। रा.नि.व.१६। जीवकक्षुपे। रा.नि.व.५। नारिकेलवृक्षे। कपित्थवृक्षे। रा.नि.व.११। रीठाकरञ्जे। रा.नि.व.८। अश्वत्थवृक्षे। मे.। जलमधूकवृक्षे। वै.निघ.। [धा.व.।

**मङ्गल्यकः** । पुं। मसूरकलाये। भा.पू.१भ.

**मङ्गल्यकुसुमा** । स्त्री। शङ्खपुष्प्यां। भा.। [टी.।

**मङ्गल्यनामधेया** । स्त्री। जीवन्तीवृक्षे। अ.

**मङ्गल्यपुष्पी** । स्त्री। शङ्खपुष्प्याम्। वै.निघ.।

**मङ्गल्या** । स्त्री। चोड़ानामदेवदारुभेदे। प्रियङ्गौ। मङ्गलागुरुणि। रा.नि.व.१२। हेमपुष्प्यां। मसूरे। मूर्व्वायां। मूर्गा। र.मा.। ब्राह्मी। रा.नि.

व.५।२३ । अमीरवे । रा.नि.व.८।२३ । अधःपु-ष्पां । ...। गोरोचनायां । हरिद्रा-यां दूर्वायां । प.मु. । शुक्लवचायां । रा.नि.व. ८ । माषपर्ण्यां । रा.नि.व.३।२३ । जीवन्तीलता-यां । वचायां । कट्वां । रा.नि.व.३।५।६।२३ । म-हाबलायां रा.नि.व.२३ । मल्लिकापुष्पवृक्षे । मु-द्गपर्ण्याम् । वै.निघ. ।

**मङ्गल्यागुरु** । क्ली । स्वनाम्ना केदारदेशे प्रसि-द्धागुरुणि । गुणाः—शीतलं गन्धाढ्यं योगवाहि-कञ्च । रा.नि.व.१२ । |नि.व.५ ।

**मङ्गल्याह्वा** । स्त्री । त्रायमाणालतायां । रा.

**मङ्गुरः** । पुं । मत्स्यविशेषे । मागुर माछ । वै. निघ. । |हारा. ।

**मङ्ग(ङ्ग)णम्** । क्ली । ... ।

**मच्छः** । पुं । मत्स्यसामान्ये । श.र. ।

**मज्जकृत्** । क्ली । अस्थनि । हे.च. ।

**मज्जगतज्वरः** । पुं । तदाश्रितज्वरविशेषे । मज्जागतज्वरे । लक्षणं यथा—"तमःप्रवेशनं हि-क्का कासः शैत्यं वमिस्तथा । अन्तर्दाहो महाश्वासः मर्मच्छेदश्च मज्जगे । मज्जगते क्रिया नास्ति मरणं तत्र आपतत् ॥" वै.निघ. । |निघ.।

**मज्जदमनी** । स्त्री । वन्ध्याकर्कोटिकायाम् । वै.

**मज्जनम्** । क्ली । स्नाने । जटा । मज्जायां । श.च. । |शार्ङ्गधरः । भैष.बाजी. ।

**मज्जफलम्** । क्ली । माजुफलमिति प्रसिद्ध ब-

**मज्जरः** । पुं । तृणविशेषे । माजूर तृण । मं पवनात् कं तूलं । गुणाः—मधुरः धेनुदुग्धकरश्च । रा.नि.व.८ ।

**मज्जसमुद्भवम्** । क्ली । शुक्रे । हे.च. ।

**मज्जा (न्)** । पुं, स्त्री । वृक्षादेरन्तःसारभागे । सार । अम. । अस्थ्नः गुहस्नेहभागे । स च ज-न्वस्थिमध्यग. तस्य कर्म पूरणम् । "स्नेहोऽस्थ्नः श-र्चिरैव स्यात् स मज्जा कथितो बुधैः ।" भा.पाद-दारोचि. । "अस्थि यत् स्वाग्निना पक्वं तस्य सारो भवेद्धनः । यः स्वेदवत् पृथग्भूतः स मज्जेत्यभिधी-यते ॥" इति स्वरूपम् । मज्जस्थानं यथा—"स्थू-लास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः ।" भा.

तृतीया मेदोधरा नाम, मेदो हि सर्वभूतानामुद-रस्थमणुष्वस्थिषु महत्सु मज्जा भवति । सु.शा.४अ. । अस्थिसारे । ... । रा.नि.व.१८ । गुणाः —"यस्य यस्य फलस्येह वीर्यं भवति यादृशं । त-स्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥" सु.सू. ४६अ. । मज्जगुणाः—"बलशुक्ररसश्लेष्ममेदोमज्ज-विवर्धनः । मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः ॥" च. । वातघ्नो पित्तकफबलकरो मांस-तुल्यगन्धरूपा च । कुम्भीरमहिषमज्जगुणाः—म-धुरा वृंहणी बल्या च । मज्जसत्त्वगुणौ—शैत्यसुख-त्वञ्च । राज. ।

**मज्जा(नु)गतम्** । क्ली । काण्डभग्नमाश्रित्य-भङ्गरोगे । "अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जा-नमनुव्रजति ।" सु.नि.१५अ. ।

**मज्जाजः** । पुं । भूमिजगग्गुलौ । रा.नि.व.१२।

**मज्जामेहः** । पुं । मज्जगतप्रमेहे । निदा. ।

**मज्जारजाः** । पुं । गुग्गुलौ । वै.निघ. ।

**मज्जावहस्रोतः** । पुं । मज्जधातुवाहकना-डीम् । तस्य मूलम् अस्थीनि सन्धयश्च । च.वि. ५अ. ।

**मज्जारसः (सारः)** । पुं । शुक्रे । रा.नि.व. १८ । सप्तलायाम् । गन्धद्रव्यविशेषे । वै.निघ. ।

**मज्जासारम्** । क्ली । जातीफले रा.नि.व.१२।

**मज्जिका** । स्त्री । लवणावल्ल्यै । वर्कास्थयाम् । वै.निघ. ।

**मञ्जकपर्णी** } स्त्री, क्ली । सुरपत्राम् ।
**मञ्जिपत्रम् (त्री)** } रा.नि.व.१० गुणाः—
तिक्ता उष्णा पित्तला विषघ्नी कफवातज्वरकास-कृमिघ्नी । वै.निघ. । |रा.नि.व.१९ ।

**मञ्जकाश्रयः** । पुं । मल्लिकायाम् । मत्कुणे ।

**मञ्जरम्** । क्ली । मुक्तायां । श.र. । तिलकवृक्षे । श.र. । मञ्जर्यां । त्रिका. ।

**मञ्जरिः** । पुं । बल्लर्यां । अम. ।

**मञ्जरी (कः)** । स्त्री,पुं । गन्धतुलस्यां । प.मु. । मुक्तायां । तिलकवृक्षे । श.र. । तुलस्यां । रा.नि. व.१० । वेत्रलतायाम् । मर्शकवृक्षे । वै.निघ. ।

**मञ्जरीनम्रः** । पुं । वेतसे । बेत । रा.नि. व.९ ।

**मञ्जा।** स्त्री। दमें। छाग्याम्। हे.च.।

**मञ्जिः (ञ्जी)।** स्त्री। मञ्जर्य्यां। त्रिका.।

**मञ्जिफला।** स्त्री। कदलीवृक्षे। त्रिका.।

**मञ्जिष्ठः (ष्ठा, ष्ठिका)।** पुं, स्त्री। (Rubia cordifolia. Syn. R. Mañjishthá.) Indian madder. स्वनामख्यातलतायां। मञ्जिष्ठी। प.मु.। हिं वम्. मञ्जीठ, जिञ्जिनि। तें मञ्जिष्ठतीठी, तामवल्ली। ता. मञ्जिट्टी। फा. रनास। गुणाः—मधुरा कषाया उष्णा गुरुः व्रणमेहज्वरश्लेष्मविषनेत्ररोगघ्नी च। चौलयोजनी कौञ्जी सिंहली चेति तद्भेदाः। एताः सर्व्वा विलोमेन गुणोत्तरा ज्ञेयाः। रा.नि.व.६। सु.चि.१७ अ.। च.द.वि.ज्व.चि.लाक्षादितैले। "मञ्जिष्ठा सेन्द्रवारुणी।" पक्षाघातकामलासु हिता मूत्रस्रोतोविशोधनी च। फलं यकृद्दोषहरं मूलं चर्म्मविवर्णताहरं तिलकालकघ्नञ्च। कश्चिदन्यगुणाः।

**मञ्जिष्ठमेहः।** क्ली। पित्तजन्यप्रमेहरोगे। अयं रोगी मञ्जिष्ठोदकप्रकाशं मेहति। सु.नि.६ अ.।

**मञ्जिष्ठाद्यघृतम्।** क्ली। शारीरव्रणाधिकारे घृतं। "मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्विपाचयेत्। सर्व्वेषामग्निदग्धानामेतद्रोपणमिष्यते॥" रस.र.।

**मञ्जिष्ठाद्यतैलम्।** क्ली। क्षुद्ररोगाधिकारे तैलम्। "मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकं। कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत्। आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत्। नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥" तिलतैलं ॥० श.। कल्कार्थे—मञ्जिष्ठा मधुकपुष्पं (मउल फूल) लाक्षा (लाहा) मातुलुङ्गमूलं (टाबामूल) यष्टिमधु प्र. २ तो. छागदुग्धं १ श.। रस.र.।

**मञ्जुगमना।** स्त्री। हंस्याम्। रा.नि.व.१९।

**मञ्जुघोषः।** पुं। कपोते। वै.निघ.। [१९।

**मञ्जुपाठकः।** पुं। शुकपक्षिणि। रा.नि.व.

**मञ्जुलः।** पुं। जलरङ्कपक्षिणि। मे.। तित्तिरपक्षिणि। हरिणभेदे। अञ्जीरवृक्षे। वै.निघ.। क्ली। अञ्जीरं। आंजीर। राज.। स्त्री। मञ्जिष्ठायाम्।

**मञ्जूषा।** स्त्री। मञ्जिष्ठायां। रा.नि.व.६।

**मट्ट(ड्ड)कः।** पुं। मत्स्यविशेषे। माड़ुआ। जटा।

**मणिः (णी)।** पुं, स्त्री। स्फटिकादिरत्ने, मुक्तादौ। त्रिका.। गुणाः—"मणिरत्नं सरं शीतं कषायं स्वादु लेखनं। चक्षुष्यञ्च……।" राज.। अजागलस्तने। मे.। शिश्नाग्रग्रन्थौ। सि.यो.मुक्तां.चि.। अंशे, भागे। भा.म.१भ.मसूरिका.चि.। मणिबन्धे। हे.च.। योन्यग्रभागे। श.र.।

**मणिकण्ठः।** पुं। चासपक्षिणि। वै.निघ.।

**मणिकाननम्।** क्ली। माने। कण्ठे। श.र.।

**मणिच्छिद्रा।** स्त्री। मेदायां। प.मु.। रा.नि.व.५। महामेदायाम्। मज्जायाम्। वै.निघ.। ऋषभकौषधे। मे.। [व.१९।

**मणितारकः।** पुं। सारसपक्षिणि। रा.नि.

**मणितुण्डः।** पुं। तृषायाम्। वै.निघ.।

**मणिपूरम्।** क्ली। आमाशयकुक्षौ।

**मणिबन्धः।** पुं। करमूले। হাতের কব্জি। रा.नि.व.१८। भा.मसूरी.चि.।

**मणिभावरः।** पुं। सारसपक्षिणि। वै.निघ.।

**मणिमन्थम्।** क्ली। सैन्धवलवणे। रा.नि.व.६। वै.निघ.श्वास.चि.शिलाद्यवलेहे। [वै.निघ.

**मणिमन्दिरम्।** क्ली। मुक्तागृहे। झिनुक।

**मणिरत्नम्।** क्ली। हीरके। वै.निघ.। [१३

**मणिराग(ज)म्।** क्ली। हिङ्गुले। रा.नि.व

**मणिरामः।** पुं। ग्रन्थरत्नमालाकर्त्तरि।

**मणिवरः।** पुं। हीरकमणौ। হীরে। भा.

**मणिवीजः।** पुं। दाड़िमवृक्षे। रा.नि.व.११। जीरके। वै.निघ.।

**मणीचकम्।** क्ली। चन्द्रवर्णरौप्ये। চান্দি রূপা। त्रिका.। पुं। चन्द्रकान्तमणौ। वै.निघ. मत्स्यरङ्कपक्षिणि। মাছরাঙা পাখী। हारा.।

**मणीवकम्।** क्ली। पुष्पे। हे.च.।

**मण्टपी।** स्त्री। क्षुद्रोपोदिकायां। रा.नि.व.

**मण्टूरम्।** क्ली। मण्डूरे। মণ্ডুর। वै.निघ.

**मण्ठः (कः)।** पुं। वटकाकारपक्वान्नविशेषे। हिं मांड़ा। यथा—"समितां मर्दयेदाज्यैर्जलेना

मर्दयेत् । अस्मात्तु वटकङ्कृत्वा पचेत्सर्पिषि नीरसम् । एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वा सितापाके ततस्तञ्च समुद्धरेत् । अयमप्यकारः संसिद्धो मण्ड इत्यभिधीयते ॥'' गुणाः—“मण्डस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः । पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः ॥'' रा.नि.व.१७ ।

**मण्डम्** । क्ली, पुं । सारे । पिच्छे । दध्याद्यग्रसारे । মাড়, দয়ের মাৎ । क्ली । मस्तुनि । मे. ।

**मण्डः** । पुं । एरण्डवृत्ते । प.मु. । यवादिसाधितसिक्थकरहितद्रव्यविशेषे । মণ্ড, মাড় । “सिक्थकैरहितो मण्डः ।'' स च चतुर्द्दशगुणाम्बुसाधितः सिद्धः अर्थात् तण्डुलपरिमाणापेक्षया ऊनविंशगुणजले सिद्धः । “मण्डश्चतुर्द्दशगुणे ।'' च.द.ज्व.चि. । “जले चतुर्द्दशगुणे तण्डुलानां चतुष्पलं । विपचेत्स्रावयेन्मण्डः सभक्तो मधुरो लघुः । नीरे चतुर्द्दशगुणे सिद्धो मण्डस्त्वसिक्थकः ॥'' प.प्र.२ख. । गुणाः —“तण्डुलानां सिक्थहीना पेया चाग्निप्रदीपनी । ग्राहिणी लघुशीता च पाचनी वातलोमनी । धातूनाञ्चैव नाडीनां मृदुत्वस्वेदकारिता । तृषाश्रमाश्मरीपित्तातीसारकफदोषहा ॥'' वै.निघ. । अष्टगुणवारिसिद्धे मण्डे । स चाग्निमान्द्ये हितः । सि.यो.अग्निमा.चि. । गुणाः —“क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः ॥'' राज.३प. । भेके । धूनके । शाकभेदे । मे. । मस्तुनि । मारे । पिच्छे । हे.च. ।

**मण्डकः** । पुं । मण्डे । जातीपुष्पवृत्ते । पिष्टकविशेषे । हिं माँड़ा । “वारिणा कोमलाङ्कृत्वा समितां साधु मर्द्दयेत् । हस्तचालनया तस्या लोप्त्रीं सम्यक् प्रसारयेत् । अधोमुखघटस्यैतां विस्तृताम्प्रक्षिपेद्बहिः । मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते ॥ दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः । अथवा सिद्धमांसेन सतक्रवटकेन वा ... ॥” गुणाः—“मण्डको बृंहणो वृष्यो बल्यो रुचिकरो भृशं । पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः ॥” भा. । लोप्त्री = लिची ।

**मण्डनः** । पुं । मधुमाधवीलतायाम् । वै.निघ. २अ.शल्यूषादिचूर्णे ।

**मण्डपः** । पुं । माधवीलतायाम् । वै.निघ. ।

**मण्डपा** । स्त्री । निष्पाव्यां । रा.नि.व.१६ ।

**मण्डपारोहः** । पुं । मुखालो । रा.नि.व.७ ।

**मण्डपी** । स्त्री । क्षुद्रपत्रीपोदक्यां । क्षुद्रपत्र पुँई । रा.नि.व.७ ।

**मण्डयन्तः** । पुं । अन्ने । उणा. ।

**मण्डरी** । स्त्री । घुर्घुरिकायाम् । हारा. ।

**मण्डल(क)म्** । क्ली । पिटकवन्मण्डलयुक्तचर्मरोगे । চাকা দাগ । कोठरोगे । शीतपित्तरोगे । रा.नि.व.२० । मा.नि. । नवीनामगन्धद्रव्ये । श.च. । पुं । उदर्दरोगे । सर्पभेदे । व्रणेऽङ्गे व्रणबन्धभेदे । “मण्डलं वेष्टनाकारं विदध्यादिति लक्षणं ।'' सु.सू.१८अ. । कुक्कुरे । त्रिका. । अष्टचत्वारिंशद्दिवसेषु । ৪৮ দিন । “संस्थाप्य मण्डलं पश्चादर्कं निष्काशयेत्ततः ।'' अर्क.चि. ।

**मण्डलच्छदा** । स्त्री । शुक्लपुनर्नवायाम् । वै.निघ. । [रा.नि.व.५ ।

**मण्डलपत्रिका** । स्त्री । रक्तपुनर्नवायाम् ।

**मण्डलपुच्छकः** । पुं । तन्नामकप्राणहरकीटे । सु.कल्प.८अ. । [ति ख्याते । वै.निघ. ।

**मण्डलशुक्लभाक्** । पुं । आनारस इति ख्या

**मण्डलसन्धिः** । पुं । कण्डूदयनेत्रकोमनाडीषु मण्डलाकारसन्धौ । सु.शा.५अ. ।

**मण्डला** । स्त्री । कुमार्य्याम् । घृतकुमारी । दूर्व्वायाम् । वै.निघ. ।

**मण्डलाग्रम्** । क्ली । मण्डलमिवाग्रं यस्येति । स्वनामख्यातषडङ्गुलशस्त्रविशेषे । लक्षणं यथा— “षडभागे मण्डलं वृत्ताङ्कुरसंस्थानमेव वा । मण्डलाग्रस्य जानीयात्प्रमाणन्तु षडङ्गुलम् ॥” सु.सू.८अ. । ड. ।

**मण्डली** (इन्) । पुं । वटवृत्ते । रा.नि.व.११ । सर्पे । त्रिका. । गोनससर्पे । रा.नि.व.१९ । कृकलासे । हे.च. । विडाले । श.मा. । कर्कटे । भौमसर्पजातौ । “ज्ञेया मण्डलिनो भोगाः मण्डलैर्विविधैश्चिताः । प्रांशवो मन्दगमनाः...॥” वा.उ.३६अ. । वै.निघ. । तद्भेदाः—आदर्शमण्डलश्वेतमण्डलरक्तमण्डलचित्रमण्डलपृषतरोध्रपुष्पमिलिन्द

अगोनसअङ्गोनसपनसमहापनसवेणपत्रकचित्रक-कभुकपायकलुषपारावतकृष्णाभरणचित्रकर्णोपद्मा-खेति। तद्दष्टलक्षणमाह — मण्डलिदष्टस्य प्रथमे वेगे रक्तं दुष्टं पीतीभवति। तेन च पीताङ्गता दाहश्च। द्वितीये श्वयथुः। तृतीये दंशपरिक्लेदादयः। चतुर्थे ज्वरो दाहश्च। पञ्चमे सर्व्वशरीरदाहश्च भवति। वा.उ.३६अ.। स्त्री (ली)। दूर्व्वायां। हारा.। घृतकुमार्य्याम्। गुडूच्याम्। वै.निघ.।

**मण्डा**। स्त्री। मेथिकायां। प.मु.। मद्ये। हारा.। आमलक्याम्। मे.।

**मण्डूकः**। पुं। भेके। ब्याङ्। स अष्टविधः— कृष्ण-सार कुहक हरित रक्त यवव्वर्णाभ भृकुटी-कोटिकाः इति। तद्दंशे दंशकण्डूः पीतफेणागमश्च। सु.कल्प.८अ.। पृथुशिम्बश्योणाकवृक्षे। बड़ शोणाक्शोनागाछ। रा.नि.व.९। पुण्डरीकवृक्षे। पुण्डरिया। वै.निघ.। मण्डूकपर्ण्याम्। थुलकुड़ि। भैष.च.पि.चि.ब्रुधावतीगुध्यां। अश्वस्य खुरतलप्रदेशे। ज.द.।

**मण्डूकता (तापः)**। स्त्री, पुं। अश्वस्य पादरोगविशेषे। लक्षणं यथा—"मण्डूकतापो मण्डूक्यां व्रणेनाश्वस्य जायते। अभिघातसमुत्थेन दुष्टकर्दमकेन च॥" ज.द.३९अ.।

**मण्डूकपर्णः**। पुं। श्योणाकवृक्षे। अम.। पाटलावृक्षे। वै.निघ.। शोणके। मे.।

**मण्डूकपर्णी**। स्त्री। (Hydrocotyle Asiatica.) Asiatic Penny wort. स्वनामख्यातशाके। थुलकुड़ि, थानकुनि। हिं ब्रह्ममण्डूकी। तें मण्डूकब्रम्ही। ता. वल्लरी कीरौ। वम्. ब्रह्मी। रा.नि.व.२३। गुणैर्ब्राह्मीसदृशी। गुणाः—कासघ्नी स्वादुपाकरसा हिमा च। राज.३प.। भैष.। महाशक्त्यां। अस्य पत्रं कुष्ठे उपदंशे च परमहितं। चर्म्मरोगे नाडीव्रणे च हितम्। हस्तफलम्। मञ्जिष्ठायां। रा.नि.व.६।२३। च.सू.४अ.। आदित्यभक्तायाम्। रा.नि.व.४।२३। पृथुशिम्बश्योणाकवृक्षे। बड़ शोणाक्शोनागाछ। रा.नि.व.९। शालपर्ण्याम्। पाटलायाम्। वै.निघ.। ब्राह्म्यां। ब्रह्मी शाक। भा.उ.रसायने। "मण्डूकपर्ण्याः स्वरसः। तदभावे मञ्जिष्ठा ग्राह्या।" ब्राह्मीभेदे। सु.चि.२८अ.।

**मण्डूकमाता**। स्त्री। ब्राह्मीक्षुपे। रा.नि.व.५।

**मण्डूका**। स्त्री। मञ्जिष्ठायां। प्र.मा.। मण्डूकपर्ण्यां। थुलकुड़ि। प.मु.। आदित्यभक्तायां। हुड़हुड़िया। रा.नि.व.४।

**मण्डूकी**। स्त्री। मण्डूकपर्ण्याम्। थुलकुड़ि। र.मा.। आदित्यभक्तायां। रा.नि.व.४। ब्राह्मीक्षुपे। रा.नि.व.५। जलशङ्कौ। सु.चि.१अ.। अश्वस्य खुरतलभागे। ज.द.२अ.। भेकपत्न्यां।

**मण्डूरम्**। क्ली, पुं। लौहमले। मण्डूर। र.मु.। अस्य करणविधिः— "अक्षाङ्गारैर्धमेत् किट्टं लौहजं तद्गवां जलैः। सेचयेत्तप्ततप्तञ्च सप्तवारं पुनः पुनः। चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलोद्भवैः। आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम्। यल्लौहे यद्गुणाः प्रोक्तास्तत्किट्टे चापि तद्गुणाः। शतोर्द्धमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्। अधमं षष्टिवर्षीयं ततो हीनं विषोपमम्।" र.नि.७अ.।

**मण्डूरवटकः**। पुं। पाण्डुरोगे औषधविशेषः। "त्रिफलाव्यूषणं मुस्तं विडङ्गं चव्यचित्रकौ दार्व्वी त्वक् माक्षिको धातुः ग्रन्थिकं देवदारु च। एतान् द्विपलिकान् भागान् चूर्णं कुर्य्यात् पृथक् पृथक्। मण्डूरं द्विगुणं चूर्णाद् शुद्धमञ्जनसन्निभम्। गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत्ततः। उदुम्बरसमान् कृत्वा वटकांस्तान् यथाग्निना। उपयुञ्जीत तक्रेण ..।" च.चि.२०

**मतङ्ग(रा)जः**। पुं। हस्तिनि। अम.।

**मतिः**। स्त्री। बुद्धौ। अम.। इच्छायाम्। मे.। शाकविशेषे। शब्दकल्पे अजयपालः।

**मतिदा**। स्त्री। शिशुड़ीक्षुपे। रा.नि.व.४। ज्योतिष्मतीलतायां। रा.नि.व.३।

**मतिविभ्रंशः**। पुं। बुद्धिवैपरीत्ये। प्र.र.।

**मतिविभ्रान्तिः**। पुं। उन्मादरोगे। रा.नि.व.२०।

**मत्कः**। पुं। मत्कुणे। छारपोका। प्र.मा.।

**मत्कुणः**। पुं। कीटभेदे। छारपोका। रा.नि.व.१९। नारिकेले। अश्मश्रुपुरुषे। मे.।

…हिषे । वै.निघ. । स्त्री । केशरहितस्त्रीयोनौ । श… [श.मा. ।
…र. ।

**मत्कुणारिः** । पुं । शणवृक्षे । भङ्गायां । शिक्षि ।

**मत्तः** । पुं । धुस्तूरवृक्षे । रा.नि.व.१० । कोकिले । महिषे रा.नि.व.१९ । त्रि । उन्मत्ते ।

**मत्तकाशिनी** । स्त्री । उन्मत्तस्त्रियां । अम. ।

**मत्तकीशः** । पुं । हस्तिनि । श.मा. ।

**मत्तवारणम्** । क्ली । पूगफलचूर्णे । श.मा. । कुन्दवल्लवृतौ । कुँदवृक्ष (वेड़) । मे. । पुं । मत्तहस्तिनि । [याम् । शिक्षि । वै.निघ. ।

**मत्ता** । स्त्री । मद्ये । रा.नि.व.१४ । विजया

**मत्ताख्यः** । पुं । कोकिले । वै निघ. ।

**मत्सः (त्स्यः)** । पुं । जलचरजन्तौ । माछ । ते बहुविधा नानाजातीयाश्च । यथा—"रोहितो मद्गुरो भीरुर्वालको वर्वरस्तथा । कावलो रक्तमत्स्योऽथ महिषश्च चिल्लीचिमः । वातृकः खल्लमीमा च ज्ञेया गर्भविषादयः ।" तेषां विशेषाः पर्य्याये स्त्रष्टव्याः । साधारणतो मत्स्यमांसगुणाः स्निग्धम् उष्णं गुरु रक्तपित्तजनकं वातहरञ्च । "निःशल्का निन्दिता मत्स्याः सर्व्वे शल्कयुता हिताः । लघुस्थैर्य्यकरा वीर्य्यबलपुष्टिविवर्द्धनाः ॥ ह्रदकुल्या जलनिधिनिर्झरतडागवापीजलेषु च ये मत्स्याः । ते तु जड़ा, नादेया यथोत्तरलघुतरास्तु नादेयाः ॥ धाराम्बुमत्स्या गुरवोऽसदाहदा विष्टम्भदास्ते लवणाम्बुजाताः । तेनान्यजाः स्वादुजलास्थिता अपि ज्ञेया जड़ास्तेऽपि यथाश्रुतानिमान् ॥" रा.नि.व. १७ ।" नादेया मधुरा मत्स्या गुरवो मारुतापहाः । रक्तपित्तकराश्चोष्णाः वृष्याः स्निग्धाल्पवर्चसः । कषायानुरसास्तेषां शष्पशैवालभोजनाः । सरस्तड़ागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः । महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ॥" तेषामन्यानिलघ्नत्वाच्चौण्ट्रकौप्यौ गुणोत्तरौ । स्निग्धत्वात् स्वादुपाकत्वात्तयोर्वाप्या गुणोत्तराः । नादेया गुरवो मध्ये यस्मात् पुच्छास्यधारिणः । सरस्तड़ागजानान्तु विशेषेण शिरो लघु । अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः । किञ्चिन्मुक्ता शिरोदेशमत्यर्थं गुरवस्तु ते । अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः । उरोविचरणात्तेषां पूर्व्वमङ्गं लघु स्मृतम् ।" सु.सू.४६अ. । महामत्स्यगुणाः—"महाप्रमाणा गुरवः शास्ता बहुवर्चसः ।" क्षुद्रमत्स्यगुणाः—"क्षुद्रमत्स्यास्तु लघवः ग्राहिणो ग्रहणीहिताः । कृष्णमत्स्या लघुस्निग्धा वातघ्ना वह्निवर्द्धनाः ।" पाण्डुवर्णमत्स्यगुणाः—"पाण्डुरा दोषलाः स्निग्धा गुरवो भिन्नवर्चसः ।" छिन्नशुष्कमत्स्यगुणाः—"कथिता दोषला मत्स्याः शुष्का विष्टम्भिदुर्ज्जराः ।" लवणयुक्तमत्स्यगुणाः—"लवणोत्ताड़िता मत्स्याः कफपित्तकराः सराः ॥" सामुद्रमीनगुणाः—"सामुद्रा गुरवो वृष्याः स्निग्धोष्णा वातनाशनाः । पित्तलास्तु विशेषेण मांसाशित्वाद्बलावहाः ।" जम्बीररसयुक्तमत्स्यगुणाः—"दग्धमत्स्यास्तु जम्बीररसाक्ता वातनाशनः । मधुरो रोचनो हृद्यो बृंहणो बलवर्द्धनः ।" सन्तोलितमत्स्यगुणाः—"आर्द्रकैः कटुतैलेन सद्यः सन्तोलितो भवेत् । स स्वादुः कफवातघ्नः शुक्रलो बलवर्द्धनः ।" मत्स्यव्यञ्जनगुणाः "व्यञ्जनं शाकमत्स्याख्यं हृद्यं वृष्यञ्च पुष्टिकृत् ।" मत्स्यघण्टगुणाः—"मत्स्यघण्टो बलकरो वातघ्नो रोचनः परः ॥" राज.श्प. ।

**मत्सग(घ)ण्टः** । पुं । मत्स्यशल्के । समत्स्यव्यञ्जनभेदे । माछेर घण्ट । श.च. । See मत्स्यः ।

**मत्सरः** । पुं । मक्षिकायां । त्रिका. ।

**मत्स्यकाली (ही)** । स्त्री । उपोदिकायाम् । वै.निघ. । [४ । जटा. ।

**मत्स्यगन्धा** । स्त्री । जलपिप्पल्यां । रा.नि.व.

**मत्स्यगन्धिः** । स्त्री । मत्स्याक्ष्याम् । उलीशाक । (का) । शक्रनामायाम् । वै.निघ. ।

**मत्स्यघण्टः** । पुं । व्यञ्जनविशेषे । माछेर घण्ट । श.च. । See मत्स्यः ।

**मत्स्यण्डिका (ण्डी)** । स्त्री । गुड़कृतमिष्टद्रव्यभेदे । मिछरि, नवात । शर्करायां । रा.नि.व.१४ । मातगुड़ । "इक्षो रसो यः संपक्वो घनः किञ्चिद्द्रवान्वितः । मन्दं यत् स्यन्दते तस्मात् तन्मत्स्यण्डी निगद्यते ।" गुणाः—"मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता ॥" भा. । मत्स्यण्डिकाखण्डशर्करादिमलजाताः उत्तरोत्तरं शीतस्निग्धगुरुमधुरतरा भवन्ति । सु.सू.४५अ. ।

**मत्स्यण्डीफलितम्** । क्ली । खटीशर्करायाम् । वै.निघ. ।

**मत्स्यनाशक: (नाशन:)** । पुं । मत्स्यरङ्गपक्षिणि । माछराङा पाखी । कुररपक्षिणि । त्रिका. । हे.च. ।

**मत्स्यपित्तम्** । क्ली । मीनपित्ते । माछेर पित्त । तच्छुद्धि:—"मत्स्यादिपित्तं संशुष्कं निम्बद्रावैर्विभावितं । दिनान्तं शुद्धिमायाति सत्यं गुरुवचो यथा ॥" सा.कौ. । [रा.नि.व.६ ।

**मत्स्यपित्ता** । स्त्री । कटुरोहिण्यां । कट्‌की ।

**मत्स्यपुटपाक:** । पुं । पुटेन मत्स्यपाकभेदे । तत्साधनं दग्धमत्स्यतुल्यमेव । [रा.नि.व.६ ।

**मत्स्यभि(वि)न्ना** । स्त्री । कटुकायाम् । कट्‌की ।

**मत्स्यभेदिनी** । स्त्री । कटुकायां । रा.नि.व.६ ।

**मत्स्यरङ्ग: (ङ्ग:, क:)** । पुं । जलकाके । माछराङा । हारा. ।

**मत्स्यराज:** । पुं । रोहितमत्स्ये । त्रिका. । "मद्गुरो रोहित: श्रेष्ठ: शकुलश्च विशेषत: । मत्स्यराज इति प्रोक्त: ।" र.स.चि.६अ. ।

**मत्स्यर्क:** । पुं । शफरीमत्स्ये । च.शा.८अ. ।

**मत्स्यवेधनी** । स्त्री । मीनरङ्गी । माछराङा । जटा. । वडिशे । श.र. ।

**मत्स्यशकलम्** । क्ली । मीनशल्के । मत्स्यचर्म्मणि । भा.म.कुष्ठ.चि. । स्त्री । कटुकायां । भा.म.१भ. चितभ्रम.ज्व.चि. । "मृद्वीकामरदारुमत्स्यशकला ।"

**मत्स्यसन्तानिक:** । पुं । मत्स्यव्यञ्जनभेदे । यथा—"दग्धेऽङ्गारे सलवणो वेशवारैरुपस्कृत: । सार्द्रक: कटुतैलेन मत्स्यसन्तानिको भवेत् ॥" श.च. ।

**मत्स्या** । स्त्री । कटुकायाम् । वै.निघ. ।

**मत्स्याङ्गी** । स्त्री । गण्डदूर्व्वायाम् । रा.नि.व.८ । हिलमोचिकायां । शिञ्चे । त्रिका. ।

**मत्स्याण्डम्** । क्ली । मीनाण्डे । माछेर डिम । गुणा:—"मत्स्यकूर्म्मखगाण्डानि स्वादुवाजीकराणि च । कटुपाकानि रूक्षाणि वातश्लेष्मकराणि च ॥" राज.३प. ।

**मत्स्यादनी** । स्त्री । जलपिप्पल्यां । रा.नि.व. ४ । सूक्ष्मैलायाम् । मत्स्याक्ष्याम् । शिञ्चे । काकमाच्याम् । गण्डदूर्व्वायाम् । मण्डूक्याम् । रा.नि.व. २३ । [त्रिका. ।

**मत्स्याशन:** । पुं । मत्स्यरङ्गे । माछराङा ।

**मत्स्याक्षकम्** । क्ली । ब्राह्म्याम् । पत्राङ्गचन्दने । भा.म.४भ.बाल.चि. । "मत्स्याक्षकं शङ्खपुष्पी ।" सु.शा.१०अ. । पत्तूरे । वा.उ.३९अ. ।

**मत्स्याक्षिका** । स्त्री । गण्डदूर्व्वायाम् । वै.निघ. ।

**मत्स्याक्षी** । स्त्री । हिलमोचिकायां । शिञ्चेशाक । हिं मछेच्छी, मछरिया । मं जलब्राह्मी । र.मा. । त्रिका. । सोमलताविशेषे । गुणा:—शीतला रूक्षा व्रणक्षयघ्नी च । रा.नि.व.५ । "मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रजित् । लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकिनी ॥" भा.गु.व. । काकमाच्यां । रा.नि.व.४ । गण्डदूर्व्वायां । रा.नि.व.८ ।

**मत्स्यी** । स्त्री । जटामांस्यां । वै.निघ.२भ.वा.व्या.चि.शतावरीतैले । स्त्रीमत्स्यजातौ । व्याक. ।

**मत्स्योदनम्** । क्ली । मीनपक्वभक्ते । माछेर पोलाओ । गुणा:—"मत्स्योदनं कफकरं त्रिदोषकरणं तथा । अग्निमान्द्यकरं प्रोक्तं चतुरैर्मत्स्यभक्षकै: ॥" वै.निघ. । [मद. । र.मा. ।

**मथ: (न:)** । पुं । अग्निमन्थवृक्षे । गनिरि ।

**मथितम्** । क्ली । वस्त्रपूतनिर्ज्जलदधि । अम. । भा.म. । १भ.अ.सा.चि.गङ्गाधरचूर्णे । "चूर्णं मथितसमेतम् ।" केवलं मथितदधि । "तत् केवलन्तु मथितं मुनयो वदन्ति ।" प.प्र.३ख. । गुणा:—श्लेष्मवातघ्नं । रा.नि.व.१५ । कफपित्तघ्नं रोचनं धातुपुष्टिकरञ्च । राज.३प. । [इकारे ।

**मथुरानाथ:** । पुं । वैद्यामृतलहरीनामसंग्र-

**मद:** । पुं । मृगनाभौ । मृगनाभि । रा.नि.व. १२ । See कस्तूरी । च.द.वा.व्या.चि.अष्टादशशतिकमहाप्रसारणीतैले । मत्ततायाम् । "पूगकोद्रवधत्तूरभक्षणादिव मत्तता ।" भा.म.१भ.ज्व.चि. । "मूर्च्छादाहौ मदस्तथा ।" मा.नि. । मद्ये । हे.च. ।

**मदकार:** । पुं । धुस्तूरवृक्षे । स्त्री (रा) । धातकीवृक्षे । (री) सुरायाम् । वै.निघ. ।

**मदकद्दुम:** । पुं । तालवृक्षे । वै.निघ. ।

**मदगन्ध:** । पुं । सप्तपर्णवृक्षे । ছাতিমগাছ । रा.नि.व.१२ । स्त्री । अतसीक्षुपे । মশিনাগাছ । प.मु. । मद्ये । रा.नि.व.१४ ।

**मदगमन:** । पुं । महिषे । वै.निघ. ।

**मदघ्नी** । स्त्री । उपोदिकायां । পুঁইগাছ । प.मु. । नागदमन्यां । रा.नि.व.५ ।

**मदद्रु:** । पुं । माड़ इति कोङ्कणदेशप्रसिद्धे वृक्षे । रा.नि.व.६ ।

**मदन:** (क:) । पुं,क्ली । (Randia dumetorum. Syn. Posoqueria dumetorum or R. longispina.) मुचकुन्दवृक्षे । स्वनामख्यातह्रीनगन्धवर्गीयवृक्षे । ময়নাগাছ । हिं मइनफल, करहर । तै वसन्तकड़िमिचेट्टु, मण्ड-चेट्टु, मङ्गचेट्टु, उन्मत्तचेट्टु । उत्. पातर । ता. मड़करय । नेपा. मैदल । पञ्जा. मिण्डकोल्ल । मं मेणाहल्ल । कं गेल । गुणा: —कटुतिक्तोष्ण: कफवातव्रणघ्न: शोफघ्न: वामनश्च । रा.नि.व.८ । एतत्फलं वामनम् अर्थात् अपक्वपित्तश्लेष्माणौ ऊर्द्ध नयेत् । भ्रमरे । जटा. । अङ्कोलवृक्षे । আকোড় গাছ । रा.नि.व.९ । वकुलवृक्षे । धुस्तूरवृक्षे । रा.नि.व.१०।२३। भा.४ख.जात्यादितैले। सिक्थके । रा.नि.व.१३ । काके । शल्ये । कोषाम्रे । मानके । कुटजवृक्षे । रा.नि.व.२३ । कोशातक्याम् । सरलकाष्ठे । वै.निघ. । कुन्दपुष्पवृक्षे । (क:) दमनकवृक्षे । দোনা । रमा. । च.द.वा.व्या.चि. "मांसीमुरामदन ।" क्षीरिणीवृक्षे । कपोते । वै.निघ. । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । वसन्ते । मे. । माषे । हे.च. । खदिरवृक्षे । श.च. । [११ ।

**मदनकाकुरव:** । पुं । पारावते । रा.नि.व.

**मदनकोद्रव:** । पुं । तृणधान्यविशेषे । मदन नाम । च.द.पाना.चि. । 'मदनकोद्रवशम्" ।

**मदनपाठक:** । पुं । कोकिले । रा.नि.व.१९।

**मदनफलम्** । क्ली । मदनवृक्षफले । ময়নাকুঁড়ি ।

**मदनमञ्जरी** । स्त्री । जिङ्गिन्याम् । वै.निघ. ।

**मदनमृग:** । पुं । कस्तूरीमृगे । वै.निघ. ।

**मदनमोदक:** । पुं । वाजीकरणाधिकारे मोदक: । पाठ: —"त्रैलोक्यविजयापत्रं सवीजं घृतभर्ज्जितं। त्रिकटु त्रिफला कुष्ठं शटी सैन्धवधान्यकं। शृङ्गी तालीशपत्रञ्च कट्फलं नागकेशरं । यमानी चाजमोदा च यष्टीमधुकमेव च। मेथी जीरकयुग्मञ्च गृहीत्वा भर्ज्जितं क्रियत्। यावन्त्येतानि चूर्णानि तावदेव तदौषधं । तावत्येव सिता देया यावत्या याति बन्धनम् । घृतेन मधुना मिश्रं मोदकं परिकल्पयेत् । त्रिसुगन्धिसमायुक्तं कर्पूरेणाधिवासयेत् । स्थापयेद्घृतभाण्डे तु शोभन्मदनमोदकम् ॥" ত্রিকটু, ত্রিফলা, কুড়, শটী, সৈন্ধবলবণ, ধনিয়া, কাঁকড়াশৃঙ্গী, তালীশপত্র, কট্ফল, নাগেশ্বর, যমানী, বনযমানী, যষ্টিমধু, মেথি, জীরা, কৃষ্ণজীরা, প্রত্যেক চূর্ণ সমভাগ। ঈষদ্ ভর্জ্জিত সবীজ সিদ্ধিচূর্ণ ঐ সমষ্টিচূর্ণ সমান। সমষ্টি-সমান চিনি। ঘৃত ও মধু তত দিবে যাহাতে মোদক বান্ধা যায়। अन्यो महामदनमोदक: —त्रैलोक्यविजयापत्रं सवीजं घृतभर्ज्जितं । समं शिलातले पश्चात् चूर्णयेदतिचिक्कणम् । शतावरीरजश्चैव विदारीकन्दजं रज: । बलातिबलयोश्चैव मूलवल्कलजं रज: । गोक्षुरक्षुरयोर्वीजाद्रजो वानरिवीजत: । एतदेकीकृतं यावत्तावद्व्याद्रिजं रज: । तस्माच्चतुर्गुणं कार्य्यं त्रैलोक्यविजयारज: । स्वरसेऽथ शतावर्य्या विदार्य्या: स्वरसे तथा । पयसाथ समे तस्मिन् गोलयेच्चूर्णसञ्चयम् । गोलयित्वा सिताञ्चैव शक्रचूर्णाच्चतुर्गुणां । पचेदवहितो वैद्यो मन्दमन्देन वह्निना । तत: पाककमं दृष्ट्वा भृष्ट्वा चैवासितं तिलं । वुद्धावतारितं दद्यान्मोदकार्थं भिषग्वर: । त्रिकटु त्रिसुगन्धञ्च सैन्धवं सधनीयकं । जातीकोषफलञ्चैव बालकं जीरकद्वयं । शटी कुन्दुरुखोटिश्च मुस्ता मधुरिका मुरा । मांसी तालीशपत्रञ्च पत्रं वारिन्द्रमेव च । ग्रन्थिपर्णं शिवा चैव तथैव शतपुष्पिका । चविका देवदारुश्च सप्रियङ्गु लवङ्गकं । सरल: शैलजश्चैव सर्व्वमेतद्विचूर्णयेत् । अत्र यद्वर्ज्जनं युक्तं द्रव्यं तद्गन्धवृद्धये । भर्ज्जयित्वा कृतं चूर्णं शक्रचूर्णस्य पादिकं । सैन्धवं स्वादुतायोग्यं देयं कटुकमेव च । तत: सुमिलितं कृत्वा मोदकं परिकल्पयेत् । भूय-

त्रिजातकं चूर्णं चूर्णं चूर्णानि तथा। लोटयेन्मो दकानेतान् सिद्धार्थानर्थसिद्धये॥" শতাবরীচূর্ণ, ভূমিকুষ্মাণ্ডচূর্ণ, বেলেড়ার মূলচূর্ণ, গোরক্ষচাকুলিয়ার ছালচূর্ণ, গোক্ষুরবীজ চূর্ণ, কুলেখাড়ার বীজচূর্ণ, আলাকুশীবীজ চূর্ণ, প্রত্যেকে সমভাগ মিলিত ২ প.। ঘৃতভর্জ্জিত সবীজ সিদ্ধিচূর্ণ ৮প. শর্করা ৩২ প.। পাকার্থ—শতমূলীরস, ভূমিকুষ্মাণ্ডরস এবং দুগ্ধ প্রত্যেকে ৮প. (মতান্তরে দুগ্ধ ১৬প.) একত্র গুলিয়া পাক করিবে। পাকসিদ্ধ হইলে নামাইয়া, তাহাতে কৃষ্ণতিল চূর্ণ ২ প. প্রক্ষেপার্থ ত্রিকটু গুড়ত্বক তেজপত্র এলাইচ, সৈন্ধব ধনিয়া, জায়ফল, জয়িত্রী, বালা জীরা, কৃষ্ণজীরা, শটী, কুন্দুরুখোটী, মুতা, মউরী, মুরামাংসী, জটামাংসী, তালীশপত্র, তেজপত্র, পচাপাতা, গেঁঠেলা, হরীতকী, শুলুফা, চৈ, দেবদারু, প্রিয়ঙ্গু, লবঙ্গ, সরলকাষ্ঠ, শৈলজ। ইহাদের মধ্যে যে যে দ্রব্য ভর্জনোচিত, গন্ধবৃদ্ধির জন্য তাহা ভাজিয়া চূর্ণ করিবে। এই সকল দ্রব্য চূর্ণ প্রত্যেকে সমভাগ মিলিয়া ২ প.। সৈন্ধব ও ত্রিকটুচূর্ণ যে পরিমাণে দিলে স্বাদু হয়, সেই পরিমাণ বিবেচনা করিয়া দিতে হইবে। মোদক প্রস্তুত হইলে সেই মোদক ত্রিকটু ও ত্রিজাতকচূর্ণে আলোড়িত করিয়া ভাণ্ডে তুলিয়া রাখিবে। रस.र.। [वै.निघ.।

**मदनमोदनी**। स्त्री। गणिकारिकायाम्।

**मदनरिपुः**। पुं। मदनफले। वै.निघ.।

**मदनशलाका**। स्त्री। सारिकायाम्। कामोन्मादकौषधे। त्रिका.। कोकिलायां। श.र.।

**मदनसारिका**। स्त्री। सारिकायाम्। শালিক পাখী। जटा.। [याम्। हे.च.।

**मदना**। स्त्री। कस्तूर्य्याम्। धातक्याम्। सुरा-

**मदनाङ्कुशः**। पुं। शिश्ने। त्रिका.। नखे। वै.निघ.। [प.मु.।

**मदनाग्रजः**। पुं। कोद्रवधान्ये। কদোধান।

**मदनायुधम्**। क्ली। योनौ। श.च.। कामवृद्धिक्षुपे। रा.नि.व.४।

**मदनालयः**। पुं। स्त्रीयोनौ पद्मे। वै.निघ.।

**मदनाह्वः**। पुं। मदनवृक्षे। रा.नि.व.८। स्त्री (ह्वा)। अक्षोटवृक्षे। वै.निघ.।

**मदनी**। स्त्री। मेथिकायां। মেথি। प.मु.। कस्तूर्य्यां। মৃগনাভি। रा.नि.व.१२। मद्ये। रा.नि.व.१४। धातकीवृक्षे। अतिमुक्तके। रा.नि.व.१०।

**मदनीयहेतुः**। पुं। धातकीवृक्षे। ধাইফুলের গাছ। वा.सू.१५अ.प्रियङ्ग्वादिव.। "पुन्नागशीतं मदनीयहेतुः।"

**मदनीया**। स्त्री। मल्लिकावृक्षे। वै.निघ.।

**मदनेच्छाफलः**। पुं। आम्रवृक्षे। रा.नि.व.११।

**मदभञ्जिनी**। स्त्री। शतमूल्याम्। श.च.।

**मदमत्तः**। पुं। महाकरञ्जवृक्षे। वै.निघ.।

**मदमर्दिनी**। स्त्री। कोङ्कणदेशे गणिकारीनामप्रसिद्ध पुष्पवृक्षे। रा.नि.व.१०।

**मदयन्तिका (न्ती)**। स्त्री। नवमल्लिकायां। কাঠমল্লিকা। र.मा.। त्रिपुरमल्लिकायां। प.मु. भैष.क्षुद्ररो.चि.महानीलतैले। च.द.र.पि.चि.। वा.चि.२अ.।

**मदयित्नु**। क्ली। मद्ये। मे.।

**मदरोगः**। पुं। मदात्ययरोगे। रा.नि.व.२०।

**मदव्याधिः**। पुं। पानात्ययरोगे। रा.नि.व.२०। [८।

**मदशाकः**। पुं। उपोदिकायाम्। रा.नि.व.

**मदशौण्डः**। पुं। जातीफलवृक्षे। वै.निघ.।

**मदसारः**। पुं। तूलवृक्षे। रा.नि.व.८।

**मदस्थानम्**। क्ली। सुरापानस्थाने। त्रिका.।

**मदहस्तिनिकः (नी)**। महाकरञ्जवृक्षे। ডহর করঞ্জ। रा.नि.व.९।

**मदहेतुः**। पुं। धातकीवृक्षे। वैद्यकं।

**मदा**। स्त्री। धातकीवृक्षे। वै.निघ.अ.सा.चि. शुण्ठीचूर्णे, कुटजचूर्णे। ग्रहणी.चि.पाठादिचूर्णे। कस्तूर्य्याम्। মৃগনাভি। चि.क्र.क.प्रदर.चि.।

**मदाढ्यः**। पुं। तालवृक्षे। कदम्बवृक्षे। रा.

.व.९। आम्रवृक्षे। रा.नि.व.११। स्त्री। लोहि-
भ्रष्ट्राम् । रक्तकाँटी। श.च.।

**दात्यङ्कः (त्ययः)** । पुं। पानात्ययरोगे। त-
निदानादिकं यथा—"ये विषस्य गुणाः प्रोक्ता-
ऽपि मद्ये प्रतिष्ठिताः। तेन मिथ्योपयुक्तेन भव-
ग्रो मदात्ययः। किन्तु मद्यं स्वभावेन यथैवान्नं
था स्मृतम्। अयुक्तियुक्तं रोगाय युक्तियुक्तं यथा-
तम्। प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्य-
न्। विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्।
विधिना मात्रया काले हितैरन्नैर्यथाबलं। प्रहृष्टो
: पिबेन्मद्यं तस्य स्यादमृतोपमम्। स्निग्धैस्तदन्नै-
ांसैश्च भक्ष्यैश्च सह सेवितं। भवेदायुःप्रकर्षाय
लायोपचयाय च। काम्यता मनसस्तुष्टिस्तेजो-
क्रम एव च। विधिवत् सेव्यमाने तु मद्ये सन्नि-
हता गुणाः॥ बुद्धिस्मृतिप्रीतिकरः सुखश्च पा-
ान्ननिद्रारतिवर्द्धनश्च। संपाठगीतस्वरवर्द्धनश्च प्रो-
ोऽतिरम्यः प्रथमो मदो हि॥ अव्यक्तबुद्धिस्मृति-
ाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः। आलस्य
नद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन॥ ग
च्छेदगम्यांश्च गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्ट
संज्ञः। ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये
पुरुषोऽस्वतन्त्रः॥ चतुर्थे तु मदे मूढो भग्नदार्विव
निष्क्रियः। कार्य्याकार्य्यविभागज्ञः मृतादप्यपरो
मतः। को मदं तादृशं गच्छेदुन्मादमिव चापरम्।
बहुदोषमिवामूढः कान्तारं स्ववशः कृती॥ निर्भ-
क्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यं।
आपादयेत् कष्टतमान् विकारान् आपादयेच्चापि
शरीरभेदम्॥ क्रुद्धेन भीतेन पिपासितेन शोका-
भितप्तेन बुभुक्षितेन। व्यायामभाराध्वपरिक्षतेन
वेगावरोधाभिहतेन चापि। अत्यम्लभक्ष्यावततोद-
रेण साजीर्णभुक्तेन तथा बलेन। उष्णाभितप्तेन च
सेव्यमानं करोति मद्यं विविधान् विकारान्। पा-
नात्ययं परमदं पानाजीर्णमथापि वा। पानविभ-
ममुग्रञ्च तेषां वक्ष्यामि लक्षणम्। हिक्काश्वासशि-
रःकम्पपार्श्वशूलप्रजागरैः। विद्याद्बहुप्रलापस्य वात-
प्रायं मदात्ययम्। तृष्णादाहज्वरस्वेदमोहातिसा-
रविभ्रमैः। विद्याद्धरितवर्णस्य पित्तप्रायं मदात्य-
यम्। छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः। वि-
द्याच्छीतपरीतस्य कफप्रायं मदात्ययम्। ज्ञेयस्त्रि-
दोषजश्चापि सर्व्वलिङ्गैर्मदात्ययः॥" मा.नि.। तत्र

सन्निपातजमदात्ययो दशभेदः। यथा—"उत्कर्षेण
यदालिको मध्येन द्वौ तदा क्षिमः। उत्कर्षेण यदा
द्वौ तु मध्येनैको द्वितीयकः। एको मध्येन दोषः
स्यात् द्वावल्पेन तृतीयकः। उत्कर्षेणैक एव स्यात्
अल्पेन द्वौ चतुर्थकः। उत्कर्षेण यदा द्वौ तु अल्पे-
नैकश्च पञ्चमः। एकोऽल्पेन तु मध्येन द्वौ दोषा-
विति षष्ठकः। उत्कर्षेण समस्ताः स्युरेवं भवति
सप्तमः। मध्येन सर्व्वेऽपि यदा तदा भवति चाष्ट-
मः। अल्पेन सर्व्वेऽपि यदा तदा तु नवमः स्मृतः।
अल्पेनैकस्तरामन्यो मध्येनैक इति स्फुटाः। सन्नि-
पातस्य मुनिना दश भेदाः प्रकीर्त्तिताः॥" वा.
चि.७अ.। |गजे। विश्व.।

**मदारः** । पुं। शूकरे। मृगनाभौ। वै.निघ.।

**मदार्मदः** । पुं। फलिकमत्स्ये, राजग्रीवम-
त्स्य। कलुई माछ। त्रिका.।

**मदालापी (इन्)** । पुं। कोकिले। श.मा.।

**मदाह्वः** । पुं। कस्तूर्य्यां। मृगनाभि। त्रिका.।

**मदिरः** । पुं। रक्तखदिरे। श.च.। मत्तख-
ञ्जने। श.र.।

**मदिरा** । स्त्री। मद्यसामान्ये। रा.नि.व.१४।
गुणाः—"हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ।
वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता॥" च.सू.
२७अ.। See मद्यम्।

**मदिरासखः (वः)** । पुं। आम्रवृक्षे। जटा.।

**मदिष्ठा** । स्त्री। मद्ये। हे.च.।

**मदोत्कटः** । पुं। मत्तगजे। कपोते। वै.निघ.।

**मदोत्कटा** । स्त्री। मद्ये। रा.नि.व.१४। मा-
धवीसुरायाम्। वै.निघ.। अतसीक्षुपे। तिल गा-
छ। रा.नि.व.१६। वहल्यां। वाकुड़। मद.।

**मदोद्रेकः** । पुं। महानिम्बः। घोड़ा निम।
रा.नि.व.९।

**मद्गुः** । पुं। जलकाके। पानकौड़ी। च.सू.
२७अ.। प्लवजातीयपक्षिविशेषे, मत्स्यरङ्के। माछ-
राङा। गुणाः—वातघ्नः स्निग्धः सृष्टमलः हृद्यः
रक्तपित्तहरः हिमश्च। राज ३प.।

**मद्गुमूषिकः** । पुं। वृक्षमर्कटे, पर्ण्णमृगे।
सु.सू.४६अ.।

**मद्गुरः (कः)।** पुं। मत्स्यभेदे। मागुर माछ। तन्मांसगुणाः—मधुरं स्निग्धं संग्राहि शुक्रकरं गुरु च। राज.। श.र.। [श र।

**मद्गुरसी।** स्त्री। शृङ्गीमत्स्ये। शिङी माछ।

**मद्यम्।** क्ली। तरलमादकद्रव्यविशेषे। मद। हिं दारु। मद्यसामान्यगुणाः—मधुराम्लं कफवातघ्नं बलकरं कान्तिकरञ्च। मद्यं त्रिविधं गौड़ी माध्वी पैष्टी चेति तानि अम्लमद्यानि। अन्यत्र सौगन्धिकादिद्रव्यान्तर्योगेन विविधं भवति। अन्ये तु तेषां द्वादश भेदानाहुः। तानि सर्व्वाणि गौड़ादिष्वेवान्तर्भवन्तीति न पृथगुक्तम्। रा.नि.व.१४। विशेषः स्वस्वपर्य्यायेषु मृग्याः। "गौड़ी माध्वी तथा पैष्टी निर्य्यासाः कथितापरा। इति चातुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः। भेदेन द्वादश प्रोक्ताः सुराः सौवीरका रसैः। शीधुर्गौड़ी च मत्स्यण्डो गुड़ेन प्रभवास्त्रयः। माध्वीकं माधुकं माध्वं मधुना संयुताः सुराः। पैष्टीश्चरिष्टजातन्तु तण्डुलप्रभवास्त्रयः। मृद्वीकारससम्भूताः तालमाड़समुद्भवाः। निर्य्यासाः सा तु विज्ञेया तासां वच्मि गुणागुणान्॥" अत्रि.२९अ.। नवं मद्यं अजातरसप्रसादमनतिक्रान्तसंवत्सरं सर्व्वविकारजनकं वातादिजनकञ्च। "द्विजस्त्रीभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम्।" रा.नि.व.१४। "नवं मद्यमभिष्यन्दि गुरु वातादिकोपनं। अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च।" इति नवं मद्यम्। "चिरस्थितं जातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्॥" इति पुराणं। "तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना। समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम्। विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्॥" चतुरशीतिरिति चरकः। तद्योनयो नव, धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयः शर्करा चेति। ताभ्यश्चतुरशीतिविधा हितकरा आसवा जायन्ते, यथा—फलजाः षड्विंशतिः, मूलजा एकादश, सारजा विंशतिः, पुष्पजा द्वौ, काण्डजाः चत्वारः, त्वग्जाश्चत्वारः, शर्कराजातश्चैकः, धान्यजाश्च षट्। इति। च.सू.२५अ.। तत्साधने जलादिदानविचारः—"आसवादिषु साध्येषु द्रावैर्भिद्गुणसम्मतम्। खदिरादेः प्रतिपलं जलमाहुश्चिकित्सकाः॥ अष्टावशेषितं कृत्वा गुड़ं क्वाथसमं क्षिपेत्। अपुराणो गुड़ो देयः कफश्वाभिरतोऽन्यथा॥" इति। "क्वाथ्यद्रव्यस्य बाहुल्यादुदकं स्वल्पमेव च। सम्यक्पाकं न मुञ्चन्ति हीनवीर्य्यन्तु केवलम्॥ क्वाथ्यद्रव्यं घटसमं जलं द्रोणघटं क्षिपेत्। निष्क्वाथ्य पादशेषन्तु गुड़ं सार्द्धं घटं न्यसेत्। विसृज्य सन्धितं यत्र तदासवमितीरितम्।" वृद्धसुश्रुतः। "विना क्वाथेन सन्धानमासवः प्रोच्यते किल। गुड़ं क्वाथौषधसमं जलं चापि चतुर्गुणम्॥ आसवारिष्टमद्येषु ह्यावापश्च दशांशकः। क्षौद्रञ्च गुड़पादोनं प्रयोक्तव्यं भिषक्तमैः। अरिष्टेषु च सर्व्वेषु द्रोणे पलशतं गुड़म्। चिरस्थायिष्वरिष्टेषु द्विगुणं गुड़मावपेत्॥ अनुक्तमानारिष्टेषु द्रवे द्रोणे गुड़ात्तुलां। क्षौद्रं क्षिपेद्गुड़स्यार्द्धं प्रक्षेपस्तु दशांशिकः। तद्विद्येषु च द्रष्टव्या मद्यकर्त्तव्यता बुधैः। आसवारिष्टयोर्यत्र न गुणो लभ्यते तदा। एकद्वित्रिशतं कृत्वा दापयेद्गणहृद्यं॥" इति गोपुरः। "यथा यथा जलस्यात्र विरसं पललं भवेत्। तथा तथा गुड़ं देयं ह्यधिकं सम्प्रदायतः॥ यथा तथा भवेदत्र स्रावो बहुतरः शुभः। अनुक्ते दशमूलादौ वव्वूलबदरादिकम्॥ स्रावणार्थे प्रदातव्यं नासवादौ कदाचन। अनुक्तेऽपि च प्रस्थार्द्धं धातकीकुसुमं क्षिपेत्॥ स्रावणार्थेषु सर्व्वत्र मधुकुष्ठविवर्ज्जितं। कुष्ठेन शिरसः पीड़ा क्वचित् पुष्परसाद्भवेत्॥ अरिष्टासवयोर्मात्रा प्रोक्तमाकुड़वान्विता। यथा यथा श्रुतं मद्यं मात्रा चाल्पा तथा तथा॥" भद्रशौनकः। [त्रि। वै.निघ.।

**मद्यगन्धः।** पुं। बकुलवृक्षे। स्त्री। कट्फल-

**मद्यदोहदः।** पुं। वकुलवृक्षे। [निघ.।

**मद्यद्रुमः।** पुं। कोङ्कणदेशप्रसिद्धे माड़वृक्षे। रा.नि.व.९।

**मद्यनित्यः।** त्रि। नित्यं मद्यपानशीले। च.।

**मद्यपङ्कः।** पुं। मेदके। मदेर गेया। हे.च.।

**मद्यपाशनम्।** क्ली। पिपासाजनकद्रव्ये। वै.निघ.। पानरुचकभक्ष्यद्रव्ये। चाट्। हे.च.।

**मद्यपुष्पा (ष्पी)।** स्त्री। धातकीवृक्षे। रा.नि.व.६।

**मद्यमण्डः।** पुं। मद्यफेने, सुरामण्डे। मदेर गेया। अम.।

**द्ययोनिः** । स्त्री । सर्ज्जवृक्षे । शालगाछ । र.मा. ।

**द्यवासिनी** । स्त्री । धातकीवृक्षे । धाइफुल गाछ । र.मा. ।

**द्यबीजम्** । क्ली । बहुद्रव्यकृतसुराबीजे । बाखर इति लोके । हे.च. ।

**द्यशिष्टम्** । क्ली । द्राक्षासुरायाम् । वै.निघ. ।

**द्यसन्धानम्** । क्ली । सुरानिष्कासनार्थं फलमाङ्करादीनां सुचिरसंस्थापने । हे.च. ।

**द्यहेतुः** । पुं । धातकीवृक्षे । वै.निघ. ।

**द्यामोदः** । पुं । वकुलवृक्षे । रा.नि.व.१० ।

**द्योत्तमम्** । क्ली । माध्वीसुरायां । वै.निघ. ।

**धु** । क्ली । (Mel.) Honey. पुष्परसे । मधु, मउ । प.मु. । हिं ता. सहद. मध । तें तेने । गुणाः—मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाकृमिविषप्रशमनं ह्लादि त्रिदोषघ्नञ्च । तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधुर्यात् कषायभावाच्च वातपित्तघ्नम् । सु.सू.४५अ. । अष्टविधा मधुजातिः, तद्यथा—माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रकम् आर्घ्यं औद्दालकं दालकमिति । रा.नि.व.१४ । एषां विशेषाः पर्य्यायेषु द्रष्टव्याः । तच्च नवं पुरातनञ्चेति द्विधा । तयोर्नवं मधु स्थौल्यकरं नातिश्लेष्मलम् । पुराणञ्च तत् स्थौल्यघ्नं ग्राहि च । पक्वं तत् त्रिदोषघ्नं विविधरोगजाड्यजिह्वारोगघ्नं बलदं बुद्धिधैर्य्यवर्द्धनं वीर्य्यवर्द्धनञ्च । आमं तत् आमगुल्मवातरोगपित्तदाहनाशनं वातजननं शोषजननं अण्डवृद्ध्यन्तरायञ्च भवति । तथा मधु सन्धानव्रणरोपणादिषु साधारण्येन हितम् । अपिच आमं मधु उष्णद्रव्यैः सह उष्णकाले वा स्वयमुष्णं बहुकालस्थितं विषवत् तापजनकं भवति । यन्मधु कीटादियुतमम्लं पर्य्युषितं तद्दुष्टं ज्ञेयम् । यत्तु सद्योपात्तं तद्रसायनश्रेष्ठमयोग्यं निर्दोषञ्च । रा.नि.व.१४ । मद्ये । मधुयष्ट्यां । न ष्टिनत्रु । रा.नि.व.२३ । च.सू.४अ. । वै.निघ.सुदर्शनचूर्णे । जले । दुग्धे । विश्व. । मिष्टरसे । श.र. ।

**मधु** । पुं । मधुकवृक्षे । मउल गाछ । वसन्तकाले । चैत्रमासे । मे. । अशोकवृक्षे । हे.च. । यष्टिमधुनि । रा.नि.व.६ । स्त्री । जीवन्तीवृक्षे । अम. ।

**मधुकम्** । क्ली । यष्टिमधुनि । तच्च द्विविधं स्थलजानूपभेदेन वमनादिप्रतिकर्म्मविशेषेण च । च.सू.२अ. । वल्लीयष्टिमधुके । रा.नि.व.६ । च.सू.४अ. । वै.निघ.ज्व.चि.महालाक्षादितैले । वा.सू.१५अ.शोधनव.अञ्जनादिव.अम्बष्ठादिव.न्यग्रोधादिव. । च.द.पि.ज्व.चि.त्रायमाणादिव.सा.ज्व.चि.मुस्तादिगणे । च.सू.४अ.सन्धानीये कषायगणे । वै.निघ.ज्व.चि.चन्दनबलातैले । यशदे । दस्ता । हे.च. । पुं । मधूकवृक्षे । मउल गाछ । र.मा.सु.सू.३८अ.न्यग्रोधादौ । जीवके । रा.नि.व.५ । पक्षिविशेषे । यष्टिमधुवृक्षे । विश्व. ।

**मधुकच्छदा** । स्त्री । मयूरशिखायाम् । वै.निघ. ।

**मधुकण्ठः** । पुं । कोकिले । त्रिका. ।

**मधुकन्दः** । पुं । आलुकभेदे । वै.निघ. ।

**मधुकरः** । पुं । मधुरजम्बीरे । अपामार्गे । वै.निघ. । भृङ्गराजवृक्षे । श.मा. । भ्रमरे । अम. ।

**मधुकरप्रियः** । पुं । आम्रवृक्षे । रा.नि.व.११ ।

**मधुकर्कटिका (टी)** । स्त्री । (Citrus acida.) मधुरबीजपूरवृक्षे । मिठेलेबु । हिं मधुकाकड़ी,मउफुटी । गुणाः—शीतला रक्तपित्तहरा गुरुश्च । तन्मूलं विसूचिकाघ्नं कर्णशोथघ्नञ्च । मद. व.६ । "मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥" भा.पू.१भ.आम्र.व. । मधुखर्ज्जूरीवृक्षे । रा.नि.व.११ ।

**मधुकसारः** । पुं । मधूकपुष्पवृक्षसारे । मउलेर आठा । वै.निघ.भुग्ननेत्रज्व.चि. ।

**मधु(धू)कसुरा** । स्त्री । मधूकमद्ये । मउआर मद । गुणाः—"वातपित्तकरं रूक्षं कषायं विशदं गुरु । श्लेष्मलं भेदनं ग्राहि मूत्रकृच्छ्रशिरोऽर्त्तिनुत् ॥" अत्रिः १८अ. ।

**मधुका** । स्त्री । यष्टिमधुनि । प.मु. । लताभेदे । गुडूच्याम् । मे. । मधुरनिम्बुवृक्षे । वै.निघ. । कृष्णकट्वयां । हे.च. ।

**मधुकादिः** । पुं । विषमज्वरे कषायभेदे । "मधुकं चन्दनं मुस्तं धात्री धान्यमुशीरकं । छिन्नोद्भवं

पटोलस्य क्वाथः समधुशर्करः । ज्वरमष्टविधं हन्ति ...॥" भैष.ज्व चि. ।

**मधुकादिघृतम्** । क्ली । कासाधिकारि घृतम् । गव्यघृतं ४ श. । क्वाथार्थं --यष्टिमधु ८ प. द्राक्षा १६ प. । पाकार्थं--जलं १६ श. शे. श. । कल्कार्थं - पिप्पली ८ प. । पाकसिद्धे अवतार्य शीते मधुनः शर्करायाश्च प्र. ८ प. प्रक्षेप्यम् । घृत ৪শ.। ক্বাথার্থ—যষ্টিমধু ৮প. দ্রাক্ষা ১৬ প.। পাকার্থ—জল ১৬ শ. শে. ৪ শ.। কল্কার্থ—পিপুল ৮ প.। পাক হইলে মধু ৮ প. শর্করা ৮ প. প্রক্ষেপ দিবে। [निघ. ।

**मधुकाश्रयः** । पुं । मधूच्छिष्टे । मम । वै.

**मधुकाष्ठः** । पुं । मधूकवृक्षे । মউল গাছ । वै.निघ. ।

**मधुकुक्कुटिका (टी)** । स्त्री । मातुलुङ्गवृक्षे, जम्बीरभेदे । महुर इति भाषा । गुणाः--"मधुकुक्कुटिका शीता शोषलास्यप्रसादनी । रुच्या स्वादुर्गुरुः स्निग्धा वातपित्तविनाशिनी ।" राज.३प.।

**मधुकृत्** । स्त्री । मधुमक्षिकायाम् । हे.च. ।

**मधुकैटभः** । पुं । भ्रमरे । त्रिका. ।

**मधुकोदकम्** । क्ली । यष्टिमधुसिद्धजले । इदं तृष्णाहरम् । सि.यो.तृ.चि. ।

*मधुकोषः । पुं । क्षौद्रपटले । মৌচাক । श. च. । कागमुक्ते । श.कल्पद्रुमः ।*

**मधुक्रमः** । पुं । मध्वाश्रये । মৌচাক । श.च. ।

**मधुक्रोड़ा** । स्त्री । घृततैलभर्ज्जिते समधुपिष्टकभेदे । सा गुरुः पुष्टिकरी च । च.सू.२७अ. ।

**मधुखर्ज्जु(र्ज्जू)रिका (री)** । स्त्री । मिष्टफलखर्जूरीवृक्षे । মিষ্ট খেজুরগাছ । मं मिष्टखर्ज्जूरी । कं सीहर्ईचिलु । गुणाः--मधुरा हृद्या शीतलासन्तापपित्तघ्नी कृमिजननी वीर्य्यवर्द्धनी च । रा.नि.व.११ ।

**मधुगन्धः** । पुं । वकुलवृक्षे । अर्ज्जुनवृक्षे । वै. निघ. ।

**मधुगन्धप्रसूनकः** । पुं । अर्ज्जुनवृक्षे । वै निघ. ।

**मधुगायनः** । पुं । कोकिले । रा.नि.व.१८ ।

**मधुगुञ्जनः** । पुं । शोभाञ्जनवृक्षे । সজিনা-গাছ । श.मा. ।

**मधुघातकः** । पुं । पक्षिविशेषे । वै.निघ. ।

**मधुघोषः** । पुं । कोकिले । श.मा. ।

**मधुच्छटा** । स्त्री । मयूरशिखायाम् । भा. ।

**मधुजः** । पुं, क्ली । मधूच्छिष्टे । रा.नि.व.१४ ।

**मधुजम्बीरः** । पुं । (Citrus limetta.) Sweet lime of India. मधुरजम्बीरवृक्षे । মিষ্ট লেবুগাছ । हिं मिठानिम्बु । रा.नि.व.११ ।

**मधुजम्भः** । पुं । मधुरजम्बीरे । रा.नि.व.११ ।

**मधुजा** । स्त्री । मधुशर्करायाम् । रा.नि.व.१४ सितायां । চিনি । त्रिका. ।

**मधुजीरकः** । पुं (Pimpinella anisum.) Common anise. जीरकभेदे । মিঠাজীরা । हिं सौंफ । तें पेद्दजिलकर । ता. सोम्बु । वम्. आनिसून् । पुस्तकान्तरम् ।

**मधुजीवनः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**मधुतालः** । पुं । शीतालवृक्षे । रा.नि.व.९ । नकुल.१०अ. । [व.१४ । त्रिका. ।

**मधुतृणः** । पुं, क्ली । इक्षौ । प.मु. । रा.नि.

**मधुतैलवस्तिः** । पुं । निरूहवस्तिभेदे । यथा --"*एरण्डक्वाथतुल्यांशं मधुतैलपलाष्टकम् ।* शत पुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् । मधुतैलकसंज्ञोऽयं वस्तिर्दीर्कविलोड़ितः । मेदोगुल्मकृमिप्लीहमलोदावर्त्तनाशनः । बलवर्णकरः ... दोष नवृंहणः ।" भा. ।

**मधुत्रयम्** । क्ली । मधुरत्रये, घृतमधुशर्करासु । रा.नि.व.२२ । भा.म.४भ.कुष्ठ.चि. ।

**मधुदला** । स्त्री । मूर्व्वायां । मूर्व्वा । रा.नि.व.३ ।

**मधुदूतः** । पुं । आम्रवृक्षे । भा. । कोकिले । वै. निघ. ।

**मधुदूती** । स्त्री । पाटलवृक्षे । भा. ।

**मधुद्रः** । पुं । भ्रमरे । त्रिका. ।

**मधुद्रवः** । पुं । मधुशिग्रौ, रक्तशिग्रुवृक्षे । লাল সজিনা গাছ । श.र. । वा.चि.३अ. ।

**मधुद्रुमः** । पुं । मधूकवृक्षे । মউল বা গুড়-

ष्पवृक्ष । र.मा. । आम्रातकवृक्षे अम्बष्ठायाम् । निघ. । [रा.नि.व.१७ ।

मधुधातुः । पुं । स्वर्णमाक्षिके । रूप्यमाक्षिके ।

मधुधूलिः । स्त्री । खण्डशर्करायाम् । थाँड़ । श.च. ।

मधुनारिकेरकः । पुं । नारिकेलवृक्षविशेषे । एरनारिकेर इति कौङ्कणे प्रसिद्धः । वम्. बोहानारल । वामननारिकेल । फलगुणाः— मधुरं शीतलं तृष्णादाहापिकृत्तं बलपुष्टिकरं कान्तिजनकं वीर्य्यवर्द्धनं रुच्यञ्च । दुर्ज्जरं क्रमिकरं सुस्निग्धं वातातिसारश्रमशमनम् अग्निदीप्तिनाशनम् आमश्लेष्मप्रकोपजनकञ्च । रा.नि.व.११ ।

मधुनिष्पावः । पुं । सुकुटशिम्ब्यां । सुकुटम्बीज । प.सु । गुणाः—रुच्यः मधुरः ईषत्कषायः शीतलः वातलो बल्यः आध्मानकरः गुरुः पुष्टिकरश्च । रा.नि.व.१६ ।

मधुनी । स्त्री । क्षुपविशेषे । माकड़ चाउलि, माकड़ शाता । र.मा.अत्रिः स्थानं २अ. ।

मधुपञ्जरः । पुं । वकुलवृक्षे । प.मु. ।

मधुपर्णिका । स्त्री । गाम्भारीवृक्षे । भा.म.४ भ.गर्भ.चि. । नीलीवृक्षे । भा. । सुदर्शनायाम् । शाम्रावृक्षे । गुडूच्यां । रा.नि.व.३ । प्रसारण्याम् । गन्धभादालिया । वराहक्रान्तायाम् । वराक्रान्ता । श.च. ।

मधुपर्णी । स्त्री । विकङ्कतक्षुपे । वइँचिगाछ । र.मा. । गुडूच्यां । र.मा. । रा.नि.व.३ । च.सू.४ अ. । भा.जीवकाद्यमिश्रके, अ.पि.च. । बराहक्रान्तायां । वराक्रान्ता । च.द.शूल.चि. रामसकूर्रे । गाम्भारीवृक्षे । रा.नि.व.६ । यष्टिमधुनि । भा.म.४भ.कर्णरो.चि.त्रिफलाद्यघृते । मधुरवीजपूरके । मिष्ट लेबु । रा.नि.व.११ । नीलीवृक्षे । मे. । प्रसारण्याम् । वै.निघ. ।

मधुपाका । स्त्री । षड्भुजायां, खर्मूजा इति ख्यातायां फलशाकलतायाम् । रा.नि.व.७ ।

मधुपालिका । स्त्री । गाम्भारीवृक्षे । श.मा. ।

मधुपीलुः । पुं । महापीलुवृक्षे । आँकरोट । रा.नि.व.११ ।

मधुपुष्पः । पुं । मधूकवृक्षे । मउलगाछ । हिं । महुया । र.मा. । रा.नि.व.२३ । अशोकवृक्षे । रा.नि.व.१० । शिरीषवृक्षे । रा.नि.व.६।२३ । वकुलवृक्षे । रा.नि.व.१० । दन्तिवृक्षे । रा.नि.व.२३ ।

मधुपुष्पा । स्त्री । दन्तिवृक्षे । रा.नि.व.६ । धातकीवृक्षे । वै.निघ. । नागदन्तिवृक्षे । रा.नि.व.५ ।

मधुपुष्पी । स्त्री । अवाकपुष्प्यां । चोरहुली । दन्तिवृक्षे । पुत्रञ्जीववृक्षे । वै.निघ. ।

मधुप्रियः । पुं । भूमिजम्बूवृक्षे । जटा. ।

मधुफलः । पुं । मधुनारिकेलवृक्षे । रा.नि.व. ११ । विकङ्कतक्षुपे । श.च. । राजादनीवृक्षे । क्षीरिणी । रा.नि.व.११ । मधुखर्ज्जूरीवृक्षे । वै.निघ. ।

मधुफला । स्त्री । मधुपाकायाम् । खर्बूजा । मातुलुङ्गवृक्षे । कपिलद्राक्षायाम् । वै.निघ. । वा. सू.१५अ. । [नि.व ११ ।

मधुफलिका । स्त्री । मधुखर्ज्जूरिकायां । रा.

मधुबहुला । स्त्री । वासन्तीलतायाम् । वासन्ती गाछ । रा.नि.व.१० । शुक्लयूथिकायाम् । वै.निघ. ।

मधुबिम्बी । स्त्री । कुन्दुरुलतायाम् । कुन्दुरुकी । वै.निघ. ।

मधुबीजः । पुं । दाड़िमवृक्षे । वै.निघ. ।

मधुभवा । स्त्री । मधुशर्करायाम् । वै.निघ. ।

मधुमज्जा । पुं । अक्षोटवृक्षे । आखरोट गाछ । रा.नि.व.११ ।

मधुमती । स्त्री । गाम्भारीवृक्षे । मूर्व्वायां । रा.नि.व.३।६ । काश्मीरदेशीयनद्यां । तज्जलगुणाः —अग्निदीपनं तथा चन्द्रभागाजलसदृशगुणम् । रा.नि.व.१४ । [रा.नि.व.६ ।

मधुमत्तः (त्ता) । पुं, स्त्री । महाकरञ्जवृक्षे ।

मधुमल्ली । स्त्री । मालतीलतायाम् । श.मा. ।

मधुमस्तकम् । क्ली । पिष्टान्नविशेषे । लक्षणं —"समिता वेष्टिता मध्ये मधु दत्त्वा शृता घृते । मधुमस्तकमुद्दिष्टं तद्वृष्यं गुरु दुर्जरम् ॥" राज.३ प. । वि । मधुना उपलिप्ते । भा.म.४भ. ।

मधुमक्षिका । स्त्री । मक्षिकाविशेषे । मौमाछि । अम. ।

मधुमाधवकः । पुं । पलाशवृक्षे । वै.निघ. ।

**मधुमाध्वीकम्** । क्ली । मधूकपुष्पमद्ये । वै. निघ. । मद्ये । श.टी.भ. ।

**मधुमानी** । स्त्री । मधुनः अष्टपलेषु । सि.यो. काम.चि.वासाकुष्माण्डे । "पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत् ।" [कम् ।

**मधुमालती** । स्त्री । मालतीपुष्पवृक्षे । वैद्य-

**मधुमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । भा. ।

**मधुमूलम्** । क्ली । रक्तालुके । (गौ आलू । श.च. ।

**मधुमेहः** । पुं । प्रमेहरोगविशेषे । मधुमेह । निदानादि । "सर्व्व एव प्रमेहास्तु कालेनाप्रतिकारिणः । मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि। गुरुस्निग्धाम्ललवणान्यतिमात्रं समश्नतां । नवमन्नञ्च पानञ्च निद्रामास्यासुखानि च । त्यक्तव्यायामचिन्तानां संशोधनमकुर्व्वतां । श्लेष्मा पित्तञ्च मेदश्च मांसञ्चातिप्रवर्त्तते । तैरावृतगतिर्वायुरोज आदाय गच्छति । यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ।" च.सू.१७. । [यष्टिमधुनि । वै.निघ ।

**मधुयष्टिः** । स्त्री । इक्षौ । श.च. । मधूकवृक्षे ।

**मधुयष्टिका (यष्टी)** । स्त्री । यष्टिमधुनि । प.मु. । चि.क्र.क.सोमरी.चि. । मधूकवृक्षे । इक्षौ । वै.निघ. । [घ. ।

**मधुयोनिः** । स्त्री । कपिलद्राक्षायाम् । वै.नि-

**मधुरम्** । क्ली । वङ्गे । रा.नि.व.१३ । मधुरिकायां । मउरी । (शीतकषायपाने) । वल्लीयष्टिमधुनि । रा.नि.व.६ । सिक्थके । मम । रा.नि. व.१३ । विषे । त्रिका. ।

**मधुरः** । पुं । षड्रसान्यतमे रसे । मिष्टरस । स च भूम्यम्बुगुणभूयिष्ठः परितोषाह्लादतृप्तिमुखावलेपजनकः रसरक्तमांसमेदोऽस्थिवर्द्धनश्च । "यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखावलेपं जनयति स मधुरः, स च स्निग्धगुरुशीतधातुवर्द्धनायुर्बलवर्णहितकृत् कण्ठ्यः सन्धानकृच्च । तद्विपाकः मधुरः । तद्विपाकगुणश्च श्लेष्मकृत् वातपित्तहरश्च ।" सु.सू.४२अ. । केशवर्द्धकः, अतिसेवनात् प्रमेहजड़तादिकञ्च करोति । रा.नि. व.२० । रक्तशिग्रौ । रा.नि.व.७ । मञ्जरखे । रा.नि.व.८ राजमाषे । रा.नि.व.११। रक्तेक्षौ । गुडे । रा.नि.व.१४ । मातुलुङ्गवृक्षे । वातामवृक्षे । काकोल्याम् । वै.निघ.२भ.ज्व.चि. । श्वेतनिष्पावे । वरवटी । राजमाषे । मटर । रा.नि.व.१६ । जीवके । मेदायाम् । रा.नि.व.३ । वनबदरे । मधूकवृक्षे । वै निघ. । [illegible]ादिगणे । च.द. स्व.भे.चि. । चि । म[illegible]धुकं ।

**मधुरकः** । पुं । जीवकवृक्षे । अम. ।

**मधुरकण्टकः (का)** । पुं, स्त्री । मत्स्यविशेषे । श.र. । [लेबु । रा.नि.व.११ ।

**मधुरकर्कटी** । स्त्री । मधुरबीजपूरे । मिष्टे

**मधुरकुष्माण्डम्** । क्ली । कुष्माण्डे । छांचि कुम्ड़ा । हिं मिठाकदु । संग्रहः ।

**मधुरखर्ज्जूरी** । स्त्री । मधुखर्ज्जूरीवृक्षे । रा. नि.व.११ ।

**मधुरगणः** । पुं । काकोल्यादिदशद्रव्येषु । See काकोल्यादिगणः । च.द.सि.यो.स्व.भे., अ.चि.चि.तृष्णा.चि. । "शर्करामधुमिश्राणि शृतानि मधुरैः सह ।" सु.चि.३अ. ।

**मधुरजम्बीरः** । पुं । जम्बीरविशेषे । मिठा जामीर । मं साखरनिम्बु । कं किचिलि । गुणाः —मधुरः शीतलः कफपित्तघ्नः शोफघ्नः, तर्पणः वृष्यः श्रमघ्नः पुष्टिकारकश्च । रा.नि.व.११ ।

**मधुरजम्भलः** । पुं । मधुरजम्बीरवृक्षे । रा. नि.व.११ ।

**मधुरजीवकादिः** । पुं । जीवन्तीमधूकयष्टिजीवकादिगणे । "जीव्यामधूकयुतया मधुराक्षयोऽयं योगो महानिह विराजति जीवकादिः ।" रा.नि.व.२२ । See जीवकादिः ।

**मधुरजीवनीयः** । पुं । जीवकर्षभकौ मेदे काकोल्यौ मधुकं ऋद्धे जीवन्ती चेति द्रव्यगणे । च. ।

**मधुरज्वरः** । पुं। मन्थरापरनामकज्वरविशेषे । लक्षणं यथा—"ज्वरो दाहो भ्रमो मोहो ह्यतीसारो वमिस्तृषा । अनिद्रा च मुखं रक्तं तालु जिह्वा च शुष्यति । ग्रीवायां परिदृश्यन्ते स्फोटकाः सर्षपोपमाः । घृताशनात् स्वदरोधात् मधुरो जायते नृणाम् ॥" वै.निघ. ।

**[म]धुरत्वक् (च:)** । पुं । धवहक्षे । धाउया [गा]छ । रा.नि.व.८ ।

**[म]धुरत्रयम्** । क्ली । समभागघृतमधुशर्करासु । [घृ]तामाक्षिकसर्पींषि मिलितानि यदा तदा । [मधु]रत्रयम्......।'' रा.नि.व.२२ ।

**[म]धुरत्रिफला** । स्त्री । समभागद्राक्षागाम्भारी[ख]र्ज्जूरेषु । किसमिस्, गामारफल, खेजुर समा[न] । श्रम. । "द्राक्षा काश्मर्य्यखर्ज्जूरीफलानि मि[लि]तानि तु । मधुरा त्रिफला ज्ञेया ।'' रा.नि.व. २ ।

**[म]धुरफल:** । पुं । राजबदरवृक्षे । नारिकुले[र] [ग]ाछ । रा.नि.व.११ । तरम्बुजे । वै.निघ. ।

**[म]धुरफला** । स्त्री । मधुरवीजपूरकवृक्षे । मिठा [ले]बु । रा.नि.व.११ । चिर्भटिकायां । वै.निघ. ।

**[म]धुरविम्बी** । स्त्री । कुन्दुरुलतायाम् । कुन्दु[रु]की । वै.निघ. ।

**[म]धुरलता** । स्त्री । वल्लीयष्टिमधुनि । वै.निघ. ।

**[म]धुरवर्ग:** । पुं । दुग्धादिकुष्माण्डान्तद्रव्यगणे । [घृ]तघृतवसामज्जशालिषष्टिकयवगोधूममाषशृङ्गाट[क]कसेरुकत्रपुसकैर्व्वारुक(गोमुक)ककारुका कांकुड़[अल]ाबुकालिन्द(तरमुज)कतकनिग्मोला गिलोड़ा-[गि]लेपियालपुष्करवीजकाश्मर्य्यमधूकद्राक्षाराजा[द]न(खीर्णी) नालनारिकेलनालिकेरमर्नालिवल्लाक्ष-[.......]कुष्मा-[ण्ड]प्रभृतीनि समासेन मधुरोवर्ग: । सु सू.४२श्र. ।

**[म]धुरवल्ली** । स्त्री । मधुवीजपूरद्रुमे । रा.नि.व. ११ । [वा]तामे । मिठाबादाम । संग्रह: ।

**मधुरवाताम:** । पुं । (Dulcis.) मिष्टवा-

**मधुरवीजपूर:** । पुं । मिष्टमातुलुङ्गवृक्षे । मिष्टलेबु गाछ । मं मधुकाकड़ी । कं सखरैमाधवल । गुणा:—मधुर: शीतल: दाहघ्न: त्रिदोषघ्न: रुच्य: वृष्य: गुरु: दुर्ज्जरश्च । रा.नि.व.११ ।

**मधुरस:** । पुं । तालवृक्षे । रा.नि.व.९ । सु.सू. ३८श्र.पिप्पल्यादि: ।

**मधुरसा** । स्त्री । मूर्व्वायां । मुरगा । रा.नि. व.३ । र.मा. । वा.सू.१५श्र.आरग्वधादि:, "ब-[ल्ल]ी निम्बामृतमधुरसा ।'' भा.म.१भ.वल्लतादि ज्व.चि.महाषट्तकतैले । "मधुरसादिवाह्लरीहीत-कै: ।'' यष्टिमधुनि । रा.नि.व.६ । द्राक्षायाम् । मे. । गाम्भारीवृक्षे । भा. । प्रसारण्याम् । शतपुष्पायाम् । शुलफा । वै.निघ. । दुग्धिकायां । शिरुहे । मे. ।

**मधुरस्कन्ध:** । पुं । षड्विधास्थापनमध्ये मधुरवर्गीयद्रव्यकृतास्थापनविशेषे । च.विमा.८श्र. ।

**मधुरस्रवा** । स्त्री । मूर्व्वायाम् । पिण्डीखर्ज्जूरिकायाम् । रा.नि.व.११ ।

**मधुरा** । स्त्री । मेदायां । रा.नि.व.५ । काकोल्यां । वृहज्जीवन्त्याम् । रा.नि.व.३ । शतावर्य्यां । रा.नि.व.४ । महाशिम्ब्यां । कदलीवृक्षे । प.मु. । शतपुष्पायां । शुलफा । भा. । पालङ्कशाके । रा. नि.व.७ । मधुखर्ज्जूरीवृक्षे । रा.नि.व.११ । तिलवासिनीशालौ । उम्पाशालौ । रा.नि.व.१६ । मूर्व्वायां । च.चि.३श्र. । मातुलुङ्गवृक्षे । यष्टिमधुनि । मधुरिकायां । मउरी । मे. । काञ्जिके । चिका. । ऋषभके । मसूरे । महामेदायाम् । वै.

**मधुराकर:** । पुं । इक्षौ । प.मु. ।

**मधुराजालुकम्** । क्ली । मिष्टरसालुकभेदे । [गो]ल आलु । गुणा:—"मधुराजालुकं शीतं मधुरं वायुकारकं । पाके कटु च विज्ञेयं कचिदं दाहपित्तनुत् । शीवलट्कफनुत् भीक्कमस्य कन्दस्तु शीतल: । अग्निमान्द्यमलस्तम्भकफकृत् पित्तनुत्पर: ॥'' वै.निघ. । [.....]याम् । रा.नि.व.२१ ।

**मधुरादिफलत्रयम्** । क्ली । मधुरत्रिफला-

**मधुराम्रफल:** । पुं । पियालवृक्षे । र.मा. ।

**मधुराम्ल: (क:)** । पुं । आम्रातकवृक्षे । श. च. । दाड़िमवृक्षे । नागरङ्गवृक्षे । वै.निघ. ।

**मधुराम्लरस:** । पुं । नागरङ्गवृक्षे । नारङ्गी लेबुर गाछ । वै.निघ. । [.....]।१९ ।

**मधुरालापा** । स्त्री । शारिकायां । रा.नि.व.

**मधुरालावु: (नी)** । स्त्री । मिष्टालाव्वाम् । मिठा लाउ । रा.नि.व.७ ।

**मधुरालिका** । स्त्री । चुद्रमत्स्यविशेषे । मउरलामाछ । भरुचिपथ्यापथ्यम् ।

**मधुरासव:** । पुं । आसे । वै.निघ. ।

**मधुरास्यता** । स्त्री । मुखलिप्ततायाम्, मुखस्य मिष्टतायाम् । मा.ज्व.नि. ।

**मधुरिका** । स्त्री । मिश्रेयाख्यक्षुपे । मौरी । प.मु. । रा.नि.व.४ । रक्तसर्षपे । रा.नि.व.१६ । शताह्वायाम् । शुल्फा । वै.निघ. ।

**मधुरी** । स्त्री । आम्रवृक्षे । वै.निघ. । मधुरिकायां । मौरी । च.द.वा.व्या.चि.प्रसारणीतैले ।

**मधुरेणुः** । पुं । कृष्णकटभीवृक्षे । रा.नि.व.६ । See कटभी । शुक्लपुष्पपाटलायाम् । वै.निघ. ।

**मधुरौषधम्** । क्ली । मधुरगणे । भा.म.३भ. ।

**मधुलः** । पुं । मधूकविशेषे । र.मा. । क्ली । मद्ये । श.च. ।

**मधुलग्नः** । पुं । रक्तशिग्रुवृक्षे । र.मा. ।

**मधुलता** । स्त्री । शूलीतृणे । रा.नि.व.८ । वल्लीयष्टिमधुनि । वै.निघ. ।

**मधुलिका (ली)** । स्त्री । स्वनामख्यातवृक्षे । मधुली । र.मा. । च.वि.८अ. । कपिलद्राक्षायाम् । पुष्पपरागे । वै.निघ. । शमीधान्यभेदे । च.सू.२७अ. । (लिका) । राजिकायाम् । रा.नि.व.१६ ।

**मधुबलः** । पुं । कोकिले । श.च. ।

**मधुवल्लिका (ल्ली)** । स्त्री । मिष्टमातुलुङ्गवृक्षे । रा.नि.व.११ । कारवेल्ले । करला । र.मा. । वल्लीयष्टिमधुनि । रा.नि.व.६ । कपिलद्राक्षायाम् । वै.निघ. । निघ. ।

**मधुवासिनी** । स्त्री । लघुधातकीवृक्षे । वै.

**मधुविट्** । स्त्री । मधूच्छिष्टे । मम । वै.निघ. ।

**मधुवीजः** । पुं । दाड़िम्बवृक्षे । रा.नि.व.११ ।

**मधुवीजपूरः** । पुं । मधुरमातुलुङ्गवृक्षे । रा.नि.व.११ । [निघ. ।

**मधुवृक्षः** । पुं । मधूकवृक्षे । मउल गाछ । वै.

**मधुशर्करा** । स्त्री । मालखण्डीति प्रसिद्धे शर्करजातखाद्यद्रव्ये । सिताखण्ड, पाटाली । तिलुया । गुणाः—अतिमधुरा चक्षुष्या छर्दिघ्नी कुष्ठव्रणकफघ्ना हिक्काकफपित्तघ्नी च । रा.नि.व.१४ । अष्टविधमधूत्पन्नशर्करासु । ताश्च मधूनामष्टविध्यादष्टविधा भवन्ति । तच्छर्करागुणा अपि तत्तन्मधुगुणतुल्याः ज्ञेयाः । "यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।" रा.नि.व.१४ । श्वेतनिष्पावे । रा.नि.व.१६ । [श.च. ।

**मधुशाखः** । पुं । मधूकवृक्षे । मउल गाछ ।

**मधुशिग्रुः** । पुं । रक्तशिग्रुवृक्षे । लाल सजिनागाछ । गुणाः— शिग्रुः सरश्चित्रः शोफघ्नो दीपनः कटुः । सु.सू.४६अ. । (क्ली) श्वेतशिग्रौ । रा.नि.व.७ ।

**मधुशिता** । स्त्री । श्वेतनिष्पावे । रा.नि.व.१६ ।

**मधुशेषः** । पुं, क्ली । सिक्थके । मम । रा.नि.व.१७ । च.सू.३अ. ।

**मधुश्रेणी** । स्त्री । मूर्व्वायां । रा.नि.व.३ ।

**मधुश्वासा** । स्त्री । जीवन्तीलतायाम् । रा.नि.व.३ ।

**मधुष्ठीलः** । पुं । मधूकवृक्षे । भा. ।

**मधुसन्धानम्** । क्ली । मद्ये । वै.निघ. ।

**मधुसम्भवम्** । क्ली । सिक्थके । मम । रा.नि.व.१७ । [निघ. ।

**मधुसम्भवा** । स्त्री । कपिलद्राक्षायाम् । वै.

**मधुसिक्थकः** । पुं । मधूच्छिष्टे । मम । भा.म.४भ.पाटस्फोट.चि. "मधुसिक्थकगैरिकघृत… …।" स्थावरविषभेदे । हे.च. ।

**मधुशु(सु)क्तम्** । क्ली । पिप्पलीमूलजम्बीररसकृतसन्धानविशेषे । "जम्बीरस्य फलरसं पिप्पलीमूलसंयुतं । मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् । त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतम् ।" शार्ङ्ग. ।

**मधुसूदनः** । पुं । भ्रमरे । त्रिका. ।

**मधुसूदनी** । स्त्री । पालङ्कीशाके । पालंशाक । हे.च. ।

**मधुस्नेहः** । पुं । मधूच्छिष्टे । मम । वै.निघ. । स्त्री । चीव(तीप)चीनीतिख्याते पुष्टिकरौषधे । वै.निघ. ।

**मधुस्रवः** । पुं । मधुकवृक्षे । मउल गाछ । भा । मोरटलतायाम् । क्षीर कड़ार । रा.नि.व.३ । स्त्री । मूर्व्वायां । रा.नि.व.३ । क्षीरमूर्व्वायाम् । हंसपद्यां । गोयालिया लता । र.मा. । रा.नि.व.

पिण्डखर्ज्जूरवृक्षे। পিণ্ডী খেজুর। रा.नि.
११। जीवन्त्याम्। श.च.। यष्टिमधुनि। जटा.।
…ज्जालुकायाम्। वै.निघ.।

**…स्रवाः (म्)** । पुं। मधूकवृक्षे। মউল
…। जटा.। वा.म.१५।१७अ.पटोलादिः।
…मूर्व्वागुड़ूचीपाठान्वितम्।"

**…स्रावः** । पुं। मोरटलतायाम्। रा.नि.व.
। मधूकवृक्षे। মউল গাছ। भा.।

**…स्वरः** । पुं। कोकिले। श.र.।

**…हा (न्)** । पुं, स्त्री (हा)। प्रमेहजातीयप-
…भेदे। च.सू.२७अ.।

**…धुत्तरा** । स्त्री। शिम्बीभेदे। प.मु.। [रा.।

**…धुच्चोरः (री)** । पुं, स्त्री। खर्ज्जूरवृक्षे। हा

**…धूकम्** । क्ली। गुड़पुष्पे, मधूकपुष्पे। মউল
…। वा.सू.१५अ.न्यग्रोधादिः। "कालीकदम्ब-
…रलामधुकं मधूकम्।" च.द.वा.पि.ज्व.वि.मधू-
…दिः। "मधूकं चन्दनोत्पलम्।" वा.चि.३अ.।
…ष्टिमधुनि। रा.नि.व.६। सु.सू.३८अ.उत्पला-
…दिः। वै.निघ.अप.चि.मधूकघृते।

**…धूकः** । पुं। (Bassia latifolia.) स्वनाम-
…ख्याते। মউল গাছ। हिं महुया,वनमहुया।
…। कटइलुपि। तें पिन्ना। वम्. मोहा। वा.सू.
…५अ.सारिवादिः। सु.सू.३८अ.न्यग्रोधादिः। स
…द्विविधः स्थलजजलजभेदेन। गुणाः—समुत्तेजकः
…स्वेदकः शैत्यकरः बल्यः धातुपोषकश्च। पुष्प-
…क्वाथः कासहितः। तैलं शिरःशूले हितम्। तत्
…सुरा मधुरा पाचिका च। कश्चित्। "मधूकपुष्पं
मधुरं शीतलं गुरु बृंहणं। बलशुक्रकरं प्रोक्तं वा-
तपित्तविनाशनम्। फलं शीतं गुरु स्वादु शुक्रलं
वातपित्तनुत्। अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षत-
क्षयान्।' भा.। एतत्तैलं गाम्भारीतैलगुणम् अहृ-
द्यं तर्पणं बृंहणञ्च त्वग्गुणाः—"मधूकं रक्तपित्त-
घ्नं व्रणशोधनरोपणम्।" तन्मज्ज तत्फलगुणम्।
पक्वफलं वातपित्तघ्नम्। राज.। [वै.निघ.।

**मधूकपर्णसाहस्री** । स्त्री। तुलसीवृक्षे।

**मधूकपर्णी** । स्त्री। अम्बष्ठायाम्। আমড়া
গাছ। वै.निघ.।

**मधूकफाणितम्** । क्ली। मधूकपुष्पोत्थशर्क-
याम्। মউল ফুলের চিনি। गुणाः—रुच्यं वा-
तपित्तकृत् कफघ्नं मधुरं वस्तिदोषकरञ्च। सु.सू.
४५अ.।

**मधूकशर्करा** । स्त्री। मधूकफाणिते।

**मधूकसारः** । पुं। मधूकरसे। মউলের সার
আটা। च.द.ज्व.चि.मधूकसारादिः। "मधूकसा-
रसिन्धूत्थः।"

**मधूच्छिष्टम्** । क्ली। (Cera, Alba, Tla-
va.) Wax. मधुसिक्थके। मम्। र.मा.। हिं
मम। तें मैनम। ता. मफ्रुत्त। सु.सू.९अ.। स्नि-
ग्धं क्षते हितञ्च। द्रव्यगुणान्तरम्।

**मधूत्थ(त्थित)म्** । क्ली। सिक्थके। मम्।
रा.नि.व.१३।

**मधूत्पन्ना** । स्त्री। मधुकृतशर्करायाम्। रा.
नि.व.१४। [रा.नि.व.१०।

**मधूत्सवः** । पुं। रक्ताम्लानवृक्षे। রক্ত ঝাঁটী।

**मधूलः** । पुं। वारिजे गिरिजे च मधूकवृक्षे।
জলমহুয়া, গিরিমহুয়া। प.मु.। जटा.।

**मधूलकः** । पुं। जलजमधूकवृक्षे। भा.। स्थल-
जमधूकवृक्षे। श.र.। क्ली। मद्ये।

**मधूलिः** । स्त्री। मालकाँकड़ी इति ख्याती-
षधौ। মালকাঁকড়ী। प.मु.।

**मधूलिकः** । पुं। द्रुमौ। आमवर्त्तिभेदे। गु-
णाः—"श्लेष्मलस्तु मधूलिकः।" च.सू.२७अ.।

**मधूलिका** । स्त्री। मूर्व्वायां। प.मु.। रा.नि.
व.३। भा.पू.२भ.। यष्टिमधुनि। जलयष्ट्यां।
भा.पू.२भ.। वा.टी.हेमा.वमनकल्पे। कुधान्यभेदे,
स्वल्पगोधूमे। मध्यदेशजगोधूमे इति भावमिश्रः।
स्वल्पगोधूमोत्थसुरायाम्। गुणाः—मलमूत्ररोधि-
नी गुरुः श्लेष्मला च। सु.सू.४६अ.। मोदकाव-
र्त्ते। सु.कल्प.८अ.। मर्कटहस्तितृणे। মাকড়-
হাতা। च.द.भग्न.चि.।

**मधूली** । स्त्री। आम्रवृक्षे। रा.नि.व.११।
मूर्व्वायाम्। मधुकर्कटिकायाम्। रा.नि.व.११।
सु.चि.३अ.। मधूकवृक्षे। जलजमधुयष्ट्यां। म-
ध्यदेशजगोधूमे। भा.। गुणाः—मधुरा स्निग्धा
शीतला च। च.सू.२७अ.। वा.चि.६अ.।

दशविन्दुशिरोदर्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्पः ।

**महापद्मकघृतम्** । क्ली । विस्फोटकाधिकारे घृतम् । "पद्मकं त्रिनिशायष्टित्रुटिशैलुनतामयैः । शिरीषा[illegible]नागकेशरैश्च कल्कैः सिद्धं जले घृतं ॥" घृतं ४ श. पद्मकाद्यादिकल्कः १ श. वारि १६ श. एकत्र पचेत् । रस.र. । [निदा. ।

**महापद्मविसर्पः** । पुं । बालविसर्परोगे ।

**महापनसः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । [शालि । वै.निघ. ।

**महापर्णः** । पुं । ब्रह्मराक्षसरोहीतके । भूमि-

**महापारि(ले)वतः** । पुं । द्वीपान्तरमहाखर्जूरीवृक्षे । गुणाः—पुष्टिकृत् बल्यो वृष्यो मधुरः शीतलः कफकरो गुरुरग्निमान्द्यकरो महावातघ्नः रक्तघ्नश्च । पक्वः स रुच्यो बल्य आग्नेयश्च । वै.निघ. ।

**महापाशुपतः** । पुं । वकुलवृक्षे । वै.निघ. ।

**महापिचुमन्दः (न्दः)** । पुं । पर्वतनिम्बे । निम्बसदृशवृहत्पत्रवृक्षे । वकाइनि इति लोके । महानिम । ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्युच्यते इति केचित् । एतस्य त्वगेव ग्राह्या । सि.यो.अर्श.चि.लवणोत्तमाद्यचूर्णे, श्रीकण्ठः । "लवणोत्तमवह्निकलिङ्गयवान् चिरविल्वमहापिचुमन्दयुतान् ।"

**महापिण्डीतकः** । पुं । महामदनवृक्षे । बड़ मयना गाछ, काल मयना । मं थोरमैनाहल । वम्. गेल । गुणाः—कटुतिक्तरसः छर्दनः कफहृद्रोगपक्वाशयशोधनश्च । रा.नि.व.८ ।

**महापिण्डीतरुः** । पुं । वृक्षविशेषे । श्वेतपिण्डीतरौ । मं पेंड़िरा । कं औदयमारुवमरनु । गुणाः—कषायोष्णः त्रिदोषघ्नः चर्म्मरोगघ्नः रक्तदोषघ्नश्च । रा.नि.व.८ ।

**महापीलुः** । पुं । वृहत्पीलुवृक्षे । पीलुफलेर गाछ । तत्फलगुणाः—मधुरं वृष्यं विषघ्नं पित्तघ्नं रुच्यम् आमघ्नं दीपनीयञ्च । रा.नि.व.११ ।

**महापुटम्** । क्ली । औषधपाकार्थे पुटविशेषे । लक्षणम्—"गम्भीरे विस्तृते कुण्डे द्विहस्ते चतुरस्रके [illegible] । कोष्ठं कुर्वे प्रयत्नेन गोविष्ठोपरि धारयेत् । वनोपलसहस्राणि कोष्ठिकोपरि निःक्षिपेत् । वह्निं विनिःक्षिपेत्तत्र महापुटमिति [illegible]मा. ।

**महापुरुषः** । पुं । [illegible]मेदायाम् । वै.निघ. ।

**महापुरुषदन्ता (न्तिका, न्ती)** । स्त्री । महाशतावर्य्यां । रा.नि.व.४ । वा.उ.६अ. । विष्णुक्रान्तायां शतावर्य्यां वा । च.द.सि.यो.उन्मा.चि. महापैशाचघृते । महापुरुषदन्ता च वयस्था नाकुलीद्वयम् । मेदायां । रा.नि.व.५ ।

**महापुष्पः** । पुं । कुन्दवृक्षे । कुन्द गाछ । कृष्णमुद्गे । काल मुग । रक्तकाञ्चने । लवङ्गवृक्षे । वै.निघ. । स्त्री (ष्पा) । अपराजितायाम् । श.च. । महार्कोशातक्याम् । धुन्दुल । वै.निघ. ।

**महापृष्ठः** । पुं । उष्ट्रे । प.मु. ।

**महापैशाचिकघृतम्** । क्ली । उन्मादाधिकारे दृष्टफलघृतम् । पाठः—"जटिला पूतना केशी चारटी मर्कटी वचा । त्रायमाणा जया वीरा चोरकः कटुरोहिणी । कायस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा । महापुरुषदन्ती च वयस्था लाङ्गलीद्वयं । कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम् । सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम्...... ॥" जटिला (जटामांसी), पूतना (हरीतकी), केशी (भूतकेशः), चारटी (स्थलपद्मं कुष्माण्डः ब्राह्मी वा), मर्कटी (शूकशिम्बी), जया (जयन्ती), वीरा (क्षीरकाकोली पृश्निपर्णी वा), चोरकः (चोरहुली), कायस्था (सिन्धुवारः), शूकरी (वाराहीकन्दः तदभावे चर्म्मकारालुकः), छत्रा (मधुरिका), न तु जीरकं । मिश्रेति (जतुकर्णात्), अतिच्छत्रा (शतपुष्पा), पलङ्कषा (गुग्गुलुः), महापुरुषदन्ती (शतावरी), वयस्था (ब्राह्मी गुडूची वा), लाङ्गलीद्वयं (रास्नाद्वयं) [तयोः एका गन्धरास्ना तदभावे भागद्वयं], कटम्भरा (भद्रालिका कटभी वा), वृश्चिकाली (विछाति), स्थिरा (शालपर्णी) । घृतप्रस्थे प्रत्येकमेषां २ तो. ६ मा. ३ र. । जलं घृताच्चतुर्गुणं । अत्र महच्छब्दः पूजावचनः खल्पस्याभावात् । गव्यघृत ४ श. । कल्कार्थ—जटामांसी, हरीतकी, भूतकेश, स्थलपद्म कुष्माण्ड वा ब्राह्मी, आलाकुशीर बीज, वच, दलाडुमुर, जयन्ती, क्षीरकाकोली वा का-

কোলী কিংবা চাকুলিয়া, চোরহুলী, কট্-কী, জয়িত্রী বা নিশিন্দা বা ছোট এলাচ, বারাহীকন্দ (চামরকষাত্মক), মউরী, শুল্ফা, গুগ্গুল, শতাবরী বা অপরাজিতা বা গুলঞ্চ, রাস্না, গন্ধরাস্না (অভাবে রাস্না ২ ভা.), গন্ধভাদুলিয়া, বিছাতী, শালপাণি মিলিত ১ শ. জল ১৬ শ.। रस.र.। सि.यो.च. चि.१४अ.। [वै.निघ.।

**महाप्रहारवल्ली** । स्त्री । मांसरोहिण्याम् ।

**महाप्राण: (स:)** । पुं । द्रोणकाके । দাঁড়-কাক । रा.नि.व.१० ।

**महाफल:** । पुं । विल्ववृक्षे । र.मा. । नारिके-लवृक्षे । तालवृक्षे । पीलुवृक्षे । वै.निघ. । क्ली । वृहत्फले ।

**महाफला** । स्त्री । नील्यां । नागवल्लायां । रा.नि.व.४ । महेन्द्रवारुणीलतायां । বড় মাকাল । रा.नि.व.३ । राजजम्बूवृक्षे । वनवीजपूरके । मधुरमातुलुङ्गे । মিষ্ট লেবু, কমলা লেবু । रा.नि.व.११ । महाकोशातक्याम् । भा.पु.१म.शा.व. । कटुतुम्ब्याम् । তিৎলাউ । वै.निघ. ।

**महाफेणा** । स्त्री । समुद्रफेणे । श.च. ।

**महाबभ्रु:** । पुं । विलेशयमृगविशेषे । सु.सू.४६अ. ।

**महाबर्व्वरिका** । स्त्री । भार्ग्याम् । वै.निघ. ।

**महाबलम्** । क्ली । सीसधातौ । र.मा. । पुं. । वंशे । रा.नि.व.७ । तमालवृक्षे । धन्वनवृक्षे । धामना গাছ । रा.नि.व.৫ ।

**महाबला** । स्त्री । अतिबलायां, पीतवाट्यालके । পীতপুষ্প বেলেড়া । रा.नि.व.४ । श्वेतवाट्यालके । प.मु. । पेटकायाम् । পেটারি । पिप्पल्याम् । नीलीवृक्षे । धामनवृक्षे । ধাওয়া গাছ । वै.निघ. ।

**महाबीज:** । पुं । पारदे । वै.निघ. ।

**महाभद्रा** । स्त्री । गाम्भारीवृक्षे । रा.नि.व.৫ ।

**महाभरी** । स्त्री । (Cuscuta zerumbet.) वचाविशेषे । यस्या लोके कुलिञ्जन इति नामान्तरम् । মহাভরী বচ । एषा द्विधा । गुणा:— "सुगन्धाप्युग्रगन्धा च विशेषात्कफकासनुत् । सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधनी ॥" अन्या स्थूलग्रन्थि: सुगन्धा हीनगुणा च । भा. ।

**महाभल्लातक: (गुड:)** । पुं । कुष्ठाधिकारे औषधम् । पाठ:—"निम्बं गोपारुणा कट्वी त्रायन्ती त्रिफला घनम् । पर्पटा वत्सगृजानन्ता वचा खदिरचन्दनम् । पाठा शुण्ठी शटी भार्गी वासा भूनिम्बवत्सकम् । श्यामेन्द्रवारुणी मूर्व्वा विडङ्गेन्द्र-विषानलम् । हस्तिकर्णामृताद्रेका पटोलं रजनीद्वयम् । कणारग्वधसन्नाहककर्णेवीसटाफलम् । भूकन्दं त्वणपर्णञ्च मिञ्जी पञ्चाटमूषली । विष्कम्भेना च कैटर्य्यं शरपुङ्खाथ कञ्चुकी । एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत् । अष्टभागावशिष्टन्तु कषायमवतारयेत् । भल्लातकसहस्राणि त्रीणि छित्वाम्भसोऽम्भसि । चतुर्भागावशिष्टन्तु कषायमवतारयेत् । तौ कषायौ समादाय वस्त्रपूतौ च कारयेत् । गुडस्य तु तुलां ताभ्यां कषायाभ्यां पचेद्भिषक् । भल्लातकसहस्राणां मज्जानं तत्र दापयेत् । त्रिकटुत्रिफलामुस्तसैन्धवानाम्पलम्पलम् । दीप्यकस्य पलञ्चैव चातुर्जातं पलांशिकम् । संचूर्ण्य प्रक्षिपेदत्र गन्धकस्य चतुष्पलम् । ..... ॥" নিম্বত্বক্, শ্বেত শ্যামা, আতাবিষা, কট্কী, বলাডুমুর, ত্রিফলা, মুতা, ক্ষেত্রপর্পটী, সোমরাজী, দুরালভা, বচ, খদিরকাষ্ঠ, শ্বেতচন্দন, আকনাদি, শুঁট, শটী, বামনহাটী বা কণ্টকারীমূল, বাসকছাল, চিরেতা, কুড়চিমূলের ছাল, শ্যামালতা, রাখালশশার মূল, মূর্গামূল, বিড়ঙ্গ, ইন্দ্রযব, বিষ, চিতামূল, হস্তিকর্ণ, পলাশছাল, গুলঞ্চ, ঘোড়ানিম্ছাল, পল্তা, হরিদ্রা, দারুহরিদ্রা, পিপুল, সোন্দালের আটা, ছাতিমছাল, জলবেতস বা কেলেলতা, শ্বেত কুঁচ, ওল, চীনাঘাস, মঞ্জিষ্ঠা, চাকন্দাবীজ, তালমূলী, প্রিয়ঙ্গু, কট্ফল, শরপুঙ্খা, শিরীষছাল প্রত্যেকে ২প.। ক্বাথার্থ—জল ৬৪ শ. শে. ৮ শ.। ভেলা ৩০০০, জল ৬৪ শ. শে. ১৬ শ.। পুরাতন গুড় ১২৷৷০ শ. ভল্লাতকাস্থিমজ্জা (ভেলার মুটী) ১০০০ একত্র পাক করিবে। প্রক্ষেপ—ত্রিকটু, ত্রিফলা, মুতা, বিড়ঙ্গ, চিতার মূল, রক্তচন্দন, কুড়, সৈন্ধব, যমানী প্রত্যেকে ১ প.। গুড়ত্বক্, তেজপত্র, এ-

লাইচ, নাগেশ্বর প্রত্যেকে ১ প. গন্ধক ৪ প.। অনু. গুলঞ্চকাথ, দুগ্ধ। ভাবপ্রকাশ-মতে জল হইতে এই দ্রব্যগুলি দেওয়া হয়। যথা—বিষলাঙ্গুলিয়ামূল, রাস্না, ডহরকরঞ্জ, পুনর্নবা, দন্তীমূল, পিয়ালবীজ, ভীমরাজ, শ্বেত ঝাঁটী, আঁকড়মূল ও শ্যাওড়াবীজ। भैष.। भा.।

**महाभीता ।** स्त्री। लज्जालुकायाम्। श.च.।

**महाभीरु: ।** पुं। गोपालिकाख्यकीटे। है.च.।

**महाभूतम् ।** क्ली। क्षित्यप्तेजोमरुद्व्योमसु। तद्गुणा:—"शब्द: श्रोत्रेन्द्रियं वापि छिद्राणि च विविक्तता। वियत: कथिता एते गुणा:···। स्पर्शस्त्वगिन्द्रियञ्चापि लघुता स्पन्दनं तनो:। चेष्टा: सर्व्वशरीरस्य वायोरिति गुणा:···। रूपं नेत्रेन्द्रियं पाक: सन्तापस्तीक्ष्णता तथा। वर्णो भ्राजिष्णुतामर्ष: शौर्य्यं वह्निगुणा:···। रसो रसेन्द्रियं शैत्यं स्नेहश्च गुरुता तथा। सर्व्वद्रवसमूहश्च शुक्रं वारिगुणा:···। गन्धो घ्राणेन्द्रियञ्चापि काठिन्यं गौरवं तथा। वसुन्धरागुणा: एते···।" भा.पू.१भ.।

**महाभृङ्ग: ।** पुं। नीलभृङ्गराजे। নীল ভীমরাজ। रा.नि.व.४।

**महाभ्रवटिका ।** स्त्री। राजयक्ष्माधिकारे रस:। पाठ:—"अभ्रकं पुटितं ताम्रं लौहगन्धकपारदं। कुलटा टङ्कणक्षार: त्रिफला च पलं पलम्। गरलञ्च तथा माषचतुष्कं चैव चूर्णितं। दृढपाषाणपात्रे च भूयोभूय: सुचूर्णितं। तत्सर्व्वं भावयेदेषां रसै: प्रत्येकश: पलै:। देवराजाशनाख्यस्य केशराजाख्यकस्य च। भीमराजस्य भृङ्गाख्यराजस्य त्रिफलस्य च। पारिभद्राग्निमन्थस्य वृद्धदारकतुम्बुरो:। मण्डूकपर्णीनिर्गुण्डीपूतिकौन्मत्तकस्य च। ग्रीष्मसुन्दरकन्दाटरूषकस्य क्रमेण तु। रसैश्च ताम्रपर्ण्याश्च दशोत्थैर्भावितं भिषक्। द्रवै: किञ्चित् स्थितं चूर्णं मरिचस्य पलं क्षिपेत्। ततश्चैव वटीं कुर्य्यात् चतुस्त्रीण्येकरक्तिका॥" रस.र.।

**महामण्डूक: ।** पुं। मण्डूकविशेषे, पीतमण्डूके। সোণাবেঙ। रा.नि.व.१९।

**महामत्ता ।** स्त्री। महाकरञ्जवृक्षे। ডহরকরঞ্জ গাছ। रा.नि.व.९।

**महामधुफला ।** स्त्री। पीतवर्णालाबुविशेषे। वै.निघ.। [व.१९।

**महामनस् (ना:)।** पुं। महासिंहे। रा.नि.

**महामांसम् ।** क्ली। नरादिमांसे।

**महामांसी ।** स्त्री। कदलीवृक्षे। वै.निघ.।

**महामार्जारगन्धिका ।** स्त्री। वनमुद्गे। মুগানী। वै.निघ.।

**महामाष: ।** पुं। राजमाषे। भा.पू.१भ.धा.व.।

**महामुख: ।** पुं। कुम्भीरे। है.च.।

**महामुण्डम् ।** क्ली। बोलनामगन्धद्रव्ये। रा.नि.व.१६।

**महामुण्डित(नि)का (ण्डी) ।** स्त्री। महाश्रावणिकायां। গোরক্ষমুণ্ডী। रा.नि.व.५। रस.र.बाल.चि.।

**महामुनि: ।** पुं। तुम्बुरुवृक्षे। रा.नि.व.११। क्ली। औषधे। श.र.। धन्याके। मदने। जटा.।

**महामूर्द्धा** (र्द्धन्)। स्त्री। ऋद्धौ। वृद्धौ। वै.निघ.।

**महामूल: ।** पुं। राजपलाण्डौ। रा.नि.व.७।

**महामूषिक: ।** पुं। बृहन्मूषिके। रा.नि.व.१९। [गजे। है.च.।

**महामृग: ।** पुं। महासिंहे। रा.नि.व.१९।

**महामृगाङ्क: ।** पुं। यक्ष्माधिकारे रस:। पाठ:—"शुद्धसूतं मृतं स्वर्णं जम्बीरैर्मर्द्दयेद्दिनं। तेषां द्विगुणितं सुस्तं त्रिभिस्तुल्यञ्च गन्धकं। ···णं गन्धकाद्यञ्च सर्व्वं जम्बीरजैरसै:। मर्द्दं यामन्तु तद्गोलं वस्त्रेकृत्वा विपाचयेत्। दोलायन्त्रे सारणाले यामादुद्धृत्य शोषयेत्। ततोऽपि मृण्मये पात्रे किञ्चिल्लवणपूरिते। तत्पृष्ठे काचकूप्यन्ते गोलके वस्त्रवेष्टिते। स्थिते तु लवणैर्भाण्डे पूरयित्वा तु बन्धयेत्। चूल्यां दिनं पचेत् सिद्धो रसो महामृगाङ्कक:॥" मात्रा २ रति:; अनुपानं मधुपिप्पली। रस.कौ.।

**महामेद: ।** पुं। महामेदायाम्। र.मा.। निम्बवृक्षे। वै.निघ.।

**महामेदा ।** स्त्री। स्वनामख्यातकन्दशाके। महामेदा इति सर्व्वत्र। तें महामेदयनेचेद्दु। सा

लताजाता सुपाण्डुरा च। "महामेदाभिधः कन्दो लताजातः सुपाण्डुरः।" इति। एतदभावे शारिवा ग्राह्या। गुणाः—हिमा रुच्या कफशुक्रवृद्धिकृत् दाहपित्तघ्नी च। रा.नि.व.५। महामेदा सुनामेदेति च द्विधा। मेदाद्वयलक्षणम्—"महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते। महामेदा सुनामेदा स्यादित्युक्तं मुनीश्वरैः। शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः। महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते। शुक्लकन्दो नखच्छेद्यो मेदोधातुमिव स्रवेत्। यः स मेदेति विज्ञेयः ···। मेदायुगं गुरु स्वादु वृष्यं स्तन्यकफापहम्। बृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत्॥" भा.पू.१भ.।

**महामोदः।** पुं। कुन्दपुष्पक्षुपे। कन्द गाछ। रा.नि.व.१०। [श्वेतधुस्तूरके। वै.निघ.।

**महामोहः।** पुं। मुचुकुन्दवृक्षे। (ही इन्)।

**महाम्लम्।** क्ली। तिन्तिडीके। जटा.।

**महायमलपत्रकः।** पुं। काञ्चनवृक्षे। वै. निघ.। [निघ.।

**महायावनालः।** पुं। देवधान्यवृक्षे। वै.

**महायोगेश्वरी।** स्त्री। नागदमन्याम्। नागदना। भा.।

**महायोनिः।** स्त्री। योनिरोगविशेषे। लक्षणं—"दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठञ्च मारुतः। कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम्। उत्सन्नमांसां तामाहुः महायोनिं महारुजाम्॥" वा.उ.३३अ.।

**महारक्तम्।** क्ली। प्रवाले। वै.निघ.।

**महारजतम्।** क्ली। धुस्तूरफले। अम.। सुवर्णे। रा.नि.व.१३। [वर्णे। मे.।

**महारजनम्।** क्ली। कुसुम्भपुष्पे। अम.। सु-

**महारतिवल्लभमोदकः।** पुं। वाजीकरणाधिकारे औषधम्। जयावीजचूर्णं ५ प. घृतं ४ प. शर्करा १६ प. शतावरीरसः ३२ प. दुग्धं ३२ प. विजयारसस्तत्क्वाथो वा ३२ प. छागदुग्धं ३२ प.। प्रक्षेपः—आमलकं जीरकं कृष्णजीरकं मुस्तकं त्वक् एला तेजपत्रं नागकेसरं वानरीवीजं (आलाकुशीर वीज) गोरक्षतण्डुला तालाङ्कुरः केशराजः शृङ्गाटकं त्रिकटु धान्यकम् अभ्रं वङ्गं हरीतकी द्राक्षा काकोली क्षीरकाकोली पिण्डीखर्ज्जूरं कोकिलाक्षवीजं कटुकी यष्टिमधु कुष्ठं लवङ्गं सैन्धवं यमानी वनयमानी जीवन्ती गजपिप्पली एषां चूर्णं प्र. २ तो.। मधु २ प. मृगमदकर्पूरचूर्णेन वासयेत्। भैष.।

**महारत्नम्।** क्ली। मुक्तादिनवरत्नेषु। मौक्तिकहीरकवैदूर्य्यपद्मरागगोमेदपुष्परागमरकतप्रवालनीलरत्नेषु।

**महारम्भम्।** क्ली। गाढ़लवणे। रा.नि.व.६।

**महारवः।** पुं। भेके। वै.निघ.।

**महारसम्।** क्ली। काञ्जिके। जटा.। कान्तलौहे। हिङ्गुले। स्वर्णमाक्षिके। अभ्रके। रौप्यमाक्षिके। पुं। पारदे। रा.नि.व.१३। इक्षौ। प.मु.। खर्ज्जूरवृक्षे। कशेरौ। मे.। स्त्री। जम्बूवृक्षे। वै.निघ.।

**महारसाष्टकम्।** क्ली। पारदाभ्रकहिङ्गुलवैक्रान्तस्वर्णमाक्षिकरूप्यमाक्षिकशङ्खकान्तलौहेषु। "दरदः पारदः शङ्खः वैक्रान्तं कान्तमभ्रकम्। माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः॥" रा.नि.व.२२।

**महाराजः।** पुं। नखे। हे.च.।

**महाराजचूतः।** पुं। आम्रवृक्षविशेषे। मं महाराजांवा। कं महाराजमाव्। रा.नि.व.११। See राजाम्रः। [सोणालु। रा.नि.व.८।

**महाराजद्रुमः।** पुं। आरग्वधवृक्षे। बड़

**महाराजफलः।** पुं। महाराजचूतवृक्षे। रा.नि.व.११। [रा.नि.व.११।

**महाराजाम्रकः।** पुं। महाराजचूतवृक्षे।

**महाराष्ट्री।** स्त्री। जलपिप्पल्याम्। माराटीति राजवल्लभः। कांचड़ा, पानमगा। पिप्पलक। हामुगलु। पाणमंगा। इति मं कं। भैष.मु.रो. चि.मुखरोगहररसे। अग्निदग्ध.चि.। गुणाः—कटुः तीक्ष्णा कषाया मुखशोधनी व्रणकीटादिदोषघ्नी रसदोषघ्नी च। रा.नि.व.४। वातकफघ्नी। राज.। [रा.नि.व.८।

**महारिष्टः।** पुं। महानिम्बे। घोड़ानिम्।

**महारूपः।** पुं। राले। धूना, धुना। वै.निघ.।

**महारोगः।** पुं। महाव्याधौ। वैद्यकम्। उ-

मादादिरोगेषु । यथा—उन्मादः त्वग्दोषः राजयक्ष्मा श्वासः मधुमेहः भगन्दरः उदरः अश्मरी चेति । नारदस्मृतिः । [लावपचिथि । विश्व. ।

**महार्घः** । पुं । महासोमलतायाम् । वै.निघ. ।

**महार्द्रः** । पुं । महार्द्रके । मश आदा । श.च. ।

**महार्द्र(क)म्** । क्ली । शुण्ठ्याम् । वै.निघ.२भ. दुर्जलजन्व.चि. । स्थूलार्द्रके, वनार्द्रके । वन आदा । गुणाः—"महार्द्रं दीपनं ग्राहि रुच्यं वातकफापहम् ।" राज.३प. ।

**महार्हम्** । क्ली । श्रीखण्डचन्दने । श्वेत चन्दन । रा.नि.व.१२ । [रा.नि.व.९ ।

**महालिकटभी** । स्त्री । श्वेतकिणिहीवृक्षे ।

**महालोध्रः** । पुं । शवरलोध्रे । पाँटिया लोध । र.मा. । [१९ ।

**महालोभः (लः)** । पुं । काके । रा.नि.व.

**महालोहम्** । क्ली । कान्तलौहे । रा.नि.व.१३ ।

**महावपः** । पुं । महामेदे । श.च. । [र. ।

**महावरा** । स्त्री । मूर्व्वायाम् । दूर्व्वायाम् । श.

**महावरोहः** । पुं । प्लक्षवृक्षे, ह्रस्वप्लक्षवृक्षे । पाकुड़ गाछ । रा.नि.व.११ । [निघ. ।

**महावर्षाभूः** । स्त्री । श्वेतपुनर्नवायाम् । वै.

**महावल्कः** । पुं । जातीफलवृक्षे । वै.निघ. ।

**महावल्ली** । स्त्री । माधवीलतायाम् । श.च. । श्वेतालाब्वाम् । कटुवल्लिकायाम् । कट्की । रा.नि.व.३ ।

**महावसः** । पुं । शिशुमारे । हे.च. ।

**महावसु** । क्ली । रौप्ये । वै.निघ. ।

**महावातव्याधिः** । पुं । वातरक्ते । स एक एव । मतान्तरे उत्तानावगाढभेदेन द्विविधः । सु.चि.५अ. । [वन वेगुन । वै.निघ. ।

**महावार्त्ताकिनी** । स्त्री । महावार्त्ताकुवृक्षे ।

**महावास्तु** । क्ली । महायतने । भा.म.कुष्ठचि. ।

**महावास्तुपरिग्रहः** । त्रि । व्यापकतया प्रशस्तस्थानग्राहिणि । भा.गुल्म-चि. ।

**महाविलम्** । क्ली । अन्तःकरणे । वै.निघ. । आकाशे । जटा. ।

**महाविषः** । पुं । तन्नामककन्दविषे । सु.कल्प.२अ. । कालसर्पे । त्रिका. ।

**महाविहङ्गः** । पुं । गरुड़े । च.द. ।

**महावीजः** । पुं । पियालवृक्षे । पेयाशाल । क्ली । विटपे । तत् मुष्कवृषणयोरन्तरम् । हे.च. ।

**महावीरः** । पुं । एकवीरवृक्षे । रा.नि.व.८ । करवीरपुष्पवृक्षे । करवी गाछ । रा.नि.व.१० । सिंहे । शूकशिम्बे । मे. [illegible] । हे.च. । स्त्री (रा) । क्षीरकाकोल्यां । र.मा. ।

**महावीर्य्यः** । [illegible] वाराहीकन्दे । एकवीरवृक्षे । रा.नि.व.७ । [illegible] (र्य्या) । महाशतावर्य्यां रा.नि.व.४ । [illegible]याम् । वनकार्पासाम् । श.र. । संज्ञायाम् । त्रिका. ।

**महावृषा (ष्या)** । स्त्री । मुशलीभेदे । कालतालमूली । वै.निघ. । [वेगुन । त्रिका. ।

**महावृहती** । स्त्री । महावार्त्ताकाम् । वन

**महावृक्षः** । पुं । स्नुहीवृक्षे । सिजु गाछ । र.मा. । सेहुण्डभेदे । क[illegible] । सु.सू.३९अ. । तालवृक्षे । महापीलुवृक्षे [illegible] निघ. ।

**महावेगवती** । [illegible] तन्नामकमहौषधौ । सु.चि.३०अ. । See [illegible] । [दा. ।

**महाव्याधिः** । पुं । [illegible]दिमहारोगेषु । नि-

**महाव्रणम्** । क्ली । दुःसाध्यव्रणे । नाली [illegible] । शब्दकल्पे वाराहीतन्त्रम् ।

**महाव्रीहिः** । पुं । व्रीहिविशेषे । षष्टिकधान्ये । येटे धान । वै.निघ. ।

**महाशङ्खः** । पुं । नरकपाले, ललाटे । मे. । कर्णनेत्रयोर्मध्यगतास्थानि । तन्त्रम् ।

**महाशठः** । पुं । पीतधुस्तूरवृक्षे । रा.नि.व.१० ।

**महाशणः** । पुं । स्वनामख्यातवृक्षविशेषे । प.मु. । शणवीजे । वै.निघ. ।

**महाशणपुष्पिका (ष्पी)** । स्त्री । शणपुष्पीनामक्षुपविशेषे । आतुशी फूलेर गाछ, श्वेत अरण्य शण । मं साञ्जीकिलिहिला । कं पाड्री-किलिहिला । हिं फुणफुणा । गुणाः—कषाया उष्णा रसनियामिका मोहनस्तम्भनादौ शस्ता । रा.नि.व.४ ।

**महाशणा** । स्त्री । आरण्यशणी । वै.निघ. ।

**महाशता (वरी)** । स्त्री । बृहच्छतावर्य्याम्, सहस्रमूलीशतावर्य्याम् । हिं कङ्कहीमूल । गुणाः —"महाशतावरी मेध्या हृद्या वृष्या रसायनी । शीतवीर्य्या निहन्त्यर्शोग्रहणीनयनामयान् ॥" भा. । हिमा वृष्या मधुरा तिक्ता रसायनी पित्तघ्नी वातकफघ्नी च । रा.नि.व.४ ।

**महाशफरः** । पुं । पार्व्वतमीने । পাব্দা মাছ । तं श्वेतकानीपिहमत्स्यम् । [नि.व.८ ।

**महाशरः** । पुं । स्थूलशरे । রামশর । रा.

**महाशल्कः** । पुं । महाचिङ्गटमत्स्ये । গোচা-চিংড়ি । हारा. ।

**महाशाखा** । स्त्री । नागबलायां । रा.नि.व.४ ।

**महाशालिः** । पुं, स्त्री । सुगन्धशाली । रा.नि.व.१६ । शालिधान्यविशेषे । মোটা ধান । प.मु. । वा.सू.६अ. । गुणाः —"महाशालिर्गुरुर्वृष्या चक्षुष्या बलवर्द्धनी ।" अचि.१५अ. ।

**महाशिम्बी** । स्त्री । कलायविशेषे । রক্তাক-লায় । रा.नि.व.७ ।

**महाशिराः** । पुं । मत्स्यभेदे । वै.निघ. । दर्व्वीकरसर्पभेदे । गौधेरकजातिभेदे । सु.कल्प.४।८अ. । [नस्यतिविशेषे । वै.निघ. ।

**महाशीता** । स्त्री । शतावर्य्याम् । श.च. । व-

**महाशुक्तिः** । स्त्री । मुक्तागृहे । ঝিনুক । रा.नि.व.१३ ।

**महाशुण्डी** । स्त्री । हस्तिशुण्डीनाममहाक्षुपे । হাতিশুঁড়ে । रा.नि.व.५ । [व.१३ ।

**महाशुद्र(भ्र)म्** । क्ली । रौप्यधातौ । रा.नि.

**महाशृङ्गः** । पुं । सम्बरमृगे । वै.निघ. ।

**महाशौण्डी** । स्त्री । श्वेतकिणिहीवृक्षे । कटभीवृक्षे । रा.नि.व.६ ।

**महाश्यामा** । स्त्री । वृद्धदारके । सु.सू.३८अ. श्यामादि. । श्यामालतायाम् । प.मु. । कृष्णशिंशपावृक्षे । কাল শিশু গাছ । रा.नि.व.६ ।

**महाश्रयः** । पुं । अक्षोटवृक्षे । আক্‌রোট গাছ । वै.निघ. ।

**महाश्रावणिका (णी)** । स्त्री । स्वनामख्यातमहाक्षुपे । বড় থুলকুড়ি । গোরক্ষমুণ্ডী । गुणाः —उष्णा तिक्ता रोचनी मेहहृत् रसायनी च । रा.नि.व.५ । कट्वी । वा.सू.१४।१५अ. । श्वेतमुण्डीर्य्याम् । च.चि.३अ. ।

**महाश्वासः** । पुं । श्वासरोगभेदे । হাঁপানি রোগ । तस्य लक्षणम् —"उद्धूयमानवातो यः शब्दवद्दुःखितो नरः । उच्चैः श्वसिति संरुद्धमत्तर्षभ इवानिशम् । प्रनष्टज्ञानविज्ञानः स्तब्धो विभ्रान्तलोचनः । निरुद्धाद्यानननो बद्धमूत्रवर्चा विशीर्णवाक् । दीर्घम्प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् । महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥" मा.नि. ।

**महाश्वेतघण्टी** । स्त्री । महाशणपुष्पीक्षुपे । वै.निघ. ।

**महाश्वेता** । स्त्री । वन्ध्याकर्कोटक्याम् । सु.सू.३७अ. । क्षीरविदार्य्याम् । प.मु. । कृष्णभूमिकुष्माण्डे । अम. । आस्फोतायाम् । হাপরমালী । श्वेतकटभीवृक्षे । रा.नि.व.६ । श्वेतापराजितायां । र.मा. । नीलापराजितायाम् । च.सू.४अ. । शुक्लारण्यशणी । शर्करायाम् । मधुशर्करायाम् । त्रिका. ।

**महाषष्टिकः** । पुं । षष्टिकधान्यभेदे । सु.सू.४६अ. । [शीर्यसेवफले । वै.निघ. ।

**महासंवितिकाफलम्** । क्ली । काविलदे-

**महासफरः** । पुं । पार्व्वतमत्स्ये । পাব্দা মাছ । बृहत्प्रोष्ठीमत्स्ये । गुणाः —तिक्तः पित्तकफघ्नः शीतलः मधुरः रुच्यः वातभूयिष्ठश्च । भा. ।

**महासमङ्गा** । स्त्री । स्वनामख्यातक्षुपविशेषे, वाट्यालकभेदे । हिं कगाहिया, खिरिह्टिरा । बम्. घोरविकणाभेद । गुणाः —मधुराम्ला त्रिदोषघ्नी ज्वरदाहघ्नी च । रा.नि.व.५ ।

**महासर्ज्जः** । पुं । असनवृक्षे । र.मा. । पनसवृक्षे । কাঁঠাল গাছ । रा.नि.व.११ । [४अ. ।

**महासर्पः** । पुं । दर्व्वीकरसर्पविशेषे । सु.कल्प.

**महासहः** । पुं । कलकवृक्षे, कौङ्कणदेशख्याति पुष्पवृक्षे । रा.नि.व.१० । शर्कोभिण्टाम्, कुरण्टके । भा. । स्त्री (हा) । माषपर्ण्यां । মাষানী । प.मु. । सु.चि.८अ. । वा.उ.२अ. । अम्लानवृक्षे । ঝাঁটি । रा.नि.व.६ । च.वि.८अ. । महाराजतरु-

ष्मीपुष्पवृक्षे । कैंटोमेउती । रा.नि.व.१० । म-हाबलायाम् । अतिबलायाम् । वै.निघ. ।

**महासारः** । पुं। विट्खदिरवृक्षे । रा.नि.व.८।

**महासिंहः** । पुं । शरभापरनामसिंहे । रा. नि.व.१९ । [वन शण । रा.नि.व.४ ।

**महासिता** । स्त्री । महाशणपुष्पीक्षुपे । श्वेत

**महासिद्धिकरः** । पुं । कृष्णवनालुके । वै. निघ. ।

**महासुखम्** । क्ली । मैथुने । त्रिका. ।

**महासुगन्धषट्कम्** । क्ली । चन्दनकस्तूरीक ... वै.निघ. ।

**महासुगन्धा (न्धिः)** । स्त्री । गन्धनाकुल्यां । रा.नि.व.७ ।

**महासुगन्धितैलम्** । क्ली। मेदोरोगे तैलम् । तिलतैलं ४ श. । कल्कार्थं—चन्दनं कुङ्कुमं वीर-णमूलं प्रियङ्गु एला गोरोचना कपितैलम् अगुरु मृगनाभिः कर्पूरं जयित्री जातीफलं कक्कोलं पूग फलं लवङ्गं नलुकं जटामांसी कुष्ठं रेणुकं तगरं मुस्तं नखी स्पृक्का गन्धर्वोलः नागदमनी ग्रन्थिपर्णी चोरकः शैलजम् एलबालुकं सरलकाष्ठं सप्तपर्ण त्वक् लाक्षा भूधात्री गन्धतृणं धातकीपुष्पं प्रपौण्ड रीकं शटी प्र. तो. । पाकार्थजलं १६ श. । তিলতৈল ৪ শ. । কল্কার্থ—রক্তচন্দন, কুঙ্কুম, বেণার মূল, প্রিয়ঙ্গু, এলাইচ, গোরোচনা, শিলারস, অগুরু, মৃগনাভি, কর্পূর, জয়িত্রী, জায়ফল, কক্কোল, গুপারি, লবঙ্গ, নলুকা, জটামাংসী, কুড়, রেণুক, তগর, নাগরমুতা, নখী, পিড়িং, গন্ধবোল, নাগদনা, গেঠেলা, চোরা, শৈলজ, এলবালুক, সরলকাষ্ঠ, ছাতিমছাল, লাহা, ভুঁই আমলা, গন্ধতৃন, ধাইফুল, পুণ্ডরিয়া, শটী প্রত্যেকে ২ তো. । জল ১৬ শ. । भा. । [१२ ।

**महासूक्ष्मा** । स्त्री । वालुकायाम् । रा.नि.व.

**महासोमः** । पुं । सोमलताभेदे । सु.चि.२९ अ. ।

**महासु(सौ)षिरः** । पुं । दन्तवेष्टगतरोगवि-शेषे । तत्र दन्तचालनतालुदारणदन्तमांसपूतित्वमु-खदौर्गन्ध्यादिकं भवति । लक्षणं यथा—"दन्ताश्च-लन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते । दन्तमांसानि पच्यन्ते मुखञ्च परिवाप्यते ॥" भा.म.४भ.मुखरो. चि. । अत्र सन्नराचान्मरणं भवतीति भोजः । "महासौषिर इत्येवं सन्नराचान्निहन्त्यसून् । सस-न्निपातज्वरवान् सपूयरुधिरस्रुतिः । महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ॥" वा.उ.२१अ. ।

**महास्कन्धा** । स्त्री । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ । [च. ।

**महास्नायुः** । स्त्री । रक्तवहमहानाड्याम् । है.

**महास्नेहः** । पुं। छर्द्दिचिकित्सायां स्नेहः । घृत ४ শ. । কল্কার্থ—রাস্না, জীবক (গুলঞ্চ), জীবন্তী, বেলেড়া, কণ্টিকারী, পুনর্নবা, বামনহাটী, শালপাণি, বচ, শুঁট, পিপুল, মরিচ প্রত্যেকে ৫।০ তো. দাবিমাত ১ শ. অম্লবর্গ যথালাভ গ্রহণ করিবে । वा.चि.६अ. । भूरि-स्नेहवत्त्वात् घृततैलवसामज्जसु । च.सू.१अ. ।

**महाहविः** । क्ली । गव्यघृते । श.चि. ।

**महाहिक्का** । स्त्री । तन्नामकहिक्कारोगविशेषे। लक्षणं यथा—"मर्म्माण्युत्पीडयन्तीव सततं या प्र-वर्त्तते । महाहिक्केति सा ज्ञेया सर्व्वगात्रप्रकम्पि-नी ॥" निदा. । [नि.व.७ ।

**महाहिगन्धा** । स्त्री । गन्धनाकुल्याम् । रा.

**महाह्रस्वा** । स्त्री । शूकशिम्ब्याम् । आलकु-शी । प.मु. । [वै.निघ. ।

**महाक्षारः** । पुं । सावान इति ख्याते द्रव्ये ।

**महाक्षीरा** । स्त्री । महिष्याम् निघ. ।

**महिका** । स्त्री । हिमे । अम

**महिञ्जकः** । पुं । मूषिके । वै.निघ. ।

**महिला** । स्त्री । रेणुकायाम् । রেণুকবীজ । रा.नि.व.६ । प्रियङ्गौ । अम. ।

**महिलाह्वया** । स्त्री । प्रियङ्गुलतायां । अम. ।

**महिषः** । पुं । स्वनामख्यातमहामृगजातीयपशु-विशेषे । महिष । हिं भैंस । तें दुन्नपोतु । स च ग्राम्यारण्यभेदेन द्विविधः । तयोर्वन्यमांसम् ईषल्लघु दीपनं बलदञ्च । ग्राम्यमांसं स्निग्धं निद्राकरं पि-त्तहरञ्च । रा.नि.व.१७ ।

**महिषकन्दः** । पुं । श्वेतालुके । रा.नि.व.७ ।

**महिष(षी)प्रिया।** स्त्री। गुलीदणे। रा.नि.व.८।

**महिषमत्स्यः।** पुं। मत्स्यविशेषे। तल्लक्षण-गुणाः--कृष्णः दीर्घकायः बलवान् महाशल्कश्च। तन्मांसं दीपनं बलवीर्य्यकरञ्च। रा.नि.व.१७।

**महिषमस्तकः।** पुं। शालिधान्यविशेषे। शालिधान। भा.पू.१भा.धा.व.। गुणाः—शालिवत्।

**महिषवल्ली।** स्त्री। स्वनामख्यातसोमवल्लीसम लताविशेषे। हिं छिरहिटी। मं महिषवेलि। कं ग्राम्यवल्लि। गुणाः--रसवीर्य्यविपाकेषु सोमवल्लीसमा। रा.नि.व.३। [रा.नि.व.१२।

**महिषासुरसम्भवः।** पुं। भूमिजगुग्गुली।

**महिषाक्षः (कः)।** पुं। स्वनामख्यातगुग्गुलु-विशेषे। महिषाक्ष गुग्गुल। गुग्गुली। प.मु.। रा.नि.व.१२। भा.म.४भ.। भगन्दरे। च.द. कुष्ठ.चि.। [मि।

**महिषी।** स्त्री। महिषस्त्रियाम्। औषधद्रव्ये।

**महिषीकन्दः।** पुं। स्वनामख्यातमहाकन्द विशेषे। महिषीकन्द। यस्मिंगड्ड इति अनुपदेशे प्रसिद्धः। गुणाः--कटूष्णः कफवातरोगघ्नः रोचनः मुखजाड्यघ्नश्च। रा.नि.व.७।

**महिषीघृतम्।** क्ली। महिषदुग्धोत्थघृते। देशज घि। गुणाः—"सवातपित्तशमनं सुशीतं माहिषं घृतम्। मधुरं गुरु विष्टम्भि बल्यं श्रेष्ठगुणात्मकम्॥" अत्रि.८अ.।

**महिषीतक्रम्।** क्ली। महिषीघोले। मइषेर घोल। गुणाः--"माहिषं कफकृत् किञ्चिद्धनं शोफकरं नृणाम्। शस्तं प्लीहार्शोग्रहणीदोषेऽतीसारिणामपि॥" अत्रि.८अ.।

**महिषीदधि।** क्ली। महिषीदुग्धोत्थदधनि। मइषेर दइ। गुणाः--"घनं माहिषमुद्दिष्टं मधुरं रक्तदोषकृत्। कफशोफहरं स्वस्थं पित्तकृद्वातकोपनम्॥" अत्रि.८अ.।

**महिषीदुग्धम्।** क्ली। महिषीक्षीरे। मइषेर दुध्। भैंषीदुध। कं याम्मियहालु। गुणाः--गौल्यं विपाके गुरु शीतलं बलदं पुष्टिदं हृष्यं पित्तदाहश्रमघ्नञ्च। रा.नि.व.१५। "स्निग्धं मधुकं शीतकरं च तन्द्रानिद्राकरं हृष्यतमं श्रमघ्नं। बलप्रदं पुष्टिकरं कफस्य सञ्जीवनं माहिषमुच्यते पयः॥" अत्रि.८अ.।

**महिषीमूत्रम्।** क्ली। महिषीजले। मइषेर मूत। गुणाः—"सरं सतिक्तं कटुकं कषायं प्रभेदि वातस्य शमं करोति। पित्तप्रकोपं कुरुते सदा च कुष्ठार्शपाण्डूदरशूलनाशम्॥" अत्रि.९अ.।

**मही।** स्त्री। गान्धारीवृक्षे। कटुक्यां। चिक्का। हिलमोचिकायाम्। हिंचे। चिक्का। गवि। जटा।

**महीकदम्बः।** पुं। भूकदम्बे सु.चि.१७अ.।

**महीजम्।** क्ली। आर्द्रके। रा.नि.व.६। पुं। वृक्षे। वै.निघ.।

**महीपदः।** पुं। किञ्चुलुके। केँचो। वै.निघ.।

**महीलता।** स्त्री। गण्डूपद्याम्। केँचो। अम.। [रा.नि.व.९।

**महीसहः।** पुं। शाकवृक्षे। शेगुन गाछ।

**महेन्द्रकदली।** स्त्री। कदलीवृक्षविशेषे। बुनो कला। गुणाः—उष्णा वातासृग्दरपित्तघ्नी च। रा.नि.व.११।

**महेन्द्रलोहम्।** क्ली। अगुरुकाष्ठे। वै.निघ.।

**महेन्द्रवारुणी।** स्त्री। महाकाललतायाम्। बड़ माकाल। मं वडिलइन्द्रवारुणी। कं हिरियहामेके। गुणाः—गुणैरिन्द्रवारुणीसमा। "रसे वीर्य्ये विपाके च किञ्चिद्दोषगुणाधिका।" रा.नि.व.३। इन्द्रवारुण्याम्। राखालशशा। वै.निघ.।

**महेन्द्राणी।** स्त्री। इन्द्रचिर्भट्याम्। श.र.।

**महेन्द्री।** स्त्री। महेन्द्रवारुणीलतायाम्। बड़ माकाल। रा.नि.व.३। [अम.अ.टी.भ.।

**महेर(रु)णा (रुहा)।** स्त्री। सल्लकीवृक्षे।

**महेलिका (ला)।** स्त्री। स्थूलैलायाम्। वै.निघ.। [श.च.।

**महेशबन्धुः।** पुं। श्रीफलवृक्षे। बेल गाछ।

**महेश्वरः।** पुं। श्वेतमन्दारे। विश्वकोषपर्य्यतरि। क्ली। स्वर्णे। रस.कौ.ज्वरान्तकरसे।

**महेश्वरी।** स्त्री। पर्वतिकालतायां। रा.नि.

व.३ । राजरीती । पितल विशेष । रा.नि.व. १३ । अपराजितायां । श.च. । कांस्ये । हे.च. ।

**महैरण्ड:** । पुं । स्थूलैरण्डे । रा.नि.व.८ ।

**महैला** । स्त्री । स्थूलैलायां । रा.नि.व.६ ।

**महोटिका (टी)** । स्त्री । बृहतीक्षुपे । ब्याकुड़ गाछ । रा.नि.व.४ । वार्त्ताकौ । वै.निघ. ।

**महोत्पलम्** । क्ली । कमले । रक्तपद्मे । पुं । सारसपक्षिणि । अम. ।

**महोदधिवटी** । स्त्री । अजीर्णाधिकारे औषधम् । पाठ: — "एकैकं विषसूतञ्च जातीटङ्गं द्विकं द्विकं । कृष्णाग्निकं विश्वघटकं तथा दग्धं कपर्दकं । देवपुष्पं बाणमितं सर्व्वं संमर्द्य यत्नत: । महोदधिवटी नाम्ना नष्टमाग्नं प्रदीपयेत् ॥" रस.र. ।

**महो(हौ)दनी** । स्त्री । शतावर्य्याम् । शतमूली । वै.निघ. ।

**महोदय:** । स्त्री । नागबलायाम् । रा.नि.व.४ ।

**महोदरम्** । क्ली । पिण्डीतगरे । वै.निघ. । स्त्री (री) । महाशतावर्य्यां । भा. ।

**महोद्रेक:** । पुं । महानिम्बे । वै.निघ. ।

**महोन्नत:** । पुं । तालवृक्षे । भा. । नारिकेल वृक्षे । धाराकदम्बे । वै.निघ. ।

**महोन्मद:** । पुं । मत्स्यविशेषे । फलुई माछ । श.र. । मदे । [महासर्पे ।

**महोरगम्** । क्ली । तगरपादिके । प.मु. । पुं ।

**महोक्ष:** । पुं । महावृषे । अम. । [वै.निघ. ।

**महौजसी** । स्त्री । तेजोवत्याम् । तेजबल ।

**महौषधम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ । भा.त्रिपुरभैरवरसे । च.द ज्व.चि.अष्टादशाङ्गे कषाये । "भूनिम्बदारुदशमूलमहौषधाब्द...... ।" भूम्याहुल्यै । रा.नि.व.४ । वत्सनाभविषे । श्वेतरसोने । वाराहीकन्दे । लशुने । रा.नि.व.७ । अतिविषायां । अम. । पिप्पल्याम् । श.च. ।

**महौषधि: (धी)** । स्त्री । लज्जालुकाक्षुपे । श.च. । श्वेतकण्टकार्य्यां । रा.नि.व.४ । ब्राह्मीक्षुपे । रा.नि.व.५ । अतिविषायां । कटुक्यां । रा.नि.व.६ । त्रिका. । वाराहीकन्दे । रा.नि.व.७ । हिलमोचिकायां । हिञ्चे । त्रिका. । नीलदूर्व्वायां । रा.नि.व.८ । अपराजितायाम् । आदित्यभक्तायाम् । हुड़हुड़िया । लशुने । वै.निघ. ।

**मक्षवीर्य्य:** । पुं । प्रियालवृक्षे । रा.नि.व.११ ।

**मक्षिका (क्षी)** । स्त्री । मधुमक्षिकायाम् । मौमाछि । कीटविशेषे । माछि । हिं मक्खी । त्रिका. । भा. । सा षड्विधा — कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिका चेति । ताभिर्दष्टे दाहशोफौ भवत: । स्थालिकाकाषायीभ्यामेतदेव पिड़काश्च सोपद्रवा भवन्ति । सु.कल्प. ८अ. । [नि.व.१३ ।

**मक्षिकामलम्** । क्ली । सिक्थके । मम । रा.

**मक्षिकाविट्** । स्त्री । मक्षिकामले । माछिर विष्ठा । वै.निघ. ।

**मांसम्** । क्ली । शरीरे रक्तजतृतीयधातौ । मांस । रा.नि.व.१८ । तत्तु गर्भस्थस्याष्टभिर्मासै: भवति । सुखबोध: । तत्स्वरूपं यथा — "शोणितं स्वाग्निना पक्वं वायुना च घनीकृतं । तदेव मांसं जानीयात् ··· ।" लेपश्च तत्कर्म्म । भा. । गुणा: — "सर्व्वं मांसं वातविध्वंसि वृष्यं बल्यं रुच्यं बृंहणं तच्च मांसं । देशस्थानात्मसंस्थं स्वभावै. भूयो नानारूपतां याति नूनम् ॥" इति साधारणदेशमांसगुणा: । रा.नि.व.१७ । मांसरससाधनं यथा — घने मांसरसे कर्त्तव्ये प्रस्थे जले मांसस्य द्वादशपलं दत्त्वा पक्तव्यम् । तदनु तनुके रसे कर्त्तव्ये मांसस्य षट्पलं पानीयं प्रस्थमात्रमेव दातव्यम् । अच्छतरे रसे कर्त्तव्ये प्रस्थे जले मांसस्य पलं दत्त्वा एतन्मांसं पिष्टा प्रस्थार्द्धशेषस्थितजलं पक्वा अनुरूपं स्थाप्यं वस्त्रेण छानयित्वा यूष: कार्य्य: । "द्रव्यतो द्विगुणं मांसं सर्व्वतो द्विगुणं पय: । पादस्थं संस्कृतं ह्येष: षड्ङ्गी यूष उच्यते । पलानि द्वादशप्रस्थे घनेऽथ तनुके तु षट् । मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे ॥" प.प्र.२ख. । त्याज्यमांसं यथा — तत्र पूतिशुष्कव्याधितविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मांसानि अभक्ष्याणि दोषकराणि च भवन्ति । "बालस्य वृद्धस्य कृशस्य रोगिणो विषाग्निदग्धस्य मृतस्य चाम्बुषु । त्याज्यं मृगादे: पिशितन्तु तस्य विगन्धि शुष्कञ्च चिरस्थितञ्च ॥" रा.नि.व.१७ । "मृतञ्च व्याधितं व्युष्ट

हृद्यं बालं विषैर्हतम्। अगोचरहतं व्याडं मृदितं मांसमुत्सृजेत् ॥" राज.३प.। उपादेयमांसं यथा —"स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गमेषु महाशरीरेषु अल्पशरीराः अल्पशरीरेषु महाशरीराः प्रधानतमाः। एवमेकजातीयानां महाशरीरेभ्यः कृशशरीरा प्रधानतमाः ॥" सु.सू.४६अ.। पुनः पूर्व्वभागो योषितोऽधोभागश्च गुरुः। पक्षिण उरोग्रीवं विशेषेण गुरु। सु.सू.४६अ। "गुरुभक्ष्या बहुभुजो ये चोपचितमेदसः। एकदेहेऽपि पूर्व्वार्द्धं मृगाणां पक्षिणां परम् ॥" तैलसिद्धमांसगुणाः— "मांसं यत्तैलसंसिद्धं वीर्य्योष्णं पित्तलं कटु। अग्निसन्दीपनं हृद्यं दृष्टिनुत् पुष्टिकृद्गुरु ॥" घृतसिद्धमांसगुणाः—"मांसन्तु घृतसंसिद्धं दृष्टिदं पुष्टिकृल्लघु। प्रीणनं सर्व्वधातूनां विशेषान्मुखशोषिणां ॥" शुष्कमांसगुणलक्षणे—"परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु। पित्तघ्नं बलमेधाग्निमांसौजःशुक्रवर्द्धनम्। मांसं बहुघृते पक्वं सिद्धञ्चोष्णाम्बुना मुहुः। जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते ॥" प्रदिग्धमांसलक्षणगुणाः —"तदेव घनतक्राढ्यं प्रदिग्धं स त्रिजातकम्। प्रदिग्धं बलमांसाग्निवर्द्धनं कफपित्तजित् ॥" राज.३प.। पुं। कीटे। श.र.।

**मांसकच्छपः**। पुं। तालुगतमुखरोगे। See कच्छपः। [कृत। वा.उ.।

**मांसकर्णी**। स्त्री। वरट्यादिकीटे। वकयाङ्गे।

**मांसकारि**। क्ली। रक्ते। हे.च.।

**मांसकीलकः**। पुं। तन्नामकगुह्यरोगभेदे। अर्शोभेदे वा। लक्षणं यथा —"अन्तर्वहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः। पिच्छिलास्रवा योनौ तद्वच्च छत्रसन्निभाः। तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्त्तवम् ॥" वा.उ.३३अ.।

**मांसकेशी** (इन्)। पुं। पादरोगभेदयुक्ते अश्वे। "केशाकाराणि मांसानि यस्य स्युस्तलजानि च। मांसकेशीति तं विद्यात्··· ॥" ज.द.३८अ.।

**मांसकोथः**। पुं। मांसगलने। वा.उ.२८अ.।

**मांसखुरः**। पुं। पादरोगविशेषयुक्ते अश्वे। लक्षणं यथा—"बहुमांसखुरश्चैव ज्ञेयो मांसखुरो हयः।" ज.द.३८अ.।

**मांसगज्वरः**। पुं। ज्वरविशेषे। तल्लक्षणम् —"पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता। ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगज्वरे ॥" चिकित्सा तीक्ष्णविरेचनादि। निदा.।

**मांसग्रन्थिः**। पुं। मांसजग्रन्थिरोगे। लक्षणम् —"मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत्। स्निग्धं महान्तं कठिनं शिरानद्धं कफाकृतिम् ॥" वा.उ.२९अ.। [नि.व.१२।

**मांसच्छदा**। स्त्री। मांसरोहिण्याम्। रा.

**मांसजम्**। क्ली। मेदोधातौ। हे.च.।

**मांसजातिः**। स्त्री। मृगविष्किरप्रतुदप्रसहविलेशयमहामृगजलचरमत्स्याद्यासु मांसजातिषु अष्टविधासु। प.मु.।

**मांसजालम्**। क्ली। जालवन्मांसे। मांसशिरा वा जालं। "चत्वारि मांसजालानि, तानि *मणिबन्धगुल्फसंश्रितानि परस्परसन्निबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम्··· ।" सु.शा.५अ.।*

**मांसतानः**। पुं। कण्ठगतमुखरोगभेदे। लक्षणं यथा —"प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण। स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्व्वकृतो विकारः ॥" सु.नि.१६अ.।

**मांसतेजः**। क्ली। मेदोधातौ। हे.च.।

**मांसदलनः**। पुं। क्षीरघृक्षे, रक्तरोहितकवृक्षे। श.च.। [वि.६।

**मांसद्रावी** (इन्)। पुं। अम्लवेतसे। रा.नि.

**मांसधरा**। स्त्री। तन्नामकप्रथमकलानाम्। "यस्यां मांसे शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति।" स्थूलापरनामसप्तमत्वचि। या व्रीहिद्वयप्रमाणा भवति। सु.शा.४अ.।

**मांसपचनम्**। क्ली। मांसपाके। सु.।

**मांसपाकः**। शुक्ररोगविशेषे। लक्षणं यथा— "शीर्य्यन्ते यत्र मांसानि यत्र सर्व्वाश्च वेदनाः। विद्यात्तं मांसपाकन्तु सर्व्वदोषकृतं भिषक् ॥" सु.नि.१४अ.।

**मांसपुष्टिका**। स्त्री। भ्रमरारिपुष्पवृक्षे। भ्रमरमारी इति मालवे प्रसिद्धा। रा.नि.व.१०।

**मांसपेशी**। स्त्री। मांसवर्त्तौ। मांसस्यैव भि

दः। सु.मृ.८अ.। "बुद्बुदः सप्तरात्रेण मांसपेशी भवेत्ततः। द्विसप्ताहात् भवेत् पेशी रक्तमांसचिता दृढा। बीजस्यैवाङ्कुराः पेश्यः पञ्चविंशतिरात्रतः॥" सुखबोधः। मांसपेशीराह—"यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥" मांसपेश्यः शरीरे पञ्चशतसंख्यकाः। तासां चतुःशतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवाया ऊर्द्धगाश्चतुस्त्रिंशत्। स्त्रीणान्तु विंशत्यधिकपञ्चशतानि। ताश्च गर्भाशयगर्भमार्गयोनिनालेषु तिष्ठन्ति। पेशीनाञ्च कर्म्माणि—देहिनां शिरास्नायुस्थिपर्व्वसन्धयः पेश्यावृताः सबला भवन्ति। शाखासु तत्संख्या यथा—पादाङ्गुलीषु १५। पादाग्रे १०। पादोपरिकूर्च्चसन्निविष्टाः १०। गुल्फतलयोः १०। गुल्फजानुनोरन्तरे २०। जानुनि ५। ऊरौ २०। वङ्क्षणे १०। एवमेकत्र सक्थिनि १००। एतेनेतरसक्थिबाहू व्याख्यातौ। कोष्ठेषु यथा गुदे ३। शेफसि १। सेवन्यां १। वृषणयोः २। स्फिचोः १०। वस्तिमूर्द्धनि २। उदरे ५। नाभौ १। पृष्ठोर्द्धोभयतः पञ्च पञ्च दीर्घाः १०। पार्श्वयोः ६। वक्षसि १०। अक्षकांसौ प्रति समन्तात् ७। हृदि २। यकृति २। प्लीह्नि २। उण्डुके २। ग्रीवोर्द्धे यथा—ग्रीवायां ४। हन्वोः ८। कण्ठमण्यौ १। गले १। तालुनि २। जिह्वायां १। ओष्ठयोः २। नासायां २। नेत्रयोः २। गण्डयोः ४। कर्णयोः २। ललाटे ४। शिरसि १। स्त्रीणां अधिका विंशतिः यथा—गर्भाशये ३। शुक्रार्त्तवप्रवेशिन्यां ३। योनावभ्यन्तरे मुखाश्रिते प्रसृते २। योनिकर्णिके २। स्तनयोः १०। इति। भा.। सु.शा.५अ.। [गाछ। रा.नि.व.७।

**मांसफलः**। पुं। तरम्बुजवल्याम्। तरमुज

**मांसफला**। स्त्री। वार्त्ताक्याम्। रा.नि.व.७।

**मांसरक्ता**। स्त्री। रोहिण्याम्। मांसरोहिणी। वै.निघ.।

**मांसरज्जुः**। स्त्री। मांसनिबन्धनरज्जौ। ताः चतस्रः। "महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे।" सु.शा.५अ.।

**मांसरसः**। पुं। मांसयूषे। मांसेर झोल। गुणाः—"रसो मांसस्य चक्षुष्यो बृंहणः प्राणवर्द्धनः। हृद्यो वातविकारघ्नः शुक्रौजःस्वरवर्द्धनः। भग्नविश्लिष्टसन्धीनां कृशानां व्रणिनां हितः॥" राज.३प.। तत्पाकविधिः—मांसं १ प. जलं १६ प. शे. ४ प.। यवागूकर्म्मणि—मांसं ४ प. जलं ६४ प. शे. १६ प.। "प्रस्थेऽम्भसि पलं साध्यं मांसं पादस्थिते रसः। कंसाम्बु कुडवं मांसं पक्त्वा पादावशेषिते। तेन क्वाथेन विपचेत् यवागूर्योक्तकर्म्मसु॥" नलः। [व.१२।

**मांसरुहा**। स्त्री। मांसरोहिण्याम्। रा.नि.

**मांसरोहा (ही)**। स्त्री। मांसरोहिण्यां। रा.नि.व.१२। [रा.नि.व.१२।

**मांसरोहिका**। स्त्री। मांसरोहिणीभेदे।

**मांसरोहिणी**। स्त्री। स्वनामख्यातसुगन्धद्रव्ये। मांसरोहिणी। सा द्विधा परं तुल्यगुणा। गुणाः—शीता कषाया क्रिमिघ्नी कण्ठशोधनी रुच्या वातदोषहरी च। रा.नि.व.१२।

**मांसलः**। पुं। माषनामशिम्बीधान्ये। माषकलाइ। रा.नि.व.१६।

**मांसलफला**। स्त्री। वार्त्ताकी। रा.नि.व.७। तरम्बुजे। वै.निघ.।

**मांसलिप्तम्**। क्ली। अस्थनि। वै.निघ.।

**मांसवर्गः**। पुं। जलेशयानूपग्राम्यक्रव्यभुगेकशफजाङ्गलेषु। विशेषास्तत्तच्छब्दे द्रष्टव्याः। सु.सू.४६अ.।

**मांसवहस्रोतः**। क्ली। मांसनायकनाड्यां। तस्य मूलं स्नायुः त्वक् च। च.वि.५अ.।

**मांसवारुणी**। स्त्री। हरिण्यादिमांसकृतवारुणीमद्ये। तत्करणविधिः—एण्यादिमांसन्तु कण्डशः कृत्वा पूर्व्वद्रवे न्यसेत्। संस्थाप्य मण्डलं पश्चादर्के निष्काशयेत्ततः। एवं सर्व्वत्र मांसस्य वारुणीकरणक्रिया। पूर्व्वद्रव्यः तक्रादि। मण्डलं ४८ दिनानि। रावणः।

**मांससङ्कोचः**। पुं। मांसस्य शठितभावे। भा.म.४भ.विस्फोट.चि.। "तट्श्वासमांससङ्कोचः।"

**मांससङ्घातः**। पुं। तालुरोगविशेषे। तत्र तालुमध्ये श्लेष्मणा दुष्टः अवेदनो मांससङ्घातो जायते। "दुष्टं मांसं श्लेष्मणा नीरुजञ्च तात्वन्तःस्थं मांससङ्घातमाहुः।" भा.म.४भ.मु.रो.चि.।

**मांससमुद्भवा** । स्त्री । वसायाम् । वै.निघ. ।

**मांससर्पिः** । पुं । राजयक्ष्मणि घृतम् । विलेशयप्रसहमांसं १२॥० श. जलं १२८ श. शे. १६ श. । घृतं ४ श. । कल्कार्थं जीवनीयगणः प्रत्येकं १ प. । एकत्र पाच्यम् । वा.चि.५अ. ।

**मांससारः** । पुं । मेदोधातौ । रा.नि.व.१८ ।

**मांसस्नेहः** । पुं । मेदोधातौ । रा.नि.व.१८ । वसायाम् । वै.निघ. ।

**मांसहासा** । स्त्री । चर्मणि । श.र. ।

**मांसाङ्कुरः** । पुं । अङ्कुरवन्मांसेषु, अर्शोबलौ । मा.नि. ।

**मांसारिः** । पुं । अम्लवेतसे । वै.निघ. ।

**मांसार्व्बुदम्** । क्ली शुक्ररोगविशेषे । "मांसदोषेण जानीयादर्व्बुदं मांससम्भवम् ।" सु.नि.१४ अ. । अर्व्बुदविशेषे । मांसजअर्बुद । लक्षणं —"अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् । प्रदुष्टमांसस्य नरस्य बाढ़मेतद्भवेन्मांसपरायणस्य । मांसार्व्बुदं त्वेतदसाध्यमुक्तम् ।" सु.नि. ११अ. । [वा.उ.३७अ. ।

**मांसावद(दा)रणम्** । क्ली । मांसभेदने ।

**मांसिका** । स्त्री । जटामांस्यां । चि.क्र.क.स्त्रीरो.चि. ।

**मांसिनी** । स्त्री । जटामांस्यां । रा.नि.व.१२ ।

**मांसी** । स्त्री । मुरामांस्याम् । च.द.यक्ष्म.चि. चन्दनादितैले । वाय्यालके । नेटलड़ा । र.मा. । जटामांस्यां । रा.नि.व.१२ । सु.सू.३८अ. । च.द. ज्व.चि.अङ्गारकतैले । वा.सू.१५अ.एलादिः । मांसरोहिणीभेदे । रा.नि.व.१२ । रुदन्त्याम् । काकोल्याम् । मे. ।

**मांसेष्टा** । स्त्री । वल्गुलायाम् । रा.नि.व.४ ।

**मांसौदनम्** । क्ली । मांससिद्धौदने । गुणाः —"मांसौदनं धातुवृद्धिकरं स्निग्धं गुरु स्मृतम् ।" वै.निघ. । च. ।

**मांस्याह्वया** । स्त्री । जटामांस्यां । सु.चि.२अ. ।

**माकन्दः** । पुं । आम्रवृक्षे । भा. ।

**माकन्दी** । स्त्री । स्वनामख्यातपत्रशाकवृक्षे । मायिनी । कं मागिनी । गुणाः— कटु तिक्ता मधुरा किञ्चिद्वातला दीपनी रुच्या पथ्या वर्षासु न सिताधिका च । रा.नि.व.७ । आमलकीवृक्षे । मे. । पीतचन्दने । श.मा. । [र.मा. ।

**माकरा** । स्त्री । मरुवकवृक्षे । मकराफल गाछ ।

**माकुलिः** । पुं । कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जाते सर्पे । सु.कल्प.४अ. ।

**मागधम्** । क्ली पिप्पलीमूले । सौवर्च्चललवणे । वै.निघ. । पुं । स्थूलजीरके । प.मु. । जीरके । रा.नि.व.६ । शुक्लजीरके । मे. । [व्या.चि. ।

**मागधिका** । स्त्री । पिप्पल्याम् । वै.निघ.वा.

**मागधिमूलम्** । क्ली । पिप्पलीमूले । प्र. बाहुशालगुड़े द्रष्टव्यम् ।

**मागधी** । स्त्री । पिप्पल्यां । प.मु. । रा.नि.व. ६।२३ । भैष.मृतसञ्जीवन्यां । शर्करायां । जटा. । सूक्ष्मैलायां । यूथिकायां । श्वेत यूँई । रा.नि.व. १० । जीरके । रा.नि.व.२३ । शतपुष्पाविशेषे । वै.निघ. । शालिधान्यविशेषे । सा च कफवातला । अ.चि.१५अ. ।

**मागधीजटा** । स्त्री । पिप्पलीमूले । वै.निघ. ।

**मागधीशिफा** । स्त्री । पिप्पलीमूले । सर्व्वज्व.चि.त्रिभुवनकीर्त्तिरसे ।

**मागधेया** । स्त्री । स्वर्णजीवन्त्यां । वै.निघ. ।

**माघमा** । स्त्री । कर्कटे । वै.निघ. ।

**माघवती** } **माघोनी** } स्त्री । पूर्व्वदिशि । रा.नि.व.२१ ।

**माघ्यम्** । क्ली । कुन्दपुष्पे । कुँद फुल । र.मा. ।

**माङ्गल्यम्** । क्ली । स्वर्णे । कपित्थफले । दधनि । नारिकेले । जीवके । स्थलपद्मे । मसूरके । मधुके । रा.नि.व.२३ । पिप्पलीमूले । रीठाकरञ्जे । ऋषभके । हरिद्रायां । वै.निघ. ।

**माङ्गल्यः** । पुं । विल्ववृक्षे । र.मा. ।

**माङ्गल्यकाया** । स्त्री । दूर्व्वायाम् । हरिद्रायाम् । ऋद्धौ । माषपर्ण्याम् । गोरोचनायां । हरीतक्याम् । वै.निघ. । [निघ. ।

**माङ्गल्यकुसुमा** । स्त्री । शङ्खपुष्प्याम् । वै.

**माङ्गल्यप्रवरा** । स्त्री । वचायाम् । वै.निघ. ।

**माङ्गल्या** । स्त्री । गोरोचनायाम् । शमीवृक्षे । जीवन्त्याम् । वै.निघ. ।

**माङ्गल्यागुरुः** । पुं । अगुरुभेदे । केदारदेशे प्रसिद्धः । गुणाः—शीतगुणः स सुगन्धिर्योगवाहः श्रेष्ठश्च । रा.नि.व.१२ । [व.५ ।

**माङ्गल्यार्हा** । स्त्री । त्रायमाणायाम् । रा.नि.

**माचिका** । स्त्री । आम्रातकवृक्षे, मोइया इति पश्चिमदेशप्रसिद्धवृक्षे । गुणाः—"…अम्ला रसे पाके कषाया शीतला लघुः । पक्वातीसारपित्तास्र कफकण्ठामयापहा ।" भा. । पाठायां । आक्नादि । च.चि.८अ । मक्षिकायाम् । त्रिका. ।

**माची** । स्त्री । काकमाचीक्षुपे । गुड़काउँणी । वै.निघ. ।

**माचीकम्** । क्ली । देवदारुणि । रस.र.प्रद. चि.पथ्यानगचूर्णे । [रा.नि.व.१० ।

**माचीपत्रम्** । क्ली । सुरपर्णनामपत्रशाके ।

**माजलः** । पुं । चासनामकपक्षिविशेषे । श.च. ।

**माञ्जारिकः** । पुं । अपामार्गक्षुपे । रा.नि.व.४ ।

**माटी** । स्त्री । पर्णदलशिरायाम् । पानेर शिरा । वै.निघ. । [वै.निघ. ।

**माठः** । पुं । सुनिषण्णकशाके । शुशुनि शाक ।

**माड़ः (द्रुमः)** । पुं । स्वनाम्ना कोङ्कणदेशप्रसिद्ध वृक्षविशेषे । बम्. भेलीमाड़ । मं माडु । कं बैनी । कोङ्कणी बिर्लतुडु । गुणाः—शिशिरः कषायः रूक्षः पित्तदाहकरः तृषाघ्नः वातलः श्लेष्मलः श्रमघ्नश्च । रा.नि.व.९ । नारिकेलवृक्षे । वै.निघ. ।

**माढ़िः (ढ़ी)** । स्त्री । पत्राङ्कुरे । दन्तवेष्टभागे । अ.टी.भ. । पर्णशिरायाम् । हे.च. । दन्तशिरायां । श.र. ।

**माणः (कः)** । पुं । (Arum Indicum.) स्वनामख्याते कन्दविशेषे । मानकचू । प.मु. । हिं बम्. मानकन्द । गुणाः—"माणकः स्यान्महापत्रः कथ्यते तद्गुणा अथ । माणकः शोथहृच्छीतः पित्तरक्तहरो लघुः ॥" भा.पू.१भ.शा.व. ।

**माणकघृतम्** । क्ली । शोथे घृतम् । "माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्… ।" घृतं ४ श. । क्वाथार्थे—माण १२॥० श. जलं ६४ श शे. १६ श. माणकल्कः १ श. । भा. ।

**मागनुगिरुकः** । पुं । जलचरपक्षिविशेषे । च.सू.२७अ. ।

**माणवकः** । पुं । सप्तवर्षीयबालके । रा.नि.व.१८ । द्वीपान्तरखर्जूरिकायाम् । वै.निघ. । मनुष्ये । हारभेदे । त्रिका. । कुत्सितपुरुषे । मे. । बटौ । हे.च. । गौणके । च.नि.१५अ. । [श.मा. ।

**माणिका** । स्त्री । पलाष्टकमाने । प.प्र.१ख. ।

**माणिक्यम्** । क्ली । रक्तवर्णरत्नविशेषे । माणिक । गुणाः—मधुरं स्निग्धं वातपित्तघ्नं रसायनञ्च । रा.नि.व.१३ । "शुध्येदम्लेन माणिक्यं जयन्त्या मौक्तिकन्तथा । विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतस्तथा । पद्मरागन्तु सन्धानैः कुलत्थक्वाथसंयुतैः । तण्डुलीयरसैर्वज्रं नीलं नीलीरसेन च । रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलैः । स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च । मणिमुक्ताप्रवालादि यामैके शोधितं भवेत् । चूर्णोदके तथा तैले काञ्जिके याममात्रकम् । दोलायन्त्रेण मतिमान् स्वेदयेत्तालकं वरम् । अनेन शुद्धिमायाति सत्यं गुरु वचो यथा ॥" इति शोधनमारणे । सा.कौ. । [भा. ।

**माणिक्यकदली** । स्त्री । कदलीविशेषे ।

**माणिबन्ध(मन्थ)म्** । क्ली । सैन्धवलवणे । अ.टी.स्वा. । रा.नि.व.६ । वै.निघ.२भ.अभिन्यासज्व.चि. । सामुद्रलवणे । वै.निघ. ।

**माण्डविकः** । पुं । तद्देशजमध्यमाश्वे "कैकनाकारदेहस्तु भवेन्माण्डविको हयः ।" ज.द.६अ. ।

**माण्डव्यः** । पुं । पीतमण्डूके । वै.निघ. ।

**माण्डूकम्** । क्ली । वज्रधात्री । रा.नि.व.१३ । अहिफेने । भैष.अभयनृसिंहरसे ।

**माण्डूकी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**मातङ्गः** । पुं । अश्वत्थवृक्षे । अ.टी. । हस्तिनि अम. । उदुम्बरवृक्षे । वै.निघ. ।

**मातङ्गकृष्णा** । स्त्री । गजपिप्पल्याम् । वै.निघ.२भ.वा.व्या.पञ्चवध-चि. ।

**मातङ्गमकरः** । पुं । महामत्स्यविशेषे । हुङ्गिमकर । रा.नि.व.१९ ।

**मातरः** । पुं । क्रमी । वै.निघ. ।

**माता** । स्त्री । जनन्यां । अम. । आखुकर्णीलतायां । मूषाकाणी लता । इन्द्रवारुणीलतायां । राखालशशा । रा.नि.व.३ । जटामांस्याम् । रा.नि.व.१२ । महाश्रावणिकायाम् । रा.नि.व.५ । भूतकुमार्य्याम् । वै.निघ. । गवि । मे. ।

**माताङ्गा** । स्त्री । नागबलायाम् । वै.निघ. ।

**मातुलः (कः)** । पुं । धुस्तूरक्षुपे । धुतुरा गाछ । मदनवृक्षे । कलायविशेषे । मे. । रा.नि.व.१० । त्रिका. । [शिमुल गाछ । वै.निघ. ।

**मातुलद्रुमः** । पुं । धुस्तूरवृक्षे । शाल्मलीवृक्षे ।

**मातुलपुत्रकः** । पुं । धुस्तूरफले । श्वेत धुतुरार फल । अम. ।

**मातुलपुष्पम्** । क्ली । धुस्तूरपुष्पे । वै.निघ. ।

**मातुलानी** । स्त्री । प्रियङ्गुलतायाम् । श.च. । शणबीजे । हे.च. । भङ्गायाम् । सिद्धि । कलाये । मे. । [केउटिया साप । अम. ।

**मातुलाहिः** । पुं । सर्पविशेषे । मालुया साप,

**मातुली** । स्त्री । शणबीजे । भङ्गायां । श.च. ।

**मातुलुङ्गः (कः)** । पुं । (Citrus medica.) छोलङ्गवृक्षे । टावा लेबुर गाछ । हिं बीजौरा । मं माहुलिङ्ग । कं मादला । तें मादीफलपुचेट्ट । उत्. कलंबा । प.मु. । सु.सू.३६अ. । च.द.ज्व.चि. । "अरुचौ मातुलुङ्गस्य केशरम् ।" च.सू.४अ. । गुणाः —"स्यान्मातुलुङ्गः कफवातहन्ता हन्ता क्रमीणां जठरामयघ्नः । स दूषितरक्तविकारपित्तसन्दीपनः शूलविकारहारी ॥" तत्फलगुणाः—"श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनं । दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम् ॥" अम्लकटूष्णं श्वासकासघ्नं पाचकं कण्ठशोधनं दीपनं लघु हृद्यं रुचिकृच्च । तच्च फलं बालं वातपित्तकफरक्तकरं । मध्यं फलं तादृशमेव । पक्वं फलं वर्णकरं हृद्यं पुष्टिकरं बलकरं शूलहरम् अजीर्णनाशनं विबन्धवातकफश्वासाग्निमान्द्यहरं कासारोचकशोफघ्नञ्च । त्वक् तिक्ता दुर्जरा क्रमिकफवातघ्नी च । तत्करहं स्वादु शीतं गुरु स्निग्धं वातपित्तहरञ्च । तन्मध्यमुष्णं शूलपित्तहरमरोचकघ्नञ्च । तत्केसरं दीपनं लघु संग्राहि गुल्मार्शोघ्नञ्च । तत्पक्वकेसरं पित्तमारुतघ्नं हृद्यं वर्णकरं रुच्यं रक्तमांसबलदञ्च । स्वरसः अरुचौ श्वासकासयोश्च हितः । तथा शूले अजीर्णे मन्दाग्नौ वातकफे च हितः । तत्कटाहः कफकृत् दुर्जरश्च । तत्पुष्पं तिक्तम् । वीजं गुल्मघ्नम् । अत्रि.१६अ. । तत्केसरं वातघ्नम् उदररोगघ्नं दीप्यमम्लञ्च । वीजम् तिक्तं कफार्शःशोथहरञ्च । रा.नि.व.११ । तन्मांसं बृंहणं शीतलं गुरु वातपित्तजिच्च । केसरः लघुः संग्राही शूलगुल्मोदरघ्नश्च । च.द.पि.ज्व.चि.कण्ठतालुशोषलेपे । "केसरं मातुलुङ्गस्य ।" च.द.वातश्लेष्मज्व.चि. । "मातुलुङ्गफलकेशरो घृतः ।" वीजम् उष्णं क्रमिश्लेष्मवातघ्नं गर्भदं गुरु च । पुष्पं वातलं ग्राहि लघु रक्तपित्तहरं शूलाजीर्णविबन्धाग्निमान्द्ये हितम् । तद्रसः अरुचिश्वासकासेषु हितः अतिमधुरः हृद्यश्च । मद.व.६ ।

**मातुलुङ्गशिफा** । स्त्री । मातुलुङ्गमूले । छोलङ्ग लेबुर मूल । च.द.कफज्व.चि. । "मातुलुङ्गशिफाविश्व··· ।"

**मातुलुङ्गा (ङ्गिका,ङ्गी)** । स्त्री । जम्बीरभेदे । शरबती लेबु । हिं शाल्गारा । रा.नि.व.११ । भा.म.३भ.मू.घा.चि. । सि.यो.विमू.चि.प्रमौलिकाद्यञ्जने ।

**मातृकः** । पुं । ऋषभके । प.मु. । स्त्री (का) । ऋषभके । आटरुषके । वै.निघ. ।

**मातृकाकुन्दः** । पुं । शिशोर्गुदजव्रणविशेषे । वा.उ.२अ. । See गुदकुन्दः ।

**मातृकावहः**
**मातृवाहकः** } पुं । पतङ्गकीटे । পোদো পোকা । "मातृकावहकीटजः ।" प्रयोगा. । च.द.ग.ग.चि. ।

**मातृनन्दनः (न्दी(इन्))** । पुं । महाकरञ्जे । वै.निघ. । गुच्छकरञ्जवृक्षे । रा.नि.व.६ ।

**मातृनिन्दकः** । पुं । प्रतुदजातीयपक्षिणि । सु.सू.४६अ. ।

**मातृमण्डलम्** । क्ली । नेत्रयोर्मध्यभागे । तत् आसन्नमरणो न पश्यति । स्मृतिः । [नि.व.१६ ।

**मातृवाहिनी** । स्त्री । वल्गुलापक्षिणि । रा.

**मातृसिंही** । स्त्री । वासकवृक्षे । श.र. ।

**मात्रा** । स्त्री । अनपायिपरिमाणे । च.सू.१अ.। भोजनादिपरिमाणे । कालपरिमाणे । अम. । द्रव्यविशेषे मात्रामाह पुष्कलावत:—"आर्द्रस्याष्टपला मात्रा कुडवस्य प्रमाणत: । मधुतैलघृतादेश्च शुष्कद्रव्ये चतुष्पलम् ॥" विश्वामित्र:—"मुद्गगुग्गुलुवाह्लीक त्रिफलारिष्टनागरै: । कुष्माण्डार्द्रकनिम्बानां कुडवस्याष्टभि: पलै: ॥" "सर्पि: खण्डजलक्षौद्रतैलक्षीरासवादिषु । अष्टौ पलानि कुडवो नारिकेले च शस्यते ॥" सा.कौ. । तथाच भेद: । "गुडरामठशुण्ठीनां मांसकुष्माण्डयोरपि । गुडूच्या गुग्गुलोश्चैव प्रस्थ: षोडशभि: पलै: ॥" भोज:—"यस्तूर्णं गुटिकायाश्च कर्त्तव्या गुल्मरोगिणाम् । क्षीरहिङ्ग्वजमोदाम्लवेतसैस्ता न केवला: ॥ क्रोष्टुशीर्षादिरोगेषु जटायुर्हिंगणो मत: । प्रमेहादिषु रोगेषु मात्रातोऽर्द्ध: प्रशस्यते ॥"

**मादक:** । पुं । अहिफेणे । আফিং । प.मु. । हरिणभेदे । वै.निघ. । दात्यूहपक्षिणि । श.मा. । स्त्री (का) । भङ्गायाम् । সিদ্ধি, ভাঙ্ । वै.निघ. ।

**मादनम्** । क्ली । लवङ्गे । रा.नि.व.२३ । पुं । मदनवृक्षे । त्रि । मदजनके ।

**मादनी** । स्त्री । माकन्याम् । रा.नि.व.७ । विजयायाम् । সিদ্ধি । भा. ।

**मादिनी** । स्त्री । शक्राशने । সিদ্ধি । वै.निघ. ।

**माद्री** । स्त्री । कृष्णातिविषायाम् । কাল আতইচ । रा.नि.व.६ । वा.चि.८।१२अ. । वा.उ.२अ. ।

**माधव:** । पुं । कृष्णमुद्गे । प.मु. । रा.नि.व.१६ । वैशाखमासे । त्रिका. । मधूकवृक्षे । वसन्तकाले । जीरकवृक्षे । क्ली । मधूकमर्दे । वै.निघ. । च.द. सात्म्य.चि. । [सकौमुदीकारे च ।

**माधवकर:** । पुं । रुग्विनिश्चयग्रन्थकारे । र-

**माधवद्रुम:** । पुं । आम्रवृक्षे । रा.नि.व.११ ।

**माधवप्रियम्** । क्ली । पीतचन्दने । रा.नि.व. १२ । [भ. ।

**माधविका** । स्त्री । माधवीलतायां । अ.टी.

**माधवी** । स्त्री । माधवीलतायां । रा.नि.व.१० । शतावर्याम् । रा.नि.व.४ । वासन्तीपुष्पवृक्षे । रा.नि.व.१०।२३ । शतपत्रे । रा.नि.व.२३ । मधुशर्करायाम् । रा.नि.व.१४।२३ । तुलसीवृक्षे । वाराहीकन्दे । माध्वीसुरायाम् । वै.निघ. । मद्ये । त्रिका. ।

**माधवीमूलम्** । क्ली । माधवीलतामूले । र.स.र.स्तनरो.चि. । "घोलेन माधवीमूलं पीतं स्त्रीमध्यकार्श्यकृत् ।"

**माधवीलता** । स्त्री । स्वनामख्यातलतायां । মাধবী ফুলের গাছ । गुरुविन्द, माधवी, इन्द्रगोचे, इति महाराष्ट्रकर्णाटदेशयो: प्रसिद्धा । तैं माधवलागे, पुव्वुलगुरिविन्द । गुणा:—कटुका तिक्ता कषाया मदगन्धयुक्ता पित्तकासव्रणघ्नी दाहशोषघ्नी च । रा.नि.व.१० । मधुरा शीता लघ्वी दोषत्रयघ्नी च । भा. । [वै.निघ. ।

**माधवेष्टा** । स्त्री । वाराहीनाममहाकन्दशाके ।

**माधवोचितम्** । क्ली । कक्कोले । रा.नि.व. १२ । [গাছ । रा.नि.व.११ ।

**माधवोद्भव:** । पुं । राजादनीवृक्षे । ক্ষীরী

**माधुतैलिक:** । पुं । तन्नामकवस्तिविधौ । सु. चि.३८अ. ।

**माधुरम्** । क्ली । मल्लिकापुष्पे । त्रिका. ।

**माधुरी** । स्त्री । अजमोदायां । रा.नि.व.६ । द्राक्षासवे । मधुरतायाम् । वै.निघ. ।

**माधूकसार:** । पुं । मधूकपुष्परसे मधुनि वा । মউলফুলের রস বা মধু । वा.सू.१५अ. शिरोविरेचने ।

**माध्वकम्** । क्ली । माध्वीके । वै.निघ. ।

**माध्वाम्र:** । पुं । बहुरसाल्पाम्रवृक्षे । খাস আমের গাছ । रा.नि.व.११ ।

**माध्वी** । स्त्री । मधुखर्जूरीवृक्षे । रा.नि.व.११ । मधुरकण्टकमत्स्ये । श.र. । पुष्परसादिमधुकृते मद्ये । "पुष्पद्रवादिमधुसारमया तु माध्वी ।" गुणा:—मधुरा हृद्या वातपित्तहृत् नात्युष्णा पाण्डुकामलागुल्मार्शोमेहघ्नी च । रा.नि.व.१४ । पुष्परसे । मधुशर्करायाम् । वै.निघ. । मद्ये । त्रिका. ।

**माध्वीकम्** । क्ली । मध्वासवे । च.द.सात्म्य-चि. । मधूकपुष्पकृतमद्ये । अम. । मद्ये । रा.नि.व.१४ । द्राक्षाकृतमद्ये । দ্রাক্ষামদ্য, পোর্ট । गु-

का: —"माध्वीकं शीतलाम्लं मधुरमपि तथा संक षायीशकञ्च हन्यात् पित्तामयार्शःश्वसनमपि तथा चातिसारं प्रमेहान्। शूलानाहोपमर्द्दं जरयति सकलं दीपयत्यग्निमान्द्यम् तस्माद्वातामवातं व-मनमपि तथा हन्ति सर्व्वांश्च रोगान्॥" अत्रि. १६अ.। पुं। निष्पावे। शिम्। प.मु.। त्रिका.।

**माध्वीकफलः** । पुं। मधुनारिकेलवृक्षे। रा.नि.व.११। [रा.नि.व.१६।

**माध्वीका** । स्त्री। श्वेतनिष्पावे। শ্বেত শিম্।

**माध्वीमधुरा** । स्त्री। मधुखर्ज्जूरिकायां। रा.नि.व.११।

**माध्वीशर्करा** । स्त्री। मधुशर्करायाम्। म-धु। চিনি। ता अष्टविधा मधूनामष्टविधत्वात्। गुणा अपि तत्तन्मधुतुल्या भवन्ति। रा.नि.व.१४।

**माध्वीसिता** । स्त्री। मधुशर्करायाम्। रा.नि.व.१४।

**मानम्** । क्ली। परिमाणे। পরিমাণ, ওজন। "मानाधीनितमात्राभ्यां भेषजानां प्रकल्पनम्। मे-निरे यततो मानमुच्यते परिभाषिकम्॥" तच्च द्विविधं कालिङ्गमागधभेदेन। तयोर्हिमेयं श्रे-ष्ठम्। "कालिङ्गान्मागधं श्रेष्ठम्।" इति। "तुला पलशतं ज्ञेया सर्व्वत्रैव विनिश्चयः। माषटङ्काचवि-ल्वानि कुडवः प्रस्थ आढकः। राशिर्द्रोणी खारि रिति यथोत्तरचतुर्गुणाः। गुञ्जादिमानमारभ्य या-वत् स्यात् कुडवस्थितिः। द्रवार्द्रशुष्कद्रव्याणां ताव-न्मानं समं मतम्। प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयोः। मानं तथा तुलायाश्च द्विगुणं न क-चित् स्मृतम्॥" प.प्र.१ख.।

**मानकम्** । क्ली। शरावे। ১ সের। वै.निघ. ज्व.चि.चन्दनाद्यतैले। पुं। माणके। मानकचु। र.मा.। मालाकन्दे। वै.निघ.। [भैष.।

**मानकक्षारः** । पुं। माणकदण्डपत्रक्षारे।

**मानतः** । पुं। पर्पटके। ক্ষেৎপাবড়া। वै.निघ.।

**मानद्रुमः** । पुं। शाल्मलीवृक्षे। वा.सू.१५अ. प्रियङ्ग्वादिव.। "मानद्रुमो मोचरसः।"

**मानधानिका** । स्त्री। चपुष्याम्। शशा, কাঁকুড়। श.मा.।

**मानभाण्डम्** । क्ली। परिमाणभाण्डे। মাপ-ভাঁড়। च.सू.१५अ.।

**मानमुक्ताफलः** । पुं। पटोलवृक्षे। वै.निघ.।

**मानवः** । पुं। मनुष्ये। अम.।

**मानवकोत्तमः** । पुं। शिग्रौ। रा.नि.व.१८।

**मानसम्** । क्ली। मनसि। त्रिका.।

**मानसक्लैब्यम्** । क्ली। चित्तसम्भूतक्लैब्ये। म-नःक्षुब्धता। सु.चि.२६अ.।

**मानसज्वरः** । पुं। य आदौ मनसि जायते, वैचित्त्यादौ। लक्षणम्—"वैचित्त्यमरतिर्ग्लानिर्मन-सन्तापलक्षणम्।" च.चि.३अ.। [नि.व.१६।

**मानसालयः (मौका:)** । पुं। हंसे। रा.

**मानिकम् (का)** । क्ली, स्त्री। अष्टपलमिते माने। ६४ तो.। ১ সের। सि.यो.वृहच्छुक्रसन्धा-ने। "कुडवाभ्याञ्च मानिका।" प.प्र.१ख.। मद्ये। श.र.। (की) वमनविरेचनयोः शोधनान्यतरे। च. द.वमनाधिकारे।

**मानिनी** । स्त्री। लक्षणाकन्दे। रा.नि.व.७।

**मानिमन्थम्** । क्ली। सैन्धवलवणे। भैष.कुष्ठ-चि.। "मानिमन्थञ्च तुल्यांशम्।"

**मानी** (न्) । पुं। सिंहे। रा.नि.व.१६। स्त्री (नी)। शरावमिते। ১ শ.। भैष.।

**मानुषी** । स्त्री। औषधनिर्म्माणकार्य्ये। चिकि-त्साभेदे। श.च.। नार्य्याम्। স্ত্রীলোক। अम.।

**मानुषीदधि** । क्ली। मानुषीदुग्धजातदध्नि। মানুষের দুধের দৈ। गुणाः—विपाके मधुरं बल्यम् अम्लं गुरु सन्तर्पणं चक्षुष्यं ग्रहदोषघ्नञ्च। रा.नि.व.१५।

**मानुषीक्षीरम्** । क्ली। मानुषीस्तनदुग्धे। মা-নুষের দুধ। मधुरं कषायं हिमं लघु चक्षुष्यं दी-पनं पथ्यं पाचनं रोचनञ्च। रा.नि.व.१५। "स-ञ्जीवनं वृंहणमेव सात्म्यं सन्तर्पणं नेत्ररुजापहञ्च। पित्तस्य रक्तस्य च नाशनञ्च नारीपयः स्नेहनमेव शस्तम्॥" अत्रि.८अ.। [गं। हं.च.।

**मान्द्यम्** । क्ली। आलस्ये। रा.नि.व.२०। रो-

**माम्बिका** । स्त्री। अम्बष्ठायाम्। रा.नि.व.४।

**मायादः** । पुं । कुम्भीरे । त्रिका. ।

**माया(यि)फलम्** } क्ली । फलविशेषे । मा-
**मायिकम्** } जूफल, मायाफल । गु-
णाः—कटूष्णं वातहरं केशकृष्णताकरं शैथिल्यस-
ङ्कोचकरञ्च । रा.नि.व.६ । [र.मा. ।

**मार्यो** । स्त्री । हिलमोचिकायां । शिञ्चेशाक ।

**मायुः** । पुं । पित्ते । रा.नि.व.२१ । त्रिका. ।
प्र.रविसुन्दररसे । "स मीनमायुः ।" भा.ज्व.चि. ।

**मायूरा** । स्त्री । काकोदुम्बरिकायाम् । वै.निघ. ।

**मायूरादिपचव्यञ्जनम्** । क्ली । मयूरपच-
वस्त्रवेतादिव्यजने । गुणाः—"मायूरा वस्त्रजा वै-
त्रा वाता दोषत्रयापहाः ।" राज.२प. । [भा. ।

**मायूरी** । स्त्री । अजमोदायाम् । वनयमानी ।

**मारः** । पुं । मृत्यौ । मे. । धुस्तूरवृक्षे । श.च. ।

**मारकः** । पुं । श्येनपक्षिणि । बाजवोरी ।
त्रि । हिंसके । वै.निघ. । क्ली । हिङ्गुले । रा.नि.
व.१३ ।

**मारकवर्गः** । पुं । रसमर्दद्रव्यगणः यथा—
"घनवचाचित्रकगोक्षुराः कटुतुम्बी दन्तिका जा-
तिः ।सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम् ।
विषमुष्टिजयवल्ली लज्जा देवदाली लाचा । स-
हदेवानीपकर्णानिर्गुण्डीचक्रलाङ्गलिकाः । माना-
र्कचन्द्ररेखा रविभक्ता काकमाचिका चार्कः । वि-
ष्णुक्रान्ता वायसतुण्डी वज्री बला गुरुही चैव ।
कोषातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा ।
मत्स्याक्षी चर्मचित्रा हरिद्रे द्वे पुनर्नवात्रितयम् ।
भुम्बरकाकजङ्घे शतावरी कञ्चुकी चैव बन्ध्या ।
तिलभेकपर्णौके दूर्वा मूर्वा हरीतकी तुलसी ।
गोकण्टकाखुपर्ण्यौ कर्कटीकन्दवर्गलता च । सुष-
ली हिङ्गु गुडूची शिग्रुः गिरिकर्णिका महाराष्ट्री ।
मार्कवसैन्धवसरणीसोमलताः श्वेतसर्षपोऽसनश्च ।
हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिका ।
सर्वत्राऽङ्घ्रिः वा षष्टादशाधिका वापि द्रव्यम् ।
समारणमूर्च्छादौ च युक्तितैर्विधिवदुपयोज्यम् ॥"
र.सा.सं. ।

**मारङ्गा** । स्त्री । मेदायां । रा.नि.व.५ ।

**मारजातकः** । पुं । मार्जारे । वै.निघ. ।

**मारटम्** । क्ली । इक्षुमूले । वै.निघ. ।

**मारणम्** । क्ली । अभिचारभेदे ।

**मारारिनारीरजः** । क्ली । गन्धके । भा.
ज्व.चि.कल्पतरौ ।

**मारिशः (षः)** । पुं । पत्रशाकविशेषे । कां-
टानटेर शाक । हिं नवड़ा। उत्. नेउटा शाग ।
स द्विविधः श्वेतरक्तभेदेन । गुणाः—"मारिषो
मधुरः शीतो विष्टम्भी पित्तनुद्गुरुः । वातश्लेष्मकरो
रक्तपित्तनुद्विषमाग्निजित् ॥ रक्तमार्षो गुरुर्नाति
सक्षारो मधुरः सरः । श्लेष्मलः कटुकः पाके स्व-
ल्पदोष उदीरितः ॥" भा.पू.१भ.शा.व. ।

**मारीचः** । पुं । कङ्कोलवृक्षे । रा.नि.व.१२ ।

**मारीचपत्रकः** । पुं । सरलवृक्षे । रा.नि.व.
१२ । [र्जतरौ । वै.निघ. ।

**मारीचपत्रका** । स्त्री । सरलदेवदारौ । स-

**मारीचवल्ली** । स्त्री । मरिचवृक्षे । वै.निघ. ।

**मारी(रु)षः** । पुं । मारिषशाके । द्रि. ।

**मारुण्डः** । पुं । सर्पाण्डे । मे. ।

**मारुतः** । पुं । वायौ । रा.नि.व.२१ ।

**मारुता** । स्त्री । [illegible] । पिड़िङ् । वै.निघ. ।

**मारुतापहः** । पुं । वरुणवृक्षे । रा.नि.व.६ ।

**मार्कः** । पुं । भृङ्गराजे । र.मा. ।

**मार्कटपिप्पली** । स्त्री । कपिपिप्पल्याम् ।
अपामार्गे । रा.नि.व.४ ।

**मार्कण्डिका (ण्डी)** । [illegible] । भूम्याहल्ये ।
कोकशेल । हिं भूइखखावल्ली भूमिप्रसरण-
शीला । वम्. भूँइतरवड़ । गुणाः—"मार्कण्डिका
कुष्ठहरी ऊर्ध्वाधःकायशोधनी । विषदुर्गन्धकासघ्नी
गुल्मोदरविनाशिनी ॥" भा.पू. । वै.निघ.२भ.भ.
सा.चि.गुग्गुलादिचूर्णे । [४ ।

**मार्कण्डीयम्** । क्ली । भूम्याहल्ये । रा.नि.व.

**मार्कवः** । पुं । भृङ्गराजे । भीमराज । र.मा. ।
हिं भंगरा । मं मकमकूक । कं.भंगरैया । वम्.
माका । मार्कवः नीलपीतमहाभेदेन त्रिधा । गु-
णाः—चक्षुष्यः तिक्तः उष्णः केशरञ्जनः कफशोथ-
विषघ्नः रसायनश्च । रा.नि.व.४ । च.द.ज्वराति-

सा.चि.त्र्योषाद्यचूर्णे । "निम्बभूनिम्बमार्कवम् ।" च.द.आ.वा.चि.सिध्मलायां ।

**मार्गः** । पुं । गुदे । मलद्वार । त्रिका. । कस्तूर्य्याम् । मृगनाभि । मे. । रक्तापामार्गे । रस.चिं. नागसिन्दूरे । भैष.कर्णरो.चि.अपामार्गक्षारतैले । (कः) मार्गशीर्षमासे । श.मा. ।

**मार्गवाहिनी** । स्त्री । क्षुद्रनद्याम् । वै.निघ. ।

**मार्गविशोधनम्** । क्ली । मूत्रपुरीषसङ्गे सति तन्मार्गशोधनकर्म्मणि । सु.सू.७अ. ।

**मार्जनम्** । क्ली । शुद्धकरणे । श.र. । पुं । लोध्रवृक्षे । प.मु. । श्वेतलोध्रे । सुभूतिः । रक्तरोध्रे । स्वामी । स्त्री (नी) । सम्मार्जन्याम् । झाँटा ।

**मार्जारः** । पुं । रक्तचित्रकक्षुपे । रा.नि.व.६ । पूतिसारिवायाम् । वै.निघ. । विड़ाले । अम. । खट्टाशे । खटाश । हे.च. । (कः) मयूरे । त्रिका. ।

**मार्जारकण्ठः** । पुं । मयूरे । श.र. ।

**मार्जारगन्धा (न्धिका)** । स्त्री । मुद्गपर्ण्यां । मुगानी । प.मु. । रा.नि.व.३ ।

**मार्जारपादः** । पुं । अश्वभेदे । यस्याश्वस्य पादे कूर्चे च स्ववर्णभिन्नवर्णा रेखा भवेत् । स च भर्त्तरमङ्गलकरः । ज.द.३अ. ।

**मार्जारिका** । स्त्री । कस्तूर्य्याम् । वै.निघ. ।

**मार्ज्जारी (ली)** । स्त्री । गन्धमार्ज्जारे । खाटासी । गुणाः—वामनी चक्षुष्या वातघ्नी च । मदनपालः । कस्तूर्य्यां । मृगनाभि । रा.नि.व. १२।२३ ।

**मार्जारीयः** । पुं । विड़ाले । मे. ।

**मार्जालः** । पुं । विड़ाले । द्वि.कोषः ।

**मार्जिता** । स्त्री । दधिशर्क्करायां । प.मु. । शिखरिण्याम् । वै.निघ. ।

**मार्त्तण्डः** । पुं । अर्कवृक्षे । अम. । शूकरे । मे. । स्वर्णमाक्षिके । वै.निघ. ।

**मार्त्तण्डमूलम्** । क्ली । अर्कमूले । वै.निघ. २भ.ज्व.चि.निर्गुण्डीधूपे ।

**मार्त्तण्डवल्लभा** । स्त्री । आदित्यभक्तायां । हुड़हुड़िया । रा.नि.व.४ ।

**मार्त्तिकः** । त्रि । मृण्मये । च.चि.१अ.आमलकघृते । पुं । शरावे । त्रिका. ।

**मार्द्वीकम्** । क्ली । द्राक्षारसजाम्लमद्ये । "मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा । रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते । मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु । लघुपाकि सरं शोषविषमज्वरनाशनम् ॥" सु.सू.४५अ.मद्यव. ।

**मार्द्वीकमद्यम्** । क्ली । द्राक्षाकृतमद्ये । "मृद्वीकाभिः कृतं मद्यं मार्द्वीकमिति चोच्यते । मृद्वीकानां सुपक्वानां यः स्वयं गालितः पटात् ॥ रसस्तेन हि तन्मद्यं कषायरहितेन यत् । मार्द्वीकं कापिशं भीमविक्रान्तं कापिशायनम् ॥" तोड़.वृद्ध-शौनकः ।

**मार्द्वीकशुक्तम्** । क्ली । मार्द्वीकरसेन सतैलेन कन्दशाकफलैश्चाग्रते अम्ले । प.प्र.३ख. ।

**मार्षः** । पुं । मारिषशाके । नटे शाक । भा.पू.१भ.शा.व. ।

**मार्षकः** । पुं । मधुरवास्तूके । मिठा वेतो । मारिषशाके । नटे शाक । रा.नि.व.७ ।

**मार्ष्टिः** । स्त्री । तैलमर्द्दने । वै.निघ. ।

**मालकम्** । क्ली । स्थलपद्मे । जटा. ।

**मालकः** । पुं । निम्बवृक्षे । महानिम्बे । अम. ।

**माल(ला)कन्दः** । पुं । स्वनामख्यातमहाकन्दशाके । मं दावणियगड्ड । कं करियगोलि । गुणाः—सुतीक्ष्णः गण्डमालाघ्नः दीपनः गुल्महरः वातश्लेष्मघ्नश्च । रा.नि.व.७ ।

**मालती** । स्त्री । (Aganosma calicina. Syn. Echites caryophyllata.) स्वनामख्याते पुष्पशाके । मालतीलता, गन्धमालती । र.मा. । सु.सू.३६अ. । गुणाः —"मालती कफपित्तास्यरुग्व्रणक्रिमिकुष्ठजित् । चक्षुष्यं कुसुमं तस्याः पत्रं तत्कफपित्तजित् ॥" राज.५प. । पीतजातीवृक्षे । पीत जातीफुलेर गाछ । श्वेतजात्याम् । जातीकुसुमवृक्षे । रा.नि.व.१० । पाठायाम् । आकनादि । वै.निघ. । युवत्यां । ज्योत्स्नायां । भारतीयनदीविशेषे । हे.च. ।

**मालतीजातः** । पुं । टङ्कणक्षारे । र.मा.सं. ।

**मालतीतीरजः ।** पुं । टङ्कणे । सोहागा । हे.च. । [शागा । रा.नि.व.१० ।

**मालतीतीरसम्भवम् ।** क्ली । टङ्कणे । सो-

**मालतीपत्रिका ।** स्त्री । जातीकोशे । ज-यित्री । रा.नि.व.१२ ।

**मालतीपुष्पम् ।** क्ली । जातीपुष्पे । सि.यो. पानीयकल्याणघृते । स्वनामकपुष्पे । वै.निघ. ।

**मालतीफलम् ।** क्ली । जातीफले । जायफल । रा.नि.व.१२ ।

**मालतीमूलम् ।** क्ली । मालतीशिफायाम् । मालतीशिकड़ । इदं जङ्गमविषहरं । नकुल १६अ. । [मालकूल । वै.निघ. ।

**मालतृणम् ।** क्ली । तृणसामान्ये । तृणविशेषे ।

**मालयः ।** पुं । चन्दनवृक्षे । वै.निघ. । क्ली । श्रीखण्डचन्दने । त्रिका. । पद्मकनामसुगन्धकाष्ठे । पद्मकाष्ठ । रा नि.व.१२ ।

**मालवा ।** स्त्री । उपोदकायाम् । वड़ पुँई । भा.पू १भ आ.व. ।

**मालवि(वी)का ।** स्त्री । त्रिवृति । तेउ-ड़ी । रा.नि.व.६ । वा.चि.२अ. । [निघ. ।

**मालविटपी** (इन्) । पुं । कुम्भीवृक्षे । वै.

**मालवी ।** स्त्री । पाठायां । आकनादि । रा. नि.व.६ ।

**मालसी ।** स्त्री । केशपुष्टवृक्षे । श.र. ।

**माला ।** स्त्री । वल्लीदूर्वायां । रा.नि.व.८ । भू-म्यामलक्याम् । वै.निघ. । [रा.नि.व.४ ।

**मालाकण्टः (कः) ।** पुं । अपामार्गक्षुपे ।

**मालागुणा ।** स्त्री । असाध्यलूताविशेषे । सु.कल्प.८अ. । [र्व्वायाम् । रा.नि.व.८ ।

**मालाग्रन्थिः ।** स्त्री । मालादूर्व्वायां, वल्लीदू-

**मालातृण(क)म् ।** पुं, क्ली । भूतृणे । गन्ध-घड़ । रा.नि.व.८ । आम्रदेशप्रसिद्धसगन्धरोहिष-तृणे । वै.निघ. ।

**मालादूर्व्वा ।** स्त्री । मालाकारदुर्व्वाविशेषे । मालदूर्वा, गांठिवालादूर्वा । मं वेलिहरियाली । कं वल्लिगरुके । वम्. वेलिदूर्वा । गुणाः—मधुरा तिक्ता शिशिरा पित्तघ्नी कफवान्तितृष्णाहरी च । रा.नि.व.८ ।

**मालाफलम्** }
**मालामणिः** } क्ली, पुं । रुद्राक्षे । वै.निघ. ।

**मालारिष्टा ।** स्त्री । पाचीनामसुगन्धपत्रे । रा. नि.व.१० । [द्रव्ये । रा.नि.व.१२ ।

**मालालिका (ली) ।** स्त्री । स्पृक्कानामगन्ध-

**मालाश्रेष्ठतमा ।** स्त्री । तुलसीवृक्षे । वै.निघ.

**मालिकः ।** पुं । पक्षिविशेषे । मे. । रञ्जके । श.र. । स्त्री (का) । द्राक्षामद्ये । वै.निघ. । भ-ल्लिकाविशेषे । चन्द्रमल्लिका । मद्ये । हारा. । सप्त-लायाम् । मे. । अतस्याम् । मशिना । श.च. ।

**मालिनी ।** स्त्री । अग्निशिखावृक्षे । दुरालभा-याम् । श.च. ।

**मालुकः ।** पुं । कृष्णार्ज्जके । काल वावुइ । ई-षच्छ्वेतराजहंसे । वै.निघ. । [चि । वै.निघ. ।

**मालुकाच्छदः (पत्रः) ।** पुं । अश्मन्तकह-

**मालुधानः ।** पुं । मातुलाहिसर्पे । मालुया साप । अम. । स्त्री (नी) । लताभेदे । वै.निघ. ।

**मालूकः ।** पुं । कृष्णार्ज्जके । कृष्णपत्र क्षुद्र तुलसी । रा.नि.व.१० ।

**मालूरः ।** पुं । विल्ववृक्षे । प.मु. । कपित्थवृक्षे । कयेत् गाछ । रा.नि.व.११ ।

**मालूरमूलम् ।** क्ली । विल्वमूले । भा.म.१भ. जिह्मकच्च चि. । "मालूरमूलामय..."

**मालेया ।** स्त्री । स्थूलैलायाम् । प.मु. ।

**माल्यम् ।** क्ली । पुष्पे । पुष्पमालायाम् । मे. ।

**माल्यकः ।** पुं । मदनवृक्षे । वै.निघ. ।

**माल्यपुष्पः ।** पुं । शणवृक्षे । शण गाछ । रा. नि.व.४ । [ण । रा.नि.व.४ ।

**माल्यपुष्पिका ।** स्त्री । शणपुष्प्यां । वन श-

**माल्या ।** स्त्री । तृणभेदे । वै.निघ. ।

**माषः (कः) ।** पुं । क्षुद्ररोगविशेषे । तिल । तिलकान् उन्नतान्माषानाहुः । "माषांस्तानिव चो-न्नतान् ।" वा.उ.३२अ. । A sort of kidney

bean. (Phaseolus radiatus or P. Roxburghii.) स्वनामख्यातव्रीहिभेदे । माषकलाइ । प सु. । हिं उरीद तें मिनुमलु, तण धान्यविशेषम् । गुणाः —स्निग्धः मलकरः शोषणः श्लेष्मकरः वीर्य्योष्णः रक्तपित्तप्रकोपकरः वातघ्नः गुरुः बलकरः रोचनः स्वादुः श्रमसुखवतां नित्यं सेवनीयश्च । रा.नि.व.१६ । "माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः । उष्णः सन्तर्पणो बल्यः शुक्रलो बृंहणः परः । भिन्नमूत्रमलस्तन्यमेदःपित्तकफप्रदः । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् । कफपित्तकरा माषाः······॥" भा.पू.१भ.धा.व. । "स्निग्धोऽथ वृष्यो मधुरश्च बल्यो मरुत्कफानां परिवृंहणश्च । पाकेऽल्पकोष्णो विदितो हिमश्च माषोऽथ हृद्यः कथितो नरेश ॥" अत्रि.१५अ. । माषयूषगुणाः —"घनं सवातं कफकृन्माषयूषश्च पित्तकृत् । अम्लपर्य्युषितं तत्र तैलपाने च शस्यते ॥" अत्रि.१३अ. । "माषयूषो गुरुर्वृष्य ईषत्पवनपित्तकृत् । अनल्पकं कफं कुर्व्वन् मलवृद्धिं विवर्द्धयेत् ॥" द्रव्यगु. । परिमाणभेदे । मासः । स मागधमाने सुश्रुतमते च ५ रक्तिकात्मकः । चरकमते ६।८ गुञ्जात्मकः । कालिङ्गमाने सुश्रुतमते ५।७।८ गुञ्जापरिमाणम् । भा. । चरके वैद्यकान्तरे च १० गुञ्जात्मकमानम् । १२ गुञ्जात्मकोऽप्यन्ति । १२ धान्यात्मकः १८ माषात्मकोऽपि दृश्यते । अतएव स ह्यधिकः षड्विधः पञ्चगुञ्जात्मकः षड्गुञ्जात्मकः सप्तगुञ्जात्मकः अष्टगुञ्जात्मकः दशगुञ्जात्मकः द्वादशगुञ्जात्मकश्चेति । तत्र पञ्चगुञ्जात्मको यः स नाम्ना कालिङ्गः सौश्रुतश्च षड्गुञ्जात्मकोऽपि कालिङ्ग इति केचित् । दशरक्तिकमाषः चरकसम्मतो गौड़माषक इत्युच्यते । स एव सर्व्वत्र व्यवहार्य्यः । यथा —"माषस्तु पञ्चभिस्तद्वा सप्तभिरष्टभिः । दशभिर्द्वादशभिश्च रक्तीभिः षड्विधो मतः । अत्र कालिङ्गमाषस्तु पञ्चगुञ्जः स सौश्रुतः । दशगुञ्जस्तु माषः स्यात् माषकः स च चारकः । सप्तगुञ्जस्तु केऽप्याहुः मानकं मानकोविदाः । दशरक्तिकमानन्तु गौड़माचक्षतेऽत्र तु । दशरक्तिकमाषेण व्यवहारो भिषग्विदाम् ॥" प्रयोगा.मानकथने । "दशगुञ्जात्मकं माषं प्रवदन्ति चिकित्सकाः ।" तत्र ग्रहमध्यादिभेदात् माषकादिप्रतिपत्तौ समाधानमूह्यम् । "माषैर्द्वादशभिर्धान्यैर्माषकः परिकीर्त्तितः । कषायादिनिरुहेषु द्रव्यमानविधावपि ॥ ततोऽष्टादशभिर्माषैर्माषकः परिकीर्त्तितः । वम्यादिरक्तमोक्षेषु माने सूचवसादिषु ॥ वमनादिषु योज्यश्च माषकश्चाष्टरक्तिकः । लौहरवादिविषये दशरक्तिकमाषकः ॥ वमने च विरेके च तथा शोणितमोक्षणे ॥" माषो माषकलायः । कृष्णाचेयः । [भ.टी.भ. ।

**माषकलायः** । पुं । माषव्रीहौ । माषकलाइ ।

**माषतैलम्** । क्ली । वातव्याधौ तैलं । "माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे । यवकोलकुलत्थानां छागमांसे भवेत् पृथक् । प्रस्थे च तिलतैलस्य क्षीरं दत्त्वा चतुर्गुणम् । रास्नात्मगुप्तासिन्धूत्थशताह्वैरण्डमुस्तकैः । जीवनीयबलाव्योषैः पचेदक्षसमैर्भिषक् । क्वाथप्रस्थाः षडेवात्र विभक्तव्येन कीर्त्तिताः ॥" তিলতৈল ৪ শ. । ক্বাথার্থ —মাষকলায়, বেলেড়া, রাস্না, দশমূল, যব, কুল, কুলথ, ছাগমাংস প্রত্যেকে ১৬ প. জল ১৬ শ. শে. ৪ শ. । কল্কার্থ—রাস্না, আলাকুশীমূল, সৈন্ধব, শুলফা, এরণ্ডমূল, মুতা, জীবক, ঋষভক, মেদ, মহামেদ, ঋদ্ধি, বৃদ্ধি, কাকোলী, ক্ষীরকাকোলী, বেলেড়া, ত্রিকটু প্রত্যেকে ২ তো.। तद्दोपदेशाद्ग्रहणीप्रभृति यथासाध्यं दातव्यम् । इदं सप्तप्रस्थमाषतैलम् । सा.कौ. । भैष.वृहन्माषतैलम् । तत्र यथा — "माषप्रस्थं समावाप्य पचेत्सप्तक जलाढके । पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणं । प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितं । जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवां । रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकं ।······ऊर्द्धजत्रु गदापहं ॥" মাষকলায় ১৬ প. জল ১৬ শ. শে. ৪ শ. । তিলতৈল ৪ শ. দুগ্ধ ১৬ শ. । কল্কার্থ—জীবক, ঋষভক, মেদ, মহামেদ, ঋদ্ধি, বৃদ্ধি, কাকোলী, ক্ষীরকাকোলী, শুলফা, সৈন্ধব, রাস্না, আলাকুশীবীজ, যষ্টিমধু, বেলেড়া, ত্রিকটু, গোক্ষুরবীজ প্রত্যেকে ২ তো. । सा. कौ. । भैष. । महामाषतैलं यथा —"माषस्याढ़कं दत्त्वा तुलार्द्धं दशमूलतः । पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत् । पूते शीते कषाये च चतुर्थांशावशेषिते । प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम् । आत्मगुप्ताकयुक्तञ्च शताह्वा लवणत्रयम् । जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फ-

लम् । मरीचञ्चिप्पलीमूलं रास्ना मधुकसैन्धवम् । दैवदार्वमृताकुष्ठं वाजिगन्धा वचा शठी । एतैर-क्षसमैः कल्कैः साधयेन्मृदुनाग्निना ॥" তিলতৈল ৪ শ. । কাথার্থ—মাষকলায় ৪ শ. দশমূল ৬।০ শ. ছাগমাংস ১০ প. একত্র ৬৪ শ. জলে পাক করিয়া শেষ ১৬ শ. নামাইবে। দুগ্ধ ১৬ শ. । কল্কার্থ—আলাকুশীমূল, এরণ্ডমূল, শুল্‌ফা, সৈন্ধব, বিট্, সাম্ভরলবণ, জীবনীয়গণ, মঞ্জিষ্ঠা, চই, চিতার মূল, কট্‌ফল, ত্রিকটু, পিপুলমূল, রাস্না, যষ্টিমধু, সৈন্ধব, দেবদারু, গুলুঞ্চ, কুড়, অশ্বগন্ধা, বচ, শটী প্রত্যেকে ২ তো. । रस.र. । भैष. ।

**माषपत्निका** । स्त्री । माषपर्ण्यां । रा.नि.व.३ ।

**माषप(व)र्णी (र्णी)** । स्त्री । (Teramnus labialis. Syn. Glysine debilis, Rox.) स्वनामख्यातलतायाम् । মাষাণী । हिं मापोणी, मासवणी । मं रानउड़ीद । कं कालीडिंडु, কাউদ্ । वा.सू.१५अ. । गुणाः—"माषपर्णी रसे तिक्ता वृष्या दाहज्वरापहा । शुक्रवृद्धिकरी बल्या शीतला पुष्टिवर्द्धनी ॥" रा.नि.व.३ । "माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् । मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ॥" भा. ।

**माषयोनिः** । पुं । पापड़ इति ख्यातखाद्यद्रव्ये । পাঁপর । वै.निघ. ।

**माषरा** । स्त्री । अन्नमण्डे । प.मु. ।

**माषसूपः** । पुं । भृष्टमाषकृतयूषे । ভৃষ্টমাষ-যূষ । गुणाः—"माषसूपश्च कुल्माषः स्निग्धो वृष्यो-ऽनिलापहः । उष्णः सन्तर्पणो बल्यः सुस्वादु रु-चिकारकः ॥" द्रव्यगु. ।

**माषादः** । पुं । कच्छपे । श.र. ।

**माषान्नम्** । क्ली । माषकृतान्ने । गुणाः—"माषान्नं दुर्जरम्प्रोक्तं मांसवृद्धिकरं गुरु । वातनाशकरं रुच्यम्...... ॥" वै.निघ. ।

**माषिकः** । पुं । जीवशाके । वै.निघ. ।

**माषेण्डरी** । स्त्री । माषपिष्टविकृतौ । च.द. शूल.चि. । [रिमाणे । माषा । अ.टी.भ. ।

**मासः (कः)** । पुं । पक्षद्वये । अम. । माषप-

**मासकः** । पुं, क्ली । तन्नामकक्षुद्ररोगविशेषे । আঁচিল । लक्षणं—"अवेदनं स्थिरञ्चैव यस्य गात्रे प्रदृश्यते । माषवत् कृष्णमुत्सन्नमनिलान्माष-कन्तु तत् ॥" मा.नि. । [हृपचिघि । श.र. ।

**मासघ्नः** । पुं । हरिणविशेषे । वै.निघ. । दात्यू-

**मासद्वयोद्भवः (वा)** । पुं, स्त्री । षष्टिक-शालिधान्ये । गौरषष्टिके । रा.नि.व.१६ ।

**मासनम्** । क्ली । ओषधिवीजविशेषे । সোম-রাজ । श.च. ।

**माससानम्** । क्ली । माषपरिमाणे । ১ মাষা ।

**मासरः** । पुं । काञ्जिके । वै.निघ. । भक्तसमुद्भवमण्डे । अम. । [श्र.मा. ।

**मासवर्त्तिका** । स्त्री सर्षपीनामपक्षिविशेषे ।

**मासु(सू)री** । स्त्री । भेदनयोग्यवृद्धिपचनव्रणशस्त्रादीनां तनुधाराविशेषे । सु.सू.८अ. । श्मश्रौ । हे.च. । [न्तरम् ।

**माहिषः (षी)** । पुं, स्त्री । महिषे । कोषा-

**माहिषघृतम्** । क्ली । महिषीक्षीरजातघृते । ভয়সাঘৃত । घृतमिदं तीक्ष्णभस्मकादिरोगेषु हितम् । सि.यो.अग्निमा.चि. । वातश्लेष्मघ्नं बल-करं वर्णकरम् अर्शोग्रहणीहरं दीपनं चक्षुष्यञ्च । रा.नि.व.१५ ।

**माहिषदधि** क्ली । महिषीदुग्धकृतदधनि । মহিষের দই । गुणाः—मधुरं स्निग्धं रक्तपित्तघ्नं श्लेष्मलं बलशोणितवर्द्धनं वृष्यं श्रमघ्नं शोधनञ्च । रा.नि.व.१५ ।

**माहिषनवनीतम्** । क्ली । म... दुग्धजातनवनीते । মহিষের ননী । गुणाः—कषायं मधुरं शीतं वृष्यं बल्यं ग्राहि पित्तघ्नं पुष्टिदञ्च । रा.नि.व.१५ । "माहिषीनवनीतेन स्तनपीड़ा स्थिरा भवेत् ।" रस.र.स्तनरो.चि. ।

**माहिषमूत्रम्** । क्ली । महिषजले । মহিষের মূত। गुणाः—कटु उष्णम् आनाहशोषगुल्मरोगघ्नं कुष्ठकण्डूतिशूलोदररोगघ्नञ्च । रा.नि.व.१५ ।

**माहिषवल्लरी (ल्लिका)** । स्त्री । कृष्णवृद्ध-दारके । (ल्लिका) श्वेतवृद्धदारके । वै.निघ. ।

**माहिषवल्ली** । स्त्री । लघुसोमलतायाम् । वै. निघ. ।

**माहिषाचः** । पुं । महिषाचगुग्गुलौ । वै. निघ. । [लशुना । रा.नि.व.३ ।

**माहेन्द्री** । स्त्री । इन्द्रवारुणीलतायाम् । राखा-

**माहेयः** । पुं । प्रवाले । वै.निघ. ।

**माहेश्वरधूपः** । पुं । ज्वरे हिते धूपे । জ্বরে ধূপবিশেষ । "हिङ्गुलं देवकाष्ठञ्च श्रीवेष्टं घृतमेव च । गव्यास्थीनि तथा ध्यामं निर्म्माल्यञ्च तुरी ईहणी । सर्षपं निम्बपत्राणि पिच्छाहिकञ्चुकन्तथा । मार्ज्जारविष्ठा गोशृङ्गं मदनस्य फलानि च । द्वे बृहत्यौ वचा चैव कार्पासास्थि तुषान्तथा । छागगोमायुविट् चैव हस्तिदन्तस्तथैव च । एतत्सर्व्वं समाहृत्य छागमूत्रेण भावयेत् । उदुखले तु सङ्कुद्य स्थापयेन्मृण्मये घटे ॥" হিঙ্গুল, দেবদারু, সরলকাষ্ঠ, গব্যঘৃত, গোহাড়, গন্ধতৃণ, শিবনির্ম্মাল্য, কট্কী, শ্বেত সরিষা, নিমপাতা, ময়ূরপুচ্ছ, সাপের খোলোস, বিড়ালবিষ্ঠা, গোশৃঙ্গ, ময়নাফল, বৃহতী, কণ্টিকারী, বচ, পাকাটী, তুষ, ছাগবিষ্ঠা, শৃগালবিষ্ঠা, হস্তিদন্ত প্রত্যেকে সমভাগ । ছাগমূত্রে ভাবনা দিবে । মৈষ. । জটামাংসী, গোশৃঙ্গ, বিড়ালবিষ্ঠা, সাপের খোলোস, ময়নাফল, জটামাংসী, মুরামাংসী, বংশত্বক্, শিবনির্ম্মাল্য (পুষ্পাদি), ঘৃত, যব, ময়ূরপুচ্ছ, ছাগরোম, সরিষা, বচ, হিং, গোহাড়, মরিচ প্রত্যেকে সমভাগ ; ছাগমূত্রে পেষণ করিয়া ধূপ দিবে । ভা. । [লতা । রা.নি.ব.৩ ।

**माहेश्वरी** । स्त्री । शङ्खिनीवृत्ते । यवतिक्ता

**माचम्** । क्ली । सौवर्च्चललवणे । प.मु. ।

**माचि(ची)कम्** । क्ली । धातुमाचिके । রৌপ্য ও স্বর্ণমাক্ষিক । र.मा. । तच्च द्विविधं स्वर्णमाचिकं रौप्यमाचिकञ्चेति । "माचिकं द्विविधं प्रोक्तं हेमाह्वं तारमाचिकम् । भिन्नवर्णविशेषत्वाद्रसवीर्य्यादिकं पृथक् ॥" र.सा.सं. । च.द.र.पि.चि. । "माचिकेन हतस्य च ।" तैलवर्णमधुविशेषे । तच्च कपिलवर्णातिस्थूलवनमच्चिकाभिः नानापुष्पेभ्यः समाहृत्योत्पादितम् । "नानापुष्परसाहाराः कपिला वनमाचिकाः । याः स्थूलास्ताभिरुत्पन्नं मधु माचिकमुच्यते ॥" गुणाः—तैलवर्णं मधुरं रूचं लघु श्वासहरञ्च । रा.नि.व.१४ । सामुद्रलवणे । [रा.नि.व.१२ ।

**माचि(ची)कजम्** । क्ली । सिक्थके । मम ।

**माचिकधातुः** । पुं । धातुमाचिके । सि.यो. पाण्डु.चि. । काम.चि.मण्डूरवटके । "समैर्माचिकधातुना ।" स्वर्णमाचिके । रा.नि.व.१३ ।

**माचिकपाकः (फलः)** । पुं । मधुनारिकेलवृत्ते । रा.नि.व.११ ।

**माचि(ची)कशर्करा** । स्त्री । मधुशर्करायाम्, माचिकमधुजनितशर्करायां । गुणाः—माचिकमधुतुल्याः । रा.नि.व.१४ ।

**माचिकश्रेष्ठा** । स्त्री । रूप्यमाचिके । प.मु. ।

**माचिकान्तम्** । क्ली । माधवीमद्ये । वै.निघ. ।

**माचिकाश्रयम्** । क्ली । सिक्थके । रा.नि.व.१३ । [च. ।

**माचिकी** । स्त्री । सुवर्णमाचिके । नकुल.१६

**मिताशनः** । त्रि । परिमिताहारे, परिमितभोजिनि । च. ।

**मित्रम्** । क्ली । अतिविषायाम् । वै.निघ. ।

**मित्रपञ्चकम्** । क्ली । घृत-मधु-गुञ्जा-टङ्कणगुग्गुलौ । तथाच—"मधु सर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा । मित्रपञ्चकमेतत्तु गदितं धातुमेलने ॥" र.मा.मं. । [सु.नि.१अ. ।

**मिथ्याचारः** । पुं । शास्त्रोक्तविधिभ्रष्टाचारे ।

**मिथ्यायुक्तः** । त्रि । अविधिप्रयुक्ते । भा.म.ख.सा.चि. ।

**मिथ्यायोगः** । पुं । रूपादीनां विरुद्धयोगेषु । विषमस्थानाभिघाताशुचिभूतसंस्पर्शादिरूपविरुद्धयोगेषु । यथा—वेगधारणादिः शारीरमिथ्यायोगः, परुषवचनादिः वाङ्मिथ्यायोगः, दुर्गन्धाद्यतिघ्राणादिः घ्राणमिथ्यायोगः, स्तनितादिशब्दानामतिश्रवणं शब्दमिथ्यायोगः । इत्यादि । च.सू.११अ. । [नि. ।

**मिथ्याविहारः** । पुं । बलवद्विग्रहादौ । मा.

**मिथ्याहारः** । पुं । अनुचिताहारे, सात्म्यविपरीताहारे, दुग्धमीनादौ । सु.नि.१अ. ।

**मिथ्योपचार:** । पुं । प्रवातादिसेवनरूपानुचिताचरणे । "मिथ्योपचारात्संक्लेशात् ।" भा. ।

**मिन्मिन:** । पुं । वातव्याधिविशेषे । খোঁনা । निदानम् यथा —"आवृत्य वायु: सकफ: धमनी: शब्दवाहिनी: । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान् ॥" सु.नि.१अ. ।

**मिरा** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**मिलपत्र:** । पुं । अश्मन्तकवृक्षे । वै.निघ. ।

**मिशि: (शी)** । स्त्री । मधुरिकायाम् । মৌরী । च.द.वा.व्या.चि. । शतपुष्पायाम् । শুলফা । अ.टी.भ. । वा.सू.१५अ. । जटामांस्याम् । श.र. । वै.निघ.महाशाल्वणस्वेदे । कासभेदे, महादर्भे । কেসেবিশেষ । गुणा:—मधुरशीत: पित्तदाहक्षयघ्नश्च । रा.नि.व.८ । मेथिकायाम् । वै.निघ. ।

**मिश्र:** । पुं । सन्निपाते । क्ली । चाणक्यमूलके । रा.नि.व.७ । रक्ते । वै.निघ. ।

**मिश्रकम्** । क्ली । औषरलवणे । रा.नि.व.६ । यशदे । मूलके । वै.निघ. । वङ्गभेदे । भा. ।

**मिश्रकस्नेह:** । पुं । गुल्मे औषधम् । पाठ:— "त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितं । जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसं । सर्पिरेरण्डजं तैलं क्षीरञ्चैकत्र साधयेत् । स सिद्धो मिश्रकस्नेह: सक्षौद्र: कफगुल्मनुत् । कफवातविबन्धेषु कण्ठशोफोदरेषु च । प्रयोज्यो मिश्रकस्नेह: योनिशूलेषु चाधिकम् ॥" তেউড়ী, ত্রিফলা, দন্তীমূল. দশমূল প্রত্যেকে ১ প. জল ১৬ শ. শে. ৪ শ. । ঘৃত ২ শ. এরণ্ডতৈল ২ শ. দুগ্ধ ৪ শ. । च.चि.५अ. ।

**मिश्रज:** । पुं । खेसरे । रा.नि.व.१९ ।

**मिश्रपुष्पा** । स्त्री । मेथिकायां । रा.नि.व.६ ।

**मिश्रवनफला** । स्त्री । वार्ताक्यां । বেগুন । रा.नि.व.७ ।

**मिश्रवर्ण:** । पुं । पुण्ड्रकेक्षौ । পুঁড়ি ইক্ষু । रा.नि.व.१४ । क्ली । कृष्णागुरुणि । रा.नि.व.१२ ।

**मिश्रीतुत्थम्** । क्ली । खर्परे । খাপর । वै.निघ. ।

**मिश्रेया** । स्त्री । मधुरिकानामक्षुपे । মৌরী গাছ । (Foeniculum valgare. F Panmorium.) वनगुलुफायाम् । বন শুলফা । हिं सोंआ, वरिसोंफ । मं वनसउफ । कं कासव्वसिगे । तें पेद्दजिलकुरक । ता. सोहिकिरै । गुणा:—मधुरा स्निग्धा कटु: कफहरी नालपित्तीघ्नी षघ्नी मोहक्लमिघ्नी च । रा.नि.व.४ । मधूदकेन तच्छुद्धि: । [संग्रह: ।

**मिश्रोदनम्** । क्ली । खेचरिकायां । খিচুড়ি ।

**मिषि: (सि:) (षी,सी)** । स्त्री । मधुरिकायां । श.च. । शताह्वायां । শুলফা । रा.नि.व.४ । जटामांस्यां । श.र. । अजमोदायां । রাঙ্কুনী । मे. । उशीर्य्याम् । উশীরী । रा.नि.व.८ ।

**मिषिका** । स्त्री । मधुरिकायां । शताह्वायाम् । श.र. ।

**मिष्ट:** । त्रि । मधुररसे । भा. । [वै.निघ. ।

**मिष्टनिम्ब:** । पुं । निम्बवृक्षभेदे । মিষ্ট নিম ।

**मिष्टनिम्बू:** । स्त्री । मधुरजम्बीरे । मधुनिम्बुके । মিষ্ট লেবু । गुणा:—"मिष्टनिम्बूफलं स्वादु गुरु मारुतपित्तनुत् । गररोगविषध्वंसि कफोत्क्लेशि च रक्तहृत् । शोषारुचितृषाच्छर्दिहरं बल्यञ्च बृंहणम् ॥" भा. ।

**मिष्टपाक:** । पुं । मिष्टान्ने । मधुररसविपक्वफलादौ । মোরব্বা । পাকরাজ: ।

**मिष्टरस:** । पुं । स्वादुपाकरसे द्रव्ये । तद्गुणौ—श्लेष्मकृद्-वातपित्तहरौ । सु. ।

**मिष्टान्नम्** । क्ली । मधुरान्ने, पर[illegible]ौ । ह्ला. ।

**मिहिका** । कर्पूरे । रा.नि[illegible]१२ । नीहारे । श.र. ।

**मिहिर:** । पुं । अर्कवृक्षे । अम. । वै.निघ.२ भ.चय.चि.त्रैलोक्यचिन्तामणिरसे । क्ली । ताम्रे । वै.निघ. ।

**मीन:** । पुं । मत्स्यसामान्ये । अम. ।

**मीनकम्** । क्ली । नयनाञ्जनविशेषे । उणा. ।

**मीनकाक्ष: (नाक्ष:)** । पुं । शुक्लकरवीरे । वै.निघ. । [नि.व.१९ ।

**मीनघाती (इन्)** । पुं । बकपक्षिणि । रा.

**मीननेत्रा** । स्त्री । गण्डदूर्व्वायां । रा.नि.व.८ ।

**मीनपित्तम्** । क्ली । कटुकायाम् । वै.निघ. ।

**मीनरः** । पुं । स्वारके । शङ्कर । त्रिका. ।

**मीनरङ्कः (ङ्गः)** । पुं । मत्स्यरङ्कपक्षिणि । মাছরাঙা পাখী । त्रिका.। जलकाके । वै.निघ.।

**मीनाण्डी** । क्ली । शर्करायां । रा.नि.व.१४ ।

**मीनाम्रीणः** । पुं । खञ्जरीटपक्षिणि । वै. निघ. । दर्दुरासे । मे. ।

**मीनाक्षी** । स्त्री । ब्राह्मीशाकरूपे । रा.नि.व. ५ । गण्डदूर्व्वायां । रा.नि.व.८ । शर्करायाम् । वै.निघ. ।

**मीलकः** । पुं । रोहितमत्स्ये । वै.निघ. ।

**मीलनम्** । क्ली । नेत्रमुद्रणे । निदा. । व्याक.।

**मीरः** । पुं । पानीये । उणा. । [उणा. ।

**मीवा(न)** । स्त्री । उदरकृमौ । शीकरे । सारे ।

**मीशानः** । पुं । महारग्वधवृक्षे । वै.निघ. ।

**मुकन्दः (कः)** । पुं । पलाण्डौ । अ.टी.भ.। परिकश्रीहिविशेषे। कुधान्यभेदे । भा.। सु.सू.४६अ.। गुणाः कङ्गुवत् । च.सू.२७अ. ।

**मुकलः** । पुं । आरग्वधे । वै.निघ. ।

**मुकुन्दः (न्दुः)** । पुं । कुन्दुरौ । कुन्दुरुखोटी । अम. अ.टी.भ । श्वेतकरवीरे । उपोदिकायाम् । पारदे । हे.च. । स्त्री । गाम्भारीवृक्षे । गामार-गाछ । रा.नि.व.९ ।

**मुकुरः** । पुं । मल्लिकापुष्पवृक्षे । विश्व. । वकुलवृक्षे । आदर्शे । मे. । बदरवृक्षे । श.र. ।

**मुकुलः** । पुं, क्ली । ईषद्विकसितकलिकायाम् । स्थूलकलिकायाम् । अम. । जैपालवृक्षे । 'पिस्ता' इति ख्याते फलवृक्षे । आत्मनि । शरीरे, धरणिः ।

**मुकुष्टः (कः)** । पुं । वनमुद्गे । मुगानी । र. मा. । च.द.ज्व.चि.। "कुलत्थान् समुकुष्टकान् ।" गुणाः—शीतलः ग्राही कफपित्तज्वरघ्नश्च । राज.।

**मुकूलकः** । पुं । दन्तीरूपे । दन्ती गाछ । र. मा. । वा.चि.६अ. । [निघ. ।

**मुक्तचण्डा** । स्त्री । चिञ्चायाम् । তেঁতুল । वै.

**मुक्तचञ्चुः** । पुं । सिंहे । श.मा. ।

**मुक्तपालेवतः** । पुं । हैमखर्ज्जूरीवृक्षे । वै.निघ.।

**मुक्तबन्धना (न्धा)** । स्त्री । मल्लिकावृक्षे । वार्षिकीमल्लिकाभेदे । रा.नि.व.१० । See वार्षिका । [वै.निघ. ।

**मुक्त(क्ता)माता** । स्त्री । शुक्तौ । ঝিণুক ।

**मुक्तरसा** । स्त्री । रास्नायाम् । र.मा. । [च. ।

**मुक्त(क्ता)वासः** । पुं । शुक्तौ । ঝিণুক । श.

**मुक्तशृङ्गः** । पुं । रोहीतकमत्स्ये । वै.निघ. ।

**मुक्तसारः** । पुं । कदलीवृक्षे । वै.निघ. ।

**मुक्ता** । स्त्री । मौक्तिके । प.मु. । रास्नायां । र. मा. । च.सू.४अ.वयःस्थापने । तद्योनिः यथा—"शुक्तिः शङ्खो गजक्रोडः फणी मत्स्यश्च दर्दुरः । वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥" भा. पू.१भ. । गुणाः—सारका शीतला कषाया स्वादुः लेखनी चक्षुष्या च । राज. ।

**मुक्तागारम्** । क्ली । शुक्तौ । ঝিণুক । श.च.।

**मुक्तापुष्पः** । पुं । कुन्दपुष्परूपे । কুন্দ গাছ । रा.नि.व.१० ।

**मुक्ताप्रसूः** । पुं । शुक्तौ । प.मु. ।

**मुक्ताफलम्** । क्ली । कर्पूरे । लवलीफले । मे.। मौक्तिके । भा. ।

**मुक्ताभा** । स्त्री । वृत्तमल्लिकायां । रा.नि.व.१० ।

**मुक्ताशुक्तिः** । स्त्री । मुक्तायोनिशुक्तौ, मुक्तागृहे । মুক্তার ঝিনুক । मं मोतीसींप । कं मुक्तिनसिंपु । गुणाः—"कटुः स्निग्धा श्वासहृद्रोगहारिणी । शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥" रा.नि.व.१३ । [ঝিনুক । अम. ।

**मुक्तास्फोटः (टा)** । पुं, स्त्री । मुक्तागृहे ।

**मुक्तिप्रदः** । पुं । हारिद्रमुद्गे । হারিদ্র মুগ । वै.निघ. ।

**मुक्तिमुक्तः** । पुं । शिल्हारसे । र.मा. ।

**मुखम्** । क्ली । वदनविवरे । भा. । वदने । মুখ । रा.नि.व.१८ । तत्तु गर्भस्थस्य पञ्चभिः मासैर्भवति । सुखबोधः । "ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो मुखादि सकलं सप्ताङ्गं मुखमुच्यते ।" भा. । जीरके । पांचचक्षी । वै.निघ. । पुं । डहुके । ডেলো । श.च. ।

**मुखगन्धकः** । पुं । पलाण्डौ । रा.नि.व.७ ।

**मुखचीरी** । स्त्री, पुं (इन्) । पलाण्डौ । श्र चि. । जिह्वायाम् । श.मा ।

**मुखजः** । पुं । दन्ते । वै.निघ. ।

**मुखदूषः** (णः) । पुं । पलाण्डौ । रा.नि.व.७ ।

**मुखदूषिका** । स्त्री । मुखगतक्षुद्ररोगभेदे । बयस् फोड़ा । लक्षणं यथा—"शाल्मलीकण्टकप्रख्या कफमारुतशोणितैः । जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ।" सु.नि.१३अ. ।

**मुखदूषी** (इन्) । पुं । लशुने । रसुन । वै. निघ. ।

**मुखधावनम्** । क्ली । मुखस्य प्रक्षालने । मुख-धोया । वा.चि.५अ. । [च ।

**मुखधौता** । स्त्री । भार्ग्याम् । वामुनहाटी । श्र.

**मुखपाकः** । पुं । अश्वस्य मुखरोगे । ज.द. २१अ. । मुखरोगभेदे । निदानलक्षणं यथा—"करोति वदनस्यान्तर्व्रणान् सर्व्वसरोऽनिलः । सञ्चारिणोऽरुणान् रुक्षान् ओष्ठौ ताम्रौ चलत्वचौ । जिह्वा शीतासहा गुर्व्वी स्फुटिता कण्टकाचिता । विवृणोति च कृच्छ्रेण मुखपाको मुखस्य च । अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः । यात्यूर्द्धं वक्त्रदौर्गन्ध्यं कुर्व्वन्नूर्द्ध्वं गदस्तु सः । मुखस्य पित्तजे पाके दाहोषौ तिक्तवक्त्रता । क्षारोक्षितक्षतसमा व्रणास्तद्वच्च रक्तजे । कफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः । अन्तःकपोलमाश्रित्य श्यावपाण्डु कफोऽर्बुदम् । कुर्य्यात्तत्पाटितं क्लिन्नं मुदितश्च विवर्द्धते । मुखपाके भवेत्सासे सर्व्वैः सर्व्वाकृतिर्मलैः ।" वा.उ.२१अ. ।

**मुखपूरणम्** । क्ली । गण्डूषे । च. ।

**मुखप्रसेकः** । पुं । श्लेष्मजमुखव्याधौ । भा. ।

**मुखप्रक्षालनम्** । क्ली । शीतोदकेन मुखधावने । गुणाः—"नीलिकां मुखशोषञ्च पिड़कां व्यङ्गमेव च । रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत् ।" सु.चि.२४अ. ।

**मुखप्रियः** । पुं । नागरङ्गवृक्षे । भा. । स्त्री । कर्कटिकायाम् । कांकुड़ । वै.निघ. ।

**मुखभूषणम्** । क्ली । ताम्बूले । निदा. ।

**मुखमण्डलकः** । पुं । तिलकवृक्षे । तिलगाछ । रा.नि.व.१० । [भिष्टि । भा. ।

**मुखमाधुर्य्यम्** । क्ली । श्लेष्मजमुखरोगे । मुख-

**मुखमुण्डि(ति)का** । स्त्री । बालरोगभेदे । लक्षणं यथा—"सलाङ्गः सुरुचिरपाणिपादवक्त्रः बह्वाशी कलुषशिरावृतोदरो यः । सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरिह वक्त्रमुण्डिकार्त्तः ।" सु.उ.२७अ. । [छ । रा.नि.व.७ ।

**मुखमोदः** । पुं । शोभाञ्जनवृक्षे । सजिना गा-

**मुखरः** । पुं । शङ्खे । काके । रा.नि.व.१९ ।

**मुखरोगः** । पुं । ओष्ठादिरोगे । ओष्ठद्वयदन्तमूलदन्तजिह्वातालुगलरूपं सप्ताङ्गं मुखम्, तत्रस्थो यो रोगः स मुखरोग इत्युच्यते । मुखरोगसंख्या—ओष्ठयोरष्टौ, एकादशेति वाभटः । दन्तमूले षोड़श, दन्तेषु अष्टौ, जिह्वायां पञ्च, तालुनि नव, कण्ठे अष्टादश, सर्व्वेषु त्रय इति सप्तषष्टिर्मुखरोगाः साकल्येन भवन्ति । "ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो मुखानि सकलं सप्ताङ्गं मुखमुच्यते । स्युरष्टावोष्ठयोर्दन्तमूले तु दश पट् तथा । दन्तेष्वष्टौ च जिह्वायां पञ्च स्युर्नव तालुनि । कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्व्वेषु च स्मृताः । एवं मुखामयाः सर्व्वे सप्तषष्टिर्मता बुधैः ।" भा.म.४भ.मु.रो.चि. । निदानं—आनूपमांसादिसेवनात् कुपिता दोषा मुखरोगानुत्पादयन्ति । तदुक्तं—"आनूपपिशितक्षीरदधिमाषादिसेवनात् । मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषाः कफोत्तराः ॥" इति । मा.नि. । "माहिषमाहिषवा[illegible]पिशितामकमूलकं । माषसूपदधिक्षीरशुक्तेक्षुरसफाणितम् । अवाक् शय्याञ्च भजतो द्विषतो दन्तधावनम् । धूमच्छर्द्दनगण्डूषानुचितञ्च शिराव्यधम् । क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्व्वन्त्यन्तर्मुखे गदान् । ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ । दाल्येते परिपाट्येते परुषासितकर्कशौ । पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ । पिटिकाभिर्बहुक्लेदावाशुपाकौ कफात्मकः । शीतासहौ गुरू शूनौ सुवर्णपिटिकाचितौ ॥ सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छिलौ । अकस्मात् म्लानसंशूनरुजौ विषमपाकिनौ ॥ रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ । खर्ज्जूरसदृशं चात्र क्षीणे रक्तोऽर्बुदं भ-

शेत् ॥ मांसपिण्डोपमो मांसात् स्यातां मूर्च्छत्कमौ क्रमात् । तैलाभश्वयथुक्लेदौ सकण्डू मेदसा मृदू ॥ वतजाववदौर्थ्येते पार्श्वेते चासकृत्पुनः ॥” वा.उ. २१अ. । अश्वस्य यथा—“उपकुशस्तथा लेशो जिह्वास्तम्भस्तथैव च । अलावुकः प्रशूनश्च दन्तरोगो गलग्रहः ॥ मुखपाकोऽधिदन्तश्च रोहिणी चोपजिह्विका । गण्डरोगौष्ठरोगौ च गलशालूक एव च ॥ इत्येते वाजिनां रोगा मुखजाः परिकीर्त्तिताः । एषां निदानं वक्ष्यामि चिकित्साञ्च यथाक्रमम् ॥ समेभ्यो दन्तमांसेभ्यो यस्य निर्य्याति शोणितम् । चलदन्तस्य वाहस्य विद्यादुपकुशं भिषक् ॥ हनुदेशे यदा दन्तो भवत्यभ्यन्तराश्रयः । आलेश इति तं विद्यात् श्लेष्मरक्तसमुद्भवम् ॥ येनाश्वो दुर्म्मनात्यर्थं मन्दं पिबति खादति । जर्ज्जरं कासते चैव बलाच्च परिहीयते ॥ शूना यस्य भवेज्जिह्वा वाजिनः स्फोटकैर्युता । प्रक्लिन्ना वापि यस्यैव जिह्वास्तम्भोति तं विदुः ॥ मुखं दुर्गन्धिकञ्चैव तालुकः शूनको भवेत् । यासत्रिदोषिणोऽश्वस्य रोगं विद्यादलावुकम् ॥ श्यावोष्ठतालुवक्त्रो वा मन्दाहारी तथैव च । संशीर्णे दन्तमांसे च प्रशूनं व्याधिमादिशेत् ॥ हन्वोश्चैव तथा गण्डे श्वयथुर्यस्य जायते । जिह्वामूले गले चापि तस्य विन्द्याद्गलग्रहम् ॥ स्वक्कौष्ठतालुदेशेषु व्रणं यस्योपजायते । विवर्णन्तु मुखं दुष्टं मुखपाकं तमादिशेत् ॥ दन्तानामुपरिष्टात्तु यदा दन्तस्य सम्भवः । अधिदन्तः स विख्यातो मन्दाहारस्य वाजिनः ॥ यस्य शूनात्रिकूटस्य गले शोथः प्रलम्बते । यवसदोषिणोऽश्वस्य रोहिणीरोगमादिशेत् ॥ अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते । तं विन्द्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम् ॥ अधिजिह्वाभिधानन्तु उपरिष्टाद्विनिर्दिशेत् । गण्डाभ्यन्तरगो गण्डो गण्डरोग इति स्मृतः ॥ सव्रणः पिड़काकीर्ण ओष्ठ उच्छून एव च । स्फुटितः कठिनश्चैव ओष्ठरोगोऽभिधीयते ॥ गलाभ्यन्तरशोथेन यासमुद्गिरते हयः । गलशालूकिनं विन्द्यात् काशार्त्तञ्च तुरङ्गमम् ॥ सर्व्वेषां मुखरोगाणां सम्भवः श्लेष्मशोणितम् ॥” ज.द.२९अ. ।

**मुखलाङ्गलः** । पुं । शूकरे । जटा. ।

**मुखलिप्तता (लेपः)** । पुं । मुखरोगे । मुख চটচটে করা । भा. ।

**मुखवल्लभः** । पुं । दाड़िम्बवृक्षे । श.मा. ।

**मुखवाचिका** । स्त्री । अम्बष्ठायां । रा.नि.व.४ ।

**मुखवासः** । पुं । तरम्बजलतायां । তরমুজ গাছ । र.मा. । फुटी इति प्रसिद्धे फलशाकविशेषे । गन्धतृणे । आम्रदेशख्याते सुगन्धभूतृणे । रा.नि.व.८ । [त्रि । अम. ।

**मुखवासनः** । त्रि । मुखसुरभीकरणद्रव्यमा-

**मुखविलुण्ठिका** । स्त्री । छाग्याम् । श.र. ।

**मुखविष्ठा** । स्त्री । तैलपायिकायाम् । তেলা-পোকা । हे.च. ।

**मुखवैदलः** । पुं । तन्नामकवायव्यकीटे । सु.कल्प.८अ. । [निदा. ।

**मुखव्यङ्गः** । पुं । गण्डगतक्षुद्ररोगे । মাছতে ।

**मुखशुद्धिः** । स्त्री । मुखशोधने ।

**मुखशोधनम्** । क्ली । त्वचि । গুড়ত্বক্, দারুচিনি । रा.नि.व.६ । [कटुरसे । हे.च. ।

**मुखशोधनः** । त्रि । मुखशोधकद्रव्यमात्रे । पुं ।

**मुखशोधी** (इन्) । पुं । जम्बीरवृक्षे । रा.नि.व.११ ।

**मुखशोषः** । पुं । शुष्कास्यतायाम् । निदा. ।

**मुखसम्भवम्** । क्ली । पुष्करमूले । वै.निघ. ।

**मुखसिञ्चनमन्त्रः** । पुं । पीतविषस्य मुखसिञ्चनार्थजलस्य मन्त्रपूतकरणमन्त्रे । ক্লপথড় । “ओं हर हर नीलकण्ठ अमृतं स्रावय स्रावय हुङ्कारेण विषं ग्रस ग्रस क्रोङ्कारेण हर हर ह्रौङ्कारेण अमृतं स्रावय स्रावय हर हर नास्ति विषम् उक्लिरे ।” अचि.२स्थान.५९अ. ।

**मुखसुरम्** । क्ली । तालसुरायां । তাড়ী । शिका. । अधरामृते ।

**मुखसूची** । स्त्री । आम्रातकवृक्षे । वै.निघ. ।

**मुखस्रावः** । पुं । लालायाम् । रा.नि.व.१८ । बालकरोगभेदे । निदा. ।

**मुखामयः** । पुं । मुखरोगे । भा. ।

**मुखामोदः (दा)** । पुं, स्त्री । सल्लकीवृक्षे । रा.नि.व.११ । कृष्णशिग्रौ । वै.निघ. ।

**मुखार्जकः** । पुं । अर्जकवृक्षे । क्षुद्रतुलसी গাছ । रा.नि.व.१० ।

**मुखालु:** । पुं । स्वनामख्यातकन्दशाकविशेषे । मिठे आलू । गुणा:—मिष्ट: शीत: पित्तघ्न: रुच्य: वातल: दाहशोषतृष्णाघ्नश्च । रा.नि.व.७ ।

**मुखास्त्र:** । पु । कर्कटे । केँकड़ा । त्रिका.।

**मुखिक:** । पुं । मुष्ककवृक्षे । वै.निघ. ।

**मुगूह:** । पुं । हरिणविशेषे । वै.निघ.। दात्यूहपक्षिणि । भूरि.प्र. ।

**मुचक:** । पुं । लाक्षायाम् । वै.निघ. ।

**मुच(चु)कुन्द:** । पुं । (Pterospermum suber folium.) स्वनामख्यातवृक्षे । मूचकुन्द फुलेर गाछ । र.मा.। कोङ्कणेऽपि मुचकुन्द इति ख्यात: । हिं.मिकचन्द । तें लोलगु । उत्. वड्लो । ता. टड्डो । गुणा:—कटु: तिक्त: कफकासघ्न: कण्ठदोषहर: त्वग्दोषशोफघ्न: व्रणपामाघ्नश्च । रा.नि.व.१० । पुष्पगुणा:—"मुचकुन्दं शिरोऽर्त्तिजित् ।" राज.५प.। कण्टकमर्दने । सु.चि.१८अ.।

**मुचिलिन्द: (क:)** । पुं । मुचकुन्दवृक्षे । तिलकवृक्षे । (क:) राजादनवृक्षे । वै.निघ. ।

**मुचुक:** । पुं । पिचुके, मदनवृक्षभेदे । कोंटामयना । प.मु. ।

**मुचुटी** । स्त्री । अङ्गुलिमोटने । आङ्गुल मट्कान । श.र. । मुष्टौ । मुठो । हे.च. । चिपिटे ।

**मुञ्चक:** । पुं । मुष्ककवृक्षे । रा.नि.व.११ । व-

**मुञ्ज:** । पुं । (Saccharum munga.) स्वनामख्याततृणविशेषे । मुञ्जतृणमिति भागीरथीतीरे प्रसिद्ध: । मूञ्ज । तें मुंजगड्डि, अग्निस्फुलिङ्ग । स द्विविध: भद्रमुञ्जमुञ्जभेदेन । गुणा:—शीतवीर्य्यो मधुररस: कफपित्तघ्न: दाहरक्तादोषास्र पावन: मूत्रघ्नश्च । रा.नि.व.८ । "मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णाविसर्पास्रमूत्रवस्त्याक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥" भा. । शरतृणे । प.मु. ।

**मुञ्जक: (जालम्)** । पुं,क्ली । अक्ष्णः कृमिजन्याक्षिरोगे । "एकेन मुञ्जमाख्यातं बहुभिर्मुञ्जजालकं । कृमिभि: पटलान्त:स्थैर्विद्यान्नेत्रकजाड्यमिति । प्रथमं तैलवर्णाभं द्वितीयं स्फटिकप्रभं । रक्ताभञ्च तृतीयञ्च चतुर्थं तैलमुच्यते । प्रथमं पटलं साध्यं द्वितीयञ्च तथा भवेत् । तृतीयं कृच्छ्रसाध्यं स्याच्चतुर्थं नैव सिध्यति ॥" ज.द.३०अ. ।

**मुञ्जतृणम्** । क्ली । मुञ्जे । मूञ्ज । रा.नि.व.८ ।

**मुञ्जनक:** । पुं । मुञ्जे । मूञ्ज । रा.नि.व.८ ।

**मुञ्जमणि:** । पुं । पुष्परागमणौ । भा. ।

**मुञ्ज(ञ्जा)रम्** । क्ली । शालूककन्दे । श.मा. । मृणाले । वै.निघ. ।

**मुञ्जवलय:** । पुं । प्रसाधनार्थं जलरक्षणाधारविशेषे । सु.सू.४५अ. ।

**मुञ्जवान्** । पुं । सोमलताभेदे । सु.चि.२९अ.।

**मुञ्जात: (क:)** । पुं । स्वनामप्रसिद्धे शीतरापथिककन्दविशेषे । ह्रस्वमुञ्जतृणे । एतदभावे तालमज्जा ग्राह्या । वम्. मुञ्जाराकन्द । गुणा:—अतिस्वादु: वृष्य: पित्तानिलघ्नश्च । राज.। मुञ्जातपुष्पगुणा:—"मुञ्जातकं परं स्वादु वृष्यं पित्तानिलापहं ।" राज.३प. । सि.यो.अपस्मा.चि.महाचैतसघृते । अश्वगन्धाघृते । सु.सू.३९अ.कफशमने । वनशूरणे ।

**मुञ्जातकफलम्** । क्ली । मुञ्जातकबीजे । च.द.वृष्य.चि.गोधूमाद्यघृते । अभावे तालमस्तकं देयम् ।

**मुण्ड:** । पुं । स्थाणुवृक्षे । मस्तके । रा.नि.व.१८ । क्ली । मुण्डलोहे । रा.नि.व.१३ । बोले । रा.नि.व.६ ।

**मुण्डक(ज)म्** । क्ली । मुण्डलोहे । रा.नि.व.१३ । पुं (क:) । नापिते । हे.च. ।

**मुण्डकिट्ट:** । पुं,क्ली । मुण्ड[illegible]भेदे । मण्डूरलोहे । र.सा.सं. ।

**मुण्डचणक:** । पुं । बृहच्चणके । बड़ छोला । प.मु. । कलाये । रा.नि.व.१६ । [हे.च. ।

**मुण्डनम्** । क्ली। वपने, केशच्छेदने । मुड़ान ।

**मुण्डनक:** । पुं । श्वेतवटवृक्षे । वै.निघ. ।

**मुण्डन(नि)का** । स्त्री । (नका) नि:शूकस्थूलशालिधान्ये, मुण्डशालौ । বোরো ধান । रा.नि.व.१६ । (निका) मुण्डितिकायां । भूँडी । रा.नि.व.५ ।

**मुण्डफल:** । पुं । नारिकेलवृक्षे । श.र. ।

**मुण्डलौहम्** । क्ली । लौहविशेषे । तच्च मृदु-कुण्ठकडारमिति त्रिधा । रा.नि.व.१३ ।

**मुण्डशालिः** । पुं । स्वनामख्यातनिःशूकशालिधान्ये । शूकशून्य धान, बोरो धान । मं निःशूकशालि । कं बोल्लनलु । बम्. बोडके भात । गुणा.—त्रिदोषघ्नः मधुराम्लो बलप्रदश्च । रा.नि.व.१६ ।

**मुण्डा (ण्ड्या)** । स्त्री । महाश्रावणिकायाम् । बड़ थुलकुड़ि । मुण्डीरी । रा.नि.व.५ । मे. । शार्ङ्गधरे महानीलकण्ठरसे ।

**मुण्डायसम्** । क्ली । मुण्डलौहे । रा.नि.व.१३ ।

**मुण्डिका** । स्त्री । गोरक्षमुण्ड्याम् । मुण्डीरी । रा.नि.व.२३ ।

**मुण्डितम्** । क्ली । लौहे । रा.नि.व.१३ ।

**मुण्डितिका (निका, नी)** । स्त्री । (Sphaeranthus Indicus. Syn. S. Hirtus.) मुण्डीर्याम् । मुण्डीरी, बड़ थुलकुड़ि । हिं मुण्डी, गोरखमुण्डी । तें बोडसरपुचेट्ट । बम्. ता. कोट्टक । च.द.सि.यो.र.पि.चि. खण्डखाद्यलौहे । "हपमुण्डितिकाबलाः ।" गुणाः—"मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः । मेध्या गण्डापचीकृच्छ्रक्रिमियोन्यर्त्तिपाण्डुनुत् । श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्त्तिहृत् । महामुण्डी तु तत्तुल्या गुणैरुक्ता महर्षिभिः ॥" भा. ।

**मुण्डिनी** । स्त्री । कस्तूरीमृगे । वै.निघ. ।

**मुण्डी** । स्त्री । मुण्डितिकायां । मुण्डीरी । हिं गोरखमुण्डी । प.मु. । जटा. । (पर्पटीरसे । वै. निघ.२भ.चय.चि.नवरवराजमृगाङ्के । रस.र.सनरी.चि.) । "मुण्डीमूलं दशपलं ।"

**मुण्डीरिका (री)** । स्त्री । मुण्डितिकायां । मुण्डीरी । अलम्बुषायाम् । प.मु. । [प.मु. ।

**मुण्डीहचानुकारकः** । पुं । मुचुकुन्दवृक्षे ।

**मुत् (दा)** । स्त्री । वृद्धौषधौ । रा.नि.व.५ ।

**मुत्तोली** । स्त्री । मूटिकायाम् । वा.कल्प.१अ. ।

**मुदिरः** । पुं । मेघे । उणा. । [११ ।

**मुदिरफलः** । पुं । विकङ्कटवृक्षे । रा.नि.व.

**मुदी** । स्त्री । कृष्णगाम्भारीवृक्षे । ज्योत्स्नायाम् । वै.निघ. ।

**मुद्गः** । पुं । (Phaseolus mungo.) स्वनामख्यातशमीधान्यभेदे । मुग इति लोके । मुग । हिं हारिमुं । मं मुग । कं हेसरुक । तें पेसलु । पञ्जा. मूजि । तद्भेदा यथा—"कृष्णमुद्गा महामुद्गा गौरा हरितपीतकाः । श्वेता रक्ताश्च निर्द्दिष्टा लघवः पूर्व्वपूर्व्वतः । प्रधाना हरितास्तत्र वन्यमुद्गास्तु मुद्गवत् ॥" राज.३प. । सा. गुणाः—"कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः । विशदः श्लेष्मपित्तघ्नः मुद्गः सूप्योत्तमो मतः ॥" च.सू. २७अ. । "मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः । स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा । कृष्णमुद्गो महामुद्गो हरितः पीतकस्तथा । श्वेतो रक्तश्च तेषान्तु पूर्व्वः पूर्व्वो लघुः स्मृतः । सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः । चरकादिभिरप्युक्त एष एव गुणाधिकः ॥" भा.पू.१भ. धा.व. । "शीतः कषायो मधुरो लघुः स्यात् पैत्तास्रसृग्दोषहरः सरश्च । विपाकतोऽसौ कटुकप्रधानो मुद्गस्तथान्यः कथितोऽतिरम्यः ॥" अत्रि.१५अ. । रक्तपित्ते पथ्यः । सि.यो.र.पि.चि.खण्डखाद्यलौहे । जलवायसे । हे.च. । [क्र.क.प्रद.चि. ।

**मुद्गदला** । स्त्री । मुद्गपर्ण्यां । मुगानी । चि.

**मुद्गपर्णी** । स्त्री । (Phaseolus Trilobus or P. Aconitifolius.) वनमुद्गे । मुगानी । हिं माठमुगानी । मं राणमुग । क काडुहेसरु । तें पिल्लिपेसरचेट्टु । सु.सू.३८अ.काकोल्यादिः । वा. सू.१५अ.जीवन्त्यादिः । "मेदे द्वे मुद्गमाषपर्ण्यौ च ।" सा द्विधा सामान्या मार्जारगन्धा चेति । प. मु. । गुणाः—"मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला । चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत् । दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित् ॥" भा. । तद्यूषगुणाः—"आरण्यमुद्गयूषस्तु हृद्यो धातुविवर्द्धनः । रक्तपित्तज्वरतापपित्तकृच्छ्रविनाशनः ॥" द्रव्यगु. । [रा.नि.व.१८ ।

**मुद्गभुक् (भोजी)** । पुं । घोटके । त्रिका. ।

**मुद्गमोदकः** । पुं । पक्वान्नभेदे । मतिचूर । मुगेर लाडु । गुणाः—लघुः ग्राही त्रिदोषघ्नः चक्षुष्यः स्वादुः ज्वरघ्नः बल्यः शीतलः रुच्यश्च ।

तत्साधनविधि: यथा —"मुद्गानां धूमसीं सम्यक् गोलयेन्निर्मलाम्बुना। कटाहस्थघृतस्योर्द्धं झर्झरं स्थापयेत्तत:। धूमसीन्तु द्रवीभूतां प्रक्षिपेत् झर्झरोपरि। पतन्ति बिन्दवस्तस्मात् तान् सुपक्वान् समुद्धरेत्। सितापाकेन संयोज्य कुर्य्यात् युक्तेन मोदकान्॥" भा.।

**मुद्गयूष:** । पुं,क्ली। चतुर्भागाम्बुसाधितमुद्गरसे। মুগের ঝোল। प.मु.। स च पित्तपानात्यये वातपित्तज्वरे च हित:। सि.यो.पाना.चि.। च.द.ज्व.चि.। गुणा:—पित्तज्वरघ्न: लघु: सन्तापहर: अरोचकघ्न: रक्तप्रसादन: सैन्धवयुत: सर्व्वरोगघ्नश्च। रा.नि.व.१६। "शीतलं मधुरं मौद्गयूषं पित्तविकारजित्। तच्च वातहरं प्रोक्तं ज्वराणां शमनं परम्॥" अत्रि.१३अ.। "मुद्गयूषो लघुर्ग्राही कफपित्तहरो हिम:। स्वादुर्नेत्रोऽनलहर: कुल्माष: शुक्रवर्द्धन:। रक्तपित्तज्वरहरस्तुवरस्तम्भकारक:। सन्निपातज्वरहरो ग्लानिनाशकर: स्मृत:॥" द्रव्य.गु.।

**मुद्गर:** । पुं। स्वनामख्याते पुष्पवृक्षविशेषे। গন্ধরাজ। गुणा:—मधुर: शीत: सुरभि: सुखद: पित्तप्रकोपघ्नश्च। रा.नि.व.१०। मल्लिकावृक्षे। मत्स्यविशेषे। মাগুর মাছ। कर्म्मारवृक्षे। কামরাঙা। रा.नि.व.११। क्ली। मल्लिकापुष्पभेदे। मे.।

**मुद्गरक:** । पुं। कर्म्मरङ्गवृक्षे। কামরাঙ্গা গাছ। रा.नि.व.११। [लि। वै.निघ.।

**मुद्गरफल:** । पुं। कर्म्मरङ्गवृक्षे। क्ली। तत्फ-

**मुद्गलम्** । क्ली। रोहिषतृणे। रा.नि.व.८।

**मुद्गवटक:** । पुं। मुद्गकृतवटके। মুগের বড়া। गुणा:—"मौद्गी वटी गुरू रुच्या वातपित्तास्रदा मता। श्लेष्मल: पुष्टिबलकृत् शुक्रला बलदोऽल्पतट्॥" वै.निघ.। [र.। अम.।

**मुद्गष्ट: (क:)** । पुं। वनमुद्गे। মুগানী। श.

**मुद्गार्द्रवटक:** । पुं। वटकविशेषे। আদাবড়া। "मुद्गपिष्टीविरचितान् वटकांस्तैलपाचितान्। हस्तेन चूर्णयेत् सम्यक् तस्मिंश्चूर्णे विनिक्षिपेत्। भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरिचं जीरकं तथा। निम्बूरसं यवानीञ्च युक्त्या सर्व्वं विमिश्रयेत्। मुद्गपिष्टीं पचेत्सम्यक् स्थाल्यामङ्गारकोपरि। तस्यान्तु गोलकं कुर्य्यात् तन्मध्ये पूरणं क्षिपेत्। तैलेतान् गोलकान् पक्वा क्वथितायां निमज्जयेत्॥" गुणा:—"मुद्गार्द्रकवटी: रुच्या लघवो बलकारका:। दीपनास्तर्पणा: पथ्यास्त्रिदोषेषु प्रपूजिता:॥" भा.। [च.।

**मुद्गोलुम्ब:** । पुं। किञ्चिद्भृष्टमुद्गे। सु.चि.२३

**मुद्र(द्रि)णी** । स्त्री। लाक्षायाम्। रा.नि.व.६।

**मुद्राशङ्खम्** । क्ली। स्वनामख्यातखनिजपदार्थे। মুদ্রাশঙ্খ। गुणौ—सङ्कोचनम् आवरकञ्च।

**मुद्रिका** । स्त्री। छेदनार्थं भेदनार्थञ्च दशाङ्गुलशस्त्रविशेषे। सा च प्रदेशिन्यग्रपर्व्वप्रदेशप्रमाणा कर्त्तरीति कथ्यते। सु.सू.८अ.।

**मुनि:** । पुं। दमनकक्षुपे। দনা। रा.नि.व.१०। वकवृक्षे। भेष.कुष्ठ.चि.। "मुनिगुञ्जाक्षुद्रीपय:।"

**मुनिका** । स्त्री। ब्राह्मीक्षुपे। वै.निघ.।

**मुनिखर्जु(र्जू)रिका** । स्त्री। श्रेष्ठपिण्डीखर्जूरे। रा.नि.व.११।

**मुनिच्छद:** । पुं। सप्तपर्णवृक्षे। रा.नि.व.१२।

**मुनितरु:** । पुं। रक्तवकवृक्षे। লাল বকফুলের গাছ। र.मा.।

**मुनिद्रु: (म:)** । पुं। श्योणाकवृक्षे। प.मु.। पृथुशिम्बश्योणाकवृक्षे। বড় শোণাগাছ। रा.नि.व.९। अगस्त्यवृक्षे। বক ফুলের গাছ। रा.नि.व.१०। [नि। रा.नि.व.१६।

**मुनिधान्यम्** । क्ली। नीवार । উড়িধা-

**मुनिनिर्म्मित:** । पुं। डिण्डिशफलवृक्षे। ঢ্যাঁড়শ গাছ। गुणा:—"डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापह: स्मृत:। सुशीतो वातलो रुक्षो मूत्रलश्चाश्मरीहर:॥" भा.पू.१भ.शा.व.।

**मुनिपत्र:** । पुं। दमनकवृक्षे। দনা। वै.निघ.।

**मुनिपादप:** । पुं। वकवृक्षे। प.मु.।

**मुनिपित्तलम्** । क्ली। ताम्रे। त्रिका.।

**मुनिपुत्र: (क:)** । दमनकवृक्षे। দনা। भा.। (क:) खञ्जनपक्षिणि। त्रिका.। [शब्द.कल्प.।

**मुनिपुष्पम्** । पुं,क्ली। अगस्तिपुष्पे। বকফুল।

**मुनिपूग:** । पुं । पूगवृक्षभेदे । তাল গুয়া । त्रिका. ।

**मुनिप्रिय:** । पुं । पश्चिराजशालौ । रा.नि.व. १६ । पिण्डीखर्ज्जूरवृक्षे । प्रियालवृक्षे । वै.निघ. । स्त्री (या) । तिलवासिनीशालौ । रा.नि.व.१६ ।

**मुनिफल:** । पुं । अगस्तिफलकोषि । বক ফুলের শুঁটি । वै.निघ. ।

**मुनिभक्त(च्य)म्** । क्ली । देवधान्ये, नीवारधान्ये । উড়িধান । वै.निघ. । [विकङ्कवृक्षे । मे. ।

**मुनिभेषजम्** । क्ली । हरीतक्याम् । लङ्घने ।

**मुनिभोजनम्** । क्ली । श्यामाकधान्ये । শ্যামা ধান । नीवारे । वै.निघ. ।

**मुनिवर:** । पुं । पुण्डरीकवृक्षे । পুণ্ডরিয়া । वै.निघ.कास.चि.पर्पटीरसे । [वै.निघ. ।

**मुनिवल्लभ:** । पुं । प्रियालवृक्षे । পেয়াশাল ।

**मुनिवृक्ष:** । पुं । अगस्तिवृक्षे । प.मु. ।

**मुनिशस्त्रम्** । क्ली । श्वेतदर्भे । वै.निघ. ।

**मुनिसुत:** । पुं । दमनकवृक्षे । भा. ।

**मुनिह्वय:** । पुं । ससस्थिलचुपे । रा.नि.व.४ ।

**मुनीन्द्र:** । पुं । अगस्तिवृक्षे । लोध्रवृक्षे । वै. निघ. । [मु. ।

**मुनीष्टम्** । क्ली । नीवारधान्ये । উড়িধান । प.

**मुमूर्षा** । स्त्री । मरणेच्छायां । त्रि (र्षुः) । मरणोन्मुखे ।

**मुरगण्ड:** । पुं । वरण्डे । ব্রণক । जटा. ।

**मुरङ्गिका** । स्त्री । मूर्व्वायाम् । वै.निघ. ।

**मुर(रु)ङ्गी** । स्त्री । कृष्णशिग्रौ । वै.निघ. । रक्तपुष्पशोभाञ्जनवृक्षे । सु.सू.३८अ.शिरीरी.चि. ; अत्र सुरङ्गीति डल्वणपाठ:, तेन स एवार्थ: । सु. चि.२३अ. । "महौषधमुरङ्गीमूलसिद्धं वा ।" सु. चि.३अ. ।

**मुरजफल:** । पुं । पणसवृक्षे । त्रिका. ।

**मुरल:** । पुं । मत्स्यविशेषे । মউরলা মাছ । गुणा:—बृंहणी वृष्य स्तन्यश्लेष्मकरश्च । सु.सू.४६अ. ।

**मुरा (मांसी)** । स्त्री । गुर्ज्जरदेशे स्वनामख्यातगन्धद्रव्ये । মুরামাংসী । मं मुरा । कं मुरे । सि.यो.च.द.यक्ष्म.चि.चन्दनादितैले । भा.म.१भ. चित्तविभ्रमज्व.चि. । गुणा: – कटु: तिक्ता शीता कषाया कफपित्तहृत् श्वासरक्तविषदाहभ्रमत्वग्घ्नी च । रा.नि.व.१२ । "मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी ॥" भा.पू.१भ. । "किञ्चित् पीता मुरा प्रस्ता मांसी पिङ्गजटाकृति: ।" भैष. ।

**मुर्भिणी** । स्त्री । अङ्गारधानिकायाम् । श.च. ।

**मुर्म्मुर:** । पुं । तुषाग्नौ । তুষের আগুন । मे. ।

**मुशटी** । स्त्री । श्वेतकङ्गौ । শ্বেত কঙ্গু ধান । हे.च. ।

**मुश(ष)लिका (ली)** । स्त्री । (Curculigo orchioides or hypoxis orchioides.) तालमूलीनामकन्दशाके । তালমূলী । हिं मुषली, कालीमुषली, सिया । तें निलतलि गडडलि, नेलताडि । रा.नि.व.७ । र.मा.मं. । शाल्मल्यां । वा.उ.३२अ. । गुणा: — ध्वजभङ्गे शर्शसि प्रमेहे च हिता । See तालमूली । गृहगोधिकायाम् । श.र. । [निघ. ।

**मुश(ष)लीकन्द:** । पुं । तालमूल्याम् । वै.

**मुषक:** । पुं । मूषिके । वै.निघ. । [टी.रा. ।

**मुषा** । स्त्री । स्वर्णादिगालनपात्रे । মুচি । अ.

**मुष्क:** । पुं । अण्डकोषे । रा.नि.व.१८ । मुष्ककवृक्षे । घण्टापारुल । मे. । मांसले । हे.च. ।

**मुष्कक:** । पुं । (Schrebera swietenioides.) घण्टापाटलवृक्षे । पलाशवत् पर्णतरौ । घण्टापारुल । हिं मोषा । मं मोखा । कं मोखदलाड । तें मोकपुचेट्, मुष्कनुदुचेट् । भा. । वा.सू.१५अ. । गुणा:—"मुष्कक: कटुकोऽग्नेय रोचन: पाचन: पर: । शोफगुल्मोदरार्शोघ्नी द्विधा तुल्यगुणान्वित: ॥" रा.नि.व.११ ।

**मुष्ककादिवर्ग:** । पुं । मुष्ककस्नुक्वराद्वीपिपलाशधवशिंशपा इति गण: । गणा:—गुल्ममेहाश्मरीपाण्डुमेदोऽर्श:कफशुक्रघ्न: । वा.सू.१५अ. ।

**मुष्कर:** । पुं । महाण्डकोषमनुष्ये । কুরুণ্ড । हे.च. ।

**मुष्कशून्य:** । पुं । षण्डे । খোজা । श.मा. ।

**मुष्ट:** । त्र । मर्द्दिते । मर्द्दानि (मेउगा) । "अन्त र्गवमुष्टिमुष्टे यष्टीमधुककषाये ।" सु.सू.४२अ. ।

**मुष्टि:** । पुं,स्त्री । अस्तर्नवमुष्टौ । मूठा । भा.म. ४अ.कर्णरो.चि. । संहतपिण्डिताङ्गुलिकरे । "मुष्टिर्भवेत् संहतपिण्डिताङ्गुलावाकुञ्चितोऽयं प्रसृति: प्रकीर्तित: ।" रा.नि.व.१८ । पले । ८ तो. । प.प्र.१ख. । कट्टौ । घण्टापाटलवृक्षे । र.मा. । र.सा.सं.शूलचि.अग्निमुखरसे ।

**मुष्टिक:** । पुं । बलिदानयोग्योपकरणविशेषे । वा कुमारतन्त्रम् ।

**मुष्टिन्धय:** । पुं । बालके । चिका. ।

**मुष्टिप्रमाणबदरम्** । क्ली । सेवफले । (सेउ फल । भा. ।

**मुष्टियोग:** । पुं । "उद्धृत्य मुष्टिनाच्छाद्य सगुप्तं यन्निधापयेत् । तं मुष्टियोगमित्याहुर्विबुधा भिषगीश्वरा: ॥" इति परिभाषान्तरम् ।

**मुष्ठक:** । पुं । राजसर्षपे । र.मा. ।

**मुसली** । स्त्री । तालमूल्याम् । प.मु.महाभल्लातकगुड़े । गृहगोधायां । टिकटिकि । अम. ।

**मुस्त:** । पुं,क्ली । मुस्तके । हारा. । सु.कल्प.२अ. । च.द.पित्त.ज्व.चि.कलिङ्गादि: । "कलिङ्गं कट्फलं मुस्तम् ।" च.सू.४अ. । कन्दविषभेदे । प.मु. ।

**मुस्तक:** । पुं,क्ली । (Cyperus rotundus. Syn. Hexastachyos. Roxb.) स्वनामख्यातगन्धद्रव्ये । मुथा । हिं मोथा । तें तुगमुस्त । सकृहतुङ्गुविरु । ता. कोरय । गुणा:—तिक्तकषायं शीतं पाचनं पित्तज्वरघ्नं ग्राहि च । रा.नि. व.६। "अनपदेशे यज्जातं मुस्तकं तत् प्रशस्यते ।" तत्रापि तु नागरमुस्तं वरम् । भा. । "द्विमुस्तं नूतनं पुष्टं गन्धाढ्यं परमं विदु: ।" भैष । (C. Pertenuis. Syn. Mariscus cyperus.) नागरमुस्तके । तच्छुद्धिर्यथा—'मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितं । पञ्चपल्लवतोयेन स्विन्नमातपशोषितं । गुडाम्बुना सिच्यमानं भर्ज्जयेच्चूर्णयेत्तत: । आजशीभाजनजलैर्भावयेदिति शुध्यति ॥" भैष.वा.व्या.चि. । पुं । स्थावरविषभेदे । र.मा. ।

**मुस्तकादि:** । पुं । विषमज्वरे कषायभेदे । "मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्काथ: । पीत: सकणाचूर्ण: समधुर्विषमज्वरं हन्ति ॥" भैष.ज्व.चि. ।

**मुस्तद्वयम्** । क्ली । नागरमुस्तकैवर्त्तिमुस्तयो: । च.द.वा.व्या.चि.महाप्रसारणीतैले ।

**मुस्ता** । स्त्री । भद्रमुस्तायाम् । अम. । वा.सू.१५ अ. । "मुस्तावचाग्नि ।"

**मुस्ताकृति:** । स्त्री । शय्यां । वै.निघ. ।

**मुस्ताद:** । पुं । शूकरे । जटा. ।

**मुस्ताद्यगण:** । पुं । मुस्ताद्यष्टादशद्रव्यगणे । तत्कृतकषाय: सन्निपातज्वरे पित्तोत्तरसन्निपाते च हित: । "मुस्तपर्पटकोशीरदेवदारुमहौषधम् । त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत् ॥ किराततिक्तकं पाठा बला कटुकरोहिणी । मधुकं पिप्पलीमूलं मुस्ताद्योगण उच्यते ॥" च.द.सा.ज्व. चि. । अयं मुस्ताद्यष्टादशाङ्ग इति संग्रहान्तरे ।

**मुस्ताभम्** । क्ली । नागरमुस्तायाम् । र.मा. ।

**मुहूर्त्त:** । पुं । घटिकाद्वये । सु.सू.५अ. ।

**मुष्कक:** । पुं । मुष्ककवृक्षे । भरत: ।

**मूक:** । पुं । तन्नामकवातरोगविशेषे । (बोबा । निदानलक्षणे—"आवृत्य वायु: सकफो धमनी: शब्दवाहिनी: । नरान् करोत्यवचनान् मूकमिण्मिणगद्गदान् ॥" सु.चि.१अ. ।

**मूढम्** । क्ली । मूर्च्छायाम् । त्रि । जड़े । हे.च. ।

**मूढगर्भ:** । पुं । गर्भजरोगे । गर्भस्रावादिरोग । "तमेव कदाचिद्विगुणमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसम्मोहितं गर्भं मूढगर्भमित्याचक्षते ।" स चतुर्विध:—कील: प्रतिखुर: बीजक: परिघ इति केचित् । सुश्रुतस्तु अष्टविधमाह । सु.नि.८अ. । सु.शा. । एषां विशेषा: स्वस्वपर्य्याये मृग्या: । तस्य निदानं यथा—"भयाभिघातातितीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ गर्भोऽभिघातविषमाशनपीड़िताद्यै: पक्वं द्रुमादिव फलं पतति क्षणेन । मूढ: करोति पवन: खलु मूढगर्भं शूलञ्च योनिजठरादिषु मूत्रसङ्गम् ॥" मा.नि. ।

**मूढ़ि:** । स्त्री । मूर्च्छायाम् । रा.नि.व.२० ।

**मूत्रम् ।** क्ली । आहारस्य सारहीनमलद्रवे । प्रस्रावे । प्रस्राव, मूत् । रा.नि.व.१८ । "शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात् ।" शार्ङ्ग.६ख. । सा. मूत्रगुणाः—"मूत्रम् आलेपने प्रलेपे आस्थापने निरूहवस्तौ विरेचनेऽधोभागहरणे च ।" च.सू.१ अ. । "मूत्रं तीक्ष्णोष्णलवणं पित्तकृत्कटुकं लघु । रूक्षं क्रिमुदरानाहशोथार्शोविषकुष्ठनुत् ॥" राज. ३प. । तच्च दश—गोच्छागमेषमहिषगजाश्वोष्ट्रगर्दभनरनारीमूत्रभेदेन । विशेषाः तत्तत्पर्य्याये मृग्याः । "शूलगुल्मोदरानाहवातविच्छर्द्दनादिषु । मूत्रप्रयोगसाध्येषु गोमूत्रङ्कल्पयेद्बुधः ।" रा.नि.व.१५ । "अजागवीगतं मूत्रं पाने शस्तं भिषग्वर । आविकं माहिषञ्चाश्वं तैलपाके विधीयते ॥" अत्रि.८अ. । अप्रसूतायाः प्रसूतायाश्च मूत्रगुणाः—"अप्रसूताया घनं मूत्रं प्रसूताया द्रवं लघु । न किं गुणविशेषः स्यात्समता पाकवीर्य्ययोः ॥" अत्रि.८अ. । सु.सू. ३६अ.शिरो.वि. । मूत्रपरीक्षा—"वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः । रक्तमेव भवेद्रक्तात् धवलं फेनिलङ्कफात् ॥" भा. ।

**मूत्रकृच्छ्रम् ।** क्ली । मूत्ररोधरोगे । मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तौ । वि.र. । तच्चाष्टविधं—वातादिभेदेन चत्वारि, शल्यजपुरीषजशुक्रजाश्मरीजत्वाच्च चत्वारीति । तस्य निदानं—"व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात् । आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥" लक्षणं—"पृथङ्मलाः स्वैः कुपिता निदानैः सर्व्वेऽथवा कोपमुपेत्य वस्तौ । मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥" मूत्रकृच्छ्रमूत्राघातयोरयं विशेषः—तत्र प्रथमे कृच्छ्रत्वमतिशयितम् ईषद्विबन्धश्च । द्वितीये विबन्धो बलवान् कृच्छ्रत्वमल्पमिति । वि.र. ।

**मूत्रकोशः ।** पुं । मूत्राशये । ज.द.२अ. ।

**मूत्रग्रन्थिः ।** पुं । मूत्राघातरोगविशेषे । लक्षणं यथा—"अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् । अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥" मा.नि. । अश्मर्य्यां पित्तादि कुप्यति अत्र तु रक्तमेवेति भेदः । वि.र. ।

**मूत्रग्रहः ।** पुं । अश्वस्य मूत्रसङ्गरोगे । लक्षणं यथा—"स्तोकं स्तोकं सफेनञ्च कृच्छ्रान्मूत्रं करोति यः । तस्य वातसमुत्थन्तु विद्यान्मूत्रग्रहं बुधः । दाहोच्छ्वाससयुतः पित्तान्मूत्ररोगः प्रजायते । वाजिनः पीतमूत्रस्य अथवा रक्तमूत्रिणः । कफजे मूत्ररोगे तु सान्द्रमूत्रं सपिच्छिलम् ॥" ज.द.४७अ. ।

**मूत्रजठरः ।** पुं । मूत्राघातभेदे । तस्य लक्षणं—"मूत्रस्य वेगेऽभिहते तदुदावर्त्तहेतुकः । अपानः कुपितो वायुरुदरं पूरयेद्भृशम् । नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् । तन्मूत्रजठरं विद्यादधोवस्तिनिरोधजम् ॥" मा.नि. ।

**मूत्रदशकम् ।** क्ली । दशविधमूत्रेषु हस्तिमेषोष्ट्रगवाजमहिषघोटकगर्द्दभमानुषीमानुषजातेषु । "मूत्राणि हस्तिमहिषोष्ट्रगवाजकानां मेषाश्वरासभकमानुषमानुषीणाम् । यत्नेन यत्र मिलितानि दशेति तानि शास्त्रेषु मूत्रदशकाह्वम्...... ॥" रा. नि.व.२२ ।

**मूत्रदोषः ।** पुं । प्रमेहरोगे । उदकमेहादौ । प्रस्रावेर दोष । रा.नि.व.२० ।

**मूत्रनिरोधः ।** पुं । मूत्ररोधरोगे । निदा. ।

**मूत्रपञ्चकम् ।** क्ली । पञ्चविधमूत्रेषु । "गवामजानां मेषीणां महिषीणाञ्च मिश्रितम् । मूत्रेण गर्द्दभीनाञ्च तन्मतं मूत्रपञ्चकम् ॥" रा.नि.व.२२ ।

**मूत्रपतनः ।** पुं । गन्धमार्जारे । खट्टाशो कुत्ता । रा.नि.व.१९ ।

**मूत्रपथः ।** पुं । योनौ । वै.निघ. ।

**मूत्रपुटम् ।** क्ली । वस्तौ, नाभेरधोभागे । हे.च. ।

**मूत्रफला ।** स्त्री । कर्कट्याम् । काँकुड़ । रा. नि.व.७ ।

**मूत्रबीजकः ।** पुं । अम्लवृक्षे । वै.निघ. ।

**मूत्ररोधः ।** पुं । मूत्रकृच्छ्ररोगे, मूत्रसङ्गे । रा. नि.व.२० ।

**मूत्रलम् ।** क्ली । त्रपुषे । शशा । त्रि । वस्तिशोधने । श.च. । स्त्री । चिर्भटिकायाम् । फुटी । रा.नि.व.७ । कर्कटिकायां । चिका. ।

**मूत्रवहनाड़ी ।** स्त्री । या आमाशयाद्वस्तौ मूत्रं नयति । "पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः । तर्पयन्ति सदा मूत्रं सरितः सागरं यथा । सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः । नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥" सु.नि.३अ. ।

**मूत्रवृद्धि:** । स्त्री । अन्त्रवृद्धिरोगे । लक्षणं—मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयो: शोफं कोषयो: करोति च । मा.नि. ।

**मूत्रशुक्रम्** । क्ली । मूत्राघातरोगविशेषे । लक्षणं —"मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् । स्थानाच्युतं मूत्रयत: प्राक् पश्चाद्वा प्रवर्त्तते । भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥" मा.नि. ।

**मूत्रशोधनिका** । स्त्री । चिर्भटिकायाम् । वनकर्कटीविशेषे वै.निघ. ।

**मूत्रशौक्ल्यम्** । क्ली । श्लेष्मजन्यमूत्ररोगे । भा. ।

**मूत्र(त्रोत्)सङ्ग:** । पुं । मूत्राघातभेदे । तस्य लक्षणं—"वक्रो वाप्यथवा नाले मध्ये वा यस्य देहिन: । मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहत: । स्रवेच्छनैरल्पमल्पं सरुजं वाप्यनीरुजम् । विगुणानिलजो व्याधि: स मूत्रोत्सङ्गसंज्ञित: ॥" मा.नि. ।

**मूत्रसाद:** । पुं । मूत्राघातभेदे । लक्षणं—"पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् । कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं स्रवेत् । सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् । शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥" मा.नि. ।

**मूत्रक्षय:** । पुं । मूत्राघातभेदे । "रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ । मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥" मा.नि. ।

**मूत्राघात:** । पुं । त्रयोदशविधमूत्ररोधरोगे । निदानादि—"जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश । प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादय: ॥" यथा—वातकुण्डलिका अष्ठीला वातवस्ति: मूत्रातीत: मूत्रजठर: मूत्रोत्सङ्ग: मूत्रक्षय: मूत्रग्रन्थि: मूत्रशुक्रम् उष्णवात: मूत्रसाद: विड्विघात: वस्तिकुण्डल: इति । मा.नि. । सुश्रुते द्वादश उक्ता: । एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि ।

**मूत्रातीत:** । पुं । मूत्राघातभेदे । तस्य लक्षणं —"चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते । मेहमानस्य मन्दं वा मूत्रातीत: स उच्यते ॥" मा.नि. ।

**मूत्राधिक्यम्** । क्ली । श्लेष्मजन्यमूत्रबाहुल्यरोगे । भा. । [स्तिर्मूत्राशय: स्मृत: । रा.नि.व.१८ ।

**मूत्राशय:** । पुं । नाभेरधो वस्तिस्थाने । "व-

**मूत्राष्ट(क)म्** । क्ली । "गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा । मूत्राष्टकमिति ख्यातं सर्व्वशास्त्रेषु सम्मतम् ॥" प.प्र.२ख. । भा.म.४भ. बाल.चि. ।

**मूत्रिका** । स्त्री । सल्लकीवृक्षे । वै.निघ. ।

**मूत्रोष्णता** । स्त्री । पित्तजन्यमूत्ररोगे । भा. ।

**मूर्ख:** । पुं । वनमुद्गे । माषे । माषकलाये । त्रिका. । स्त्री (र्खा) । मूर्व्वायाम् । वै.निघ. ।

**मूर्च्छनम् (ना)** । क्ली, स्त्री । पारदस्य संस्कारविशेषे । रस.चि.३स्त. । See पारद: ।

**मूर्च्छा** । स्त्री । सर्व्वथा ज्ञानशून्यतायां, रूपादेरज्ञाने । सा पित्ततमोजाता । भा.म.१भ.ज्व. चि. । "मूर्च्छा दाहो मदस्तृषा ।" रोगविशेषे । মূর্চ্ছা রোগ । निदानं—"क्षीणस्य बहुदोषस्य विरुद्धाहारसेविन: । वेगघातादभीघातात् हीनसत्त्वस्य वा पुन: । करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवा: । संज्ञावहासु नाडीषु पिहितास्वनिलादिभि: । तमोऽभ्युपैति सहसा सुखदु:खव्यपोहकृत् । सुखदु:खव्यपोहाच्च नर: पतति काष्ठवत् । मोहो मूर्च्छेति तामाहु: षड्विधा सा प्रकीर्त्तिता । वातादिभि: शोणितेन मद्येन च विषेण च । षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते । हृत्पीडा जृम्भणं ग्लानि: संज्ञानाशो बलक्षय: । सर्व्वासां पूर्वरूपाणि यथा स्वं तं विभावयेत्… ॥" मा.नि. ।

**मूर्च्छाल:**
**मूर्च्छित:** } त्रि । मूर्च्छायुक्ते । श० ।

**मूर्त्ति: (र्त्त)** । स्त्री, क्ली । शरीरे । रा.नि.व. १८ । त्वचायाम् । वै.निघ. ।

**मूर्द्धकर्णी (र्परी)** । स्त्री । छत्रे । हारा. ।

**मूर्द्धखोल:** । पुं । जलत्राणायाम् । টোকা, পেটেক । त्रिका. ।

**मूर्द्धज:** । पुं, क्ली । केशे । रा.नि.व.१८ । स्त्री (जा) । बालके । वाला । भा.म.१भ.चित्तविभ्रमज्व.चि. । "सुरामूर्द्धजमेघाह्व… ।"

**मूर्द्धपुष्प:** । पुं । शिरीषवृक्षे । श.मा. । [श.च. ।

**मूर्द्धरस:** । पुं । भक्तफेने । ভাতের ফেন ।

**मूर्द्धवेष्टनम् ।** क्ली । उष्णीषे । পাগড়ী । हे. च. ।

**मूर्द्धा (न्) ।** पुं । मस्तके । रा.नि.व.१८ ।

**मूर्व्वा ।** स्त्री । (Sansevieria zeylanica. Syn. S. Roxburghiana.) Bow string hemp. स्वनामख्यातक्षुपे । धनुर्गुणोपयोग्या दुग्धउड़, कदलीसदृशस्वल्पविटपा इर्धोड़ इति च लोके । सु.सू.३८।३९अ.पित्तशमने । মূর্ব্বা, মুর্গা, মূরহর, শোচমুখী, ঘোড়াচক্র । हिं चूर्णहार । मं गोनसफण । तें चागचेट्टु, सग, चग । बम्. मोरवेल, मुहरसि । ता. मरुल । गुणाः—"...सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् । त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा ॥" भा. । मूलं राजयक्ष्महरम् । मूर्व्वाभावे पिप्पलीमूलं । सि.यो. कफजसंशमने ।

**मूलम् ।** क्ली । पिप्पलीमूले । पुष्करमूले । কুড়-বিশেষ । रा.नि.व.६ । वै.निघ.वा.व्या.प्रत्यष्ठीला. चि. । वा.उ.५अ. । तरुमूले । रा.नि.व.२ । हन्तौ । भा. । कारणे । च.सू.१अ. ।

**मूलकम् ।** क्ली, पुं । (Raphanus sativus.) Radish. स्वनामख्यातमूलशाकविशेषे । মূলা । हिं दा. मूली । मं कं ता. मूलंगि । तें मूलंगिचेट्टु । मूलकं पञ्चविधं—चाणक्य-राजन-पिण्ड-बाल-गर्ज्जरभेदेन । विशेषास्तत्पर्य्याये द्रष्टव्याः । भावमिश्रेण मूलकस्य द्विभेदः कृतः बालं महच्चेति । কচি মূলা ও পাকা মূলা । सा. गुणाः—"मूलकं कटुकं श्लेष्माणं संवर्द्धयति स्निग्धवीर्य्यत्वात् ।" सु.सू.४०अ. । तीक्ष्णम् उष्णं कटूष्णं ग्राहि दीपनम् अर्शोगुल्महृद्रोगहरं गुरु रुच्यं वातघ्नञ्च । रा.नि.व.७ । स्वर्य्यं श्वासाक्षिपीनसघ्नञ्च । शुष्कं तत् शोथघ्नं लघुत्रिदोषघ्नञ्च । तत्पुष्पं पित्तश्लेष्मघ्नं । फलं वातकफघ्नञ्च । मद.व.७ । लघु तत्—कटु उष्णं लघु पाचनं रुच्यं त्रिदोषघ्नं स्वर्य्यं ज्वरश्वासघ्नं नासारोगघ्नं कण्ठरोगघ्नं नेत्रामयहरञ्च । महत्तत्—रूक्षोष्णं गुरु त्रिदोषजनकं । स्नेहसिद्धं तत् त्रिदोषघ्नम् । तत्तैलगुणाः तीक्ष्णं लघु उष्णवीर्य्यं कटु कटुविपाकं सरं वातकफकृमिकुष्ठप्रमेहशिरोरोगहरञ्च । सु.सू.४५अ. । तत्पत्रगुणाः—"पाचनं लघु रुच्योष्णम् ।" "पत्रं मूलकजं नवम् । स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥" भा.पू.१भ.शा.व. । "मूलकं गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् । तदेव स्नेहपक्वं स्यात्कफकृद्वातपित्तजित् ॥" "बालमूलकपत्री तु रोचनी वह्निदीपनी ।" राज.२प. । तत्क्वाथयूषगुणाः—"मूलकयूषो हरति लालास्रावं गलग्रहं जूर्त्तिं । मेदारोचकपीनसकासकफश्वासाधिनाशनश्चापि ॥" द्रव्यगु. । उशीरे । रा.नि.व.१२ । शिग्रुमूले । विषभेदे । हे.च. । [ना । वै.निघ. ।

**मूलकच्छदः ।** पुं । कृष्णशिग्रौ । কাল মজি-

**मूलकपर्णी ।** स्त्री । शोभाञ्जनवृक्षे । সজিনা গাছ । र.मा. । [ला । वा.चि.९अ. ।

**मूलकपोता ।** स्त्री । बालमूलके । কচি মূ-

**मूलकपोतिका ।** स्त्री । अतिबालमूलके । অতি কচি মূলা । योग.र.मध्यज्वरे । गुणाः—कटुतिक्तरसा उष्णवीर्य्या लघुपाका । प्रभावश्च सर्व्वदोषघ्नता रुचिजनकता च । "सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ।" सु.सू.४६अ. । चाणक्यमूलके । वै.निघ. । [বিচ । भा. ।

**मूलकबीजम् ।** क्ली । मूलकशस्ये । মূলার

**मूलकमूला ।** स्त्री । चोरीशवृक्षे । प.मु. । चोरकाकोल्याम् । वै.निघ. ।

**मूलककर्कटी ।** स्त्री । कृष्णोदुम्बरे । वै.निघ. ।

**मूलकविषम् ।** क्ली । कन्दविषभेदे । सु.कल्प. २अ. ।

**मूलकशाकः ।** पुं । मूलकपत्रे ।

**मूलकक्षारः ।** पुं । शुष्कमूलकक्षारे । च.द. ग्रन्थि.चि. । [व.८ ।

**मूलग्रन्थिः ।** स्त्री । वक्रिदूर्व्वायाम् । रा.नि.

**मूलजः ।** त्रि । यो मूलादुत्पद्यते । यथा पद्मादिकम् । हे.च. । क्ली । आर्द्रके । আদা । रा. नि.व.६ । [मूले । रा.नि.व.१८ ।

**मूलजिह्वा ।** स्त्री । मध्यजिह्वाधोवर्त्तिजिह्वा-

**मूलपर्णी ।** स्त्री । मण्डूकपर्ण्याम् । থুলকুড়ি । प.मु. । [रा.नि.व.६ ।

**मूलपुष्करम् ।** क्ली । पुष्करमूले । কুড়ভেদ ।

**मूलपोती ।** स्त्री । मालवे प्रसिद्धायां पोतिका

यां । मं मालविरलि । कं तोंटदवसखे । गुणाः —त्रिदोषघ्नी हृष्या बल्या लघुः बलपुष्टिकरी क च्या जठरानलदीपनी च । रा.नि.व.७। आराम-वल्लिकायां । रा.नि.व.२३ । [निघ. ।

**मूलफलः (ला)** । पुं, स्त्री । पनसवृक्षे । वै.

**मूलफलदः** । पुं। पनसवृक्षे । কাঁঠাল গাছ। रा.नि.व.११ ।

**मूलरसः** । पुं । मोरटलतायां । र.मा. ।

**मूलविरेचनम्** । क्ली । त्रिवृतादिभिफलपश्चे-ष्ठविरेचने । तदुक्तं—"सप्तला शङ्खिनी दन्ती द्रवन्ती गिरिकर्णिका । त्रिवृच्छ्यामोदकीर्य्या च प्रकीर्य्या चीरिणी तथा । कृगलाण्डी गवाक्षी च कुचाक्षी गिरिकर्णिका । मसूरविदला चैव भवेन्मूलविरेचनम् ॥" वा.चि.६अ. ।

**मूलविषम्** । क्ली । स्थावरविषाश्रयकरवीरादौ । गुणाः —उद्वेष्टनं मोहकरं प्रलापजनकञ्च । भा.म.४भ.विष.चि. । क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाटविद्युच्छिखाविजयानीति अष्टौ मूलविषाणि । "उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ।" सु.कल्प.२अ.। [व.१ ।

**मूलवीरम्** । क्ली । पुष्करमूले । कुड़ । मद.

**मूलवृक्षः** । पुं । शाल्मलिवृक्षे । শিমুল গাছ । रा.नि.व.८ ।

**मूलशाकः** । पुं । मूलप्रधानशाके । शूरणादौ । ते च शूरणगणाः । राज.३प. ।

**मूलशो(सा)धनः** । पुं । पुण्डरीकवृक्षे । पुण्डरिया । वै.निघ. ।

**मूला (ली)** । स्त्री । गृहगोधिकायां । त्रिका.। शतावर्य्यां । रा.नि.व.४ । [यमितस्थाने । तल्लम् ।

**मूलाधारः** । पुं । गुह्यलिङ्गयोर्मध्ये अङ्गुलिद-

**मूलाह्वम्** । क्ली । मूलके । मूला । रा.नि.व.७।

**मूलिका** । स्त्री । मूलके । मूलसमूहे । मूलौषधौ । रस.र.रसशोधने । चीरिकायाम् । वै.निघ.।

**मूलिकामूलम्** । क्ली । चीरिकामूले । वै. निघ.२भ.सन्नेज्व.चि. ।

**मूलिनीवर्गः** । पुं । पर्य्यायेण प्रशस्तमूलानाम् द्विदां षोड़शगणे । "हस्तिदन्ती (नागदन्ती) हैमवती (श्वेतवचा) श्यामा त्रिवृदधोगुड़ा । सप्तला श्वेतश्यामा च प्रत्यक्श्रेणी गवाक्ष्यपि । ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका । अश्वगन्धा द्रवन्ती च चीरिणी चाथ षोड़श ॥" एषु शणपुष्पी हैमवती बिम्बी च छर्द्दने । श्वेता ज्योतिष्मती च शीर्षविरेचने । शिष्टा ११ विरेचने योज्याः । च. सू.१अ. । श्यामा श्यामात्रिवृत् । अधोगुड़ा वृद्धदारके । श्वेतनामा श्वेतापराजिता । प्रत्यक्श्रेणी मूषकपर्णी । गवाक्षी गोडुम्बा । ज्योतिष्मती लताफटकी । शणपुष्पी घण्टरवा । विषाणिका मेषशृङ्गी ।

**मूलेरम्** । क्ली, पुं । जटामांस्यां । उणा. ।

**मूश(ष)ली** । स्त्री । तालमूल्यां । वै.निघ. ।

**मूषकः** । पुं । तन्मूषिके । तैजसावर्त्तन्यां । श. र. ।

**मूष(षि)ककर्णी (पर्णिका)** । स्त्री । आखुकर्णीलतायां । मूषाकाणी । द्रवन्त्यां । रा.नि. व.३।५ । [नि.व.४ ।

**मूषकमारी** । स्त्री । गुतङ्गीलतायाम् । रा.

**मूषकयुग्मम्** । क्ली । क्ष्मद्वीर्घमूषाकर्णीद्वये । वै.निघ.शीतज्व.चि.तालकादिशीतारिरसे ।

**मूषकशत्रुः** । पुं । विड़ाले । वै.निघ. ।

**मूषकश्र(श्रा)वणी** । स्त्री । मूषिककर्ण्याम् । मूषाकाणी । वै.निघ. ।

**मूष(षि)का** । स्त्री । आखुकर्ण्याम् । इन्दुरकाणी । र.मा. । मूषिकायाम् । श.र. ।

**मूषकाह्वया (ह्वा)** । स्त्री । आखुकमार्य्याम् । इन्दुरमारी । आखुकर्ण्याम् । मूषाकाणी । दन्तीवृक्षे । वै.निघ. ।

**मूषा** । स्त्री । गोक्षुरवृक्षे । वै.निघ. ।

**मूषाक(प)र्णी** । स्त्री । (Salvinia cuculata.) आखुकर्ण्यां । मूषाकाणी । श.र. ।

**मूषातुत्थम्** । क्ली । नीलतुत्थके । নীল তুঁতিয়া । हे.च. ।

**मूषिकः** । पुं । बिलेशयजन्तुविशेषे । इन्दुर । तन्मांसगुणाः—गर्हितं मान्द्यकरं गुरु दुर्जरञ्च । रा.नि.व.१७ "स्निग्धो बलकरः शुक्रवर्द्धनो मधुरो लघुः । दुर्नामकृमिदोषघ्नो वातहारी च मूषिकः ॥"

भवि.२०अ. । ते अष्टादशधा यथा—लालनः पुत्रकः कृष्णः हंसिरः चिक्किरस्तथा । छुछुन्दरीऽलसश्चैव कषायदशनोऽपि च । कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा । कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तथोन्दुरः । श्वेतेन महता सार्द्धं कपिलेनाखुना तथा । मूषिकश्च कपोताख्यस्तथैवाष्टादश स्मृताः ॥ सु.कल्प.६अ. । "लालनश्चपलः पुत्री हंसिरश्चिक्किरोऽजिरः । कषायदन्तः कुलकः कोकिलः कपिलोऽसितः । अरुणः शवलः श्वेतः कपोतः पलितोन्दुरः । छुछुन्दरी रसालाख्यः दशाष्टौ चेति मूषिकाः ॥" वा.उ.३८अ. ।

**मूषिकक(प)र्णी** । स्त्री । आखुकर्णीलतायां । इन्दूरकाणी लता । अम. ।

**मूषिकतैलम्** । क्ली । योनिकन्दे तैलम् । तिलतैलं ४ श. मूषिकमांसं १ श. खण्डशः कृत्वा तैले पक्तव्यं, मांसे द्रवीभूते तैलसिद्धिः भवति । सा.कौ. । [१अ. ।

**मूषिकरुहा** । स्त्री । मूषिकलोम्नि । सु.कल्प.

**मूषिका** । स्त्री । कृष्णदन्तीक्षुपे । काल दन्ती । र.मा. । आखुपर्ण्यां । इन्दूरकाणी पाना । प. मु. । गोक्षुरके । वै.निघ. । निर्विषजलौकायाम् । निर्विष जोँक । सु.सू.१३अ. ।

**मूषिकाद्यतैलम्** । क्ली । गुदभ्रंशे तैलम् । पाठः—"मूषिकामांसकुडवं दशमूलं पलोन्मितं । चित्रकं द्विपलञ्चात्र क्वाथश्चाष्टगुणेऽम्भसि । पादावशेषकर्त्तव्यं तैलं पाच्यं पयः समं । जीवनीयैस्तत्पादैः पचेन्मृद्वग्निना भिषक् । अभ्यङ्गान्नाशयत्याशु गुदभ्रंशं सुदारुणम् ॥" क्वाथ—मूषिकमांस ८ प. दशमूल प्रत्येके ১ प. चितामूल २ प. । कल्क—जीवनीयगण मिलित तैलेर सिकि ।

**मूषिकारातिः** । पुं । विडाले । रा.नि.व. १९ ।

**मूषिकारिः** । पुं । मूषिकघ्नौषधविशेषे । उन्दिरमारी इति पश्चिमदेशे ख्यातः । गुणाः—"मूषिकारिस्तु कटुको नेत्राश्चाखुविषापहा । व्रणदोष नेत्ररोगं नाशयेदिति च स्मृतम् ॥" वै.निघ.।

**मूषिकाह्वयः** । पुं । आखुकर्ण्यां । इन्दूरकाणी पाना । द्रवन्त्यां । रा.नि.व.४ ५ ।

**मूषी (का)** । स्त्री । मूषिके । छुछुन्दर्यां । गणेशेर इन्दूर । रा.नि.व.१९ ।

**मूषीकः** । पुं । मूषिके । श.र. ।

**मूषीककर्णी** । स्त्री । आखुकर्ण्याम् । इन्दूरकाणी । श.र. ।

**मृगः** । पुं । पशुमात्रे । ते च हरिणादयः । ते तु द्रुतविलम्बितप्लवगतिभेदेन त्रिधा, तथाश्रयस्थानभेदेनापि विलस्थलजलाश्रयत्वेन त्रिविधाः भवन्ति । पुनश्च ते प्रसहप्रतुदविष्किरभेदेन त्रिभेदाः, स्वभावतोऽपि त्रयो भेदास्तेषामुक्ताः । एवं मृगजातयो नवधा । तेषां लक्षणादिकं स्वस्वपर्य्याये द्रष्टव्यम् । शशहरिणादयः स्वयं द्रुतगमनाद्द्रुतसंज्ञकाः । तथा तदुदितमांसञ्च पथ्यं बल्यं लघु वीर्य्यमदप्रदञ्च । तथा गजखङ्गमृगादयः स्वभावतो विलम्बितगतयः इति तथासंज्ञाः । तदुत्थं मांसञ्च पिच्छिलं कफकासवातघ्नं गुरु च । सारसहंसबलाकाचक्रक्रौञ्चादयो जलप्लवनात् प्लवसंज्ञकाः । तन्मांसं गुरूष्णं बलदञ्च । "यत्र स्थिता ये गतितोऽपि देशादन्यत्र याता मृगपक्षिमुख्याः । स्वस्वोचितस्थानविवर्त्तनेन मांसेऽपि तेषां गुणपर्य्ययाः स्युः ॥" रा.नि.व.१७ । मृगनाभौ । मार्गशीर्षे मासि । अ.टी.भ. ।

**मृगखुरी** । स्त्री । हरिणखुरे । वै.निघ. ।

**मृगगन्धा** । स्त्री । मुद्गपर्ण्यां । वै.निघ. ।

**मृगगामिनी** । स्त्री । विडङ्गायां । रा.नि.व. ६ । [राजि । रा.नि.व.१२ ।

**मृगघर्म्मजम्** । क्ली । जवादिगन्धद्रव्ये, गन्ध-

**मृगचिर्भिटा** । स्त्री । मधुचिर्भटिकायां । मधुफुटी । वै.निघ. । [श.मा. ।

**मृगचेटकः** । पुं । गन्धमार्ज्जारे । खाटाश ।

**मृगजरसः** । पुं । रक्तपित्ताधिकारे रसः । "मृतं सूतं मृतं तीक्ष्णं तुल्यं वासाद्रवैर्द्दिनं । मर्द्दितं माषमात्रन्तु भक्षयेन्मृगजं रसं ॥" रस.र. ।

**मृगजहुः** । पुं । हरिणबालके । वै.निघ. ।

**मृगजा** । स्त्री । कस्तूर्य्यां । मृगनाभि । वै.निघ. ।

**मृगजृम्भः** । पुं । अश्वस्य वातव्याधिविशेषे । लक्षणं यथा 'मृगरोगी यदा वाजी जृम्भावान्

आयते-मुहुः। मृगजृम्भं तदा तस्य व्याधिं समुपलक्षयेत् ॥" ज.द.५५ष.।

**मृगदंशकः** । पुं । कुक्कुरे । अम.।

**मृगधूर्त्तकः** । पुं । शृगाले । रा.नि.व.१९ ।

**मृगनाभिः (जा)** । पुं, स्त्री । कस्तूर्य्याम् । মৃগনাভি। रा.नि.व.१२ । See कस्तूरी ।

**मृगनाभ्याद्यवलेहः** । पुं । स्वरभेदे हितः। मृगनाभिः सूक्ष्मैला लवङ्गं वंशलोचना समा घृतमध्वा लेह्यः। মৃগনাভি, ছোট এলাচ, লবঙ্গ, বংশলোচন সমভাগে ঘৃত ও মধুর সহিত অবলেহ করিবে। भा.।

**मृगपतिः** । पुं । सिंहे । रा.न.व.१८ ।

**मृगपालिका** । स्त्री । कस्तूरीमृगे । वै.निघ.।

**मृगप्रियम्** । क्ली । भूतृणाख्यतृणे, पर्व्वततृणे। गुणाः—बल्यं रुच्यं पुष्टिकरं पशुहितञ्च । रा.नि.व.८ । स्त्री (या) । जलकदल्यां । प.मु.।

**मृगभक्षा** । स्त्री । जटामांस्यां । रा.नि.व.१२। इन्द्रवारुण्यां। রাখালশশা। वै.निघ.।

**मृगभोजनी** । स्त्री । विशालायां । রাখালশশা। सु.चि.१७ष.।

**मृगमदः (दा)** । पुं, स्त्री । कस्तूर्य्यां । মৃগনাভি। रा.नि.व.१२ । [रा.नि.व.१० ।

**मृगमदवासा** । स्त्री । कस्तूरीमल्लिकायाम् ।

**मृगमातृकः (का)** । पुं, स्त्री । कस्तूरीमृगे । लम्बोदरमृगे । च.सू.१५ष.। गुणाः—"शीतास्त्रकपित्तशमनी विज्ञेया मृगमातृका ।" सु.सू. ४६ष.।

**मृगमालारसः** । पुं । प्रमेहाभिकारे रसः। "मारितं चपुषं शीषं सुदग्धं मृगशृङ्गकं । कार्पासवीजमज्जा च तुल्यमङ्कोलवीजकम् । पेषयेन्माहिषीतक्रैः दिनैकं वटकीकृतं । माषद्वयं सदा खादेन्मृगमालाप्रमेहजित् । चव्यपाठाभयादार्व्वीकषायमनुपानकम् ॥" रस.र.।

**मृगयुः** । पुं । शृगाले । मे.।

**मृगरसा** । स्त्री । महाबलायां । रा.नि.व.४ ।

**मृगराजः (ट्)** । पुं । सिंहे । श.र.।

**मृगराटिका** । स्त्री । जीवन्त्यां । रा.नि.व.७।

**मृगरिपुः** । पुं । सिंहे । रा.नि.व.१९ ।

**मृगरोगः** । पुं । मृगज्वरे । गज.वै.। भूर्य्युपद्रवजनके साङ्घातिकाश्वरोगविशेषे । लक्षणं—'नासास्यानसंयुक्ता आयन्ते भूर्य्युपद्रवाः। नित्यं घासाभिलाषी च क्षीयते बलमांसयोः ॥ मृगरोगः स विख्यातो व्याधिः कष्टचिकित्सितः। षण्मासाभ्यन्तरे वाथ परलोकम्प्रयाति च ॥ बहुदुःखो भवेदश्वो मृगरोगप्रपीड़ितः। यावदुत्क्रमते जन्तुस्तावत् कुर्य्यात्प्रतिक्रियाम् ॥" ज.द.२६ष.। "सन्नासौ चैव यः पूर्व्वं पुनः स्वस्थो भवेत्। प्रस्विन्नाङ्गस्य तस्याशु मृगरोगं समादिशेत् ॥" ज.द.५५ष.। [ष.।

**मृगलण्डिका** । स्त्री । फलविशेषे । च.सू.२५

**मृगलोमजम्** । क्ली । राङ्कवे । পশমের কাপড়। अम.।

**मृगवल्लभः** । पुं । कुन्दुरुतृणे । रा.नि.व.८ ।

**मृगशृङ्गम्** । क्ली । Hart's horn. हरिणशृङ्गे । হরিণের শিং। एतद्भस्म हृद्रोगे त्रिकशूलादौ प्रशस्तम् ।

**मृगक्षीरम्** । क्ली । मृगीदुग्धे । व्याक.।

**मृगा** । स्त्री । महाबलायां । रा.नि.व.४ ।

**मृगाङ्कः** । पुं । कर्पूरे । अम.।

**मृगाङ्क(ङ्ग)जः** । पुं । कस्तूर्य्याम् । र.सा.सं. हृच्चूड़ामणिरसे । [व.२२ ।

**मृगाङ्कमुकुटार्हः** । पुं । ... र्हमे । रा.नि.

**मृगाङ्करसः** । पुं । राजयक्ष्माधिकारे रसः। "स्याद्रसेन समं हेम मौक्तिकं द्विगुणम्भवेत् । गन्धकस्तु समस्तेन रसपादस्तु टङ्कणः। सर्व्वं तद्गोलकङ्कृत्वा काञ्जिकेन विशोधयेत् । भाण्डे लवणपूर्णेऽथ पचेद्यामचतुष्टयं । मृगाङ्कसंज्ञको ज्ञेयो रोगराजनिकृन्तनः। रसस्य भस्मना हेम भस्मीकृत्य प्रयोजयेत् । गुञ्जाचतुष्टयञ्चास्य मरिचैः सेवयेद्भिषक् । पिप्पलीदशकैर्वापि मधुना लेहयेद्बुधः। पथ्यं सुलघुमांसेन प्रायशोऽस्य प्रयोजयेत् ॥" পারা ১ তো. স্বর্ণভস্ম ১ তো. মুক্তাভস্ম ২ তো. গন্ধক ২ তো. সোহাগা ২ মাষা একত্র কা-

জিতে পেষণ করিয়া গোলক করিবে। শুষ্ক হইলে মূষাভ্যন্তরে পূরিয়া লবণযন্ত্রে পাক করিবে। भैष.। स्वल्पं यथा—"रसभस्म हेमभस्म तुल्यं गुञ्जाद्वयं हयं। पूर्ववदनुपानेन मृगाङ्कोऽयं क्षयापहः। छागदुग्धानुपानेन दग्धरक्ताद्दिमाचया॥" रस.चि.९म.।

**मृगाङ्कजा।** स्त्री। मृगनाभौ। र.सा.सं.बृहज्ज्वरचूड़ामणिरसे। मधुचिर्भटिकायाम्। इन्द्रवारुणीलतायाम्। वै.निघ.। [निघ.।

**मृगाजिनम्।** क्ली। कृष्णमृगचर्म्मणि। वै.

**मृगाण्डजः (जा)।** पुं, स्त्री। कस्तूर्य्याम्। মৃগনাভি। रा.नि.व.१२।

**मृगात् (दनः)।** पुं। सिंहे। तरचौ। তোন্দা, নেকড়ে, চীতা বাঘ। रा.नि.व.१९।

**मृगादनी।** स्त्री। महाबलायाम्। গোরক্ষচাকুলিয়া। रा.नि.व.४। इन्द्रवारुणीलतायाम्। রাখালশশা। रा.नि.व.३। सु.चि.२म.। भा.म.४भ.स्कन्द.ग्र.चि.। "मृगादन्याश्च मूलानि।" गोरक्षीमूले। গোরক্ষচাকুলিয়ার মূল। कुष्ठ.चि. कन्दर्पसारतैले।

**मृगान्तकः।** पुं। चित्रकव्याघ्रे। रा.नि.व.१९।

**मृगारातिः।** पुं। कुक्कुरे। श.मा.।

**मृगारिः।** पुं। रक्तशिग्रौ। रा.नि.व.७। सिंहे। व्याघ्रे। कुक्कुरे। रा.नि.व.१९।

**मृगाक्षी।** स्त्री। महाशिम्ब्याम्। রক্তাকলায়। प.मु.। महेन्द्रवारुणीलतायां। মাকাল। अमृतफलायां। वै.निघ.।

**मृगी।** स्त्री। कस्तूरिकायाम्। वै.निघ.। पीतवर्णसितोदरवराटकभेदे। रा.नि.व.१३। मृगस्त्रियां। दुग्धगुणाः—छागीदुग्धगुणतुल्यम्। भा.। अपस्माररोगे।

**मृगेन्द्रः।** पुं। सिंहे। अम.।

**मृगेन्द्रकुटिलोद्भूतम्।** क्ली। सिंहदंष्ट्रनजन्यविषे। र.सा.सं.रसप्रयोगे।

**मृगेन्द्रचटकः।** पुं। मृगयादक्षश्येनपक्षिणि। বাজ পাখী। जटा.।

**मृगेन्द्राणी।** स्त्री। वकवृक्षे। रा.नि.व.४।

**मृगे(गै)र्वारुः।** स्त्री। श्वेतेन्द्रवारुणीलतायां। শ্বেত রাখালশশা। प.मु.। सु.सू.३९अ.। गुणाः—फलं दुर्जरं गुरु मन्दाग्निकरं रक्तपित्तहरञ्च। रा.नि.व.७। श्वेतहरिणभेदे. गुडाशयजातीयरुगी। सु.सू.४६अ.। महेन्द्रवारुणीलतायां। বড় রাখালশশা। हिं बड़ीइन्द्रवारुणी। भा.म.४भ.यकृन्नियहचि.। [গাছ। रा.नि.व.१०।

**मृगेष्टः।** पुं। सुन्दरपुष्पवृक्षे। গন্ধরাজ ফুলের

**मृगेक्षणा।** स्त्री। मधुचिर्भटिकायाम्। মধুফুটী। रा.नि.व.७।

**मृड्ङ्गणम्।** क्ली। दुग्धसरे। तैले। व्याक.।

**मृड्ङ्गणः।** पुं। बालके। उणा.।

**मृडीकः।** पुं। हरिणे। व्याक.।

**मृणालम्।** क्ली,पुं। उशीरे। গন্ধবেণা। रा.नि.व.१२। च.द.मधुकादौ। चचि.२स्था.२अ.। भैष.। वीरणमूले। বেণার মূল। प.मु.। घनचन्दनादिपाचने। सि.यो.वा.पि.ज्व.चि.। "पाठीदीच्यमृणालैस्तु।" च.द.वा.पि.ज्व.चि.। "पद्मकं मृणालञ्च।" च.द.वा.व्या.एलादितैले। कमलदण्डे। পদ্মের ডাঁটা। मं कमलतंतु। तैं तामरतुंड़, तामरतीगे। सु.चि.१९अ.। गुणाः—शीतलं तिक्तं कषायं पित्तदाहघ्नं मूत्रकृच्छ्रघ्नं रक्तवान्तिघ्नम्। च.द.वा.व्या.अश्वगन्धाद्यतैले।

**मृणालकण्ठः।** पुं। जलचरपक्षिविशेषे। च.सू.२७अ.। [पु.१भ.।

**मृणालमूलम्।** क्ली। पद्मकन्दे। श.र.। भा.

**मृणालाद्यतैलम्।** क्ली। वातरक्ते तैलम्। तिलतैलं ४ श.। कल्कः—मृणालम् उत्पलं पद्मकन्दः अनन्ता ह्रीवेरं कुङ्कुमं चन्दनद्वयं किराततिक्तं पद्मवीजं कशेरुकं पटोलपत्रं कटुकी दुरालभा शरमूलं वैत्रपर्पटी वासामूलं प्र. ४तो. दुग्धं ८श.। তৈল ৪ শ.। মৃণাল, উৎপল, শালুক, অনন্তমূল, বালা, কুঙ্কুম, চন্দনদ্বয়, চিরেতা, পদ্মবীজ, কেশুর, পটোলপত্র, কট্‌কী, দুরালভা, শরমূল, ক্ষেৎপাপড়া, বাসকছাল প্রত্যেকে ৪ তো. দুগ্ধ ৮ শ.। भा.।

**मृणालिनी।** स्त्री। कमलदण्डे। मृणाले। रा.नि.व.१०। पद्मिन्यां। जटा.।

**मृगाली** । स्त्री । मृगालि । पुं (इन्) । लाम ज्जकै, वीरणमूले । रा.नि.व.१० ।

**मृणमरु:** । पुं । पाषाणे । त्रिका. ।

**मृतकम्** । क्ली । शरे । हे.च. ।

**मृतकान्तक:** । पुं । शृगाले । हारा. ।

**मृतजीव:** । पुं । तिलकक्षुपे । তিল গাছ । रा.नि.व.१० ।

**मृतजीवनी** । स्त्री । } दुग्धिकायाम् । थि-
**मृतजीवी** (इन्) । पुं । } कई । वै.निघ. ।

**मृतमत्त:** । पुं । शृगाले । त्रिका. ।

**मृतवत्सा** । स्त्री । मृतसन्ततिकायाम् । लक्षणं यथा—"गर्भसन्धानमात्रं वा पश्चान्मासाच्च वत्सरात् । म्रियते द्वित्रिवर्षाद्वा यस्याः सा मृतवत्सका ॥" प्रयोगा.मृतवत्सा.चि. ।

**मृतसञ्जीवनरस:** । पुं । अतीसाराधिकारे रस: । पाठ —"शुद्धमृतं समगन्धं मृतपादं विषं क्षिपेत् । सर्व्वतुल्यं मृतताम्रं मर्द्यं धुस्तूरजैर्द्रवैः । सपाख्याश्च द्रवैर्यामं कषायेणाथ भावयेत् । धात्री चातिविषामुस्ताशुण्ठीबालकजीरकं । यमानीधातकी शुण्ठी पाठा पथ्या कणान्विता । कुटजस्य त्वचा बीजकपित्थं दाड़िमं तिलाः । प्रत्येकं कर्षमात्रं स्यात् कल्कितं क्वथितं जलैः । कल्काच्चतुर्गुणं तोयं क्वाथ्यं पादविशेषितं । अनेन त्रिदिनं भाव्यं पूर्व्वोक्तं मर्दितं रसं । रुद्धा तद्वालुकायन्त्रे चणं महाग्निना पचेत् । मृतसञ्जीवनो नाम्ना रसो गुञ्जाचतुष्टयं । दातव्यमनुपानेन चासाध्यमपि साधयेत् । नागरातिविषा मुस्ता देवदारुवचाकणाः । यमानी बालकं धान्यं कुटजस्य त्वचाभया । धातकीन्द्रयवा बिल्वपाठामोचरसं समं । चूर्णितं मधुना लिह्यमनुपानं सुखावहम् ॥" रस.र. । रस.चि. ।

**मृतसञ्जीवनी (सुरा)** । स्त्री । वाजीकरणाधिकारे । नूतनगुड़: १०० प. बब्बूलत्वक् बदरत्वक् पूगफलं प्र. १६ प. लोध्रं ४ प. आर्द्रकं २ प. वारि १५४ श. । हण्डिकायां प्रथमं गुड़ं गालयित्वा अथ आर्द्रकं बब्बूलत्वचं यथाक्रमं सम्मिश्य तदनु पूगं लोध्रञ्च प्रक्षिप्य हण्डिकामुखमवरुध्य च २० दिनं स्थाप्यम् । तत् हण्डिकाया आस्रीतनयन्त्रे संस्थाप्य मन्दतापेन यदा ईषत्तप्तं भवेत् तदा तत्र पूगम् एलबालुकं देवदारु लवङ्गं पद्मकाष्ठं वीरणमूलं रक्तचन्दनं शुलुफा यमानी मरिचं जीरकद्वयं जटामांसी शटी त्वक् जातीफलम् एला मुस्ता मेथिका चन्दनं मेषशृङ्गी च प्र. ४ तो. एकत्र कुट्टयित्वा यन्त्रमध्ये प्रक्षिप्य तन्मुखमवरुध्य च यथाविधि सुरामास्रीतयेत् । নূতন গুড় ১০০ প. বাবলাছাল, কুলছাল, শুপারি প্রত্যেকে ১৬ প. লোধকাষ্ঠ ৪ প. আদা ২ প. বারি ১৫৪ শ. । হাঁড়িতে অগ্রে গুড় গুলিয়া তাহার পর আদা, বাব্লাছাল যথাক্রমে মিশাইয়া শুপারি ও লোধ দিয়া পাত্রের মুখ বন্ধ করিয়া ২০ দিন রাখিবে । ২০ দিনের পর চোয়াই যন্ত্রে ভরিয়া মন্দ মন্দ তাপে তপ্ত হইলে, তাহাতে শুপারি, এলবালুক, দেবদারু, লবঙ্গ, পদ্মকাষ্ঠ, বেণার মূল, রক্তচন্দন, শুলফা, যমানী, মরিচ, জীরা, কৃষ্ণজীরা, জটামাংসী, শটী, গুড়ত্বক্, জায়ফল, এলাইচ, মুতা, মেতি, চন্দন, মেড়াশিঙে প্রত্যেকে ৪ তো. একত্র কুটিয়া প্রক্ষিপ্ত করত যন্ত্রমুখ বন্ধ করিয়া সুরা নিষ্কাশন করিবে । भैष. । [मणिरसे ।

**मृतसूत:** । पुं । रससिन्दूरे । र.सा.सं.चूड़ा-

**मृतामदम्** । क्ली । तुत्थके । श.च. ।

**मृता(त्ता)ल[क]म्** । क्ली । गोपीचन्दने । सौराष्ट्रमृत्तिकायाम् । अम. । रा.नि.व.१३ । भा. । आढ़क्यां । অরহর কলায় । अ.टी.भ. ।

**मृतोत्थापनरस:** । पुं । सन्निपा[त]ज्वरे रस: । पाठ:—"शुद्धसूतं द्विधा गन्धं भि[त्त्वा] तु विषहिङ्गुलं । मृतकान्तञ्च ताम्रायस्तालकं माक्षिकं समं । अम्लवेतसजम्बीरचाङ्गेरीणां रसेन च । निर्गुण्डीहस्तिशुण्ड्योश्च द्रवैर्मर्द्यं दिनत्रयम् । रुद्धा तु भूधरे पाच्यं दिनान्ते तं समुद्धरेत् । चित्रकस्य कषायेण भावयेत् प्रहरद्वयम् । माषमात्रं प्रदातव्यं हिङ्गुव्योषार्द्रकद्रवैः...... ॥" रस.कौ. ।

**मृत् (दा, द्)** । स्त्री । मृत्तिकासामान्ये । रा.नि.व.२ । अम. । सौराष्ट्रमृत्तिकायाम् । रा.नि.व.१३ । सि.यो.र.पि.चि. । च.सू.४अ. ।

**मृत्कपालम्** । क्ली । भ्रष्टखर्परे । পোড়ামাটী, ভাঙ্গা খাপরা । च.सू.शोणितस्थापने ।

**मृत्कांस्यम्** । क्ली । शरावे । त्रिका. ।

**मृत्किरा** । स्त्री । घुर्घुरिकायां । घुरघुरिया । त्रिका. ।

**मृत्खलिनी** । स्त्री । चर्मकषायाम् । श.च. ।

**मृत्तिका** । स्त्री । मृदि । माटी । रा.नि.व.२ । सा पञ्चधा—"वल्मीकमृत्तिकाधूमगैरिकं चेष्टकं पटु ।" इति । र.सा.सं.स्वर्णशोधने । सौराष्ट्रमृदि । अभावे कृष्णपङ्कपर्पटी । च.द.सि.यो.र.पि.चि.स्तम्भनयोगे । "प्रियङ्गुमृत्तिकाञ्जने ।"

**मृत्तिकालवणम्** । क्ली । क्षारमृत्तिकायाम् । सोरा, खारीमाटी । वै.निघ. । [निदा. ।

**मृत्पाण्डुः** । पुं । मृत्तिकाभक्षणजन्यपाण्डुरोगे ।

**मृत्पिण्डः** । पुं, क्ली । लोष्टे । ढेला । रस.र. बालचि. ।

**मृत्फली** । स्त्री । कुष्ठौषधे । कुड़ । हारा. ।

**मृत्या** । स्त्री । व्याधौ । रा.नि.व.२० ।

**मृत्युः** । पुं । व्याधौ । रा.नि.व.२० । ज्वरे । मरणे । स च एकोत्तरशतं शरीरे निवसति । तत्रैकः कालसंयुक्तः शेषा आगन्तवः । आगन्तव औषधजपहोमादिभिः साध्याः । कालकृतस्तु असाध्य एव । "एकोत्तरं शतं मृत्युरस्मिन् काये प्रतिष्ठितः। तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ।" भैष. ।

**मृत्युञ्जयरसः** । पुं । रसोऽयं नवज्वरे हितः । पाठः यथा—"रसं गन्धं शिलां तालं माक्षिकं ताम्रमेव च । समभागन्तु संगृह्य रसार्द्धविषदर्लिजैः । चित्रकस्य रसेनैव मर्दयत्तासंपुटे । निक्षिप्य वह्निना दग्ध्वा यावद्भस्मो भविष्यति । लेपनञ्च विषश्चैव भागार्द्धं तत्र निक्षिपेत् । मर्दयेत् सम्यगेतानि...... ॥" रस.कौ. ।

**मृत्युपुष्पः** । पुं । इक्षौ । प.मु. । देवनले । स्त्री (ष्पा) । कदलीवृक्षे । वै.निघ. ।

**मृत्युफलः** । पुं । महाकाललतायां । माकाल लता । स्त्री (ला) । कदलीवृक्षे । मे. ।

**मृत्युबीजः** । पुं । वंशे । बाँश । त्रिका. ।

**मृत्युभृत्यः** । पुं । रोगे । रा.नि.व.२० ।

**मृत्युवञ्चनः** । पुं । दण्डकाके । बिल्ववृक्षे । मे. ।

**मृत्युसूतिः** । स्त्री । कर्कटस्त्रियाम् । मादि काँकड़ा । वै.निघ. ।

**मृत्सः** । त्रि । पिच्छिले । सु.नि.६ष. ।

**मृत्सा (त्स्ना)** । स्त्री । सौराष्ट्रमृत्तिकायां । र.मा. । प्रशस्तमृत्तिकायाम् । रा.नि.व.२ ।

**मृत्स्नः** । त्रि । त्वगिन्द्रियसुखे । सु.सू.११ष. ।

**मृत्स्नारम्** । क्ली । मूलके । मूला । रा.नि.व.७।

**मृदङ्कुरः** । पुं । हरितकपोते । हारीत पाखी । है.च. ।

**मृदङ्गः** । पुं । वंशे । श.मा. । [६ष. ।

**मृदङ्गफलः** । पुं । पनसवृक्षे । श.र. । च.कल्प.

**मृदङ्गफलिनी** । स्त्री । कोशातकाम् । घोषा । रा.नि.व.३ । [र.मा. ।

**मृदङ्गी** । स्त्री । कोषातक्यां । श्वेत घोषा ।

**मृदाकरः** । पुं । वीजे । वज्रे । श.मा. ।

**मृदाह्वया** । स्त्री । सौराष्ट्रमृत्तिकायां । है.च. ।

**मृदितम्** । क्ली । शूकरोगे । "मृदितं पीडितं यत्तु संरब्धं वायुकोपतः ।" सु.नि.१४ष. ।

**मृदिनी** । स्त्री । मृत्स्नायाम् । गोपीचन्दन । वै.निघ. ।

**मृदुः** । स्त्री । गृहकन्यायाम् । घृतकुमारी । रा.नि.व.५ । शुभ्रजातिपुष्पवृक्षे । श्वेत जाति फुलेर गाछ । त्रि । कोमले । तोयाकाशगुणभूयिष्ठे । सु. । हंडणधूमपानविशेषे । अत्र धूमनाड़ी ३२ अङ्गुलिः, धूमद्रव्यञ्च सर्ज्जरसो देयः । भा. ।

**मृदुकण्टकः** । पुं । श्वेतभिण्टाम् । श्वेत काँटा । वै.निघ. । [काँकुड़ गाछ । प.मु. ।

**मृदुकण्टफला** । स्त्री । कर्कटीलतायाम् ।

**मृदुकर्म्म** । क्ली । कठिनस्य मृदुकरणे । सु.चि. १ष. । [व.१३ ।

**मृदुकृष्णायसम्** । क्ली । सीसधातौ । रा.नि.

**मृदुकोष्ठः** । त्रि । कोमलकोष्ठे ।

**मृदुखुरः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं—"मृदुखुरश्च विख्यातो मृदुर्यस्य खुरो भवेत् ।" ज.द.३८ष. ।

**मृदुगमना** । स्त्री । हंस्यां । रा.नि.व.१९ ।

**मृदुग्रन्थिः** । पुं । मज्जरद्रुमे । रा.नि.व.८ ।

**मृदुचर्म्मी** (इन्) । पुं । भूर्ज्जवृक्षे । रा.नि.व.९ ।

**मृदुच्छदः** । पुं । कोङ्कणदेशप्रसिद्धे फोण्डा-शौ । रा.नि.व.७ । नले । नल गाछ । रा.नि.व. ८ । शीतालवृक्षे । रा.नि.व.९ । रक्तलज्जालुके । वै.निघ. । भूर्ज्जवृक्षे । हे.च. । आरण्याचांटे । जटा. । कुकुरद्रुमे । कुकुशिमा । रा.नि.व.४ । शिल्पिनीतृणे । पिण्डीखर्ज्जूरीवृक्षे । रा.नि.व.८ ।

**मृदुतालः** । पुं । शीताले । रा.नि.व.९ ।

**मृदुत्वक्** (चः) । पुं । भूर्ज्जवृक्षे । अम. ।

**मृदुदर्भः** । पुं । शुक्लकुशे । वै.निघ. ।

**मृदुनकम्** । क्ली । स्वर्णे । श.च. ।

**मृदुपत्रः** । पुं । नले । नल गाछ । रा.नि.व. ८ । भूर्ज्जवृक्षे । रा.नि.व.९ । शाकविशेषे । तक्कु-चिल्ली । वै.निघ. । क्ली । कोमलपर्णे ।

**मृदुपत्रा** (त्री) । स्त्री । चिल्लीशाके । रक्तचि ल्लीशाके । रा.नि.व.७ ।

**मृदुपर्व्वकः** (र्व्वा) । पुं । वेतसे । वेत्रवंशे । (वेउड़ बाँश । रा.नि.व.७ ।

**मृदुपुष्पः** (कः) । पुं । शिरीषवृक्षे । शिरीष गाछ । र.मा. । रा.नि.व.९ ।

**मृदुफलम्** । क्ली । परूषकफले । वा.टी.अरुण. ।

**मृदुफलः** । पुं । विकङ्कतवृक्षे । वँइचि गाछ । रा.नि.व.९ । विकण्टकवृक्षे । मधुनारिकेलवृक्षे । रा.नि.व.११ । परूषकवृक्षे । वै.निघ. ।

**मृदुबीजः** । पुं । विकङ्कतवृक्षे । वँइचि गाछ । वै.निघ. ।

**मृदुलम्** । क्ली । अक्षोटफले । जले । श.च. । त्रि । कोमले । स्त्री (ला) । सुलेमानीखर्ज्जूरीवृक्षे । भा. ।

**मृदुलता** । स्त्री । शूलीतृणे । रा.नि.व.८ ।

**मृदुलोमकः** (वान्) । पुं । शशके । हे.च. ।

**मृदुसारम्** । क्ली । तूलकाष्ठे । पुं । पारिशा-श्वत्थे । रा.नि.व.९ ।

**मृदूत्पलम्** । क्ली । नीलपद्मे । श.च. ।

**मृद्गः** । पुं । मत्स्यभेदे । उज्ज्व. ।

**मृद्वङ्गम्** । क्ली । वङ्गधातौ । र.मा. । त्रिका. । पुं । वनवालुके । वै.निघ. ।

**मृद्वी** (का) । स्त्री । द्राक्षालतायाम् । अम. । वा.चि.१अ.पटोलादौ । "मृद्वीकामुस्तकटुका" .च.द.ज्व.चि. । "मृद्वीकापिप्पलीमूलचव्यचित्रक-नागरैः ।" च.द.पि.ज्व.चि. । "मृद्वीका मधुकं नि-म्बम् ।"

**मृद्वीकादिः** । पुं । द्राक्षादिसिद्धकषाये । "मृद्वीका मधुकं निम्बं कटुकारोहिणी समा । अवश्यायस्थितं पाक्यमेतत्पित्तज्वरापहम् ॥" च. द.पि.ज्व.चि. ।

**मृद्वीकादिकषायः** । पुं । स्नेहोपगकषाये । "मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीर-काकोलीजीवकजीवन्तीशालपर्ण्यः ।" च.सू.४अ. ।

**मृद्वीकासवः** । पुं । द्राक्षासवे ।

**मृषाध्यायी** (इन्) । पुं । बके । रा.नि.व.१९ ।

**मृषालकः** । पुं । आम्रवृक्षे । श.च. ।

**मृष्टम्** । क्ली । मरिचे । रा.नि.व.६ ।

**मृष्टेरुकः** । त्रि । मिष्टान्नभक्षके ।

**मेकः** । पुं । छागे । रा.नि.व.१९ ।

**मेखला** । स्त्री । पृश्निपर्ण्याम् । चाकुलिया । रा.नि.व.४ । गिरिनितम्बे । त्रिका. ।

**मेघः** । पुं । मुस्तके । मुता । प.मु. । रा.नि.व. ६ । वै.निघ.२भ.अ.सा.चि.पाठादिः । तण्डुलीय-शाके । काँटानटिया शाक । र. । अभ्रके । अम. ।

**मेघकफः** । पुं । करकायाम् । हारा. ।

**मेघचिन्तकः**<br>**मेघजीवकः** } पुं । चातकपक्षिणि । श.च. ।

**मेघजीवनः** । पुं । चातके । रा.नि.व. । ता-लवृक्षे । चाषपक्षिणि ।

**मेघनादः** । पुं । तण्डुलीयशाके । प.मु. । रक्त-तण्डुलीयके । मेघनादरसे । रस.र.स्तनरो.चि. । पलाशवृक्षे । श.र. । वै.निघ.२भ.अन्तकज्व.चि. । मृतसञ्जीवन्यां । मयूरे । बिडाले । छागे । त्रिका. । वरुणवृक्षे । भैष.कुष्ठ.चि. । "मेघनादाग्निलाङ्गला ।"

**मेघनादानुलासकः (लासी)।** पुं। मयूरे। रा.नि.व.१६। अम.।

**मेघनामा।** पुं। मुस्तके। अम.। तण्डुलीय शाके। वै.निघ.।

**मेघनीलकः।** पुं। तालीशपत्रे। वै.निघ.।

**मेघपुष्पः।** पुं,क्ली। अजशृङ्गे। रा.नि.व.२३। मुस्तके। अभ्रे। नदीजले। मे.। जले। अम.।

**मेघपुष्पी।** स्त्री। वेतसे। जले। अम.। करकायाम्।

**मेघप्रसवः।** पुं। जले। रा.नि.व.१४।

**मेघफलः।** पुं। विकङ्कतफलवृक्षे। रा.नि.व. ११।

**मेघभूतिः।** पुं। वज्रे। श.र.।

**मेघर(रा)वः।** पुं। सङ्घातचरजलपक्षिणि। गुणाः—प्लववत्। च.सू.२७अ.। चि.क्र.क.बाल चि.। [चि। वै.निघ.। नीलीवृक्षे। श.च.।

**मेघवर्णा।** स्त्री। भूमिजम्बूवृक्षे। नदीजम्बूवृ-

**मेघसारः।** पुं। चीनकर्पूरे। रा.नि.व.१२।

**मेघसुहृत्।** पुं। मयूरे। हे.च.। [व.१६।

**मेघस्कन्दी (इन्)।** पुं। महासिंहे। रा.नि.

**मेघस्तनितोद्भवः।** पुं। विकण्टकवृक्षे। रा. नि.व.११।

**मेघस्वनाङ्कुरः।** पुं। वैदूर्यमणौ। प.मु.।

**मेघाख्यम्।** क्ली। मुस्तके। र.मा.।

**मेघागमः।** पुं। धाराकदम्बे। केलिकदम्। रा.नि.व.६। वर्षाकाले। श.र.।

**मेघागमप्रियः।** पुं। धाराकदम्बे। वै.निघ.।

**मेघानन्दः (न्दा)।** पुं, स्त्री। मयूरे। बलाकायाम्। रा.नि.व.१६।२३।

**मेघानन्दी (इन्)।** पुं। मयूरे। रा.नि.व.१६।

**मेघान्तः।** पुं। शरत्काले। रा.नि.व.२१।

**मेघाभा।** स्त्री। भूजम्बूवृक्षे। जाम गाछ। वै.निघ.।

**मेघास्थि।** क्ली। करकायां। शिला। विका।

**मेघाह्वः।** पुं। अभ्रके। उशीरे। वै.निघ.२भ. चित्तभ्रमसन्निपातचि.।

**मेचकः।** पुं। मुष्ककवृक्षे। पीतशाले। कुन्दुरुखोटौ। वै.निघ.। पिच्छचन्द्रके। मे.। विचित्रवर्णे। कृष्णपीतरक्तवर्णे। मा.नि.अतिसा.चि.। मन्दविषवृश्चिकजातौ। सु.कल्प.८अ.। धूमे। शोभाञ्जने। श.र.। कृष्णवर्णे। भा.। क्ली। सौवीराञ्जने। सुर्म्मा। प.मु.। स्रोतोऽञ्जने। मे.। सौवर्चललवणे। विड़लवणे। वै.निघ.।

**मेचका।** स्त्री। वनकार्पासयाम्। वन कापास। वै.निघ.। [ञ्जन। वै.निघ.।

**मेचकाञ्जनम्।** क्ली। कृष्णाञ्जने। काल अ-

**मेचकाभिधा।** स्त्री। वत्सादनीलतायाम्। पातालगारुड़ी। रा.नि.व.३।

**मेटुला।** स्त्री। आमलक्याम्। श.च.।

**मेठः।** पुं। मेषे। भेड़ा। प.मु.।

**मेढ़िका।** स्त्री। क्षुद्रमेषशृङ्ग्याम्। क्षुद्र मेड़ाशिङे। वै.निघ.।

**मेढ्रः।** पुं। शिश्ने। रा.नि.व.१८। स गर्भस्थस्य सप्तभिर्मासैर्भवति। सुखबोधः।

**मेढ्रशृङ्गी।** स्त्री। मेषशृङ्ग्यां। प.मु.।

**मेढ्रास्थि।** क्ली। लिङ्गास्थनि। च.शा.७अ.।

**मेण्ढः।** पुं। मेषे। श.र.।

**मेथा।** स्त्री। मेथिकायाम्। रा.नि.व.६।

**मेथिः (का, थी)।** स्त्री। (Trigonella Foenum graecum.) Fenugreek. स्वनामख्यातगन्धद्रव्ये। मेथि। हिं मं मेथी। कं मेथ्य। तै मेन्तुलु। ता. वेन्दयम्। सा द्विधा मेथी वनमेथीति। गुणाः—कटुः उष्णा रक्तपित्तकरी अरोचकघ्नी वातघ्नी दीपनी च। रा.नि.व. ६। अन्या—"ततः स्वल्पगुणा वन्या वाजिनां सा तु पूजिता।" भा.। "मेथिका वातशमनी श्लेष्मघ्नी" [illegible] का वातला मता।" अत्रि.१६अ.। [नि.व.६।

**मेथिनी।** स्त्री। मेथिकायाम्। मेथि। रा.

**मेथीमोदकः।** पुं। वाजीकरणाध्याये। पाठः—"त्रिकटुत्रिफलामुस्तजीरककणधान्यकं। क-

टफलं पौष्करं शृङ्गी यमानी सैन्धवं विड़ं। तालीशकेशरं पत्रं त्वगेला च फलं तथा। यावन्त्येतानि चूर्णानि तावदेव च मेथिका। संचूर्ण्य गुड़कङ्कार्य्यं पुरातनगुड़ेन तु। घृतेन मधुना मिश्रं खादेदग्नि-बलं प्रति॥" रस.र.।

**मेदः** । क्ली। शरीरस्थचतुर्थधातौ। मांसजस्नेहे। मांससारभूतधातौ। मेदधातु। तत्स्वरूपादि—"यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते।" गुणाः—"तदतीव गुरु स्निग्धम्बलकार्य्यतिर्हणम्। मेदो हि सर्व्वभूतानामुदरेष्वस्थि संस्थितम्। अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत्॥" भा.। पुं। अलम्बुषायाम्। रा.नि.व.५।

**मेदःसारः** । त्रि। मेदस्विनि। बलवर्णनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहः मेदःसाराणां। सा सारता वित्तैश्वर्य्यसुखोपभोगप्रदानान्यार्ज्जवं सुकुमारोपचारतामाचष्टे। च.वि.८अ.। स्त्री (रा)। मेदायाम्। मेदा। रा.नि.व.५।

*मेदकः* । पुं। जगलसुराया घनतरसुरायां। "मेदको जगलाह्वनः।" प.प.३ख.। च.शा.८अ.।

**मेदकोद्भवा** । स्त्री। मेदायां। र.मा.।

**मेदगज्वरः** । पुं। तदाश्रितज्वरे। लक्षणम्—"भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्द्दिरेव च। दौर्गन्ध्यारोचकौ ग्लानिर्मेदस्थे चासहिष्णुता॥" मा.नि.।

**मेदजः** । पुं। भूमिजगुग्गुलौ। रा.नि.व.१२।

**मेदपुच्छः** । पुं। एड़के। दुम्बा मेष। तन्मांसगुणाः—"मेदपुच्छोद्भवं हृष्यमौरभ्रसदृशं गुणैः।" सु.सू.४६अ.।

**मेदभवः** । पुं। मेदधातौ। वै.निघ.।

**मेदसमुद्भवम्** । क्ली। अस्थनि। स्त्री (वा)। वसायां। वै.निघ.।

**मेदसमुद्भूता** । स्त्री। मेदधातौ। वै.निघ.।

**मेदस्कृत्** । क्ली। मांसे। हे.च.।

**मेदा** । स्त्री। स्वनामख्यातलताजातशुक्लकन्दविशेषे। सा च मध्यदेशजाता लघुमेदा इति गौड़देशे प्रसिद्धा। तं ज्योतिष्मतीचेद्, शल्लपुष्पचेद्। गुणाः—मधुरा शीता पित्तदाहकासघ्नी राजयक्ष्महरी वातला च। "मेदापि शक्लकन्दः स्यात् मेदोधातुमिव स्रवेत्।" रा.नि.व.५। See महामेदा।

**मेदाद्वयम्** । क्ली। मेदायां महामेदायाञ्च। वा.सू.१५अ.जीवन्त्यादिः। "जीवन्ती, काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च।"

**मेदिनी** । स्त्री। मेदायां। अजमोदायां। गाम्भारीवृक्षे। रा.नि.व.५।६।९।

**मेदुरः** । पुं। सल्लकीनिर्यासे। वै.निघ.। त्रि। अतिस्निग्धे। अम.। स्त्री (रा)। काकोल्याम्। काँकला। रा.नि.व.७।

**मेदोगण्डः** । पुं। गलरोगभेदे। निदा.।

**मेदोगतज्वरः** । पुं। तद्धातुगज्वरे। मा.नि.। See मेदगज्वरः।

**मेदोगला** । स्त्री। लज्जालुकाभेदे। वै.निघ.।

**मेदोग्रन्थिः** । स्त्री। मेदसः ग्रन्थौ। लक्षणं—"प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि। वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुश्चलम्। श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम्। स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत्॥" वा.उ.२९अ.।

**मेदोजम्** । क्ली। अस्थिधातौ। हाड़। रा.नि.व.१८।

**मेदोदाहः** । पुं। पुरस्ताचादिभिर्वर्त्तिमध्याङ्गुलाङ्गुला तया दाहे। ज.द.१४अ.।

**मेदोद्भवा** । स्त्री। मेदायां नि.व.५।

**मेदोधरा** । स्त्री। देहे ...थकलायां। "मेदो हि सर्व्वभूतानामुदरस्थमणुस्थिषु च महत्सु च मज्जा भवति।" सु.शा.४अ.।

**मेदोरोगः** । पुं। तद्वृद्धिरोगे। निदा.। [दा.

**मेदोरोहिणी** । स्त्री। गलरोगविशेषे। नि

**मेदोऽर्ब्बुदः** । पुं। ओष्ठरोगभेदे। क्ली। मेदोजार्ब्बुदे। निदा.। See मेदोग्रन्थिः।

**मेदोवती** । स्त्री। मेदायां। रा.नि.व.५।

**मेदोवृद्धिः** । स्त्री। देहस्थौल्ये। चर्व्वता निदा.।

**मेद्यः** । त्रि। मेदोजन्ये। सु.नि.९अ.।

मेधा । स्त्री । मेदायां । रा.नि.व.५ । धारणावत्यां बुद्धौ । अम. । मल्लकीवृक्षे । वै.निघ. ।

मेधाकरी । स्त्री । शङ्खपुष्प्याम् । वै.निघ. । ब्राह्मीक्षुपे । वै.संग्रहः ।

मेधाकृत् । क्ली । शितावरीक्षुपे । শুশুনি শাক । रा.नि.व.४ । ब्राह्मीक्षुपे । वै.निघ. ।

मेधाजननम् । क्ली । कृष्णसर्षपे । वै.निघ. ।

मेधायुः । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

मेधावती (विनी) । स्त्री । महाज्योतिष्मतीलतायां । रा.नि.व.३ । शारिकायां । শালিক পাখী । वै.निघ. ।

मेधावी (इन्) । पुं । शुकपक्षिणि । शारिकायां । चिका. । क्ली । मद्ये । रा.नि.व.१४ ।

मेधिः । पुं । धान्यमर्द्दनस्थाने पशुबन्धनार्थन्यस्तदारुणि । भ. । [वै.निघ. ।

मेधिका । स्त्री । तन्नामकवृक्षे । মেদী গাছ ।

मेध्यः । पुं । खदिरवृक्षे । वर्करे । छागल । रा.नि.व.८।१९ । यवे । प.मु. । स्त्री (ध्या) । रक्तवचायां, श्वेतवचायाम् । प.मु. । रा.नि.व.६।२३ । महाज्योतिष्मतीलतायाम् । शङ्खपुष्प्याम् । रा.नि.व.३.२३ । आम्राम् । रा.नि.व.५।२३ । शमीवृक्षे । रा.नि.व.८ । केतकीवृक्षे । কেয়া গাছ । रा.नि.व.१० । गोरोचनायां । रा.नि.व.१२ । अपराजितायाम् । इत्यौ । शर्करायां । रा.नि.व.२३। मण्डूक्याम् । रा नि.व.५ ।

मेन्धिका (न्धी) । स्त्री । मेहदीति ख्याते वृक्षे । মেদী গাছ । कोषान्तरम् ।

मेरुकः । पुं । मूषिके । वै.निघ. । यक्षधूपे । धूना । श.च. ।

मेरुपादजम् । क्ली । रौप्ये । वै.निघ. ।

मेलकलवणम् । क्ली । मृत्तिकालवणे । रा.नि.व.६ । [थाञ्जने । हे च. ।

मेला । स्त्री । महानील्याम् । रा.नि.व.४ । कृ-

मेलाम्बुः । स्त्री । मस्याधारे । जटा. ।

मेषः (कः) । पुं । पशुविशेषे : ভেড়া । प. मु.। एरके । नैगमेषे ग्रहे । भा.म.४भ.नैगमेषचि.। "कौमारभृत्ये मेषाय प्रथमूले निवेदयेत् ।'' मांसगुणाः— मधुरं शीतलं गुरु विष्टम्भि बृंहणञ्च । रा.नि.व.१९। पित्तश्लेष्मकरं कुसुम्भशाकेन सह त्याज्यञ्च। राज. । जीवशाके । रा.नि.व.७। मेषराशौ ।

मेषकम्बलः । पुं । मेषलोमकृतकम्बले । अम.।

मेषकुसुमः । पुं । चक्रमर्द्दे । চাকন্দা । वै. निघ. । [वै.निघ. ।

मेषपुष्पा । स्त्री । मेषशृङ्ग्याम् । মেড়াশিঙে ।

मेषलोचनः । पुं । चक्रमर्द्दवृक्षे । भा. ।

मेषवल्ली । स्त्री । मेषशृङ्ग्याम् । भा. ।

मेषविषाणिका । स्त्री मेषशृङ्ग्यां । মেড়াশিঙে । र.मा.। वै.निघ.२भ.चय.चि.शिवगुटी ।

मेषशृङ्गम् । क्ली । मेषस्य शृङ्गे । ভেড়ার শিঙ্ । रावणकृतकुमारतन्त्रं ।

मेषशृङ्गः । पुं । स्वनामख्याततिक्तशाकगणीयौषधविशेषे । মেড়াশিঙে । प.मु. । कर्कटशृङ्गे । स च पुत्रञ्जीवसदृशतरुविशेषः । কাঁকড়াশৃঙ্গী । सु.मू.३८भ. । पुत्रञ्जीवभेदे । सु.चि.२भ. ।

मेषशृङ्गी । स्त्री । अजशृङ्ग्यां । মেড়াশিঙে । কাঁকড়াশৃঙ্গী । रा.नि.व.९ । सु.सू.३८।३९भ. । See अजशृङ्गी ।

मेषा । स्त्री । सूक्ष्मैलायाम् । श.च. ।

मेषाख्यः । पुं । बालग्रहविशेषे, नैगमेषे । वा. उ.३भ. । [বেঁটে। रा.नि.व.३ ।

मेषान्त्री । स्त्री । अजान्त्रीलतायाम् । छागल-

मेषालुः । पुं । वर्वरावनस्पतौ । श.च. ।

मेषाह्वयः । पुं । चक्रमर्द्दक्षुपे । रा.नि.व.४ ।

मेषाक्षिकुसुमः । पुं । चक्रमर्द्दक्षुपे । र.मा. ।

मेषिका । स्त्री । मेषपर्ण्याम् । श.र. ।

मेषी (इन्) । पुं । तिनिशवृक्षे । তিনিশ, সাদন । रा.नि.व.९ । जटामांस्यां । रा.नि.व.१२ । मेषपर्ण्याम् । चिका.। मेषशृङ्ग्याम् । মেড়াশিঙে । भैष.वाजी. ।

मेहः । पुं । प्रमेहरोगे । रा.नि.व.२० । कश्मीरे । मूत्रे । हे.च. । मेषे । श.च. ।

मेहकुलान्तकरसः । पुं । वसामेहे औष-

षम् । पाठः —"सूतं वङ्गं मृतस्वार्भं शुद्धपारदगन्धकं । भूनिम्बं पिप्पलीमूलं त्रिकटु त्रिफला त्रिवृत् । रसाञ्जनं विडङ्गाब्दं विल्लगीसुरदाड़िमम् । प्रत्येकं तोलकं ग्राह्यं शुद्धमश्मजतोः पलम् । गोपालकर्कटीमूलस्वरसैर्वटिकां कुरु ।……अनुपानमयीक्तव्यं छागीदुग्धमपर्योऽथवा……॥" भैष. ।

**मेहघ्नी** । स्त्री । हरिद्रायाम् । प.मु. ।

**मेहनम्** । क्ली । लिङ्गे । रा.नि व.१८ । मूत्रणे । वा.उ.६अ. । पुं । मुष्ककवृक्षे । ঘণ্টাপারুল । रा. नि.व.११ । [वै.निघ. ।

**मेहनागिनी** । स्त्री । श्वेतापराजितायाम् ।

**मेहहररसः** । पुं । प्रमेहाधिकारे रसः । पाठः —"गन्धेन सूतं द्विगुणं प्रगृह्य विमर्दयेत् गोक्षुरनीरयुक्तं । शुष्कञ्च कृत्वाथ सुतप्ततामचक्रञ्च तस्योपरि विन्यसेच्च ॥ चक्रे विलग्नञ्च ततः प्रगृह्य मूषोदरे भ्रापय टङ्गणेन । संगृह्य चक्रे च निधाय गोलं निःसप्तकान्मेहविमुक्तिरेति ॥" रस.चि.८अ. ।

**मैत्रम्** । क्ली । मेहे । मलमूत्रत्यागे । राज. ।

**मैत्री** । स्त्री । मित्रतायाम् । अनुराधायाम् । सर्व्वप्राणिष्वात्मबुद्धौ । च.सू.१अ. ।

**मैत्रीपरः** । त्रि । मैत्रीप्रधाने । च.सू. चक्रद.टी. ।

**मैथुनम्** । क्ली । स्त्रीपुरुषसङ्गमे । विवाहे । स्त्रीविशेषमैथुने तत्कालनिर्णयो यथा —"निदाघशरदोर्बाला प्रौढ़ा वर्षावसन्तयोः । हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते ॥" मैथुननिषेधो यथा —"नर्त्तौ च षोड़शाद्वर्षात् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥" सामान्यतो मैथुनकालनिर्णयः —"त्रिभिस्त्रिभिरहोभिश्च सेवेत प्रमदां नरः । सर्व्वेष्वृतुषु घर्मेषु पक्षान्मासात् व्रजेद्बुधः ॥" मैथुनगुणाः —"व्यवायी धातपचयं कुरुते रत्यपत्यदः । ग्लानिकम्पोरुदौर्ब्बल्यं धात्विन्द्रियबलक्षयः । क्षयवृद्ध्युपदंशाद्या जायन्तेऽतिव्यवायतः । अतिव्यवायाज्जायन्ते कासश्वासज्वरादयः ॥" मैथुनाकरणगुणाः —"असेवनान्मेहमेदोवृद्धिरङ्गेषु मार्दवम् ।" परिमितस्य गुणाः —"स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः । अधिकानन्दजरसौ भवन्ति स्त्रीषु संयुताः ॥" राज.५प. ।

**मैरेयः** । पुं, क्ली । सुराविशेषे । तत्र धातकीपुष्पगुड़धान्याम्लसन्धानेन कृतम् । "मैरेयं धातकीपुष्पगुड़धान्याम्लसंहितम् ।" प.प्र.३ख. । यद्वा सुरासवयोः प्रत्येकं निष्पादितयोरेकीकृत्य पुनः सन्धानम् । तत्र च मधु देयम् । "आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयात् मैरेयमुभयात्मकम् ॥" वृद्धशौनकात् चन्द्रिका । "मैरेयं धातकीपुष्पगुड़धान्याम्लसाधितम् । सचातुर्जातकाजाजीमकुष्ठीषणनागरम् ॥" वाचस्पतिः । गुणाः —"तीक्ष्णः कषायो मदकृत् दुर्नामकफगुल्महृत् कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ॥" सु.सू.४५अ. । इक्षवमद्ये । धान्यासवे । आसवे । अम. । [च.द.विद्रधि.चि. ।

**मैरेयाम्बु** । क्ली । काञ्जिकभेदे । মৈরেয়মদ্য ।

**मैला** । स्त्री । नीलीवृक्षे । वै.निघ. ।

**मोघा** । स्त्री । विड़ङ्गायाम् । रा.नि.व.६ । च. शा.८अ. । वदर्य्याम् । কুল গাছ । मद. । पाटलवृक्षे । मे. ।

**मोचम्** । क्ली । शाल्मलीवेष्टे । মোচরস । च. द.सि.यो.ग्रहणी.चि.बालचाङ्गेरीघृते । मोचाकले । মোচা । अम. । भैष.पाददारी.चि. ।"

**मोचः (कः)** । पुं । शोभाञ्जनवृक्षे । रा.नि.व. ७ । मुष्कवृक्षे । ঘণ্টাপারুল । रा.नि.व.११ । मोचरसे । च.द.बाल.चि. । वै.निघ.२भ.ग्रहणी. चि.शौघनादिचूर्णे । कदलीवृक्षे । हे.प. । [२अ. ।

**मोचका (की)** । स्त्री । शाल्मलीवृक्षे । सु.चि.

**मोचनम्** । क्ली । मोक्षणे । विस्रावणे । भा.म. कुष्ठ.चि. । स्त्री (नी) । कण्टकार्य्याम् । जटा. ।

**मोचनिर्यासः** । पुं । मोचरसे । रा.नि.व.८ ।

**मोचपुष्पा** । स्त्री । वन्ध्यायां स्त्रियाम् । বাঁজা মেয়ে । रा.नि.व.१८ । कदलीवृक्षे ।

**मोचरसः** । पुं । स्वनामख्यातसारजवर्गीयद्रव्यभेदे, शाल्मलिवेष्टे । মোচরস, শিমুলের আটা । र.मा. । सु.सू.३८अ.प्रियङ्ग्वादिः । गुणाः —कषायः कफवातघ्नः योगेन रसायनः बलपुष्टिवर्णवीर्य्यप्रशायुर्देहसिद्धिकरः ग्राही च । रा.नि.व.८ । वा. सू.१५अ.प्रियङ्ग्वादिव. । "मानद्रुमोमोचरसः ।"

मोचसारः । पुं । मोचरसे । रा.नि.व.८ ।

मोचस्रवः (स्रावः,वी(इन्),सुत्) । पुं । मोचरसे । रा.नि.व.८ । वै.निघ. ।

मोचा । स्त्री । शाल्मलिवृक्षे । शिमुल गाछ । रा.नि.व.८ । कदलीवृक्षे । भा. । रा.नि.व.११ । नीलीवृक्षे । नील गाछ । रा.नि.व.४ । शल्लकीवृक्षे । वा.सू.१५अ.रोध्रादिः । "शैलबालुपरिपेलवमोचाः ।"

मोचाटः । पुं । कृष्णजीरके । अम. । कदलीवृक्षे । कदल्यस्थनि । थोड़ । मे. । चन्दनवृक्षे । वै.निघ. । [संग्रहः ।

मोचाफलम् । क्ली । कदल्याम् । कला । वै.

मोचारसः । पुं । कदलीस्तम्भजले । "मोचारसेन सहितं ।" भा.म.४भ.मसूरि.चि.शीतलाधिकारे ।

मोचास्रावः । पुं । मोचरसे । वै.निघ. ।

मोचाह्वः । पुं । शाल्मलीवेष्टके । मोचरस । सि.यो.रक्तार्शः चि. । "समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।" वै.निघ. ।

मोचिका । स्त्री । मत्स्यभेदे । वै.निघ. ।

मोचिनी । स्त्री । कण्टकार्याम् । वै.निघ. ।

मोचिलिन्दा । स्त्री । राजादनवृक्षे । वै.निघ. ।

मोची । स्त्री । हिलमोचिकायाम् । हिञ्चे । र.मा. । See मोचा ।

मोक्षिकायन्त्रम् । क्ली । सुराचीतनयन्त्रे । मदेर भाटी । भैष.मृतसञ्जीवनीसुरा. ।

मोटनम् । क्ली । आक्षेपे । निदा. ।

मोटा । स्त्री । ह्रस्वबलाक्षुपे । छोट बेलेड़ा । रा.नि.व.४ । जयन्त्याम् । चुक्रे । चूका पालङ । वै.निघ. ।

मोणः । पुं । शुष्कफले । वै.निघ. । नक्रे । मक्षिकायां । सर्पकरण्डे । मे. ।

मोथः । पुं । मुस्तके । कोषान्तरम् ।

मोदः । पुं । आम्रवृक्षे । सुरभिगन्धे । वै.निघ. ।

मोदकः । पुं । गुड़ः । यवासशर्करायाम् । रा.नि.व.१४ । लड्डुके । लाड़ू । मे. । गुड़शर्करादिपाकेन यस्य पूर्णवीर्य्यं षण्मासं तिष्ठति । सुखबोधः । मोदकाद्यौषधमात्रादि यथा—"मोदको वटकः पिण्डी तन्मात्रा चूर्णवन्मता । मोदकेषु द्विगुणितो गुड़ः सिता चतुर्गुणा । पक्केन वटकाः कार्य्या गुड़ेन सितयाथवा । परं हि वह्निसम्पर्कान्निघिमानं भजन्ति ते । चूर्णावलेहगुड़िकाकल्कानामनुपानकम् । वातपित्तकफातङ्के त्रिद्विएकपलमाहरेत् ॥" गोपुरः ।

मोदकी । स्त्री । मूर्व्वायाम् । वै.निघ.२भ. वा.व्या.चि.षड़शीतिगुग्गुलौ । जिङ्गिन्याम् ।

मोददायिनी । स्त्री । जातीपुष्पवृक्षे । प. मु. ।

मोदनम् । क्ली । सिक्थके । रा.नि.व.१३ । पुं । मदनवृक्षे । मयना गाछ । (सौभाग्यशुण्ठीमोदके ।)

मोदनी । स्त्री । यूथिकायां । श्वेत जुँइ । वृत्तमल्लिकायाम् । रा.नि.व.१० । उपोदिकायाम् । पुँइ गाछ । प.मु. ।

मोदमोदिनी । स्त्री । जम्बूवृक्षे । जाम गाछ । रा.नि.व.११ ।

मोदयन्ती । स्त्री । त्रिपुरमल्लिकायाम् । नवमल्लिका, काठमल्लिका । प.मु. । सु.चि.२४अ. । "पिष्टा च सर्व्वं सह मोदयन्त्या ।"

मोदा । स्त्री । शाल्मलिवृक्षे । शिमुल गाछ । र.मा. । अजमोदायां । वनयवानी । मद.व.२ । रा.नि.व.६ ।

मोदाख्यः । पुं । आम्रवृक्षे । रा.नि.व.११ ।

मोदाढ्या । स्त्री । अजमोदायाम्, वनयमान्याम् । रा.नि.व.६ ।

मोदिनी । स्त्री । यूथिकायाम् । मल्लिकापुष्पवृक्षे । मल्लिका गाछ । वृत्तमल्लिकायां । रा.नि.व.१० । कस्तूर्य्याम् । मृगनाभि । वै.निघ. । अजमोदायां । रा.नि.व.६ । मदिरायां । रा.नि.व.१४ ।

मोरट(क)म् । क्ली । प्रसवात् सप्तरात्रादनन्तरं यत्क्षीरं तन्मोरटमुच्यते । र.मा. । रा.नि.व.१४ । (कम्) इक्षुमूले । भा.म.ख.४भ.मसूरि.चि. । इक्षिकर्णपलाशे । सु.सू.३८अ. । च.द.वीरतरादौ । अङ्कोटपुष्पे । आँकोड़ फूल । मे. ।

**मोरटः (कः)** । पुं । लताकराड़ इति प्रसिद्धे वृक्षभेदे । प.मु. । चीरमोरटे वा । लताकराड़, क्षीरकराड़ । गुणाः—सकषायमधुरः हृद्यः बल्यः पित्तदाहज्वरघ्नश्च । रा.नि.व.३ । अङ्कोलवृक्षे । आंकोड़ गाछ । सु.सू.३८अ. । खदिरभेदे । श्वेत खदिर । वै.निघ. ।

**मोरटा** । स्त्री । मूर्व्वायाम् । मूर्गा । प.मु. । रा.नि.व.३ । सु.सू.३८अ. । वा.सू.१५अ.वरुणादिः । आखोटकवृक्षे । शेओड़ा गाछ । सु.सू.३८अ. । [दुग्धकूर्चिकायाम् । वै.निघ. ।

**मोरणम्** । क्ली । तरुनिर्यासे । चीरनिर्यासे ।

**मोर्वः** । पुं । मूर्व्वायाम् । वै.निघ. ।

**मोहः** । पुं । विपरीतज्ञाने । भा.अध.अम्ल.पि.चि. । म.ख.४अ.विस्फोट.चि. । मूर्च्छायाम् । मा.नि. । [ख्याते वृक्षविशेषे । रा.नि.व.६ ।

**मोहकारी (इन्)** । पुं । माड़ इति कीडंगी

**मोहनः** । पुं । धुस्तूरवृक्षे । रा.नि.व.१० । क्षामुष्ककवृक्षे । चित्तविभ्रमे । वै.निघ. । क्ली । सुरते । हे.च. ।

**मोहनभोगः** । पुं । See लप्सिका ।

**मोहनवल्ली** । स्त्री । वन्दाके । वा.उ.५अ. ।

**मोहना (नी)** । स्त्री । त्रिपुरमल्लिकायाम् । र.मा. । वृतमल्लिकायाम् । रा.नि.व.१० । उपोदिकायाम् । रा.नि.व.७ ।

**मोहनिका (हिनी)** । स्त्री । त्रिपुरमल्लिकायां । र.मा. । सु.चि.२८अ. । वृतमल्लिकायाम् । रा.नि.व.१० । शतदलमल्लिकायाम् । प.मु. । कट्फले । वटपत्रपाषाणभेदे । भङ्गायाम् । सिद्धि । मद्यविशेषे । उपोदिकायाम् । पूँई । वै.निघ. ।

**मोचः (कः)** । पुं । पाटलवृक्षे । मे. । (कः) मुष्ककवृक्षे, पलाशवत्पर्णतरुवृक्षे । घण्टापारुल । भा. । [ड़ काक । वै.निघ. । काके । हे.च. ।

**मौकुलिः (ली(इन्))** । पुं । द्रोणकाके । दाँ-

**मौक्तिकम्** । क्ली । अभ्रे । वै.निघ. । मुक्तायाम् । मुक्ता । हिं मोती । गुणाः—मौक्तिकं शीतलं वृष्यं चक्षुष्यं बलपुष्टिकृत् । भा.पू.१भ.रत्नवर्गः । शोधनादिकं माणिक्यशब्दे द्रष्टव्यम् । तस्य लेपः शाकादिहरः । वा.उ.३७अ. ।

**मौक्तिकतण्डुलः** । पुं । धवलयावनाले । श्वेत जनार । रा.नि.व.१६ ।

**मौक्तिकप्रसवा** । स्त्री । मुक्ताशुक्तौ । मुक्तार झिनुक । रा.नि.व.१३ । [व.१३ ।

**मौक्तिकशुक्तिः** । स्त्री । मुक्ताशुक्तौ । रा.नि.

**मौक्तिकसम्पुटः** । पुं । मुक्ताशुक्तौ । मुक्तार झिनुक । प.मु. ।

**मौक्तिकसम्भवम्** । क्ली । शुक्ताञ्जने । वै.निघ. ।

**मौक्तिकस्थानम्** । क्ली । शुक्तिशूकरशङ्खसर्पभेकमत्स्यवेणुगजेषु । वैद्यकम् ।

**मौग्धिकः** । पुं । मुद्गवृक्षे । वै.निघ. ।

**मौञ्जीतृणाख्यः** । पुं । मुञ्जतृणे । मुञ् । रा.नि.व.८ । [नि.व.८ । मुञ्जतृणे । वै.निघ. ।

**मौञ्जीपत्रा** । स्त्री । वल्वजायां । उलु । रा.

**मौद्यम्** । क्ली । मोहे । हे.च. ।

**मौद्गदलम्** । क्ली । मुद्गदाल्याम् । मुगेर दाल । वा.चि.६अ. । [चिका ।

**मौद्गलिः** । पुं । द्रोणकाके । वै.निघ. । काके ।

**मौनम्** । क्ली । मूकतायाम् । अम. ।

**मौर्व्वी** । स्त्री । मेषशृङ्ग्याम् । अजशृङ्गी । र.मा. । तौत्पुंखी इति प्रसिद्धौषधौ । प.मु. । [अ.

**मौलकः** । त्रि । मूलाकरजे (लवणे) । च.वि.८

**मौलिः** । पुं, स्त्री । मस्तके । रा.नि.व.१८ । केशपाशे । अम. । पुं । क[illegible]वृक्षे । [चिका. । अशोकवृक्षे । मे. । [घ[illegible].गुडूच्यादिमोदके ।

**मौषली** । स्त्री । मुषल्यां । तालमूली । वै.नि

**मौहूर्त्तिकः** । पुं । ज्योतिर्विदि । अम. ।

**म्रक्षणम्** । क्ली । तैलघृताद्यभ्यङ्गे । तैल घृतादि गाथा । रा.नि.व.१५ । तैले । हे.च. ।

**म्रातनम्** । क्ली । कैवर्त्तमुस्तके । श.च. ।

**म्लाना** । स्त्री । रजस्वलायाम् । रा.नि.व.१८ ।

**म्लेच्छम्** । क्ली । हिङ्गुले । रा.नि.व.१३ । सा.कौ.त्रिपुरभैरवरसे । वै.निघ.२भ.वा.व्या.चि.मृतसञ्जीवनीरसे । ताम्रे । र.सा.सं.मृतसञ्जीवनीरसे ।

**म्लेच्छकन्दः** । पुं । श्वेतरसोने । रा.नि.व.७ ।

**म्लेच्छदारकम्** । क्ली । चोबचीनीति ख्याते द्रव्ये । তোপচিনি । वै.निघ. ।

**म्लेच्छभोजनः** । पुं । तृणगोधूमे । गोधूमे । गम् । रा.नि.व.१६ । भिका. । क्ली । अर्द्धपक्वगोधूमे । यावके । श.र. ।

**म्लेच्छमुखम्** । क्ली । ताम्रधातौ । তামা । रा. नि.व.१२ । [निघ. ।

**म्लेच्छाशः** । पुं । म्लेच्छभोजने । गोधूमे । वै.

**म्लेच्छास्यम्** । क्ली । ताम्रधातौ । তামা । र. मा. ।

---

## य

**यकृत्** । क्ली । दक्षिणकुक्षेरधःस्थशरीरावयवविशेषे, कालखण्डाभिधरञ्जकपित्ताधारे । যকৃৎ । हिं कलिजा । रा.नि.व.१८ । तच्च रक्तजन्यं । "गर्भस्थस्य यकृत्प्लीहानौ शोणितजौ ।" सु.श.४ अ. । तत्स्वरूपं यथा —"अधो दक्षिणतश्चापि हृदयाद्यकृतस्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् । प्लीहामयस्य हेत्वादि समस्तं यकृदामये । किन्तु स्थितिर्लयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥" भा. । [তেলাপোকা । श.च. ।

**यकृदात्मिका** । स्त्री । तैलपायिकायाम् ।

**यकृद्दाल्युदरम्** । क्ली । उदररोगभेदे । लक्षणं यथा —"वामे च पार्श्वे परिवृद्धिरेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतो क्षीणबलोऽतिपाण्डुः । सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥" सु.नि.৩अ. ।

**यकृद्वैरी** (इन्) । पुं । रक्तरोहीतकवृक्षे । লাল রোড়া, রয়না । श.च. ।

**यजा** । स्त्री । कृष्णतुलसीवृक्षे । वै.निघ. ।

**यज्ञत्राता** (तृ) । पुं । महासोमलतायाम् । वै.निघ. । [नि.व.६ ।

**यज्ञधूपः** । पुं । सर्ज्जवृक्षे । धुनार गाछ । रा.

**यज्ञनेता** (तृ) । पुं । महासोमलतायाम् । वै. निघ. ।

**यज्ञपशुः** । पुं । घोटके । श.मा. ।

**यज्ञपादपः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । भा. । [रा.नि.व.८ ।

**यज्ञभूषणः** । पुं । सितदर्भे । শ্বেত কুশ ।

**यज्ञयोग्यः** । पुं । उदुम्बरवृक्षे । रा.नि.व.११ ।

**यज्ञवल्ली** । स्त्री । सोमलतायाम् । रा.नि.व.३ ।

**यज्ञवृक्षः** । पुं । वटवृक्षे । नदीवटे । रा.नि.व.११ । विकङ्कतवृक्षे । বঁইচি গাছ । भा. ।

**यज्ञश्रेष्ठा** । स्त्री । सोमलतायाम् । रा.नि.व.३ ।

**यज्ञसंस्तरः** । पुं । शुक्लदर्भे । वै.निघ. ।

**यज्ञसाधनी** । स्त्री । सोमलतायां । वै.निघ. ।

**यज्ञसारः** । पुं । यज्ञोदुम्बरवृक्षे । रा.नि.व.११ ।

**यज्ञसूत्रम्** । क्ली । यज्ञोपवीते ।

**यज्ञाङ्गः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর । र. मा. । खदिरवृक्षे । रा.नि.व.८ । भार्ग्यां । বামনহাটী । श.च. ।

**यज्ञाङ्गा** । स्त्री । सोमलतायाम् । रा.नि.व.३ ।

**यज्ञिकः** । पुं । पलाशवृक्षे । जटा. ।

**यज्ञि(ज्ञी)यः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । रा.नि.व.६ । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । रा.नि.व.११ ।

**यज्ञियपत्रकः** । पुं । सितदर्भे । শ্বেত কুশ । रा.नि.व.८ । 'घातकपत्रकः' इत्यपि पाठः पुस्तकान्तरे दृश्यते ।

**यज्ञीयब्रह्मपादपः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । रा.नि.व.६ ।

**यज्ञेष्टम्** । क्ली । दीर्घरोहिषतृणे । रा.नि.व.८ ।

**यज्ञोदुम्बर.** । पुं । (Fycus glomerata.) उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । हिं गुलार, ऊमर । तें मयड़ीचेट्टु । ता. अत्ति । गुणाः—हिमः रूक्षः गुरुः पित्तकफरक्तघ्नः मधुरः तुवरः वर्ण्यः व्रणशोधनः रोपणश्च । भा. । See उदुम्बरः ।

**यति: ।** पुं । अग्निशिखवृक्षे । वै.निघ. । जितेन्द्रिये । अम. । [केउ झाड़ । श.र. ।

**यतु(तू)का ।** स्त्री । वालुकवृक्षे । बेतो शा-

**यत्नसाध्य: ।** त्रि । यत्नेनारोग्यार्हे ।

**यथेष्टचारी** (इन्) । पुं । पक्षिणि । श.च. । त्रि. । स्वेच्छाचारिणि ।

**यन्त्रम् ।** क्ली । शल्यानामाहरणोपायभूतस्वस्तिकादौ । तच्च एकोत्तरशतं । तदुक्तं—"हस्तमेव प्रधानतमं यन्त्राणामवगच्छ । किं कारणं यस्माद्धस्ताहृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्मणाम् ।" तानि च षट्प्रकाराणि—स्वस्तिक-सन्दंश ताल-नाड़ी शलाकोपयन्त्रभेदेन इति । तत्र चतुर्विंशति: स्वस्तिकानि, द्वे सन्दंशयन्त्रे, द्वे एव तालयन्त्रे, विंशतिर्नाड्य:, अष्टाविंशति: शलाका:, पञ्चविंशतिरुपयन्त्राणीति । यन्त्रकर्म्माणि चतुर्विंशति: निर्घातनपूरणादि । सु.सू.७अ. । एषां विशेष: स्वस्वपर्य्याये द्रष्टव्य: । औषधपाकपात्रविशेषे । तत्र साधारणत: षड्विधं,वालुकादोलास्वेदनविद्याधरभूधरयन्त्राणीति । तेषां लक्षणं तत्तत्पर्य्याये मृग्यम् । पारदबन्धनोपायविशेषे । तदुक्तं—"यन्त्रयेत् पारदो यस्मात्तस्माद्यन्त्रमिदं स्मृतम् ।" वै.निघ. । [घानिघर । हे.च. ।

**यन्त्रगृहम् ।** क्ली । तैलनिष्पीड़नयन्त्रगृहे ।

**यन्त्रगोल: ।** पुं । कलायभेदे । मटर । श.च. ।

**यन्त्रणम् ।** क्ली । बन्धने । रक्षणे । मे. ।

**यन्त्रणवास: ।** क्ली । क्षतादिबन्धनार्थे शाटके । वान्धिवार वस्त्र वा व्याण्डेज । वा.चि.८अ.अष्टाङ्गसंग्रहे च । "अथ यन्त्रणवाससा ।"

**यन्त्रणा ।** स्त्री । पीड़ायां । व्याक. ।

**यन्त्रापीड़: ।** पुं । सन्निपातज्वरभेदे । लक्षणं—"येन मुहुर्म्मुहुर्वेगाद् यन्त्रेणेवापीड्यते गात्रम् । रक्तं पीतञ्च भवेत् यन्त्रापीड़: स विज्ञेय: ॥" भा.म.१भ. ।

**यम: ।** पुं । इन्द्रियनिग्रहे । काके । उष्ट्रे । कटुपत्रिणि । मे. । कोनाशे । त्रिका. ।

**यमकम् ।** क्ली । युगले । घृततैले । च.सू.२अ. । वा.चि.६अ. ।

**यमकबन्ध: ।** पुं । यमलनामव्रणबन्धनभेदे । लक्षणम्—"बध्यते मण्डलाकारो यमलव्रणयोस्तु य: । बन्धं यमकनामानं भिषजो वर्णयन्ति तम् ॥" सु.सू.१८अ. । [त्रिका. ।

**यमकीट: ।** पुं । भूकीटविशेषे । घुरघुरे ।

**यमचिञ्चा ।** स्त्री । अत्यम्लचिञ्चायाम् । डागा तेँतुल । र.मा.संग्रह:, रसाध्याये ।

**यमज: ।** त्रि । युग्मजाते । यमज सन्तान । पुं । काके । मे. । दोषान्विते घोटके । "एकेनाङ्गेन हीनेन भिन्नेन च विशेषत: । यमजं वाजिनं विद्यात्...... ॥" अ.द.३अ. ।

**यमदग्नि: ।** पुं । ऋषिविशेषे । च. ।

**यमदूतक: ।** पुं । काके । श.र. ।

**यमदूतिका ।** स्त्री । तिन्तिड़ीवृक्षे । अम. ।

**यमद्रुम: ।** पुं । शाल्मलिवृक्षे । रा.नि.व.८।२१।

**यमप्रिय: ।** पुं । वटवृक्षे । श.र. ।

**यमरथ: ।** पुं । महिषे । वै.निघ. ।

**यमलम् ।** क्ली । युग्मे । हे.च. ।

**यमलच्छद: ।** पुं । काञ्चनारवृक्षे । रक्त काञ्चन गाछ । रा.नि.व.१० ।

**यमलपत्रक: ।** पुं । अश्मन्तकवृक्षे । कोविदारवृक्षे । रा.नि.व.६ ।

**यमला (ली) ।** पुं । हिक्काभेदे । त्रिका. । लक्षणं—"चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्त्तते । कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्द्दिशेत् ॥" मा.नि. ।

**यमवाहक: ।** पुं । महिषे । त्रिका. ।

**यमवृक्ष: ।** पुं । शाल्मलिवृक्षे । रा.नि.व.८ ।

**यमा(वा)निका (नी) ।** स्त्री । (Ligusticum ajwan or Carum copticum. Syn. Ammicopticum.) Ajava seeds. स्वनामख्यातपण्यद्रव्ये । यओयान । हिं वम्. अजवाइन । मं ओंवा । कं ओंडू । तें ओममी । ता. अमन । सा चतुर्धा—यमानीवनयमानीपारसीकखोरासानीभेदेन । गुणा:—लेखनी (देहस्थधातुमलान् विशोध्योल्लिखयेत्) पाचनी रुच्या तीक्ष्णो-

णा कटुका लघुः दीपनी तिक्ता पित्तला शुक्रशूलघ्नी वातश्लेष्मोदरानाहगुल्मप्लीहकृमिघ्नी च । भा.पू.१भ. । तच्छाकगुणाः —यवानीशाकमामघ्नं रुच्यं वातकफप्रं कटुतिक्तमुष्णं पित्तलं लघु शूलकरञ्च । भा.पू.शा व. । "यमानी कटुतिक्तोष्णा वातार्शःश्लेष्मनाशिनी । शूलाध्मानकृमिच्छर्द्दिमर्द्दनी दीपनी परा ॥" रा.नि.व.६। (Hyoscymus niger.) Henbane. खोरासानीयमान्यां । हिं वजरल । तें कुरासानीवमम् । गुणाः स्वपर्य्याये नम्याः ।

**यमानीद्वयम्** । क्ली । यमान्यां वनयमान्याञ्च । वै.निघ.२भ.अभिन्यास.चि. ।

**यमिका** । स्त्री । हिक्काभेदे, या विकारमायाति । যমলাহিক্কা । मा.नि. ।

**यमुना** । स्त्री । भारतवर्षीयनदीविशेषे । तज्जलगुणाः—पित्तदाहवमनश्रमघ्नं स्वादु वातजननं पाचनम् अग्निदीप्तिकरं रुचिजनकं बलकरञ्च । रा.नि.व.१४ ।

**ययुः** । पुं । घोटके । मे. ।

**यवः (कः)** । पुं । (Hordeum hexastichum.) Barley. स्वनामख्यातशूकधान्यभेदे । যব । हिं मं यव, जुज । कं मुड, जयवे । तें गोधुमलु यवलनेडुधान्यमु वार्लिबियम् । ता. वार्लिअरिसु । गुणाः—"रूक्षः शीतो गुरुः स्वादुः कषायो मधुरो यवः । वृष्यो ग्राही कफघ्नश्च स्यात् पित्तश्वासकासनुत् ॥" कषायो मधुरः सुशीतलः प्रमेहजित् तिक्तः कफघ्नश्च, तथा अशूकसुण्डः यवः बलदः वृष्यः बहुवीर्य्यपुष्टिकरश्च । रा.नि.व. १६ । वर्षद्वयोपरिस्थिता यवाः पुराणाः । तद्गुणाः—"पुराणा नीरसा रूक्षा न तथा गुणकारिणः । नवा हिताः ·· ॥" भा. । इन्द्रयवे । वै.निघ.२भ. अर्श..चि.अग्निदीपनीवट्याम् । षष्टिकतण्डुले । मन्त्रे । भा.ज्व.चि. । चतुर्धान्यमाने । ৪ ধান । षट् सर्षपमाने । ৬ সরিষা । शा.च. । कालिङ्ग अष्टसर्षपमिते माने । ৮ সরিষা । "यवोऽष्टसर्षपैः ।" प.प्र.१ख. । [पृ.च. ।

**यवकः** । पुं । शूकधान्यविशेषे, यवे । च.सू.

**यवकण्टकः** । पुं । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. ।

**यवकलशः** । पुं । इन्द्रयवे । वै.निघ. ।

**यवकाञ्जिकम्** । क्ली । यवसंहितकाञ्जिके । যবের কাঁজি । See यवाम्लम् । [श.र. ।

**यवगण्डः** । पुं । मुखव्रणे । যবমফোঁড়া ।

**यवगोधूमसम्भवम्** । क्ली । तन्मिश्रकाञ्जिके । वै.निघ. । [क्रुई । रा.नि.व.५ ।

**यवचिञ्चा (ञ्चा)** । स्त्री । धीरिणाम् । थि-

**यवजः** । पुं । यवक्षारे । र.मा. । च.द.ग.ग.चि. । यमानीक्षुपे । रा.नि.व.६ । गोधूमक्षुपे । वै.निघ. ।

**यवतिक्ता** । स्त्री । श्वेतवृक्षायाम् । शङ्खिनी तवेची इति लोके । (শ্বেতচোনা) । गुणाः—तिक्ताम्ला रूच्या दीपनी क्रमिकुष्ठविषामदोषघ्नी रेचनी च । रा.नि.व.३। तण्डुलीयशाके । शशाण्डुल्याम् । माषिषे । रा.नि.व.२२ ।

**यवनः** । पुं । सिह्लके । শিলারস । रा.नि.व. १२। गोधूमे । रा.नि.व.१६। गर्ज्जरे । रा.नि.व.७।

**यवनकः** । पुं । गोधूमे । वै.निघ. ।

**यवनद्विष्टः** । पुं । गुग्गुलौ । গুগ্‌গুল । रा. नि.व.१२ ।

**यवनप्रियम्** । क्ली । मरिचे । है.च. ।

**यवनभोजनः** । पुं, क्ली । मरिचे । चि.क.क. मद.चि. । "यवनभोजनधान्यशतावरी ।"

**यवनालः** । पुं । यावनालवृक्षे । কালজনার । प.मु. । देवधान्ये । দেধান । है.च. । यावनालसामान्ये । জনার । रा.नि.व.१६ । यवदण्डे ।

**यवनालजः** । पुं । यवक्षारे । है.च. ।

**यवनी** । स्त्री । यमान्यां । मे. ।

**यवनेष्टम्** । क्ली । गृञ्जने । গাজর । रा.नि.व. ७ । मरिचे । रा.नि.व.६ । सीसके । সীসা । रा. नि.व.१३ । तालीशपत्रे । वै.निघ. । पुं । रक्तरसोने । राजपलाण्डौ । पलाण्डौ । रा.नि.व.७ । निम्बवृक्षे । নিম্ গাছ । रा.नि.व.६ ।

**यवनेष्टा** । स्त्री । खर्ज्जूरीवृक्षे । रा.नि.व.११ । नखरञ्जन्याम् । মেহেদী । वै.निघ. ।

**यवपटोलः** । पुं । ज्वरे कषायभेदे । যবপটোল । गुणाः—तृष्णादाहहरः पित्तज्वरघ्नोऽयं कषायः समभागयवपटोलपञ्चकृतः । च.द.पि.ज्व. चि. । "पटोलयवनिःक्वाथो मधुना मधुरीकृतः ।"

**यवपल्लः** । पुं । यवपलाले । यवशा इति लोके । যবের পোয়াল । सु.चि.६अ. ।

**यवप्रख्या** । स्त्री । क्षुद्ररोगभेदे । যবাকার পিড়কাবিশেষ । लक्षणं—"यवाकारा सुकठिना ग्रथिता मांससंस्थिता । पिड़का श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥" सु.नि.१३अ. ।

**यवफलः (ला)** । पुं, स्त्री (ला) । वंशे । रा.नि.व.७ । भा.म.४भ.रेवतीग्रह.चि. । पलाण्डौ । इन्द्रयवे । वै.निघ. । मांसरुचे । श.च. । कुटजवृक्षे । रा.नि.व.९ । क्ली । वेणुबीजे । जटामांस्यां । मे. ।

**यवफलाङ्कुरः** । पुं । वंशाङ्कुरे । বাঁশের কোঁড় । रा.नि.व.७ ।

**यवभस्म** । क्ली । यवक्षारे । যবের ক্ষার । च.द.सि.यो.मरीच.वि. । "कृष्णाविडङ्गयवभस्म ।"

**यवभोज्यम्** । क्ली । यवाहारे । नकुल.११अ. ।

**यवमण्डः** । पुं । यवकृतमण्डे । वाट्यमण्ड इत्युच्यते । যবের মণ্ড । गुणाः—"वाट्यमण्डो यवैर्भृष्टैर्मुनिभिः परिकीर्त्तितः । वाट्यमण्डो लघुर्ग्राही शूलानाहविदोषघ्नत् । नवज्वरेऽपि पथ्योऽयं पटोलमगधान्वितः ॥" वै.निघ. ।

**यवमद्यम्** । क्ली । यवकृतमद्ये । যবের মদ । गुणाः—गुरु विष्टम्भदायकम् । रा.नि.व.१४ ।

**यवयवागुका** । स्त्री । यवकृतयवाग्वाम् । যবের যাউ । प.सु. । [বের যাউ । प.सु. ।

**यवयवागूः** । स्त्री । यवसिद्धयवाग्वाम् । य

**यवलकः** । पुं । पक्षिविशेषे । अयं मधुरलघुशीतकषायः । सु.सू.४६अ. ।

**यवलासः** । पुं । यवक्षारे । श.र. ।

**यववर्णाभः** । पुं । सविषमण्डूकजातीयकीटे । तद्दष्टे दंशकण्डूः पीतफेणागमश्च । सु.कल्प.८अ. ।

**यवविकृतिः** । स्त्री । प्रसिद्धहिते यवकृतापूपादौ । যবের পিঠা, পুলি আদি । वा.चि.१२अ. ।

**यवशक्तुः** । पुं । भृष्टयवकृतचूर्णे । যবের ছাতু । गुणाः—"यवानां शक्तवो रूक्षा लेखना वह्निदीपनाः । वातला: कफरोगघ्ना वातवर्चोऽनुलोमनाः ॥" राज.३प. ।

**यवशर्करा** । स्त्री । सिद्धयवकृतशर्करायाम् । गुणाः—पित्तश्रमतृष्णाघ्नी तृष्या रेचनी विदाहमूर्च्छाभ्रान्तिघ्नी च । च. ।

**यवशाकः** । पुं, क्ली । चिल्लीशाके, गौरवास्तुके । "प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम् ।" भा.पू.१भ.शा.व. । गुणाः—मधुरः रूक्षः विरूक्षो शीतवीर्य्यो मलभेदनश्च । च.सू.२७अ. ।

**यवशूकः** । पुं । यवक्षारे । चिका. । सि.यो. मरीच.चि. । "यवशूकविमिश्रितानि ।" च.द. हिक्काश्वास.चि. । "हन्त्याशुग्रहणीदोषमीहामाह्गलग्रहान् । कासं कफजमर्शांसि यवशूको व्यपोहति ॥" राज.३प. ।

**यवशूकजः** । पुं । यवक्षारे । रा.नि.व.९ ।

**यवश्वेता** । स्त्री । यवशर्करायाम् । যবের ছাতু । वै.निघ. । [११अ. ।

**यवसम्** । क्ली । तृणे । घासे । अम. । नकुल.

**यवसाह्वः** । पुं । यमानीक्षुपे । रा.नि.व.९ ।

**यवसाह्वया** । स्त्री । यमान्याम् । भा.पू. । पारसीकयमान्याम् । वै.निघ. ।

**यवसुरम् (रा)** । क्ली, स्त्री । यवमद्ये । गुणाः—"सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला । गर्वी जीर्य्यति विष्टभ्य......॥" च.सू.२७अ. ।

**यवसौवीरम्** । क्ली । यवकाञ्जिके । वै.निघ. ।

**यवक्षारः** । पुं । यवभस्मजक्षारे । যবক্ষার । हिं यवखार, साजी, सोरा । तें यवाक्षारमु । गुणाः—कटूष्णः कफवातोदरघ्नः आमशूलाश्मरीविषघ्नः सरश्च । रा.नि.व.६ । "यव...ो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः । नि...न शूलवातामश्लेष्माश्मरीगलामयान् । पाण्डुर्शोग्रहणीगुल्मानाहप्लीहहृदामयान् ।" भा. ।

**यवक्षोदः** । पुं । यवचूर्णे । मयदा । हे.च. ।

**यवागूः** । स्त्री । उचितात्रचतुर्थांशतण्डुलचूर्णकृतषड्गुणवारिपक्वायां बहुसिक्थायाम् उष्णिकायां । যাউ, পাতলা ভাত । तेन द्रवसिक्थसमन्वितत्वं यवागूत्वम् । "यवागूर्बहुसिक्था स्यात् ।" सा त्रिधा मण्डपेयाविलेपीभेदात् । तत्र सिक्थरहितो मण्डः, ससिक्था पेया, विरलद्रवा च विलेपीति । तदुक्तं—"यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत् । सिक्थकैरहितो मण्डः पेया सिक्थसमन्विता ।

यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥" क्वाथसिद्धयवाग्वां क्वाथ्यद्रव्यस्याञ्जलिर्ग्राह्यः, वारिणः प्रस्थः, पादावशेषो ग्राह्यः। "क्वाथ्यद्रव्याञ्जलिं सुखं श्रावयित्वा जलं ततः। पादावशेषे तेनाथ यवाग्वाद्युपकल्पयेत्। यूषांश्च रसकांश्चैव कल्पेनानेन साधयेत् ॥" प.प्र.१ख.। "यवागूः षड्गुणे तोये सिद्धा स्यात् कृसरा घना। तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हि सा। यवागूर्ग्राहिणी बल्या तर्पणी वातनाशिनी ॥" प.प्र.२ख.। गुणाः—"यवागूर्ज्वरतृष्णाघ्नी लघ्वी बस्तिविशोधनी। अतीसारे ज्वरे दाहे हिता वह्निप्रदीपनी ॥" राज.२प.। "यवागूः षड्गुणे तोये संसिद्धा विरलद्रवा। यवागूर्ग्राहिणी तृष्णाज्वरघ्नी बस्तिशोधनी। पित्तश्लेष्मज्वरे देया मध्याह्ने सा प्रकीर्तिता। वातज्वरेऽपराह्ने सा गोधूमजलनिर्म्मिता ॥" द्रव्यगुणः। यवागूर्मदात्ययादौ निषिद्धा—"मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके। ऊर्द्ध्वगे रक्तपित्ते च यवागूरहिता ज्वरे ॥" च.द.ज्व.चि.।

**यवाग्रम्** । क्ली। यवतुषे। यवेर तुष, आगडा। वै.निघ.२भ.पाण्डुचि.पथ्यकोलघृते।

**यवाग्रजः** । पुं। यवक्षारे। यवक्षार वा सोरा। च.द.अ.च.चि.। यमानीक्षुपे। रा.नि.व.६। क्ली। काञ्जिके। वै.निघ.।

**यवान(क)म्** । क्ली,पुं। यमान्याम्। वै.निघ.।

**यवानिका (नी)** । स्त्री। यमानीक्षुपे। रा.नि.व.६। यमान्यां। भा.पु.१भ.। पारसीकयमान्याम्। वै.निघ.।

**यवानीकः** । पुं। यमानीभेदे। वा.चि.६अ.।

**यवानीशाकम्** । क्ली। यमानीदले। यमानेर शाक। हिं जवाइन। [वै.निघ.।

**यवान्नम्** । क्ली। यवकृतभक्ते। यवेर भात।

**यवापत्यम्** । क्ली। यवक्षारे। रा.नि.व.६।

**यवाम्लम्** । क्ली. यवकाञ्जिके। यवेर काँजि। गुणाः—"जातं यवाम्लं कटुकं विपाके वातापहं श्लेष्महरं सरञ्च। पित्तप्रकोपं कुरुते समेदि विद्रधयं पित्तगदासृजोश्च ॥" अत्रि.११अ.।

**यवाम्लजम्** । क्ली। यवान्ने, सौवीरकाञ्जिके। रा.नि.व.१५।

**यवासः (कः)** । पुं। (Alhagi maurorum. Syn. Hedysaram Alhagi.) The camel's thorn. यासक्षुपे। दुरालभा। तें पिन्नरेगटिट्टुलगोंडि। रा.नि.व.४। सि.यो. पित्तातिसारचि.कलिङ्गादौ। च.द.पि.श्लेष्मज्व.चि. कण्टकार्य्यादिः। च द.ज्व.चि.वासाद्यघृते।

**यवासशर्करा** । स्त्री। यवासकृतशर्करायाम्। तवराज, ष्याना, सीरखस्ता इति लोके। गुणाः—अतिमधुरा पित्तघ्नी श्रमघ्नी तृष्णाघ्नी हृष्या सरा मूर्च्छादाहभ्रमघ्नी च। रा.नि.व.१४। मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति। सु.सू. ४५अ.इक्षुव.। [दुरालभायाम्। वै.निघ.।

**यवासा** । स्त्री। गुच्छासितोत्पले। रा.नि.व.८।

**यवाह्वः** । पुं। यवक्षारे। सु.चि.२०अ.अलसचि.। यमान्याम्। स्त्री (ह्वा)। दुरालभायाम् वै.निघ.२भ.उन्मा.चि.। यमान्याम्। यवक्षारे। वै.निघ.। [रा.नि.व.१५।

**यवोत्थम्** । क्ली। काञ्जिके। सौवीरकाञ्जिके।

**यवोद्भवः** । पु। यवक्षारे। रा.नि.व.६।

**यवोद्भूता** । स्त्री। यवशर्करायाम्। वै.निघ.।

**यव्यम्** । क्ली। यवक्षेत्रे। रा.नि.व.२।

**यशदम्** । क्ली। (Zinkum.) Zink. धातुविशेषे। दस्ता। यशदं वङ्गसदृशं रीतिहेतुश्च तन्मतं। गुणाः—"यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्। चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत् ॥" भा.पु.१भ.धा.व.।

**यशस्करी** । स्त्री। हृच्छ्रीवल्लीलतायाम्। रा.नि.व.३। शङ्खिन्याम्। वै.निघ.।

**यशस्या** । स्त्री। ऋद्धौ। ऋद्धि ऊषधि। रा.नि.व.५। जीवन्तीलतायाम्। रा.नि.व ३।

**यशस्विनी** । स्त्री। यवतिक्तालतायां। महाज्योतिष्मतीलतायां। रा.नि.व.३। वनकार्पास्यां। श.र.।

**यशोदः** । पुं। पारदः। रा.नि.व.१३।

**यष्टिः** । पुं, स्त्री। भार्ग्यां। वामनहाटि। रा.नि.व.६। वै.निघ.मधुरज्व.चि.मधुकादिः। यष्टिमधुके। मे.।

**यष्टि(ष्टी)का:** । पुं, क्ली । यष्टिमधुनि । रा.नि.व.६। च.सू.४अ.। टिट्टिभे । तित्तिर पाखी । श.र. । स्त्री । भार्ग्यां । वामनहाटी । प.मु. । मञ्जिष्ठायाम् । सि.यो.षट्कट्वरतैले । यष्टिमधुनि। श.र. । [कारणोपाये । सु.सू.४५अ. ।

**यष्टिकाभ्रामणम्** । क्ली । जलस्य शीतलीकरणोपाये ।

**यष्टि(ष्टी)पुष्प:** । पुं । पुत्रञ्जीववृक्षे । भा. ।

**यष्टि(ष्टी)मधु (कम्)** । क्ली । (Glycyrrhiza glabra.) स्वनामख्यातमधुरकाष्ठे। यष्टिमधू । इला. । हिं जेठीमधु। मुलइटी । तें मिष्टमूलविशेषम् । जलजस्थलजभेदेन द्विधा। "आनूपं स्थलजञ्चैव प्रत्येकं द्विविधं स्मृतम् ।" च.सू.१अ. । गुणा:—मधुरं किञ्चित्तिक्तं चक्षुष्यं शीतलं पित्तघ्नं शोषतृष्णाव्रणापहम् । रा.नि.व.६ । सुश्रुतेऽस्य मूलस्य प्राशस्त्यं, किन्तु विरेचनं प्रति फलमेव प्रशस्तम् । च.सू.१अ.टी. । स्निग्धं शिथिलकारकञ्च । केचित् ।

**यष्टिमधुका** । स्त्री । यष्टिमधुनि । अम. ।

**यष्टिलता** । स्त्री । भ्रमरारिपुष्पवृक्षे । भ्रमरमारीति मालवदेशे प्रसिद्धा । रा.नि.व.१० ।

**यष्टी** । स्त्री । यष्टिमधुनि । प.मु. । रा.नि.व.६ । रस.र.स्तनरो.चि.। वा.सू.१५अ.सारिवादि:। "यष्टी पद्मकं हन्ति ।" च.द.ज्व.चि.शिरोलेपे । "यष्टीबदरकाञ्जिकम् ।" भैष.वृहत्खदिरवटी. ।

**यष्टीकर्ण:** । पुं । तन्नामककर्णबन्धनाकृतौ । "तदाकार: ग्रथितमांससम्बन्धशिराततः सूक्ष्मपालिश्च ।" सु.सू.१६अ. ।

**यष्ट्याह्वम्** । क्ली । यष्टिमधुनि । रा.नि.व.६ । वा.सू.हरिद्रादिव. । सि.यो.र.पि.चि.मुस्तादि । अपस्मा.चि.कुष्माण्डकघृते ।

**यक्षकर्दम:** । पुं । कर्पूरादिकृतगन्धानुलेपने । स च समभागकर्पूरागुरुकस्तूरीकक्कोलात्मक: । "कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षधूपक: । चन्दनागुरुकुरङ्गनाभिकाचन्द्रचन्दनसमांशसम्भृतम् । यक्षपूजनपरैकगोचरं यक्षकर्दममिमं प्रचक्षते ॥" रा.नि.व.२२ ।

**यक्षग्रह:** । पुं । यक्षोन्मादे । रा.नि.व.४५ ।

**यक्षतरु:** । पुं । वटवृक्षे । रा.नि.व.११ ।

**यक्षधूप:** । पुं । सर्जरसे । धुना । प.मु. । रा.नि.व.१२ । सर्जतरौ । सरलनिर्यासे । तार्पिन तैल । हे.च. । यक्षकर्दमे । रा.नि.व.२२ ।

**यक्षरस:** । पुं । पुष्पमद्ये । त्रिका. ।

**यक्ष(क्षा)वास:** । पुं । वटवृक्षे । मद.व.५ । रा.नि.व.११ । [श.मा. ।

**यक्षामलकम्** । क्ली । पिण्डीखर्ज्जूरकफले ।

**यक्षोदुम्बरकम्** । क्ली। अश्वत्थफले । त्रिका.।

**यक्षोन्माद:** । पुं । यक्षावेशकृते उन्मादविशेषे । लक्षणं—"ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् [illegible]: । तेजस्वी वदति च किं ददासि कस्मै [illegible] ॥" भा. ।

**यक्ष्मघ्नी** । स्त्री । द्रा[illegible]म् । श.मा. ।

**यक्ष्मा (क्ष्मन्)** । पुं। [illegible]करोगे । यक्ष्मारोग । यक्ष्यते पूज्यत इति । [illegible]दानं—"वेगरोधात् क्षयाच्चैव साहसाद्विषमा[illegible]त् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥" तन्निरुक्ति:—"वैद्यो व्याधिमता यस्मात् व्याधिर्यत्नेन यक्ष्यते ।" भा. । See राजयक्ष्म ।

**याचनक:** । पुं । रक्तैरण्डवृक्षे । रा.नि.व.८ ।

**याज:** । पुं । अन्ने । सिक्थकण्डुलान्न । हे.च. ।

**याज(ज्ञि)क:** । पुं । पलाशवृक्षे । रा.नि.व.१० । कुशतृणे । कुश । श.र. । रक्तखदिरवृक्षे । रा नि.व.८ । अश्वत्थवृक्षे । रा.नि.व.११ ।

**याजुष:** । पुं । तत्तिरपक्षिणि । वै.निघ. ।

**यातना** । स्त्री । अतितीव्रवेदनायाम् । अम. ।

**यातयाम:** । पुं । वृद्धे । रा.नि.व.१८ । त्रि । जीर्णे । अम. । उज्झिते । मे ।

**यातुक:** । पुं । पत्रशाकविशेषे । गुणा: – पीलुपर्णीवत् । च.सू.२७अ. । स्त्री (का) । मयूरशिखायाम् । वै.निघ. ।

**यातुघ्न:** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**याद:** । क्ली । जलजन्तौ । अम. ।

**यादोनिवास:** । पुं । जले । हे.च. ।

**यानम्** । क्ली । गमने । हस्त्यादिभिर्भ्रमणे । गुणा:—"हस्त्यश्वरथदोलाद्यैर्भ्रमणं वातकोपनं। स्थ-

सीकरयमङ्गानां वर्ण्यं वह्निविवर्द्धनम्।" राज.२प.।

**यापनवस्तिः** । पुं । निरूहवस्तिभेदे । "क्षीद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत् । हवुषार्द्धसंवाचांशो वस्तिः स्याद्यापनः परः ॥" भा. ।

**याप्यः** । त्रि । दुःखसाध्ये । तल्लक्षणम्—"यापनीयन्तु तं विद्यात् क्रिया धारयते हि यम् । क्रियायान्तु निवृत्तायां सद्यो यस्तु विनश्यति ॥" भा.। याप्यत्वमसाध्यत्वञ्च द्विधा प्रकतित उपेक्षणाचेति। "याप्याः केचित् प्रकृत्यैव केचिदाप्या उपेक्षया।" सारचन्द्रिका ।

**यामघोषः** । पुं । कुक्कुटे । श.मा.। स्त्री (षा)। घटिकायन्त्रे । घड़ि । त्रिका. ।

**यामनादी** (इन्) । पुं । कुक्कुटे । वै.निघ. ।

**यामिनी** । स्त्री । हरिद्रायाम् । रा.नि.व.६ ।

**यामिनीचरः** । पुं । गुग्गुलौ । पेचके । वै. निघ. । [श.र. ।

**यामिनीपतिः** । पुं । कर्पूरे । मे. । चन्द्रे ।

**यामुन(नेय)म्** । क्ली । स्रोतोऽञ्जने । उज्ज्व. । सौवीराञ्जने । रा.नि.व.१३ ।

**यामुनेष्टकम्** । क्ली । शीषधातौ । जटा. ।

**याम्यम्** । क्ली । चन्दने । मे. । वै.निघ.चयरी. चि.चन्दनादितैले ।

**याम्यज्वरः** । पुं । प्रवृद्धहीनमध्यवातादिजनितसन्निपातज्वरे । लक्षणं—"हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः । पच्यन्तेऽत्यर्थमूर्द्धाधः पूयशोणितनिर्गमः । शीर्णदन्तश्च मृत्युश्च तस्याप्येतद्विशेषतः । भिषग्भिः सन्निपातोऽयं याम्यो नाम्ना प्रकीर्तितः ॥" भा.म.१भ. । [निघ. ।

**याम्यदिग्भवा** । स्त्री । तमालपत्राम् । वै.

**याम्यद्रुमः** । पुं । शाल्मलिवृक्षे । वै.निघ. ।

**याम्योद्भूतः** । पुं । कौङ्कणे प्रसिद्धे शीतालवृक्षे । रा.नि.व.६ । [वै.निघ. ।

**यावः** । पुं । अलक्तके । अम. । लाक्षायाम् ।

**यावकः** । पुं । कुलत्थे । प.मु. । यवाग्वां । यवेर याउ । इ.च. । च.चि.१भ.। माषे । मावकलाय । अम. । व्रीहीधान्यद्वये । माषाकारपत्रे काश्मीरेषु तुलसीति ख्याते । सुभूतिः । अलक्तके । श.र. । यवान्ने । सिद्ध यव । इ.च. । गुणाः— "यावकोऽतिगुरुः स्वादुर्बल्यः स्निग्धः प्रकीर्तितः । गुल्मज्वरप्लीहश्वासकण्ठकक्षासमेहहा ॥" वै.निघ. ।

**यावनः (कल्कः)** । पुं । शिलारसे । अम. ।

**यावनकः** । पुं । रक्तैरण्डे । वै.निघ. ।

**यावनालः** । पुं । (Zea mays.) स्वनामकशिम्बीधान्ये । काल जनार, जनार, जुयारा । हिं भुट्टा, मक्का । तें मक्का जोन्नलु । तम्. मक्क, बुट, वज्रा । ता. मक्कशोलम् । गुणाः—अस्य शरमूलम् ईषन्मधुरं रुच्यं शीते पित्तघ्नं तृष्णाहरं पशूनां दौर्बल्यकरञ्च । रा.नि.व.१६ ।

**यावनालनिभः (भा)** । पुं । यावनाली । रा.नि.व.८ ।

**यावनालरसजगुड़ः** । पुं । तद्रसजातगुड़े । जनारेर गुड़ । गुणाः—क्षारः कटुः सुमधुरः कफवातघ्नः पित्तलः नित्यसेवनेन कण्डूकुष्ठजननः रक्तदाहघ्नश्च । वै.निघ. ।

**यावनालशरः** । पुं । यावनालस्य शरे । जनारेर शर । हिं जोहरली । गुणाः—ईषन्मधुरः रुच्यः शीतलः पित्ततृष्णाहरः पशूनामबलप्रदश्च । रा.नि.व.१६ ।

**यावनाली(शर्करा)** । स्त्री । यावनालगुड़कृतशर्करायां । जनारेर चिनि। गुणाः—शैत्या उष्णा तिक्ता अतिपिच्छिला वातघ्नी सारका रूक्षा दाहपित्तासदा च । रा.नि.व १४ ।

**यावनी** । स्त्री । करङ्कशालिनामेक्षौ । रा.नि. व.१४ । रसालेक्षौ । वै.निघ. ।

**यावशूकः (जः)** । पुं । यवक्षारे । च.द.सि. यो.कास.चि.कुलत्थाद्यघृते । "दाड़िमगुड़यावशूकानाम् ।" (लवङ्गादिचूर्णे) ।

**यावि: (वी)** । स्त्री । शङ्खिन्याम् । वै.निघ. । (वी) यवतिक्तालतायां । रा.नि.व.३ । [सु. ।

**याविकः** । पुं । यवनाले । काल जनार । प.

**याव्यः** । पुं । यवक्षारे । वै.निघ. ।

**यासः (कः)** । पुं । रक्तदुरालभायां । गुणाः—मधुर, तिक्तः शीतः पित्तदाहहरः बल्यः तृष्णाकफच्छर्दिघ्नश्च । रा.नि.व.४ । सि.यो.ज्व.चि.अष्टा-

मावलिहे। "स्थौर्यं यासश्च कारवी।" च.द.अभि
न्यासज्व.चि.। "यासभार्गीपुनर्नवा:।" [निघ.।

**यासशर्करा**। स्त्री। यवासशर्करायाम्। वै.

**यासा**। स्त्री। मदनशलाकापक्षिणि। श.मा.।
सि.यो.काम.चि.। "मूर्वातिक्ता निशा यासा।"

**युक्तरथ:**। पुं। निरूहबस्तिभेदे। 'एरण्डमूल
निक्वाथो मधुतैलं ससैन्धवं। एष युक्तरथो बस्ति:
सवचापिप्पलीफल:॥" भा.।

**युक्तरसा**। स्त्री। गन्धरास्नायां। सामान्यरास्ना-
यां। रा.नि.व.६। काँटा आमरुली इति भाषा।
अम.भ.।

**युक्तश्रेयसी**। स्त्री। गन्धरास्नायां। रा.नि.व.६।

**युक्ता**। स्त्री। रास्नायां। वा.सू.१५अ.रोध्रादि:।
वृक्षभेदे। एलानीति लोके। र.मा.।

**युक्तिव्यपाश्रय:**। त्रि। या चेष्टा प्रत्यक्षं फ-
लति तदौषधवाचके, संशोधनसंशमनौषधवाचके
च। च वि.८अ.।

**युगम्**। क्ली। ऋद्धौ। भेषजे। हस्तचतुष्टये।
मे.। "न युगमात्रदृक्।" च.सू.८अ.।

**युगच्छद:**। पुं। आपटा इति ख्याते वृक्षे।
वै.निघ.उष्मा.चि.।

**युगन्धर:**। पुं। यावनाले। जनार। वै.निघ.

**युगन्धरभक्तम्**। क्ली, पुं। यावनालभक्ते। गु-
णा:—"अप्रसाधितभक्तो युगन्धराणां भक्तश्च घनो
विशदमधुरश्च। कफे त्रिदोषशमने च कथ्यते का-
से च श्वासात्मकएव स स्मृत:॥" अत्रि.२३अ.।

**युगन्धराम्लम्**। क्ली। यावनालकृतकाञ्जिक-
विशेषे। गुणा:—"युगन्धराम्लं कफवातहन्तृ ग्र-
लामयानां जरणप्रकर्तृ। तीक्ष्णं तथाग्निं श्रमदोष-
हन्तृ मेहार्शसो: रक्तहितं मतञ्च॥" अत्रि.११अ.।

**युगप(पा)त्र: (क:)**। पुं। रक्तकाञ्चनवृक्षे।
प.मु.। अम.। अश्मन्तके। लोध्रे। वै.निघ.।

**युगपत्रिका**। स्त्री। शिंशपावृक्षे। सर्षपवृक्षे।
त्रिका.।

**युगपात्रिका**। स्त्री। शिंशपावृक्षे। त्रिका.।

**युगभृङ्गराज:**। पुं। भृङ्गराजे केशराजे च।
संग्रह:।

**युगलाक्ष:**। बर्बूरवृक्षे। बाबला गाछ। रा.
नि.व.८।

**युगाक्षिगन्धा**। स्त्री। वृद्धदारकलतायाम्।
बीजताड़क। प.मु.। [निघ.।

**युग्बला**। स्त्री। सुगन्धवृक्षे, रोहिषवृक्षे। वै.

**युग्मम्**। क्ली। युगले। [छ। मद.व.६।

**युग्मकण्टका**। स्त्री। बदरीवृक्षे। कुल गा-

**युग्मपत्र: (क:)**। पुं। रक्तकाञ्चनवृक्षे। र.
मा.। भूर्जवृक्षे। सप्तपर्णवृक्षे। वै.निघ.।

**युग्मपत्रिका**। स्त्री। शिंशपावृक्षे। श.र.।

**युग्मपर्ण:**। पुं। रक्तकाञ्चनवृक्षे। रा.नि.व.
१०। सप्तपर्णवृक्षे। रा.नि.व.१२। स्त्री (र्णा)।
वृश्चिकालीक्षुपे। श.चि.।

**युग्मफला**। स्त्री। इन्दीवरालतायाम्। रा.
नि.व.३। वृश्चिकालीलतायां। बिछाति गाछ।
रा.नि.व.६। [प.मु.।

**युग्मफलिनी**। स्त्री। दुग्धिकायां। थिकरे।

**युग्माञ्जनम्**। क्ली। अञ्जनद्वयं। एकं सौवी-
राञ्जनम् अपरं सौवीरमिति। अरुण:। वा.सू.१५
अ.प्रियङ्ग्वादिव.। [वै.निघ.।

**युग्या**। स्त्री। ऋद्धौ। ऋद्धि। वृद्धौ। वृद्धि।

**युजौ**। पुं द्वि.। अश्विनीकुमारौ। त्रिका.।

**युञ्जातक:**। पुं। वृक्षविशेषे। गुणा:—"बल्य:
शीतो गुरु: स्निग्धसर्पणो बृंहणात्मक: वातपित्त-
हर: स्वादु: वृष्यो युञ्जातक: पर:। च.सू.२७अ.।

**युद्धसार:**। पुं। अश्वे। श.च.।

**युधिष्ठिरराज:**। पुं। कङ्कपक्षिणि। काँक्
पाखी। त्रिका.।

**युयु:**। पुं। घोटके। हला.।

**युयुक्षुर:**। पुं। क्षुद्रव्याघ्रे। श.च.।

**युवगण्ड:**। पुं। पौगण्डे। त्रिका.। यूनो ग-
ण्डस्थलगो। वयस्फोँड़ा। श.र.।

**युवती**। स्त्री। हृष्टार्त्तवायां स्त्रियि। रा.नि.व.
१८। प्रियङ्गौ। च.चि.१अ.ब्राह्मरसायने। स्वर्ण-
यूथिकायाम्। वै.निघ.। हरिद्रायां। श.च.।

**युवतीष्टा** । स्त्री । स्वर्णयूथिकायाम् । रा.नि. व.१० । [वयस्के । यूनि । रा.नि.व.१८ ।

**युवा** (न्) । पुं । षोड़शमारभ्य पञ्चाशत्पर्य्यन्त-

**युवानपिड़का** । स्त्री । यौवनकृतमुखव्रणे । ब्रणस्फोंड़ा । भैष.चन्द्रदी.चि. ।

**युवावस्थः** । पुं । यूनि । रा.नि.व.१८ । [च. ।

**यूः** । स्त्री । मुद्गादिद्विदलधान्यकृतयूषे । यूष । हे.

**यूकः** । पुं । वकवृक्षे । प.मु. । मत्कुणे । जटा.। स्त्रा (का) । कृष्णोदुम्बरे । यमान्यां । वै.निघ. ।

**यूकागड़ः** । पुं । लिक्षायां । लिखि । वै.निघ.।

**यूकारी** । स्त्री । लाङ्गलिकायाम् । विषलाङ्गलिया । वै निघ. । [छ । रा.नि.व.६ ।

**यूकावासः** । पुं । आखोटवृक्षे । श्याओड़ा गा-

**यूग्रपः** । पुं । सुनिषण्णकशाके । वै.निघ. ।

**यूथा** । स्त्री । पाठायां । आकनादि । वै.निघ.।

**यूथिका** । स्त्री । (Jasminum auriculatum.) स्वनामख्यातपुष्पक्षुपे । जुई । हिं जूही, स्वर्णजुही । मं पांढ़राजुइ । कं विलियमोल्ले । यूथिका श्वेतस्वर्णभेदेन द्विधा । गुणाः—यूथिकायुगलं स्वादु शीतलं शर्कराघ्नं पित्तदाहतृष्णाघ्नं सन्निपातदोषघ्नञ्च । "सितपीतनीलमेचकनामानः कुसुमेन यूथिकाः कथिताः । तिक्तहिमपित्तकफामयज्वरघ्नाः व्रणादिदोषहराः । इति साधारणगुणाः । सर्व्वासां यूथिकानान्तु रसवीर्य्यादिसाम्यता, स्वर्णयूथिकायान्तु सुरूपता सुगन्धता च विशेषतो वर्त्तते । रा.नि.व.१० । "यूथीयुगं हिमं तिक्तं कटुपाकरसं लघु । मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् । व्रणास्यमुखदन्ताक्षिशिरोरोगविषापहम् ॥" भा. । पाठायां । आकनादि । रा.नि.व. ६ । चव्यानके । मे. ।

**यूथिकापत्रः** । पुं । तालीशपत्रे । वै.निघ. ।

**यूथी** । स्त्री । यूथिकायां । श.र. । गणयूथिकायाम् । स्वर्णयूथिकायाम् । वै.निघ. ।

**यूपः** (कः) । पुं । क्रमुकवृक्षे । मद.व. ।

**यूपद्रुः** (मः) । पुं । खदिरवृक्षे । त्रिका. । रक्तखदिरे । रा.नि.व.८ ।

**यूपलक्ष्यः** । पुं । पक्षिणि । श.मा. ।

**यूषः** । पुं, क्ली । मुद्गादिरसे । डाल, कलायादित झोल । "भृष्टमुद्गदलानान्तु पलैकेन विपाचितः । पूतापनीतविदलः सम्यग्यूषः कृताकृतः । वक्ष्यते तत्र पलं द्रव्यं ग्राहयन्ति जलाढके । भेषजस्यातिबाहुल्यात्कदाचिदुचितम्भवेत् । पेया मण्डादियोगेषु भेषजं यत्प्रकीर्त्तितम् । तत्तथैव प्रयोक्तव्यमन्यथा चेन्न भवेत् यथा ॥" तोड़नानन्दोद्धृतनसात् । चतुर्भागाम्बुसाधितनिष्पीड़ितवैदलादिसम्भूतवारि यूष उच्यते । "वैदलान् वितुषान् भृष्टान् चतुर्भागाम्बुसाधितान् । निष्पीड्य तोयमेतेषां संस्कृतं यूष उच्यते ॥" प.मु. । "...यूषः किञ्चिद्घनः स्मृतः ।" गुणाः —"यूषो बल्यः स्मृतः कण्ठ्यः लघुपाकः कफापहः ।" प.प्र.२ख. । द्विदलादिरसनद्रवे । "रसनद्रवो यूष ।" इति । सा.कौ. । मांसरसे । यूषो बहुविधः वैदलादीनां वैचित्र्यात् । विशेषाः स्वस्वपर्य्याये मृग्याः । पुं । मदनवृक्षे । श.र. ।

**योकम्** । क्ली । यूकावृन्दे । सि.यो.कृमि.चि. ।

**योगः** । पुं । औषधे । द्रव्ये । उपाये । त्रिका.। येन वाक्यं युज्यते स योगः । सु.उ.६५अ. । "यद्दोषवन्तु प्रथमं यस्य योगस्य कथ्यते । तत्रानेव स योगो हि कथ्यते च विनिश्चयः ॥" प.प्र.१ख. । वपुस्थैर्य्ये । मे. । [विशेषे श्रीहर्षसूरिकृते ।

**योगचिन्तामणिः** । पुं । चिकित्सासंग्रह-

**योगजम्** । क्ली । अगुरुणि । काष्ठागुरुणि । भा. । [विशेषे त्रिमल्लभट्टकृते ।

**योगतरङ्गिनी** । स्त्री । वैद्यकचिकित्सासंग्रह-

**योगनाविकः** । पुं । मत्स्यविशेषे । हारा. ।

**योगरङ्गः** । पुं । नागरङ्गवृक्षे । रा.नि.व.११ ।

**योगरत्नाकरः** । पुं । चिकित्साग्रन्थविशेषे ।

**योगराजगुग्गुलुः** । पुं । ऊरुस्तम्भाधिकारे, आमवाते च औषधम् । पाठः—"चित्रकं पिप्पलीमूलं यमानीं कारवीं तथा । विड़ङ्गान्यजमोदाश्च जीरकं सुरदारु च । चव्यैलै सैन्धवं रास्नां तथा गोक्षुरधान्यकं । त्रिफलां मुस्तकं व्योषं त्वगुशीरं यवाग्रजं । तालीशपत्रं पत्रञ्च श्लक्ष्णचूर्णानि कारयेत् । यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं

सम्मर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत्। त-
तो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि। योगराज-
इति ख्यातः ......॥" চিতামূল, পিপুলমূল,
যমান, কৃষ্ণজীরা, বিড়ঙ্গ, বনযমান, জীরা,
দেবদারু, চই, এলাইচ, সৈন্ধব, কুড়, রাস্না,
গোক্ষুর, ধনিয়া, আমলা, হরীতকী, বহেড়া,
মুতা, শুঁট, পিপুল, মরিচ, গুড়ত্বক্, বেণার
মূল, যবক্ষার, তালীশপত্র, তেজপত্র প্রত্যে-
কে সমভাগ চূর্ণ সমষ্টি করিবে; সেই চূর্ণ-
সমষ্টির সমান শুদ্ধ মহিষাক্ষ গুগ্গুল। গুগ্গুল
ঘৃতের সহিত মাড়িয়া পরে তাহার সহিত
চূর্ণ মিশাইবে। মাত্রা ॥০ তো.। रस.र.।
भा.। [रदे। मधुनि। हे.च.। चारे। वै.निघ.।

**योगवाही (हिन्)।** पुं। सर्ज्जिकाचारे। पा-

**योगशतकम्।** क्ली। चिकित्सासंग्रहग्रन्थे ल-
क्ष्मीदासकृते। [व.६।

**योगसारः (कः)।** पुं। नागरङ्गवृक्षे। मद.

**योगा(गी)रङ्गः।** पुं। नागरङ्गवृक्षे। रा.नि.
व.११। [रा.नि.व.७।

**योगिदण्डः।** पुं। वेत्रवंशे। বেউড় বাঁশ।

**योगी(गे)ष्टम्।** क्ली। सीसधातौ। र.मा.।
रा.नि.व.१३।

**योगेश्वरी।** स्त्री। वन्ध्याकर्कोटिकायाम्। भा.।
नागदमन्याम्। नागदमना। वै.निघ.।

**योग्यम्।** क्ली। पुष्पकासीसे। रा.नि.व.१३।
ऋद्धौ। वृद्धौ। अम.। चन्दने। वै.निघ.। स्त्री
(ग्या)। ऋद्धौ। रा.नि.व.५। वृद्धौ। गोरोचना-
याम्। वै.निघ.। [मे.। अजयपालः।

**योजनगन्धा (न्धिका)।** स्त्री। कस्तूर्य्याम्।

**योजनपर्णी।** स्त्री। मञ्जिष्ठायाम्। प.मु.।

**योजनमल्लिका।** स्त्री। आस्फोतायाम्। शा-
पररमाली। भैष.ज्व.चि.पानीयवटी।

**योजनवल्लिका (ल्ली)।** स्त्री। मञ्जिष्ठायां।
रा.नि.व.६। वा.सू.१५अ.प्रियङ्ग्वादिव.। "पद्माद्र-
ल्ली योजनवल्ल्यनन्ता।" सु.सू.३८अ.प्रियङ्ग्वादि.।

**योनलः।** पुं। यावनाले। জনার। हे.च.।

**योनिः।** पुं, स्त्री। स्त्रीचिह्ने। रा.नि.व.१८।
सा तु गर्भशय्यायाः सप्तभिर्मासैर्भवति। सुखबोधः।
स्वरूपं यथा—"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा
प्रकीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रति-
ष्ठिता॥" उपस्थे। जले। कारणे। हे.च.। उत्-
पत्तिस्थाने। सा चतुर्विधा जरायुजाण्डजस्वेदजोद्भि-
ज्जभेदात्। च.शा.३अ.।

**योनिकन्दः।** पुं। स्त्रीरोगविशेषे। निदाना-
दिकं कन्दशब्दे द्रष्टव्यम्। [निव्यापदि। निदा.।

**योनिदोषः।** पुं। उपदंशे। स्त्रीरोगे। यो-

**योनिभ्रंशः।** पुं। योनिबहिर्गमने। सु.नि.
८अ.।

**योनिरञ्जनः।** पुं। योनिदोषभेदे। निदा.।

**योनिरोगः (व्यापत्)।** पुं, स्त्री। उदाव-
र्त्तादिस्त्रीरोगे। निदानं—"प्रवृद्धलिङ्गं पुरुषं या
त्यर्थमुपसेवते। रूक्षदुर्ब्बलबालायास्तस्या वायुः प्र-
कुप्यति। स दुष्टो योनिमासाद्य योनिरोगाय क-
ल्पते। त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु॥
विंशतिर्व्यापदो योनेर्निर्द्दिष्टा रोगसंग्रहे। मिथ्या-
चारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च। जायन्ते वी-
जदोषाच्च दैवाच्च शृणु ताः पृथक्॥ सर्व्वलिङ्गसमु-
त्थाना सर्व्वदोषप्रकोपजा। चतसृष्वपि चाद्यासु
सर्व्वलिङ्गोच्छ्रयी भवेत्। पञ्चासाध्या भवन्तीह यो-
नयः सर्व्वदोषजाः॥" सु.उ.३८अ.। नामानि
यथा—उदावर्त्ता वन्ध्या विप्लुता परिप्लुता वात-
ला, वातदोषेण। लोहितचरा स्रंसिनी वामिनी
पुत्रघ्नी पित्तला, पित्तदोषेण। अत्यानन्दा कर्णिनी
अचरणा (चरणा वा) अतिचरणा श्लेष्मला, श्लेष्म-
दोषेण। षण्ढी अण्डिनी (वा ...लनी) महती सू-
चीमुखी त्रिदोषिणी, त्रिदोषदोषेण। मा.नि.।
अतिचरणा उदावर्त्ता वन्ध्या जातघ्नी अन्तर्मुखी
सूचीमुखी शुष्काख्या वामिनी षण्ढसंज्ञा महायो-
निः रक्तयोनिः पैत्तिकी श्लैष्मिकी लोहितक्षया प-
रिप्लुता उपप्लुता विप्लुता कर्णिनी सान्निपातिकी
चेति। वा.उ.३३अ.। आसां लक्षणानि स्वस्वप-
र्य्याये द्रष्टव्यानि। [पीडायां। निदा.।

**योनिशूलम्।** क्ली। योनिरोगविशेषे। योनि-

**योनिशूलघ्नी।** स्त्री। शतपुष्पायां। শুলুফা।
वै.निघ.। [सङ्कोचे। सु.नि.८अ.।

**योनिसंवरणम्।** क्ली। गर्भजन्यरोगे, गर्भ-

**योन्यर्शः** । क्ली । योनिकन्दरोगे । त्रिका. । See कन्दः ।

**योषित्प्रिया** । स्त्री । हरिद्रायाम् । भा. ।

**यौगन्धरान्नम्** । क्ली । यावनालकृतान्ने । ज-नारेर भात । गुणाः—"यौगन्धरं गुरु घनं का-सश्वासप्रवृत्तिकृत् ।" वै.निघ. ।

**यौतवम्** । क्ली । परिमाणे । अम. ।

**यौवनम्** । क्ली । यौवनावस्थायाम् । तत्र पञ्च-दशाद्वर्षमुच्यते । "कैशोरमापञ्चदशात् यौवनन्तु म-तः परम् ।" रा.नि.व.१८ ।

**यौवनः** । पुं । यावनाले । जनार । प.मु. ।

**यौवनकण्टकः** । पुं, क्ली । युवगण्डरोगे । वयसफोँड़ा । श.मा. ।

**यौवनपिड़का** । स्त्री युवकाले मुखजातपि-ड़कायाम् । वयसफोँड़ा । लक्षणं—"शाल्मलीक-ण्टकप्रख्याः कफमारुतशोणितैः । जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ॥" सु.नि.१३श. ।

# र

**रक्तः** । पुं । सूर्य्यकान्तमणौ । वै.निघ. ।

**रक्तणः** । पुं कोकिलाक्षक्षुपे । कुलेखाड़ार गाछ । रा.नि.व.४ ।

**रकसा** । स्त्री । क्षुद्ररोगविशेषे, कुष्ठरोगभेदे वा । लक्षणं—"कण्डूान्विता या पिड़का शरीरे सं-स्रावहीना रकसोच्यते सा ।" सु.नि.५श. ।

**रक्त(क)म्** । क्ली । हिङ्गुले । रा.नि.व.१३ । भा.म.१भ.ज्व.चि.त्रिपुरभैरवरसे । "द्युमणिरक्त-कमार्द्रकमर्दितम् ।" ताम्रे । रा.नि.व १३ । वङ्ग-धातौ । र.मा. । रक्तचन्दनभेदे । वकम काठ । सिन्दूरे । प.मु. । कुङ्कुमे । पद्मकाष्ठे । रा.नि.व. १२ । पद्मे । रा.नि.व.१० । प्राचीनामलके । मे. । रक्तखदिरे । बोले । रक्तपद्मे । वै.निघ. । शरीरस्थसप्तधात्वन्यतमद्वितीयधातौ । रक्त । हिं लहु, खुन । रा.नि.व.१८ । रक्तस्वरूपमाह—"रसस्तु हृदयं याति समानमारुतेरितः । रञ्जितः पाचितस्तत्र पित्तेनायाति रक्तताम् । रक्तं सर्व्व-शरीरस्थं जीवस्याधारमुत्तमम् । स्निग्धं गुरु च-लं स्वादु विदग्धं पित्तवद्भवेत् ॥" शार्ङ्ग.पू.६श. । रक्तस्थानम् यथा—यकृत् प्लीहा च रक्तस्य मुख्य स्थानम् । तस्य कर्म्म च जीवनम् । भा. । तत्रस्थ-मेव शोणितस्थानानामनुग्रहं करोति । सु.सू.२१ श. । तत्र च विस्रताद्रवतारागचलनविलयाः इति भूम्यादिपञ्चभूतगुणाः सन्ति । शुद्धरक्तलक्षणं—"मधुरं लवणं किञ्चिदशीतोष्णमसंहतं । पद्मेन्द्रगो-पहेमाविशशलोहितलोहितं । लोहितप्रभवः शुद्ध-तनोस्तेनैव च स्थितिः ॥" वा.सू.२७श. । तस्मिंश्च दुष्टे सति शोथरक्तमण्डलादिबहवो रोगा जाय-न्ते । वृद्धे च रक्ताङ्गनेत्रताशिरापूर्णतादयो जाय-न्ते । क्षीणे च तस्मिन् मूर्च्छादयो भवन्ति । रक्तं वातदूषितं फेनिलारुणपरुषकृष्णतनु, पित्तदूषिते पीतहरितनीलश्यावास्वादुविस्रोष्णं, कफदूषिते शी-तलबहलस्निग्धादि च भवति । द्विदोषदुष्टे संसृष्टं त्रिदोषदुष्टञ्च पूतिगन्धं भवति । भा. । पुं । लोध्र-वृक्षे । प.मु. । कुसुम्भवृक्षे । हिज्जलवृक्षे । रा.नि. व.१८ । रक्तशिग्रौ । रक्तपुनर्नवायाम् । अशोक-वृक्षे । रक्तैरण्डे । रक्तरोहीतके । मत्स्यविशेषे । वै. निघ. । सविषमण्डूकभेदे । महाविषवृश्चिकभेदे । मन्दविषवृश्चिकभेदे । सु.कल्प.८श. । त्रि । रक्तव-र्णे । रञ्जिते ।

**रक्तकः** । पुं । लोहितवर्णे । मे. । बन्धुजीववृक्षे । राङ्गालि गाछ । प.मु. । रक्तम्लिण्टयां । मे. । र-क्तशिग्रुवृक्षे । काल सजिना गाछ । प.मु. । रक्तै-रण्डवृक्षे । वै.निघ.२भ.शिश्नक.ज्व.चि. । पत्राङ्ग-चन्दनवृक्षे । वकम् । रा.नि.व १२ ।

**रक्तकङ्गुः** । पुं । धूनके । वै.निघ. ।

**रक्तकण्टा** । स्त्री । विकङ्कतवृक्षे । बैंइचि गा-छ । वै.निघ. । [कण्टा । वै.निघ. ।

**रक्तकदली** । स्त्री । लोहितकदल्याम् । चाँपा ।

**रक्तकन्दः (कः)** । पुं । राजपलाण्डौ । वड़ पेयाज । रक्तपिण्डालुके । लाल आलू । रा.नि. व.७ । प्रवाले । हे.च. ।

**रक्तकन्दलः** । पुं । रक्तप्रवालद्रुमे । त्रिका. ।

**रक्तकमलम्** । क्ली । रक्तवर्णपद्मे । रा.नि.व.१०।

**रक्तकम्बलम्** । क्ली । कह्लारे । রক্তকম্বল ।

**रक्तकरवीरकः** । पुं । रक्तपुष्पकरवीरवृक्षे । লালকরবী গাছ । मं रक्तकरवीर । कं केंगणलिगे । हिं लालकनेर । गुणाः—कटुः तीक्ष्णः शोधकः त्वग्दोषव्रणकण्डूकुष्ठघ्नः विषघ्नश्च । रा.नि.व.१० ।

**रक्तका** । स्त्री । पानीयामलके । वै.निघ. ।

**रक्तकाञ्चनः** । पुं । (Bauhinia variagata or B. Purpurea.) Mountain ebony. काञ्चनारवृक्षे । রক্তকাঞ্চন । हिं कचनार । प.मु. । [व.५ ।

**रक्तकाण्डा** । स्त्री । रक्तपुनर्नवायाम् । रा.नि.

**रक्तकाष्ठम्** । क्ली । पत्राङ्गचन्दने । বকম কাঠ । रा.नि.व.१२ ।

**रक्तकुमुदम्** । क्ली । रक्तकैरवे । রক্তহেলা ফুল, লালশুন্দি । जटा. ।

**रक्तकुरण्टकः** । पुं । रक्तझिण्टयाम् । রক্তঝাঁটি । गुणाः—तिक्तः वर्ण्य उष्णः कटुः शोथघ्नः ज्वरघ्नः, तथा वातरोगं कफं रक्तरोगं पित्तम् आध्मानं शूलं श्वासं कासञ्च नाशयेत् । वै.निघ. ।

**रक्तकुसुमः** । पुं । पारिभद्रवृक्षे । পালিতে মান্দার গাছ । रा.नि.व.८ । धन्वनवृक्षे । ধামনা গাছ । रा.नि.व.६ । रक्तकाञ्चने । स्त्री (मा) । दाड़िम्बवृक्षे । वै.निघ. । [वै.निघ. ।

**रक्तकृमिजा** । स्त्री । लाक्षायाम् । লাহা ।

**रक्तकेशरः** । पुं । पारिभद्रवृक्षे । रा.नि.व.८ । पुन्नागवृक्षे । र.मा. ।

**रक्तकैरवम्** । क्ली । रक्तकुमुदे । जटा. ।

**रक्तकोकनदम्** । क्ली । रक्तोत्पले । রক্তপদ্ম । जटा. । [नकुल.१०अ. ।

**रक्तकोपः** । पुं । शोणितप्रकोपे । रक्तविकारे ।

**रक्तखदिरः** । पुं । रक्तवर्णखदिरवृक्षे । রক্তবর্ণ খদির গাছ । गुणाः—कटूष्णः तिक्तः कषायः गुरुः आमवातघ्नः वातरक्तहरः व्रणभूतज्वरघ्नश्च । रा.नि.व.८ ।

**रक्तखाण्डवः** । पुं । ईषत्खर्ज्जूरीवृक्षे । वै.निघ. ।

**रक्तगतज्वरः** । पुं । रक्तधातुगतज्वरे । लक्षणं यथा—"रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ । प्रलापः पिड़का तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥" मा.नि. ।

**रक्तगन्ध(न्धि)कम्** । क्ली । बोलनामगन्धद्रव्ये । বোল । খুনখারাপী । रा.नि.व.६ ।

**रक्तगन्धा** । स्त्री । अश्वगन्धायाम् । वै.निघ. ।

**रक्तगर्भा** । स्त्री । नखरञ्जनीवृक्षे । মেহেদী গাছ । वै.निघ. ।

**रक्तगुल्मः** । पुं । आर्त्तवजन्यगुल्मे । निदानं—"नवप्रसूताहितभोजना या या चामगर्भं विसृजेदृतौ वा । वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहं । पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध । यः स्पन्दते पिण्डित एव नाङ्गैः चिरात्सशूलः समगर्भलिङ्गः । स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥" भा. ।

**रक्तगैरिकम्** । क्ली । स्वर्णगैरिके । वै.निघ. ।

**रक्तग्रन्थिः** । पुं । रक्तलज्जालौ । লাল লজ্জাবতী । रक्तजन्यग्रन्थिरोगे । लक्षणं—"स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ।" सु.नि.११अ. ।

**रक्तग्रीवः** । पुं । कपोते । পায়রা । वै.निघ. ।

**रक्तघ्नः** । पुं । रोहितकवृक्षे । রোড়া, রয়না গাছ । जटा. । स्त्री (घ्नी) । ग्रन्थिदूर्व्वायां । গাঁটিয়া দূর্বা । श.च. ।

**रक्तचन्दनम्** । क्ली । (Pterocarpus santalinus.) Red sandal wood. स्वनामख्यातसुगन्धिकाष्ठे । রক্তচন্দন । दा. हिं लालचन्दन । तें एर्रगन्धपुचेक्क । ता. सेन्शान्दनम् । फा. सन्दले सुर्ख । आ. सन्दले अह्मर् । तत्त्रिधा—"आकृष्णसुत्तमं नूनं रक्तश्वेतञ्च मध्यमम् । आरक्तमधमं विद्धि रक्तचन्दनकं त्रिधा ॥" भैष. । गुणाः—शीतलं तिक्तं कफपित्तकासज्वरभ्रान्तिकृमिवमितृष्णाहरम् । रा.नि.व.१२ । एतच्चन्दनं कषायपानयोः प्रयोज्यं । तथा कषायलेपयोश्च ग्राह्यम् । वा.म.१५अ.गुडूच्यादिः । "धानकारक्तचन्दनम् ।"

**रक्तचित्रकः** । पुं । (Plumbago rosea

or Coccinea. Syn. P. Rosea.) रक्तवर्णपुष्पचित्रकवृक्षे। রক্তচিতা। मं रक्तचित्रकु। कं केंपिनचित्रमूल। तें एर्रचित्र। ता. शिवप्पुचित्रिर। गुणाः—स्थौल्यकरः वश्यः कुष्ठघ्नः रसनियामकः लौहवेधकः रसायनः चित्रकान्तराद्गुणाढ्यश्च। रा.नि.व.६। [বেতো। वै.निघ.।

**रक्तचिल्लिका।** स्त्री। मधुरवास्तुके। মিঠা

**रक्तचूर्ण(क)म्।** क्ली। सिन्दूरे। लोहितचूर्णमात्रे। पुं। कम्पिल्लके। কমলাগুড়ি। रा.नि.व. १२।

**रक्तजकृमिः।** पुं। रक्तजन्यकृमिरोगे। लक्षणं—"रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः। अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः। केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः। षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः॥" मा.नि.।

**रक्तजन्तुकः।** पुं। भूनागे। शीष। रा.नि.व. १२। लोहितप्राणिमात्रे।

**रक्तजिह्वः।** पुं। सिंहे। श.मा.।

**रक्तझावुकः।** पुं। (Tamarix dioica.) स्वनामख्यातवृक्षे। লাল ঝাউ। हिं लालझाउ। श.चि.। [See रक्तकुरुण्टकः।

**रक्तझिण्टी।** स्त्री। रक्तपुष्पझिण्टीवृक्षे। अम.।

**रक्ततरम्।** क्ली। स्वर्णगैरिके। वै.निघ.।

**रक्ततुण्डः (कः)।** पुं। सारसपक्षिणि। शुकपक्षिणि। रा.नि.व.१९। (कः) भूनागे। रा.नि. व.१२। [(णा)। गोमूत्रिकातृणे। रा.नि.व.८।

**रक्ततृणम्।** क्ली। तृणविशेषे। वै.निघ.। स्त्री

**रक्तत्रिवृत्।** स्त्री। रक्तमूलत्रिवृति। লাল তেউড়ী। मं लोहिडी तियर। कं केंपिनेय तियडे। गुणाः—तिक्ता कटूष्णा रोचनी ग्रहणी मलविष्टम्भहरी च। रा.नि.व.६।

**रक्तदला।** स्त्री। चिविल्लिकायां। नलिकायां। रा.नि.व.५। नलिकानामगन्धद्रव्ये। रा.नि.व.१२।

**रक्तदृक्।** पुं, स्त्री। कपोते। আগপায়রা।

**रक्तद्रुमः।** पुं। रक्तबीजासनवृक्षे। পিয়াল গাছ। रा.नि.व.९।

**रक्तधरा।** स्त्री। मांसाभ्यन्तरे द्वितीयायां कलायाम्। "मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति।" सु.शा.४अ.।

**रक्तधातुः।** पुं। गैरिकधातौ। গিরিমাটী। प.मु.। ताम्रे। रा.नि.व.१३। रक्तवर्णधातुमात्रे।

**रक्तनाडी।** स्त्री। दन्तमूलगतरक्तजनाडीरोगविशेषे। मा.नि.।

**रक्तनालः।** पुं। जीवशाकवृक्षे। रा.नि.व.७। जीवन्त्याम्। क्ली। कह्लारे। वै.निघ.।

**रक्तनासिकः।** पुं। पेचके। श.र.। [व.९।

**रक्तनिर्य्यासः।** पुं। रक्तबीजासनवृक्षे। रा.नि.

**रक्तनीलः।** पुं। महाविषवृश्चिकविशेषे। सु. कल्प.८अ.। [निघ.।

**रक्तनेत्रः।** पुं। सारसपक्षिणि। कपोते। वै.

**रक्तनेत्रत्वम्।** क्ली। रक्तविकारजनेत्ररोगे। निदा.।

**रक्तपत्रः।** पुं। ফোগড়ালী। रा.नि.व.७।

**रक्तपत्रा (त्रिका)।** स्त्री। रक्तपुनर्नवायां। वै.निघ.। नाकुल्यां। रा.नि.व.७। [जटा.।

**रक्तपदी।** स्त्री। क्षुद्रवृक्षविशेषे। লজ্জাবতী।

**रक्तपद्मः।** पुं, क्ली। रक्तकमले। तत्पुष्पगुणाः—पद्मं कषायमधुरं शीतपित्तकफास्रजित्। रा. ज.५प.।

**रक्तप(पा)दी।** स्त्री। लज्जालुकायां। हंसपद्यपरनामलज्जालुकायां। रा.नि.व.५।

**रक्तपर्णः।** पुं। रक्तपुनर्नवायाम्। वै.निघ.।

**रक्तपल्लवः (कः)।** पुं। अशोकवृक्षे। रा. नि.व.१०।

**रक्तपा।** स्त्री। जलौकायाम्। জোঁক। मे.।

**रक्तपाका (की)।** स्त्री। लतावृहतीवृक्षे। र.मा.।

**रक्तपात्री।** स्त्री। जलौकायाम्। श.र.।

**रक्तपादः।** पुं। शुकपक्षिणि। हे.च.। हंसे। वै.निघ.। [व.१९। मत्कुणे। वै.निघ.।

**रक्तपायिनी।** स्त्री। जलौकायाम्। रा.नि.

**रक्तपायी (इन्)।** पुं। मत्कुणे। ছারপোকা। व्याक.।

**रक्तपारदम् ।** क्ली, पुं । हिङ्गुले । चिका. । जटा. । [वै.निघ. ।

**रक्तपाषाणः ।** पुं, क्ली । गिरिमृत्तिकायाम् ।

**रक्तपिण्डम् ।** क्ली । जपापुष्पवृक्षे चिका. । रक्तालौ । वै.निघ. । चीनदेशीयगुलावपुष्पे । श.चि. ।

**रक्तपिण्डकः ।** पुं । रक्तवर्णपिण्डालौ । रा. नि.व.७ । जपावृक्षे । चिका. ।

**रक्तपिण्डालुः ।** पुं । रक्तवर्णपिण्डालौ । लाल चुवड़ि आलु । मं रताालु । कं केंपिनहेड़ल । गुणाः—शीतः मधुरः श्रमः श्रमघ्नः दाहपित्तघ्नः वृष्यः गुरुः बलपुष्टिकरश्च । रा.नि.व.७ ।

**रक्तपित्तम् ।** क्ली । तन्नामकरोगभेदे । निदानं —"घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः । तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च । पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् । ततः प्रवर्त्तते रक्तमूर्द्धञ्चाधो द्विधापि वा । ऊर्द्धं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः । कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥" इति निदानम् । "सदनं शीतकामित्वं कण्ठधूमायनं वमिः । लोहगन्धश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥" पूर्व्वरूपम् । वातिकादिलक्षणं —"सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितं । श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम् । रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभं । मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् । संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् । ऊर्द्धगं कफसंसृष्टमधोगं पवनानुगम् । द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्त्तते । ऊर्द्धं साध्यमधो याप्यमसाध्यं युगपद्गतं । एकमार्गं बलवतो नातिवेगमनवोत्थितं । रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते । यत्त्रिदोषमसाध्यं स्यात् मन्दाग्नेरतिवेगवत् ॥" मा.नि. । अत्र प्रथममपतर्पणम् ऊर्द्धगे रेचनं अधोगे च वमनं शस्तम् ।'पुं । हारीतपक्षिणि । भा. ।

**रक्तपित्तहा ।** स्त्री । ग्रन्थिदूर्व्वायां । गेँटे दूर्वा । श.च. ।

**रक्तपित्तान्तकरसः ।** पुं । रक्तपित्ताधिकारे रसः । पाठः—"मृताभ्रं मृततीक्ष्णञ्च माक्षिकं हरितालकं । गन्धकञ्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः । दिनैकं मर्दयेत् खल्ले सिताक्षौद्रसमन्वितं ॥" मात्रा माषमात्रं । र.सा.सं. । [निदा. ।

**रक्तपीटिकादर्शनम् ।** क्ली । रक्तजविकारे ।

**रक्तपीतफला ।** स्त्री । मधुरविम्बिकायाम् । वै.निघ. ।

**रक्तपुनर्नवा ।** स्त्री । स्वनामख्यातपत्रशाकरूपे । शादापुणा । मं रक्तघेंटुलि । कं केंपिन वेळ्ळडाकलु । गुणाः—तिक्ता सारणी शोथघ्नी रक्तप्रदरघ्नी पाण्डुपित्तघ्नी च । रा.नि.व.५ ।

**रक्तपुष्पः ।** पुं । बकवृक्षे । लाल बकफुलेर गाछ । र.मा । रक्तकरवीरवृक्षे । जटा. । रोहितकवृक्षे । श.मा. । दाडिमवृक्षे । प.मु. । रक्तकाञ्चनवृक्षे । बन्धूकवृक्षे । पुन्नागवृक्षे । रा.नि.व.१० । पर्पटके । शाल्मलीवृक्षे । पलाशवृक्षे । पारिभद्रवृक्षे । जवावृक्षे । रक्तार्के । वै.निघ. ।

**रक्तपुष्पकः ।** पुं । पलाशवृक्षे । रोहितकवृक्षे । जटा. । पर्पटके । रा.नि.व.५ । शाल्मलीवृक्षे । रा.नि.व.८ ।

**रक्तपुष्पा ।** स्त्री । शाल्मलीवृक्षे । जटा. । कनककदलीवृक्षे । चाँपाकला गाछ । प.मु. । नागदमन्याम् । नागदना । रा.नि.व.५ ।

**रक्तपुष्पिका ।** स्त्री । भूपाटल्यां । रक्तपुनर्नवायां । रा.नि.व.५ । लज्जालुकायाम् । श.च. । पाटलीवृक्षे । पारुल गाछ । रा.नि.व.१० । मञ्जिष्ठायाम् । लाङ्गलिकायाम् । रक्तशणपुष्पाम् । शाल्मलीवृक्षे । वै.निघ. ।

**रक्तपुष्पी ।** स्त्री । धातकीवृक्षे । र.मा. । पाटलीवृक्षे । जटा. । जवापुष्पवृक्षे । रा.नि.व.१० । आवर्त्तकीलतायां । रा.नि.व.३ । नागदमन्यां । रक्तार्के । रक्तपुनर्नवायाम् । वै.निघ. । कोङ्कणदेशीयककर्णीपुष्पवृक्षे । उष्ट्रकाण्डीपुष्पवृक्षे । रा.नि. व.१० । [नि.व.६ ।

**रक्तपूरकम् ।** क्ली । वृक्षाम्ले । तेँतुल । रा.

**रक्तपूर्व्वकः ।** पुं । रक्तापामार्गे । वै.निघ. ।

**रक्तपोस्तः ।** पुं । (Papaver Rhoeas.) Red poppy. रक्तखस्खसवृक्षे । लाल पोस्त । हिं लालपुस्ता । तें एररगसगसलाचेट्टु । ता. शिगप्पु पोस्तकाचेड़ि । कोषान्तरम् ।

**रक्तप्रतिश्याय:** । पुं । दुष्टरक्तजप्रतिश्यायरोगे । लक्षणम् —"रक्तजे तु प्रतिश्याये रक्तस्राव: प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तु: उरोघातप्रपीड़ित: । दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति स: ॥" भा. नि. ।

**रक्तप्रवृत्ति:** । पुं । पित्तज्वरोगे । भा. ।

**रक्तप्रसव:** । पुं । रक्तकरवीरे । मुचुकुन्दवृक्षे । मुचकुन्द गाछ । रक्ताम्लाने । रक्त झाँटी । रा.नि. व.१० ।

**रक्तफल:** । पुं । वटवृक्षे । रा.नि.व.११ । शाल्मलीवृक्षे । रा.नि.व.८ । रक्तापामार्गे । स्त्री (ला)। विम्बीलतायाम् । তেলাকুচা । प.मु. । स्वर्णवल्ल्याम् । শোণালু । रा.नि.व.६ । वार्त्ताकुवृक्षे । वटवृक्षे । वै.निघ. । [वै.च. ।

**रक्तफेनज:** । पुं । फुस्फुसे, वामपार्श्वस्थक्लोम्नि ।

**रक्तबभ्रु:** । पुं । महावृश्चिकविशेषे । सु.कल्प. ८अ. । [रे । हारा. । त्रिका. ।

**रक्तबाल(लु)कम् (का)** । क्ली,स्त्री । सिन्दू-

**रक्तबिन्दु:** । पुं । रक्तापामार्गे । रा.नि.व.४ ।

**रक्तबिन्दुच्छदा** । स्त्री । पुत्रदावृक्षाम् । शुक्लकण्टकार्य्याम् । वै.निघ. ।

**रक्तबीज:** । पुं । दाड़िमवृक्षे । रा.नि.व.११ । रीठाकरञ्जे । रिठा । रक्तबीजासनवृक्षे । आसन गाछ । रक्तकुलत्थे । वै. निघ. । [रा.नि.व.८ ।

**रक्तबीजका** । स्त्री। तरटीवृक्षे । তরুই গাছ।

**रक्तभस्म** । क्ली । रससिन्दूरादिकरणे । एतत्साधनप्रणाली र.सा.संग्रहे मृग्या ।

**रक्तमञ्जर:** । पुं । वेतसलतायाम् । त्रिका. । निम्बवृक्षे । वै.निघ. ।

**रक्तमञ्जरी** । स्त्री । रक्तकरवीरे । वै.निघ. ।

**रक्तमण्डल:** । पुं । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । [লাল লজ্জাবতী । वै.निघ. ।

**रक्तमण्डलिका** । स्त्री । रक्तलज्जालुकायाम्।

**रक्तमण्डूक:** । पुं। रक्तवर्णमण्डूकजातीयकीटे । सु.कल्प.८अ. ।

**रक्तमत्स्य:** । पुं । रक्तवर्णमत्स्यविशेषे । লাল মাছ । तल्लक्षणगुणा:--"यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्य: स चोक्त: । शीतो वृष्य: पुष्टिकृद्दीपनोऽसौ नाशं धत्ते किञ्च दोषत्रयस्य ॥" रा.नि.व.१७ ।

**रक्तमरिचम्** । क्ली । मरिचभेदे । लङ्कामरिच । हिं लालमरिच । वै.निघ. ।

**रक्तमातृका** । स्त्री । रसधातौ । वै.निघ. ।

**रक्तमिलातक:** । पुं । रक्ताम्लान-पुष्पवृक्षे । रक्तझाँटी । रा.नि.व.१० । [वै.निघ. ।

**रक्तमुख:** । पुं । रोहितमत्स्ये । षष्टिकधान्ये ।

**रक्तमूत्रता** । स्त्री । रक्तप्रस्रावरोगे । निदा. ।

**रक्तमूर्द्धा (न्)** । पुं। सारसपक्षिणि । वै.निघ.।

**रक्तमूलक:** । पुं । दैवसर्षपक्षुपे । रा.नि.व.६।

**रक्तमूला (ली)** । स्त्री । लज्जालुकालतायां । रा नि.व.५ ।

**रक्तमृत्** । स्त्री। गैरिके । गিরিমাটী । वै.निघ.।

**रक्तमेह:** । पुं । रक्तस्राविप्रमेहरोगे । लक्षणं —"विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिन: ।" भा.।

**रक्तमोक्षणम्** । क्ली। जलौकावचारणे । জোঁক ধরান । शोणितबाहुल्यात् बहुविधरोगजनकत्वाच्च स्रावणस्यातीव प्रयोजनं भवति प्रयोजने च सञ्जाते जलौकालाबुकाभिरुपायै: शिरामोक्षैश्च तत्स्रावणं क्रियते । परन्तु क्षयातिव्यवायिक्लीबादीनां न शिरामोक्ष: कार्य्य:, जलौकावचारणन्तु प्रशस्तम् । विषदुष्टं वातादिदुष्टं वा शोणितं जलौकालाबूभि: शस्तम् । भा. । [शिञ्जायां । प.मु. ।

**रक्तयष्टि: (ष्टी)** । स्त्री । लज्जालुकायां । म-

**रक्तयष्टिका** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व. ६ । [জনার । रा.नि.व.१६ ।

**रक्तयावनाल:** । पुं । तुवरयावनाले । লাল

**रक्तयोनि:** । पुं । योनिव्यापद्विशेषे । लक्षणम् —"रक्तयोन्याख्यासृग्गतिस्रुते ।" वा.उ.३३अ. ।

**रक्तरङ्गा** । स्त्री। मेहदीतिख्याते वृक्षे । वै.निघ.।

**रक्तरज:** । क्ली । सिन्दूरे । वै.निघ. ।

**रक्तरस:** । पुं । रक्तासनवृक्षे । वै.निघ. ।

**रक्तरसा** । स्त्री । रास्नायाम् । वै.निघ. ।

**रक्तरसोन:** । पुं । लोहितरसोने । लाल र-शुन । मं लोहिवावीलुरसण । कं केंपिनवेल्लुल्लि । गुणा:—मधुर: कटु: बलकर: । पत्रं तिक्तं । अ-स्थि सलवणञ्च । रा.नि.व.७। पत्रं मधुरं खारं नालो मधुरपिच्छल: कषाय: इति । मद.व.७ ।

**रक्तराजालुकम्** । क्ली । रक्तवर्णालुकभेदे । एतच्च किञ्चिदुष्णम् आग्नेयं वातकफहरञ्च । द्रव्य-गुण: । [व्यकीटविशेषे । सु.कल्प.८अ. ।

**रक्तराजि: (जी)** । स्त्री । सर्षपिकानामवाय-

**रक्तरेणु:** । पुं । सिन्दूरे । भा. । पलाशकलि कायां । मे. । पुन्नागवृक्षे । रा.नि.व.१० ।

**रक्तरेणुका** । स्त्री । पलाशकलिकायां । पला-शकुँड़ि । श.मा. । [नि.व.११ ।

**रक्तरैवतक:** । पुं । द्वीपान्तरखर्ज्जूरीवृक्षे । रा.

**रक्तरोहितक:** । पुं । (Rheum wightii.) रक्तरोहड़ा । हिं रक्तरोहिड़ा ।

**रक्तलशुन:** । पुं । रक्तरसोने । लाल रशुन । रा.नि.व.७ । [स्त्रीलतायां । रा.नि.व.३ ।

**रक्तला** । स्त्री । काकादन्यां । कुँच गाछ । मू

**रक्तलोचन:** । पुं । कपोते । हे.च. । भा. ।

**रक्तवटी** । स्त्री । मसूरिकायां । वसन्त । त्रिका.।

**रक्तवरटी** । स्त्री । मसूरिकायाम् । वसन्त । जटा. ।

**रक्तवर्ग:** । पुं । दाड़िमकिंशुकलाक्षाहरिद्रा-दारुहरिद्राकुसुम्भपुष्पमञ्जिष्ठाबन्धूकेषु । "दाड़िमं किंशुकं लाक्षा बन्धूकञ्च निशाद्वयम् कुसुम्भपुष्पं मञ्जिष्ठा इत्येते रक्तवर्गक: ॥" रा.नि.व.२२ ।

**रक्तवर्ण:** । पुं । इन्द्रगोपकीटे । लाल आषा-ढ़े पोका । रा.नि.व.१९ । गोमेदमणौ । प्रवा-ले । कम्पिल्लके । वै.निघ. ।

**रक्तवर्त्तक:** । पुं । विष्किरपक्षिविशेषे । लाल बटेर । च.सू.२७अ. ।

**रक्तवर्मा** । पुं । कुक्कुटे । वै.निघ. ।

**रक्तवर्द्धन:** । पुं । वार्त्ताकौ । श.च. । [व.५।

**रक्तवर्षाभू:** । स्त्री । रक्तपुनर्नवायां । रा.नि.

**रक्तवल्ली** । स्त्री । पीतपुष्पदण्डोत्पले । र.मा. । मञ्जिष्ठायां । नलुकायाम् । वै.निघ. ।

**रक्तवात:** । पुं । वातरक्तनामरोगविशेषे । यो रोग: रक्तवस्त्रप्रवालहरणादुत्पद्यते । निष्कृतिश्च य-स्मात् पद्मरागसहितसवस्त्रमहिषीदानाद्भवति। "र-क्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान् । सवस्त्रां महिषीं दद्यात् पद्मरागसमन्विताम् ॥" कर्म्मवि-पाक: । नारिकेलमूलं छागीदुग्धेन पीतं वातरक्तं नश्यति । पुराणम् । [रा.नि.व.१० ।

**रक्तवारिजम्** । क्ली । कोकनदे । रक्तपद्म ।

**रक्तवास्तुक:** । पुं । गौणवास्तुकशाके । लाल वेतो शाक । वै.निघ. ।

**रक्तविकार:** । पुं । रक्तजरोगे । निदा. ।

**रक्तविद्रधि:** । पुं । रक्तजन्यविद्रधौ । लक्षणं —"कृष्णस्फोटावृत: श्याव: तीव्रदाहरुजाकर: । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" मा.नि. ।

**रक्तवृन्तक:** । पुं । पुनर्नवायाम् । वै.निघ. ।

**रक्तवृन्ता** । स्त्री । शेफालिकावृक्षे । शिउलि गाछ । प.मु. । [ड़ि । वै.निघ. ।

**रक्तशमनम्** । क्ली । कम्पिल्लके । कमलागु-

**रक्तशालि:** । पुं, स्त्री । (Oriza sativa.) रक्तधान्ये । दादखानि मिहि चाउल । प.मु. । तै एर्रनिवर्गलधान्यमु । गुण: सुमधुर: लघु: स्निग्ध: बलकर: रुचिकर्त्ता सुस्वराश्रहर: प-थ्यश्च । सर्व्वरोगघ्न: वृष्य: तदाहवातरक्तघ्नश्च । रा.नि.व.१६ । त्रिदोषघ्न: चक्षुष्य: शुक्रल: मूत्रल: तृष्णाघ्न: बल्य: स्वर्य्य: हृद्यश्च । राज. । त्रिदोषघ्नौ चक्षुष्यौ मूत्ररोगहा । चचि.१५अ. । वा.सू.६अ. । "रक्तो महान् सकलम: ।" च.द.ज्व.चि. । "पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोर्त्तिज ।" तन्मण्ड-गुणा:—रक्तशाल्युद्भवं मण्डं मधुरं याहि शीतलं । प्रमेहानाहशूलानि हन्ति वातलं पित्तहृद्दरम् ॥" अत्रि. १२अ. । [न्दे । रक्तपद्मेर गेंड़ । वै.निघ. ।

**रक्तशालुक: (का)** । पुं, स्त्री । रक्तकमलक-

**रक्तशाल्मलि:** । पुं । रक्तपुष्पशाल्मलिवृक्षे । रक्तशिमूल । वै.निघ. ।

**रक्तशासनम्** । क्ली । सिन्दूरे । हारा. ।

**रक्तशिग्रुः** । पुं । रक्तशोभाञ्जनवृक्षे । লাল স-জিনা গাছ । मं रक्तसेगुया । कं केंपिनेयनुग्गि । गुणाः — महावीर्य्यः मधुरः रसायनः शोफाध्मान-वातघ्नः पित्तश्लेष्मघ्नश्च । रा.नि.व.७ । [वै.निघ. ।

**रक्तशिम्बी** । स्त्री । शिम्बीभेदे । লাল শিম্ ।

**रक्तशीर्षकः** । पुं । लवणखोट्यां । प.मु. । सारसपक्षिणि । च.सू.२७अ. ।

**रक्तशृङ्गिकम्** । क्ली । विषे । रा.नि.व.६ ।

**रक्तशेखरः** । पुं । पुन्नागवृक्षे । र.मा. ।

**रक्तश्रीखण्डकम्** । क्ली । रक्तचन्दने । वै. निघ.२भ.वा.व्या.चि.महाराजादौ ।

**रक्तश्वेतः** । पुं । तद्वर्णमहाविषवृश्चिकभेदे । सु. कल्प.८अ. ।

**रक्तष्ठीविसन्निपातः** । पुं । स्वनामख्यात-सन्निपातविशेषे । तस्य लक्षणं—"रक्तष्ठीवी ज्वर-वमितृषामोहशूलातिसारहिक्काध्मानभ्रमणदवथुश्वा-ससंज्ञाप्रणाशः । श्यामा रक्ताधिकतररसा मण्ड-लोत्थाङ्गरूपा रक्तष्ठीवी निगदित इह प्राणहन्ता प्र-सिद्धः ॥" निदा. । [चिका. ।

**रक्तसंज्ञ(सङ्कोचपिशुन)म्** । क्ली । कुङ्कुमे ।

**रक्तसंवरणम्** । क्ली । कृष्णाञ्जने । वै.निघ. ।

**रक्तसन्दंशिका** । स्त्री । जलौकायाम् । জোঁ-ক । रा.नि.व.१९ ।

**रक्तसन्ध्यकम्** । क्ली । रक्तकह्लारे । রক্তকহ্ল-র । अम. । रक्तोत्पले । वै.निघ. ।

**रक्तसरोरुहम्** । क्ली । रक्तपद्मे । अम. ।

**रक्तसर्षपः** । पुं । (Brassica nigra) रक्त-वर्णसर्षपे । রাই বা রক্তসরিষা । हिं लालिरा-इ, माकड़ाराइ । मं महुरी । कं सासिराइ । तें अवलो । ता. कड़घो । गुणाः—कटुः तिक्तः उ-ष्णः वातघ्नः प्लीहशूलघ्नः दाहपित्तकरः कफगुल्म-कृमिव्रणघ्नश्च । रा.नि.व.१६ ।

**रक्तसहा (ह्वः)** । स्त्री, पुं । रक्ताम्लानपुष्पवृ-क्षे । রক্তপুষ্পঝাঁটী গাছ । रा.नि.व.१० ।

**रक्तसारम्** । क्ली । रक्तचन्दने । प.मु. । रा. नि.व.१२ । रस.र.च.द.मेह.चि.न्यग्रोधादिपञ्चके । पतङ्गचन्दने । বকমকাষ্ঠ । प.मु. । पुं । अम्लवे-तसे । रा.नि.व.६ । रक्तखदिरवृक्षे । रा.नि.व.८। सु.चि.९अ. । रक्तबीजासनवृक्षे । रा.नि.व.९ । र-क्तशिंशपायाम् । वाराहीकन्दे । वै.निघ. ।

**रक्तसूः** । स्त्री । शरीरस्थरसधातौ । রসধাতু । रा.नि.व.१८ । [जटा. ।

**रक्तसौगन्धिकम्** । क्ली । रक्तकह्लारपुष्पे ।

**रक्तस्थज्वरः** । पुं । रक्तगतज्वरविशेषे । लक्षणं —"रक्तनिष्ठीवनं दाहो मोहश्छर्द्दनविभ्रमौ । प्र-लापः पिड़का तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥" मा.नि. ।

**रक्तस्रावः** । पुं । अम्लवेतसे । जटा. । नेत्र-सन्धिगतरोगे । निदा. । अश्वस्य रक्तजन्यनेत्ररोगे । लक्षणं यथा —"रक्ताभिष्यन्दिनोऽश्वस्य नेत्रं भवति लोहितं । सत्र्यं त्रिभागमर्द्धं वा स्रावरुग्दाहपीड़ि-तम् । रक्तस्रावोऽथवा यस्य वाजिनो लोचनाद्भवेत् । रक्तस्रावाभिधानन्तु नेत्ररोगं समादिशेत् ॥" ज.द. ३०अ. ।

**रक्तस्रुतिः** । स्त्री । रक्तस्रावे । व्याक. ।

**रक्तहरः** । पुं । भल्लातके । ভায়লা । वै.निघ.। त्रि । रक्तघ्नद्रव्यमात्रे ।

**रक्ता** । स्त्री । गुञ्जायां । কুঁচ । रा.नि.व.३ । सु. चि.१७अ.,सु.कल्प.५अ.। लाक्षायां । मञ्जिष्ठायां । रा.नि.व.६।२३ । शिम्बीभेदे । प.मु. । षट्काण्डी-नाम(?)क्षुपवृक्षे । रा.नि.व.१० । लक्ष्मणाकन्दे । वचा-याम् । वै.निघ. । रक्तवर्णशतपद्यां । লাল কেমু-হে । सु.कल्प.८अ. । कक्ष्यसाध्यलूताविशेषे । कर्ण-शिराभेदे । वा.उ.१अ. ।

**रक्ताका(ङ्कु)रः** । पुं, क्ली । प्रवालद्रुमे । পলা-র গাছ । रा.नि.व.१३ ।

**रक्ताक्तम्** । क्ली । रक्तचन्दने । जटा. । [निघ.।

**रक्ताख्यातः (कः)** । पुं । रक्तापामार्गे । वै.

**रक्ताङ्गम्** । क्ली । रक्तचन्दने । प.मु. । कुङ्कुमे । मे. । पुं । कम्पिल्लके । কমলাগুঁড়ি । प.मु. । प्रवालतरौ । रा.नि.व.१३ । मत्कुणे । ছারপো-কা । रा.नि.व.१९ ।

**रक्ताङ्गी** । स्त्री । कटुकायां । কট্কী । रा.नि.

व.६ । मञ्जिष्ठायां । भा. । जीवन्त्यां । मे. । मधुकायाम् । वै.निघ. । [निघ. । च.द्र.चारतैले ।

**रक्ताञ्जना** । स्त्री । रक्ताञ्जनिकायां । रक्ताञ्ज-

**रक्ताढ़की** । स्त्री । रक्तपुष्पाढ़क्याम् । लाल रहर । गुणाः—रुच्या बल्या पित्ततापादिहरी च । रा.नि.व.१६ । [५०अ. । See अण्डस्कन्दः ।

**रक्ताण्डः** । पुं । अश्वस्य अण्डरोगभेदे । ज.द.

**रक्तातिसारः** । पुं । सरक्तातिसाररोगे । तस्य सम्प्राप्तिः—"पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके । तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्बणः ॥" मा.नि. ।

**रक्ताधारः** । पुं । चर्म्मणि । रा.नि.व.१८ ।

**रक्तापराजिता** । स्त्री । रक्तपुष्पापराजितायां।

**रक्तापहम् (हा)** । क्ली, स्त्री । बोलनामगन्धद्रव्ये । पुनर्थारापि । रा.नि.व.६ ।

**रक्तापामार्गः** । पुं । स्वनामख्यातक्षुपे । लाल आपाङ् । हिं लालचिरचिरा । मं रक्तलटजीरा । कं वड़ाआघाड़ा । तें केम्पिगुत्तरेणी । गुणाः—शीतः कटुः कफवातघ्नः व्रणकण्डुविषघ्नः संग्राही वान्तिघ्नश्च । रा.नि.व.४ । वातविष्टम्भी कफकृत् शीतलः । भा.पु.१भ. ।

**रक्ताब्ज(क)म्** । क्ली । रक्तकमले । वै.निघ. ।

**रक्ताभः (भा)** । पुं, स्त्री । रक्तजपायाम् । लाल जवा । इन्द्रगोपकीटे । वै.निघ. ।

**रक्ताभिष्यन्दः** । पुं । सर्व्वगतनेत्ररोगभेदे । यथा—"रक्ताश्रुराजीदूषीकशुक्लमण्डलदर्शनम् । रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम् ॥" वा.उ.१५ अ. । [रा.नि.व.१३ ।

**रक्ताभ्रम्** । क्ली । रक्तवर्णाभ्रके । लाल अभ्र ।

**रक्ताम्भोजम्** । क्ली । कोकनदे । रक्तकमल । रा.नि.व.१० । [नि.व.११ ।

**रक्ताम्रः** । पुं । कोषाम्रवृक्षे । जलपाई । रा.

**रक्ताम्लातकः** / **रक्ताम्लानः** । पुं । रक्तझिण्टीक्षुपे । रक्तझाँटी गाछ । हिं लालकटसरैया । मं वाणभाड़ । कं वणदगिड़ु । गुणाः—ऊष्णः कटुः वातामयशोफघ्नः ज्वरघ्नः आध्मानशूलकासश्वासघ्नः वर्ण्यश्च । रा.नि.व.१० ।

**रक्तारिः** । पुं । महाराष्ट्रीक्षुपे । प.मु. ।

**रक्तार्कः** । पुं । अरुणार्कवृक्षे । लाल आकन्द गाछ । गुणाः—"अर्कद्वयं शङ्खवातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शोयकृच्छ्लेष्मोदरकृमीन् ॥" मद.व.१ । रा.नि.व.१० ।

**रक्तार्त्तिः** । स्त्री । शोणितामये । रा.नि.व.२० ।

**रक्तार्म्म (न्)** । क्ली । नेत्ररोगभेदे । लक्षणं यथा—"पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सिते ।" मा.नि. । [See अर्बुदः ।

**रक्तार्बुदः** । पुं । शुकरोगे । रक्तजन्यार्बुदरोगे ।

**रक्तार्शः** । क्ली । रक्तजन्यगुदजरोगे । लक्षणं—"तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम् । कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि चाधिकम् । तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् । शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् । यदार्शसां घनञ्चासृक् तन्तुमत्पाण्डु पिच्छिलम् । गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् । श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥" मा.नि. । [अ. ।

**रक्ता(लता)** । स्त्री । मञ्जिष्ठायां । सु.कल्प ५

**रक्तालुः** । पुं । (Dioscorea sativa.) Common Yam. रक्तपिण्डालुके । लाल पिण्ड आलु । हिं रताळू, रतालु, रतालु । ता. यामकॉलं । गुणाः—शीतलः मधुरः अस्रः अस्रपित्तदाहघ्नः पथ्यः बलपुष्टिकरः गुरुश्च । रा.नि.व.७ । शालिधान्यविशेषे । प.मु. । [२अ. ।

**रक्तावसेचनम्** । क्ली । [illegible] । च.चि.

**रक्ताश्वमारपुष्पम्** । क्ली । रक्तकरवीरपुष्पे, रक्तकरवी फूल । सि.यो.विषमज्वरे । "रक्ताश्वमारपुष्पञ्च ।" [ति शतके ।

**रक्ताश्वारिः** । पुं । रक्तकरवीरवृक्षे । रावणकृ-

**रक्तास्रावः** । पुं । रक्तजनेत्रसन्धिरोगे । लक्षणं यथा—"रक्तास्रावः शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम् ।" सु.उ.२अ. ।

**रक्ताक्षः** । पुं । महिषे । पारावते । चकोरे । मे. । सारसपक्षिणि । रा.नि.व.१६ । [षि. ।

**रक्ताक्षी** । स्त्री । गुग्गुलौ । वै.निघ.२भ.अ.सा.

**रक्तिः** । पुं । अष्टसर्षपमाने । च.कल्प.१२अ. ।

**रक्तिका** । स्त्री । गुञ्जायां । कुँच । र.मा. । रा.नि.व.३ । राजिकायाम् । रा.नि.व.१६ ।

**रक्तेक्षुः** । पुं । रक्तवर्णेक्षौ । वशाइ आक् । गुणाः—पाके मधुरः शीतलः मृदुः पित्तदाहहरः वृष्यः तेजोबलवर्द्धनश्च । रा.नि.व.१४ ।

**रक्तेक्षुशर्करा** । स्त्री । रक्तेक्षुकृतशर्करायाम् । गुणाः—पित्तघ्नी । रा.नि.व.१४ ।

**रक्तैरण्डः** । पुं । रक्तवर्णैरण्डवृक्षे । लाल भेरेण्डा । अयं प्रायेण श्वेतवद्गुणः । विशेषस्तु शोथघ्नः लघुः अरोचकघ्नः कफश्वासघ्नः ज्वरघ्नः रक्तपाण्डुभ्रान्तिनाशनश्च । रा.नि.व.८ । "रक्तोरुबुकस्तुवरो रसे कटुर्लघुः स्मृतः । तिक्तो वातकफश्वासकासकृम्यर्शोऽर्तिदः । रक्तदोषपाण्डुरुग्भ्रान्त्यरोचकनाशनः । प्रायस्त्वन्ये गुणाश्चास्य श्वेतवच्च समीरिताः ॥" वै.निघ. । [व.३ ।

**रक्तैर्वारुः** । पुं । इन्द्रवारुणीलतायां । रा.नि.

**रक्तोच्चटा** । स्त्री । श्वेतगुञ्जायाम् । भा. ।

**रक्तोत्पलम्** । क्ली । लघुरक्तपद्मे । कोकनदे । प.मु. । रा.नि.व.१० । सु.सू.३८अ. । गैरिके । पुं, स्त्री (ला) । शाल्मलीवृक्षे । रा.नि.व.८ ।

**रक्तोदरः** । पुं । रोहितमत्स्ये । महाविषमध्यविषवृश्चिकविशेषे । सु.कल्प.८अ. ।

**रक्तोपलम्** । क्ली । गिरिमृत्तिकायां । हारा. ।

**रक्तोदनम्** । क्ली । रक्तशाल्यादिभक्ते । अलक्तकरञ्जितभक्ते । च.द.बाल.चि. ।

**रघुनाथः** । पुं । वैद्यविलासनामग्रन्थकारे ।

**रङ्कुः** । पुं । मत्स्यरङ्गे । वै.निघ. । शबलपृष्ठहरिणविशेषे । रा.नि.व.१९ ।

**रङ्गम्** । क्ली । वङ्गधातौ । रांङ् । प.मु. । रा.नि.व.१३ । पुं । टङ्कणे । सोहागा । रा.नि.व.६ । खदिरसारे । रा.नि.व.८ । [नि.व.१२ ।

**रङ्गकाष्ठम्** । क्ली । पत्तङ्गे । बकमकाठ । रा

**रङ्गजम्** । क्ली । सिन्दूरे । र.मा. ।

**रङ्गदः** । पुं । खदिरसारे । रा.नि.व.८ । टङ्कणक्षारे । रा.नि.व.६ । [निघ. ।

**रङ्गदलिका** । स्त्री । नागवल्लीलतायाम् । वै.

**रङ्गदा** । स्त्री । स्फटिकायां । फट्किरि । भा. ।

**रङ्गदायकम्** । क्ली । कङ्कुष्ठे । रा.नि.व.१३ ।

**रङ्गदृढा** । स्त्री । स्फटिकायाम् । रा.नि.व.१३ ।

**रङ्गपत्री** । स्त्री । नीलीवृक्षे । नील गाछ । रा.नि.व.४ । [वावृक्षे । वै.निघ. ।

**रङ्गपुष्पी** । स्त्री । नीलीवृक्षे । रा.नि.व.४ । ज-

**रङ्गबीजम्** । क्ली । रूप्ये । त्रिका. । [व.१३ ।

**रङ्गमाणिक्यम्** । क्ली । माणिक्यरत्ने । रा.नि.

**रङ्गमाता (तृका)** । स्त्री । लाक्षायां । लाहा । रा.नि.व.६।२३ । त्रिका. ।

**रङ्गलता** । स्त्री । (Helicteres Isora.) आवर्त्तकीलतायाम् । आँतमोड़ा । हिं मरोरफली मेन्ढ़ु, कपासी । तें गुवादर । बम्. मेरादशिंग, केवान् । गुणः—शूलघ्नी । केचित् ।

**रङ्गलासिनी** । स्त्री । शेफालिकावृक्षे । श.च. ।

**रङ्गसट्टशम्** । क्ली । यशदे । दस्ता । भा. ।

**रङ्गक्षारः** । पुं । टङ्कणक्षारे । सोहागार खै । वै.निघ. ।

**रङ्गा** । स्त्री । जवावृक्षे । जबा गाछ । वै.निघ ।

**रङ्गाङ्गा** । स्त्री । स्फटिकारिकायां । फट्किरि । रा.नि.व.१३ । [र.मा. ।

**रङ्गारिः** । पुं । करवीरवृक्षे । करवी गाछ ।

**रङ्गिणी** । स्त्री । शतमूल्याम् । जटा. । कैवर्त्तिकायाम् । केउटेगुता । रा.नि.व.६ । हरिद्रायाम् । वै.निघ. । [रांङा आलु । त्रिका. ।

**रङ्गिष्ठालुकम्** । क्ली । स्वनामख्याते आलौ ।

**रजः** । पुं । पर्पटके । क्षेतपापड़ा । भा.म.१ भ.पित्तश्रम.ज्व.चि. । "पथ्यारिवततामरसेनकरजः ।" भा.म.१भ.ज्वरे काम.चि. । "कलिङ्गद्रुफलं रजः ।" वै.निघ.दुर्भलज्व.चि.शालोदयरसे । क्ली । स्त्रीकुसुमे । श.र. ।

**रजः (स्)** । पुं, क्ली । स्त्रीपुष्पे । अमरदत्तः । श.र. । "पाचिताः पित्ततापेन रसाद्या धातवः क्रमात् । शुक्लं यान्ति मासेन तथा स्त्रीणां रजो भवेत् ॥" शार्ङ्ग.६अ. । कर्पूरे । उदके । कालुष्ये ।

मतिभ्रमे। "रजोदृषणमुद्रेकः कालुष्यं मतिविभ्रमः।" रा.नि.व.२१। परागे। मे.।

**रजःशयः** । पुं। कुक्कुरे। श.मा.।

**रजःसारम्** । क्ली। कर्पूरे। नकुल.१२अ.।

**रजतम्** । क्ली। रौप्ये। अम.। स्वर्णे। वि.ज्व.चि.ज्वरकुञ्जरपारीन्द्ररसे। हस्तिदन्ते। हे.च.।

**रजतप्रभः** । पुं। सोमलताभेदे। সোমলতা। सु.चि.२९अ.।

**रजतोपमम्** । क्ली। रौप्यमाक्षिके। वै.निघ.।

**रजनकः** । पुं। कम्पिल्लके। কমলাগুঁড়ি। वा.सू.१५अ.श्यामादिः। "शिखरिरजनकच्छिन्नरुहाः करञ्जाः।" [अटी.।

**रजनिः** । स्त्री। वालुके। रात्रौ। हरिद्रायां।

**रजनिपुष्पम्** । क्ली। हरिद्रापुष्पे। হলুদফুল। रस.र.नागार्जुनचूर्णे।

**रजनी** । स्त्री। हरिद्रायां। रा.नि.व.६। सि.यो.पाण्डु.चि.। सु.सू.३८अ.वल्लीपञ्चके। यतुकालतायां। रा.नि.व.३। नील्याम्। নীল। मे.। दारुहरिद्रायां। वालुके। वै.निघ.। रात्र्यां। अम.।

**रजनीगन्धा** । स्त्री। (Polianthes tuberosa.) Tuberose. स्वनामख्यातपुष्पवृक्षे। রজনীগন্ধ। हिं गुलशब्बू। भूरिम.।

**रजनीजलम्** । क्ली। नीहारे। हारा.।

**रजनीद्वयम्** । क्ली। हरिद्राद्वये, हरिद्रादारुद्वयोः। च.द.विषमज्वरे।

**रजनीपुष्पः** । पुं। पूतिकरञ्जे। रा.नि.व.९।

**रजनीहासा** । स्त्री। शेफालिकापुष्पवृक्षे। श.र.।

**रजसानुः** । पुं। मनसि, हृदये। उणा.।

**रजस्वर्णः** । पुं। पीतधुस्तूरके। वै.निघ.।

**रजस्वलः** । पुं। महिषे। त्रिका.। पारदे। वै.निघ.। स्त्री(ला)। जातरजस्कायां स्त्रियि। रा.नि.व.१८। तत्स्वरूपं यथा—"द्वादशाद्वत्सरादूर्द्धमापञ्चाशत्समाः स्त्रियः। मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत्। आर्त्तवस्रावदिवसादृतुः षोड़शरात्रयः। गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः॥" रजःस्वलाकृत्यं—"आर्त्तवस्रावदिवसाद्धिंसाब्रह्मचारिणी। शयीत दर्भशय्यायां पश्येदपि पतिं न च॥" इत्यादि। भा.। ऋतुस्नानानन्तरं भर्त्तारमेव पश्येत्।

**रज्जुः** । पुं। केशवेण्याम्। दामनि। দড়ি। मांसरज्ज्वाम्। "पृष्ठवंशमभितः महत्यौ मांसरज्ज्वौ। चतस्रो मांसपेश्यः बन्धनं तत्प्रयोजनम्॥" भा.।

**रञ्जकः** । पुं। कम्पिल्लके। কমলাগুঁড়ি। रा.नि.व.१३। भल्लातकवृक्षे। वै.निघ.। तन्नामकजठराग्नौ। तस्य स्थानं यकृत्प्लीह्नोर्मध्यम्। स एवाहाररसं रञ्जयति। सु.सू.२१अ.। क्ली। हिङ्गुले, हिङ्गुलविशेषे। रा.नि.व.१३। स्त्री(का)। नखरञ्जिन्यां। মেহেদি গাছ। वै.निघ.।

**रञ्जनम्** । क्ली। रक्तचन्दनभेदे। বকম কাঠ। र.मा.। रक्तचन्दने। मद.व.१। हिङ्गुले। रा.नि.व.१३। स्वर्णे। जातीफले। वै.निघ.। पारदरञ्जनद्रवे। तारकर्म्मणस्य न तथा प्रयोगो दृश्यते। "केवलं निर्म्मलं ताम्रं वापितं रञ्जनेन तु। कुरुते त्रिगुणं जीर्णं लाक्षारसनिभं रसम्॥" रस.चि.३अ.। पुं। मुञ्जतृणे। মুঞ্জ। रा.नि.व.८। कम्पिल्लके। কমলাগুঁড়ি। वै.निघ.।

**रञ्जनकः** । पुं। कट्फलवृक्षे। रा.नि.व.९।

**रञ्जनकेशी** । स्त्री। नीलीवृक्षे। वै.निघ.।

**रञ्जनगणः** । पुं। रञ्जनद्रव्यवर्गे। "चतुर्विधा हरिद्रा स्यात् पतङ्गं रक्तचन्दनं। नीलीकुसुम्भमञ्जिष्ठालाक्षाम्रहरिकिंशुकम्॥" रा.नि.व.९।

**रञ्जनद्रुः (मः)** । पुं। आक्षुकवृक्षे। আচ্‌কুলের গাছ। श.चि.। धूनकवृक्षे। वै.निघ.।

**रञ्ज(ञ्जि)नी** । स्त्री। गुण्डारोचनिकायाम्। श.च.। नागवल्लीलतायाम्। वै.निघ.। नील्यां। रा.नि.व.४। जतुकालतायां। रा.नि.व.३। मञ्जिष्ठायाम्। शेफालिकायां। मे.। हरिद्रायां। रा.नि.व.६। पर्पट्यां। रा.नि.व.१३। [रा.नि.व.९।

**रञ्जनीपुष्पः** । पुं। पूतिकरञ्जे। নাটাকরঞ্জ।

**रणः** । पुं। दुम्बामेषे। দুম্বা। वै.निघ.।

**रणघण्टासमाकृतिः** । पुं। महाशणे। वै.निघ.।

**रणपक्षी** (इन्) । पुं । रणगृध्रे । (শ্যেন পাখী । वै.निघ. । [श्येनपक्षिणि । रा.नि.व.१९ ।

**रणप्रियम्** । क्ली । उशीरे । रा.नि.व.१२ । पुं ।

**रणमुष्टिः** । पुं । विषमुष्टिक्षुपे । कुचिला इति भाषा । रा.नि.व.४ । [व.६ ।

**रणमूर्द्धजा** । स्त्री । कर्कटशृङ्ग्याम् । रा.नि.

**रणरणः** । पुं । भ्रमरे । मशके । मशा । त्रिका. । (कः) उत्कण्ठायाम् । हे.च. ।

**रणालङ्करणः** । पुं । कङ्कपक्षिणि । কাঁক পাখী । रा.नि.१९ । [च. ।

**रण्डकः** । पुं । अफलवृक्षे । রাঁড়া গাছ । श.

**रण्डा** । स्त्री । मूषिककर्ण्याम् । अम. । प्र.वृहत् सोमनाथरसे ।

**रतम्** । क्ली । मैथुने । अम. । गुह्ये । मे. ।

**रतकीलः** । पुं । कुक्कुरे । हे.च. ।

**रतज्वरः** । पुं । काके । त्रिका. ।

**रतनारीचः** । पुं । कुक्कुरे । वै.निघ. ।

**रतनिधिः** । पुं । खञ्जनपक्षिणि । श.र. ।

**रतव्रणः** । पुं । कुक्कुरे । त्रिका. । मे. ।

**रतशायी** (इन्) । पुं । कुक्कुरे । हे.च. ।

**रताङ्गी** । स्त्री । कुञ्झटिकायां । त्रिका. ।

**रतान्दुकः** । पुं । कुक्कुरे । हे.च. ।

**रतामर्द्दः** । पुं । कुक्कुरे । श.मा. ।

**रतिः** । स्त्री । प्रीत्याम् । सुरते । गुह्यदेशे । मे. ।

**रतिकुहरम्** । क्ली । भगे । त्रिका. ।

**रतिगृहम्** । क्ली । भगे । त्रिका. ।

**रतिचर्य्या** । स्त्री । स्त्रीसेवायाम् । वा.उ.४०अ. ।

**रतिमन्दिरम्** । क्ली । योनौ । जटा. ।

**रतिवल्लभमोदकः** । पुं । वाजीकरणाधिकारे औषधम् । पाठः — "शक्राशनस्य बीजानि चूर्णितानि पलाष्टकं । कुडवं हविषश्चैव खण्डप्रस्थं मरटस्य च । शतपुष्पीरसप्रस्थं प्रस्थं शक्राशनस्य च । गव्यमाजं पयः प्रस्थं दत्त्वा प्रस्थद्वयं पचेत् । धात्रीद्विजीरकं मुस्तं त्वगेलापत्रकेशरं । आत्मगुप्ता चातिबला तालाङ्कुरकशेरुकं । शृङ्गाटकं त्रिकटुकं धन्याकं चित्रकं तथा । पथ्या द्राक्षा च काकोल्यौ खर्ज्जूरं चुरकं तथा । कटुका मधुकं कुष्ठं लवङ्गं सारसैन्धवं । यमानिका चाजमोदा जीवन्ती गजपिप्पली । प्रत्येकं कर्षमेकन्तु चूर्णितानि शुभानि च । मधुनः कुडवार्द्धञ्च पाकशेषे तथा क्षिपेत् । मृगाण्डजं सकर्पूरं यथालाभं विनिक्षिपेत् । रतिवल्लभनामायं सेव्यमानो रसायनः ॥" सिद्धिबीजचूर्णं ८ प. (मतान्तरे ५ प.) घृतं ४ प. शर्करा २ श. शतावरीरसः गव्यदुग्धं छागदुग्धं प्र. ४ श. । प्रक्षेपः—आमलकी जीरकं कृष्णजीरकं मुस्ता त्वक् एला तेजपत्रं नागकेशरं कपिकच्छूबीजं (আলাকুশীর বীজ) गोरक्षतण्डुला (গোরক্ষচাকুলিয়া) तालास्थिशस्यं कशेरुकं शृङ्गाटकं त्रिकटु धान्यकं चित्रकं (मतान्तरे अभ्रं वङ्गञ्च) हरीतकी द्राक्षा काकोली क्षीरकाकोली पिण्डखर्ज्जूरं कोकिलाक्षबीजं कटुकी यष्टिमधु कुष्ठं लवङ्गं सैन्धवं यमानी वनयमानी जीवन्ती गजपिप्पली प्र. २ तो. मधु २ प. । रस.र. । भैष. । [श.च. ।

**रतिसत्वरा** । स्त्री । पृक्कायां । পিড়িং শাক ।

**रतिसाधनम्** । क्ली । शिश्ने । वै.निघ. ।

**रती** । स्त्री । रक्तगुञ्जायाम् । वै.निघ. ।

**रतोद्वहः** । पुं । कोकिले । श.मा. ।

**रत्नम्** । क्ली । हीरके । रा.नि.व.१३ । मुक्तादौ । रत्नानि नव—रत्नं गारुत्मतं (পান্না) पुष्परागः माणिक्यं पद्मरागः इन्द्रनीलः मरकतः गोमेदः (वैदूर्य्यं) मौक्तिकं विद्रुमश्चेति विष्णुधर्म्मोत्तरे । तन्निरुक्तिः—"धनार्थिनो जनाः सर्व्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तम्···।" भा.पू.१भ.रत्नव. रत्नसाधारणगुणाः—"रत्नानि भक्षितानि सुमधुराणि सराणि च । चक्षुष्याणि च शीतानि विषघ्नानि घृतानि च । मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च ।" इति । माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोः, माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुराचार्य्यस्य वज्रं शनेः, नीलं निर्म्मलमन्ययोर्निगदिते गोमेदवैदूर्य्यके ॥" भा. । तस्य धारणं प्रीतिवर्द्धनम् । सु.चि.२४अ. । "धन्यं माङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनं । हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥" राज.२प. ।

**रत्नकन्दलः** । पुं । प्रवाले । पला । श.र. ।

**रत्नगर्भपोटलीरसः** । पुं । यच्माधिकारे रसः । पाठः —"रसं वज्रं हेम तारं नागं लौहञ्च ताम्रकम् । तुल्यांशं मरिचं देयं मुक्ताविद्रुममाक्षिकं । शङ्खं तुत्थञ्च तुल्यांशं (चार्द्रकद्रवैः) सप्ताहं चित्रकद्रवैः (शङ्खञ्च तुल्यतुल्यांशं भैष.) । मर्दयित्वा विचूर्ण्याथ तेन पूर्य्या वराटिकाः । टङ्कणं रविदुग्धेन मुखं लिप्त्वा निरोधयेत् । मृद्भाण्डे ता निरुध्याथ सम्यग्गजपुटे पचेत् । आदाय चूर्णयेत् सर्व्वं निर्गुण्ड्या सप्त भावयेत् । आर्द्रकस्य रसैः सप्त चित्रकस्य च विंशतिः (चित्रकस्यैकविंशतिः) । द्रवैर्भाव्यं ततश्चास्य देयं गुञ्जाचतुष्टयम् ॥" र.सा.सं.। भैष. ।

**रत्नगिरिरसः** । पुं । ज्वराधिकारे रसः । पाठः —"सूताभ्रस्वर्णताम्राणि गन्धचार्द्धांशलौहकं । लौहार्द्धं मृतवैक्रान्तं मर्द्दयेद्भृङ्गजैर्द्रवैः । पर्पटीरसवत् पाच्यं चूर्णितं भावयेत् पृथक् । शिग्रुवासकनिर्गुण्डी गुडूच्यग्निमन्थजैः । क्षुद्रामुण्डीजयन्तीभिर्म्मनिम्बाग्नौषु तिक्तकैः । कन्यायाश्च द्रवैर्भाव्यं त्रिभिर्वारं पृथक् पृथक् । ततो लघुपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् । माषो देयः कणाधान्ययुक्तश्चाभिनवज्वरे ॥" রস, অভ্র, স্বর্ণ, তাম্র, গন্ধক প্রত্যেকে সমান ; লৌহার্দ্ধ বঙ্গ, বৈক্রান্ত ; ভীমরাজরসে মাড়িয়া পর্পটীবৎ পাক করিবে। পরে সজিনাদির রসে ভাবনা দিয়া লঘুপুটে পাক করিবে। रस.चि. ।

**रत्नजातिः** । स्त्री । श्वेत रक्त नील पीतवर्णैः ब्राह्मण चत्रिय वैश्य शूद्रेषु ।

**रत्ननायकः** । पुं । माणिक्ये । रा.नि.व.१२ ।

**रत्ननिधिः** । पुं । खञ्जनपक्षिणि । त्रिका. ।

**रत्नमाला** । स्त्री । वैद्यकचिकित्साशास्त्रभेदे ।

**रत्नमुख्यम्** । क्ली । हीरके । है.च. ।

**रत्नराट्** । पुं । माणिक्ये । रा.नि.व.१३ ।

**रत्नाङ्गः** । पुं । प्रवाले । रा.नि.व.१३ ।

**रत्नावली** । स्त्री। राधामाधवकृतद्रव्याभिधाने ।

**रत्निः** । पुं, स्त्री । बद्धमुष्टिहस्ते । মুষ্টিম হাত । अम. ।

**रत्यङ्गम्** । क्ली । योनौ । श.र. ।

**रथः** । पुं । तिनिशवृक्षे । रा.नि.व.९ । वेतसवृक्षे । अम. । काये । विश्वः । शकटे । গাড়ি । रथभ्रमणगुणाः—वातकोपनं शरीरदार्ढ्यकरं बल्यम् अग्निवर्द्धनञ्च । राज. ।

**रथचरणः** । पुं । चक्रवाकपक्षिणि । श.र. ।

**रथद्रुः** । पुं । तिनिशवृक्षे । वेतसवृक्षे । अम. ।

**रथपर्य्यायः** । पुं । वेत्रलतायाम् । श.च. । तिनिशवृक्षे । रा.नि.व.९ । तिनिशवृक्षे । अम. ।

**रथवृक्षः** । पुं । वृक्षे । वृक्षि ওধধি । वै.निघ. ।

**रथाङ्गः** । पुं । चक्रवाकपक्षिणि । अम. ।

**रथाङ्गाह्वयनामकः** । पुं । चक्रवाके । अम. ।

**रथाङ्गी** । स्त्री । ऋद्धौ । रा.नि.व.५ ।

**रथाभ्रः** । पुं । वेतसवृक्षे । अम. ।

**रथाभ्रपुष्पः** । पुं । वेतसवृक्षे । अम. ।

**रथावर्त्ता** । स्त्री । स्थलपद्मिन्याम् । वै.निघ. ।

**रथिकः (का)** । पुं, स्त्री । तिनिशवृक्षे । সাদন গাছ । रा.नि.व.९ ।

**रथी** (इन्) । पुं । चक्रवाके । वै.निघ. ।

**रथ्यः** । पुं । अश्वे । अम. ।

**रदः (नः)** । पुं । दन्ते । रा.नि.व.१८ ।

**रदच्छदः** । पुं । ओष्ठे । रा.नि.व.१८ ।

**रदनच्छदः** । पुं । ओष्ठे । रा.नि.व.१८ ।

**रदनी** (इन्) । पुं । हस्तिनि । [illegible] ।

**रदितम्** । क्ली । सर्पदष्टभेदे कल्प.४अ. ।

**रन्तिदेवः** । पुं । कुक्कुरे । श.र. ।

**रन्धनम्** । क्ली । पाककरणे । রান্ধা । व्याक. ।

**रन्धितः** । त्रि । पाचिते । क्ली । कृतरन्धनद्रव्ये । রান্ধা জিনিস । तस्य पात्रान्तरे स्थापनविधिः—"भक्तं स्वपात्रे स्थाप्यं न पात्रान्तरे, घृतं कांस्यसे पात्रे, मांसं तद्रसञ्च हैमे राजते लौहे काष्ठजे वा, पत्रादिशाकं कांस्याम्ललौहजे पक्वान्नं पिष्टकादि कांस्यजे काष्ठजे वा, शृतक्षीरं मृण्मये दारुजे वा । पानीयं पायसं तक्रं मृण्मय एव, काचजे स्फाटिके वा रागषाड़वादौन् स्थापयेत् । एवं सति तद्द्रव्यं रोगहरं भवेत् । पाकराजः ।

**रन्ध्रम्** । क्ली । दूषणे । छिद्रे मे. । शरीरे रन्ध्राणि नेत्रश्रवणनासानां द्वे द्वे रन्ध्रे भवतः । तथा मुखमेहनपायूनामेकैकमिति नव । दशमञ्च मस्तके । स्त्रीणाञ्च चौणि स्तनगर्भमार्गेषु । स च अश्वस्य उदरगह्वरे । ज.द.२अ. । [रा.नि.व.८ ।

**रन्ध्रकण्टः (कः)** । पुं । ज्वालाबर्वूरकवृक्षे ।

**रन्ध्रपत्रः** । पुं । नले । नल गाछ । रा.नि.व. ८ ।

**रन्ध्रबभ्रुः** । पुं । उन्दुरौ । इन्दूर । चिका. ।

**रन्ध्रवंशः** । पुं । छिद्रवंशे । फोँपरा वाँश, वाँशिनी वाँश । गुणाः— कषायः तिक्तः शीतलः मूत्रकृच्छ्रप्रमेहार्शः पित्तदाहाजीर्णघ्नः रुच्यः शूलघ्नः गुल्मघ्नश्च । रा.नि.व.८ ।

**रन्ध्री** (इन्) । पुं । देवनले । वै.निघ. ।

**रभसः** । पुं । वेगे । पौर्व्वापर्य्यविचारे । अमरः ।

**रमः** । पुं । रक्ताशोकवृक्षे । मे. ।

**रमठम्** । क्ली । हिङ्गुनि । हिङ् । उणा. ।

**रमठध्वनिः** । पुं । हिङ्गुनि । हिङ् । श.च. ।

**रमणम्** । क्ली । पटोलमूले । मे. । जघने । हे. च. । जम्भने । श.र. । पुं । गर्दभे । हे.च. । वृषणे । श.च. । महारिष्टवृक्षे । घोड़ानिम् । कैटर्य्यनिम्बे । रा.नि.व.६ ।

**रमतिः** । पुं । काके । श.र. ।

**रमाप्रियम्** । क्ली । पद्मे । श.च. । पुं । दारुचीनीतिख्याते मिष्टत्वचि । वै.निघ. ।

**रमावेष्टः** । पुं । श्रीवासचन्दने । रा.नि.व.१२।

**रम्भा** । स्त्री । कदलीवृक्षे । कला गाछ । रा. नि.व.११ ।

**रम्य(क)म्** । क्ली । पटोलमूले । मे. । चिका. । सु.सू.२८अ.श्यामादि । प्रधानधातौ । जटा.। पुं । स्वर्णचम्पकवृक्षे । चाँपा गाछ । मे. । वकवृक्षे । वकफुलेर गाछ । श.च.। त्रि । बलकरे । जटा.।

**रम्यकः** । पुं । महानिम्बे । वै.निघ. ।

**रम्यक्षीरः** । पुं । महानिम्बे । घोड़ानिम्। रा.नि.व.६ । [रा.नि.व.८ ।

**रम्यपुष्पः** । पुं । शाल्मलीवृक्षे । शिमुल गाछ ।

**रम्यफलः** । पुं । कारस्करवृक्षे । कुचिलागाछ। रा.नि.व.६ ।

**रम्या** । स्त्री । स्थलपद्मिन्यां । रा.नि.व.५ । रात्रौ । मे. । महेन्द्रवारुणीलतायां । माकाल । रा. नि.व.३ । लक्ष्मणाकन्दे । वै.निघ. ।

**रम्यामली** । स्त्री । भूधात्र्यां । भुँइ आमला । रा.नि.व.५ ।

**रराटी** । स्त्री । ललाटे । पुराणम् ।

**रल्लकः** । पुं । कम्बले । अम. । मत्स्यवृक्षे । मृगविशेषे । भ.टी.रा. । पक्ष्मणि । सुभूतिः ।

**रवणम्** । क्ली । कांस्ये । पुं । उष्ट्रे । हे.च. । कोकिले । उणा. ।

**रवथः** । पुं । कोकिले । उणा. ।

**रविः** । पुं । अर्कवृक्षे । आकन्द गाछ । रा. नि.व.१० । ताम्रे । पक्वामृतरसे । अजीर्णचि.निर्ण्यीदितरसे ।

**रविकान्तः** । पुं । सूर्य्यकान्तमणौ । रा.नि. व.१३ । सूर्य्यावर्त्तक्षुपे । हुड़हुड़िया । वै.निघ. ।

**रविकीर्णः** । पुं । अर्कवृक्षे । वै.निघ. ।

**रविग्रहः** । पुं । अश्वस्य ग्रहविशेषे । तदाक्रान्तलक्षणं यथा—"उद्दृश्चिताक्षः खिन्नश्च संग्रहीतहनुश्च यः । कम्पमानश्च यो वाजी स रविग्रहपीड़ितः ॥" ज.द. ।

**रविजप्रियः** । पुं । नीलकान्तमणौ । वै.निघ.।

**रविजलम्** । क्ली । अर्कमूलरसे । आकन्दमूलेर रस । वै.संग्रह.पक्वामृतरसे ।

**रविदुग्धम्** । क्ली । अर्कक्षीरे । आकन्देर आठा । र.सा.सं.त्रैलोक्यचिन्तामणिरसे ।

**रविद्रुमः** । पुं । सदापुष्पवृक्षे । आकन्द गाछ। रा.नि.व.२३ । [क्ली । पद्मे । श.च. ।

**रविनाथः** । पुं । बन्धूकवृक्षे । बान्धुलि गाछ ।

**रविनामकम्** । क्ली । ताम्रे । तामा । वै. निघ. । [गाछ । रा.नि.व.४ ।

**रविपत्रः** । पुं । आदित्यपत्रक्षुपे । आकन्द

**रविप्रियम्** । रक्तकमले । ताम्रे । रा.नि.व. १०।१३ । पुं । आदित्यपत्रे । आकन्द गाछ ।

रक्तकरवीरे रा.नि व.४।१०। लकुचवृक्षे। श.मा.। नीलभृङ्गराजे। वै.निघ.।

**रविप्रिया (प्रीता)**। स्त्री। सूर्य्यावर्त्तक्षुपे। हुड़हुड़िया। र.मा.। [र.सा.सं.रससारणे।

**रविभक्ता**। स्त्री। सूर्य्यावर्त्तक्षुपे हुड़हुड़िया।

**रविमूलम्**। क्ली। अर्कमूले। आकन्दमूल। र.सा.सं.ज्वरचूड़ामणौ। [१२।

**रविरत्न(क)म्**। क्ली। माणिक्ये। रा.नि.व.

**रविलोहम्**। क्ली। ताम्रे। তামা। रा.नि.व. १३।

**रविवल्लभः**। पुं। भृङ्गराजवृक्षे। वै.निघ.।

**रविवल्ली**। स्त्री। आदित्यभक्तायां। हुड़हुड़िया। ब्राह्मीक्षुपे। वै.निघ.।

**रविसंज्ञकम्**। क्ली। ताम्रे। श.च.।

**रविसुन्दररसः**। पुं। सर्व्वज्वराधिकारे रसः। "द्विभागतालेन हतञ्च ताम्रं रसञ्च गन्धञ्च समानमात्रम्। विषञ्च सप्त द्विगुणञ्च ताम्रं त्रिसप्तवारञ्च खरातपे हि। विमर्द्य विश्वस्य रसेन चूर्णं गुञ्जैकदत्तं सितया समेतम्...... ॥" रस.कौ.। (समीनमायु। विषं समञ्च द्विगुणञ्च ताम्रं। इति भा. पाठः। [ভেড়াশিঙে। वै.निघ.।

**रविस्पर्शा**। स्त्री। कृष्णमेषशृङ्ग्याम्। कृष्ण

**रवीन्दम्**। क्ली। पद्मे। धरणिः।

**रवीष्टः**। पुं। नागरङ्गवृक्षे। रा.नि.व.११। स्त्री (ष्टा)। आदित्यभक्तायाम्। हुड़हुड़िया। रा.नि.व.४।

**रशः**। पुं। वंशे। ग्रहणी.चि.जातीफलावटी।

**रशना**। स्त्री। जिह्वायाम्। श.र.।

**रशोलः**। पुं। कर्म्मरङ्गवृक्षे। কামরাঙা গাছ। प.मु.।

**रश्मिः**। पुं। पक्ष्मणि। किरणे। मे.।

**रश्मिजातम्**। क्ली। रौप्ये। वै.निघ.।

**रश्मिपतिः**। पुं। आदित्यपत्रक्षुपे। रा.नि.व.४।

**रसम्**। क्ली। बोले। निशादल। रसाञ्जने। रा.नि.व.६। प.मु.। पुं। हिङ्गुले। र.मा.। प्रारदे। रा.नि.व.१३। शिलारसे। प.मु.। मिन्दूरे। इक्षुरसे। रोगे। वै.निघ.। विषे। रागे। गुणे। मांसद्रवे। अम.। जले। स्वादे। त्रिका.। शुक्रे। अम.। किरातत्तिक्तके। द्राक्षायां। वै.निघ.। शरीरस्थसप्तधातुषु प्रथमधातौ। রসধাতু। रा.नि.व.८। रसस्वरूपं—स चाहारसारभूतः। "आहारस्य रसः सारः।" शार्ङ्ग.पू.६ष.। "सम्यकपक्वस्य भुक्तस्य सारो [illegible] रसः।" गुणाः—सितः शीतः स्वा[illegible] स्निग्धश्चलश्चेति। तत्कर्म्म—स धमनीर्गतः सर्व्वान् धातून् पुष्णाति। तदतु शीतस्निग्धपोषकत्वादिगुणैः शरीरं व्याप्नोति। तस्य स्थानम्—"सर्व्वदेहचरस्यापि स्थानं हृदयमेव च। रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् विवर्द्धयेत्॥" भा.। स्वरसे क्वाथे वा। इक्षादि सम्भिन्नद्रवद्रव्ये। रा.नि.व.२०। सि.यो.ज्व.चि.। तत्साधनं यथा—"कुड़वं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले। अहोरात्रात् स्थितं तस्माद्भवेद्वा रस उत्तमः॥ आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे। जलेऽष्टगुणिते साध्यं पादशेषञ्च गृह्यते। निःशोषितञ्चाग्निसिद्धं पलमात्रं रसम्पिबेत्। सितामधुगुड़क्षारान् जीरकं लवणन्तथा। घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत्॥" शार्ङ्ग.१ष.। रसनेन्द्रियग्राह्यवस्तुनि, मधुरादौ। মিষ্টাদি রস। स च कालसहायभूमिवियदनिलानलसम्पर्केण परिणामान्तरं प्राप्य षट्प्रकारो भवति। ते च षड्रसाः द्रव्यमाश्रित्य तिष्ठन्ति—"रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः। षट् द्रव्यमाश्रितास्ते च यथापूर्व्वं बलावहाः॥" गुणाः—"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते॥" भा.। तत्र पृथिव्यम्बुगुणभूयिष्ठो मधुरः, तोयाग्निगुणभूयिष्ठोऽम्लः, पृथिव्यग्निगुणभूयिष्ठो लवणः, वाय्वग्निगुणभूयिष्ठः कटुकः, वाय्वाकाशगुणभूयिष्ठः तिक्तः, क्षित्यनिलगुणभूयिष्ठः कषायः। सु.सू.४२ष.। रसभेदविकल्पाश्च त्रिषष्टिः। सु.उ.६८ष.। सप्तपञ्चाशदिति। च.द.द्रव्यगुणे शिवदासः। "मधुरः कषायस्तिक्ताम्लकश्च क्षारः कटुः षड्रसनामधेयम्। द्वयं द्वयं वातकफप्रकोपनं द्वयं तथा पित्तकरं वदन्ति॥ क्षारः कषायः पवनप्रकोपी मधुरोऽथ तिक्तः कफकोपनश्च। कट्वम्लकौ पित्तविकारकारिणौ कट्वम्लकौ वातशमौ प्रदिष्टौ।

पित्तस्य नाशी मधुरः सतिक्तः कटुः कषायः शमनः कफस्य । अन्योन्यमेतच्छमनं वदन्ति परस्परं दोषविवृद्धिमन्तः ॥ मधुरकटुकावन्योन्यस्य प्रकर्षविधायिनौ, लवणविधुतोऽम्लकः प्रोक्तो विशेषरसानुगः । अविक्रतस्तथा तिक्तैर्युक्तः कषायरसो लघुर्भवति सुतरां स्वादुः श्रेष्ठो गुणं करोति तथा । कटुतिक्तकषायाश्च कोपयन्ति समीरणं । कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम् ॥" [अथ ये रसा यद्दोषविरुद्धास्तदाह —"समीरणे तु नो देयाः कटुतिक्तकषायकाः । पित्ते कट्वम्ललवणाः स्वाद्वम्ललवणाः कफे ॥" अथ ये रसा यद्दोषहराः—"स्वाद्वम्ललवणान् वाते तिक्तस्वादुकषायकान् । पित्ते कफे तिक्तकटुकषायान् योजयेद्रसान् ॥ मधुराम्लौ चारकटुकौ तिक्तकषायकौ चैव्येतावन्योन्यरसविरोधिनौ भवताम् ॥" अथ मधुररसवीर्य्यम् —"यः स्वादुः श्रमशोषहारिबलकृद्वीर्य्यप्रदः पुष्टिदः, प्रह्लादी रसने करोति तदनु श्लेषप्रहर्षं ततः । पित्तानां दमनः श्रमीपशमनो वर्ण्यो नराणां हितः, चीणानां चितपाण्डुनेत्ररुजसंहर्त्ता भवेन्माधुरः ॥" अथ तिक्तरसवीर्य्यं —"यस्तिक्तो मधुरात्मकोऽम्तसमः कुष्ठादिदोषापहः, शान्तः सर्व्वरुजापहो भ्रमहरो रुच्यो न संक्लेदनः । जिह्वास्फोटकनाशनोऽथ भवति चीणचतानां हितो, वक्त्रोल्लासकरः प्रकृष्टकथितो निम्बादिकास्वादकृत् ॥" अथ कटुरसवीर्य्यम् —"नेत्रं स्रावयते मुखं विदहते यः कर्णजाड्यं वहन्, वीभत्सं तनुते मुखं विकुरुते पित्तास्रजः कोपनम् । अग्निं दूषयते घणं विदहते जीर्णो न शस्तो भवेत्, वातानाहरते कफांश्च कटुको दह्येत् महारौद्रकः ॥" अम्लरसवीर्य्यम् —"जिह्वाक्लेदं जनयति तथा नेत्रनिमीलनञ्च, वीभत्सं वा जनयति सदा वातरोगापहारी । कण्डूकुष्ठचतरुजकरो नो हितः शोषिनः स्यादम्लः प्रोक्तो मरुतशमनोऽस्रकप्रकोपं तनोति ॥" अथ कषायरसवीर्य्यम् —"जिह्वां कण्ठं ग्रसति नितरां याहकश्चातिसारी, श्लेष्मव्याधेरुपशमकरः श्वासकासापहर्त्ता । हिक्काशूलं हरति नितरां शोधनः स्याद्ब्रणानां, प्रोक्तश्चायं समधिकगुणः श्रेष्ठकाषायनामा ॥" अथ चाररसवीर्य्यम् —"चारः क्लेदं जनयति मुखे स्वादुरुच्यो विदाही शूलश्लेष्मारुचिकरहणामूत्रकृच्छ्रोपशमः । आनाहञ्चाजनयति पुनर्वह्निसम्भुवः स्यात्, श्रेष्ठः प्रोक्तो रसवरमहान् सर्व्वतो योग्यभूतः ॥" अभि.६ष. ।

**रसकः ।** पुं । निष्क्वाथमांसे । हे.च. । क्ली । स्फटिकार्य्यां । फट्किरि । र.सा.सं.अजमरसे । मांसरसे । च.द.शूल चि.। खर्परीतुत्थके । वै.निघ. २भ.ग्रयचि.नवरवराजमृगाङ्के । "खर्परीतुत्थकं तुत्थादन्यत्तत् रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः ॥" भा.पू.१भ.उपरसव. ।

**रसकर्पूरम् ।** क्ली । (Percloride of mercury.) स्वनामख्यातधातौ । रसकर्पूर । पारदस्य श्वेतभस्मीकरणे । चन्द्रिकाकारः । एतस्साधनप्रणाली—"पिष्टं पांशुपटु प्रगाढममलं वज्राम्बुना नैकशः, सूतं धातुगतं खटीकवलितं सं संपुटे रोधयेत् । अन्तःस्थं लवणस्य तस्य च तलो प्रज्वाल्य वह्निं दृढं, घस्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः । तद्वल्लहितयं लवङ्गसहितं प्रातः प्रयुक्तं भजेत् ॥" र.सा.सं. । गुणाः—फिरङ्गरोगघ्नं दीपनं पुष्टिकरं बलवीर्य्यकारकं कुष्ठघ्नं व्रणघ्नञ्च । द्रव्यगुणः ।

**रसकल्पलता ।** स्त्री । वैद्यकरसग्रन्थे ।

**रसका ।** स्त्री । चुद्रकुष्ठभेदे । लक्षणम्—"कण्डून्विता या पिड़का शरीरे संस्रावहीना रसकोच्यते सा ।" सु. ।

**रसकेशरम् ।** क्ली । कर्पूरे । हारा. ।

**रसकेसरी (इन्) ।** पुं । मरीचके रसः । पाठः —"रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन मर्दयेत् । देवपुष्पं वाणमितं रसपादं तथामृतम् । माषमात्रन्तु तत्सेव्यं नागरेण गुड़ेन वा ॥"······रस.कौ. ।

**रसक्रिया ।** स्त्री । द्रव्यस्य घनीभूतसारकरणे । पाक द्वारा द्रव्येर सारकरण । "क्वाथादीनां पुनः पाकात् घनभावे रसक्रिया । मात्रा रसक्रियायाश्च लिह्यात् पाणितलं बुधः ॥" सु.सू.३६अ. । सु.चि.२१अ. । [विलासि) ।

**रसखर्परः ।** पुं । खर्परधातौ । (कासलची-

**रसगतज्वरः ।** पुं । रसधातुगज्वरे । लक्षणं —"गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ । रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥" मा. नि. ।

**रसगन्धः (कः) ।** पुं । गन्धके । रा.नि.व.१३।

गन्धरसे । बोलि । त्रिका. । क्ली । रसाञ्जने । रा. नि.व.६ । [सं. ।

**रसगन्धकसम्भूतम्** । क्ली । हिङ्गुले । र.सा.

**रसगर्भम्** । क्ली । रसाञ्जने । भा.म.४भ.नेत्ररो. चि. । हिङ्गुलविशेषे । रा.नि.व.१३ ।

**रसगुड़िका** । स्त्री । कासाधिकारे रसः । पाठः—"रसभागो भवेदेको गन्धको द्विगुणो भवेत् । त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतका । पञ्चभागा त्वामला च षड्भागा समभागिका । भार्गी सर्व्वमिदं चूर्णं भाव्यं बव्वोलजद्रवैः । एकविंशतिवारञ्च मधुना गुड़िका कृता । विभीतकप्रमाणेन प्रातरेकान्तु भक्षयेत् ॥" र.सा.सं. ।

**रसघ्नः** । पुं । टङ्कणे । सोहागा । रा.नि.व.६ ।

**रसचन्द्रिकावटी** । स्त्री । शिरोरोगे हिता । पाठः—"त्रैलोक्यविजयाबीजं बीजमुन्मत्तकस्य च । कण्टकारीबीजकञ्च ऐञ्जलं बीजमेव च । बीजञ्च वृद्धदारस्य समौ गन्धकपारदौ । आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः । एषा तोयानुपानेन प्रातः खाद्या हिताग्निना······ ॥" र.सा.सं. ।

**रसचूड़ामणिः** । पुं । ज्वराधिकारे रसः । पाठः—"सूतभस्म विषं ताम्रं जयपालं सगन्धकं । हेमतैलेन सम्मर्द्य ततो लघुपुटं ददेत् । भावयेत् कालकद्रावैरजामहिषमीनजैः । पित्तैः पृथक्सप्तमितं विषधूमेन शोधयेत् । सप्तवारं त्रिवारं वा पञ्चादार्द्रेण भावयेत् । रसचूड़ामणिः सिद्धः साक्षात् श्रीभैरवो महान् ॥" मात्रा १ र. । आर्द्रकनिम्बुरसाभ्यां सेव्यः । रस.चि. ।

**रसजः** । पुं । गुड़े । रा.नि.व.१४ । सुराकिट्टे । हे.च. । क्ली । रक्ते । श.च. । रसाञ्जने । वै.निघ. संग्रहणी.चि.पाठाचूर्णे ।

**रसजातम्** । क्ली । रसाञ्जने । रा.नि.व.१३ ।

**रसज्ञा** । स्त्री । जिह्वायाम् । रा.नि.व.१८ ।

**रसज्येष्ठः** । पुं । मधुररसे । हे.च. । [सा.सं. ।

**रसतालेश्वरः** । पुं । कुष्ठाधिकारे रसः । र.

**रसतेजः (स्)** । क्ली । रक्ते । हे.च. ।

**रसदा** । स्त्री । श्वेतनिर्गुण्ड्याम् । श्वेत निशिन्दा । वै.निघ. ।

**रसदालिका** । स्त्री । पुण्ड्रकेक्षौ । पुँड़ी आ
थ । करङ्कशालिनामेक्षौ । रा.नि.व.१४ । [॥

**रसद्रावी (इन्)** । पुं । मधुरजम्बीरे । रा.नि.

**रसधातुः** । पुं । पारदे । रा.नि.व.१३ ।

**रसनम्** । क्ली । आस्वादने । रा.नि.व.२०
खर्परे । पुं । कफे । तस्य स्थानं कण्ठः कण्ठ
रसनम् । भा. [illegible] (ना, नी) । जिह्वायां । र
नि.व.१८ [illegible]यायाम् । रा.नि.व.६ । वै.निघ.ज
चि.चक्रादिः । "चक्रोन्मत्तकि[illegible]

**रसनाथः** । पुं । पारदे । रा.नि.व.१३ ।

**रसनापदम्** । क्ली । नितम्बे । रा.नि.व.१८

**रसनाभम्** । क्ली । रसाञ्जने । रा.नि.व.१३

**रसनायकः** । पुं । पारदे । श.र. । [त्रिका.

**रसनालिट् (ह्)** । पुं । कुक्कुरे । हे.च.

**रसनिगड़ः** । पुं । रसनिगाड़े, रसनियामक
शृङ्खलकपौषधे । पाठः—"सूर्य्यार्कसम्भवं क्षीरं
ब्रह्मबीजञ्च गुग्गुलुः । सैन्धवं द्विगुणं मर्द्य निगड़
ऽयं महौषधः ॥" ब्रह्मबीजं पलाशबीजं, ब्र
शाकबीजं वा । द्विगुणमिति रसापेक्षया मिलि
सर्व्वं द्विगुणम् । र.सा.सं. । [वै.निघ.

**रसनिर्यासः** । पुं । शालवृक्षे । शाल गाछ

**रसनेत्रिका** । स्त्री । मनःशिलायां । हे.च.

**रसनेष्टः** । पुं । इक्षौ । प.मु. ।

**रसनेन्द्रियम्** । क्ली । जिह्वायाम् । च.शा.७

**रसपर्पटिका (टी)** । स्त्री । ग्रहण्याद्यधिक
रे औषधम् । पाठः—"याक्षपित्ते विधातव्या
ड़िका च सुधावती । तत्र प्रोक्तविधौ शुद्धौ सम
नौ रसगन्धकौ । सम्मर्द्य कज्जलाभौ तु कुर्य्यात्ता
दृढ़ाश्मनि । ततो वादरवह्निस्थलौहपात्रे द्रवीकृ
तं । गोमयोपरि विन्यस्तकदलीपत्रपातनात् । कु
र्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् । रक्ति
द्वादशकं यावत् प्रयोगः प्रहरार्द्धतः ॥"······र.
सा.सं. । "मर्द्य रसे जयन्त्याः पश्चादेरण्डसम्भूते
आर्द्रकरसे च सूतं पञ्चकरसे काकमाच्याश्च । क
प्रमुदितानुपूर्व्व्या मर्दनमेकं करोत्र यत्नीयात्
प्रस्तरभाजनमध्ये शुद्धिरियं पारदस्योक्ता ॥ शुक
रूक्षसमच्छायो नवनीतसमद्युतिः । मसृणः कठि

स्निग्ध श्रेष्ठो गन्धक उच्यते । कृत्वा भद्रं गन्धकमतिकुशल: क्षुद्रतण्डुलाकारं । भृङ्गराजरसैरनन्तरं भावयेत् पात्रे । तदनु च शुष्कं कुर्य्यात् धूलिसमानञ्च सप्तधा रौद्रे । तदनु च शुष्कं चूर्णं कृत्वा विन्यस्य लौहिकामध्ये । निर्धूमबदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैलसमं । पात्रस्थितभृङ्गराजरसमध्ये ढालयेन्निपुण: । तस्मिन् प्रविष्टमात्रं कठिनत्वं याति गन्धकचूर्णं । पुनरपि रौद्रे शुष्कं कीतकरजसा समानतां नीतं । शुद्धे सूते शोधितगन्धकचूर्णेन तुल्यता कार्य्या । तावन्मर्दनमनयोर्य्यावन्न कणोऽपि दृश्यते सूते । पश्चात् कज्जलसदृशं चूर्णं लौहीस्थितं यत्नेन । निर्धूमबदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैलसमं । सद्यो गोमयनिहिते कदलदले ढालयेन्मृदुनि । लौहीस्थितमवशिष्टं कठिनं तत्र गृह्णीतव्यं । पश्चात् पर्पटरूपा पर्पटिका कीर्त्यते लोकै: ॥” পারাশোধন—বহ্ন্যাদিদোষবিশুদ্ধ লৌহপাত্রস্থ পারাকে যথাক্রমে জন্তীপাতা, এরণ্ডপাতা, আদার রস, কাকমাচীর পাতার রস ও চিতাপাতার রসে ডুবাইয়া নিয়ত মাড়িয়া রৌদ্রে শুকাইয়া লইবে। গন্ধকশুদ্ধি—ঐরূপ শুকপুচ্ছাভ, নবনীতাভ, মসৃণ, কঠিন ও স্নিগ্ধ উত্তম গন্ধককে তণ্ডুলের ন্যায় খণ্ড খণ্ড করিয়া ভীমরাজরসে ৭ ভাবনা দিয়া শুকাইবে; এবং ধূলিবৎ চূর্ণ করিবে। পরে ঐ চূর্ণ লৌহপাত্রে কুলকাঠের অঙ্গারে গলাইয়া গলাইয়া ভীমরাজরসে ঢালিবে। কঠিন হইলে তুলিয়া শুষ্ক ও চূর্ণ করিবে। এইরূপে শুদ্ধপারদ ও শুদ্ধগন্ধক সমভাগ লইয়া যথাবিধি মর্দ্দন করত নিশ্চন্দ্র কজ্জলি করিবে। পরে ঐ কজ্জলি লৌহপাত্রে কুলকাঠের অঙ্গারে গলাইয়া তৈলবৎ হইলে গোময়বেষ্টিত কলাপাতের উপর ঢালিয়া গোময়ভরিত কলাপাতার পুঁটুলি দ্বারা চাপিয়া ধরিয়া পর্পটী প্রস্তুত করিবে। পর্পটীর বর্ণ চক্রকের ন্যায় হইলে ঠিক পাক হইয়াছে জানিবে। মাত্রা ২ রতি হইতে এক এক রতি করিয়া দশ রতি পর্য্যন্ত দিবে। পরে ঐ নিয়মে ক্রমে হ্রাস করিয়া আনিবে। भैष.।

**रसपाकज:** । पुं । गुडे । रा.नि.व.१४ ।

**रसपारिजातक:** । पुं । वैद्यकरसग्रन्थभेदे ।

**रसपूर्त्तिका** । स्त्री । ज्योतिष्मत्याम् । লতাফট্কী । भैष.ज्व.चि.पानीयवटी ।

**रसप्रदीप:** । पुं । रामचन्द्रकृते वैद्यकरसग्रन्थे ।

**रसफल:** । पुं । नारिकेलवृक्षे । रा.नि.व.११ । आमलकीवृक्षे । वै.निघ. ।

**रसबन्धकर:** । पुं । सोमलतायाम् । वै.निघ.।

**रसभवम्** । क्ली । रक्ते । रा.नि.व.१८ ।

**रसभस्म** । क्ली । पारदभस्मनि । পারাভস্ম । तत्प्रकरणम्—“देवदाली हंसपादी यमचिञ्चा पुनर्नवा । एभि: सूतो विमृष्टव्य: पुटनात् म्रियते ध्रुवम् ॥” र.सा.सं. ।

**रसभाव:** । पुं । रसधर्म्मे,स्निग्धतादौ । यथा—“मधुरो लवणाम्लौ च स्निग्धभावास्त्रयो रसा: । वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मता: । कटुतिक्तकषायास्तु रूक्षभावास्त्रयो रसा: । दु:खा विमोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् । मधुर: श्लेष्मल: प्रायो जीर्णाच्छालियवादृते । मुद्गाद्गोधूमत: क्षौद्रात् सितायाा जाङ्गलामिषात् । प्रायोऽम्ल: पित्तजननो दाडिमामलकादृते । अपथ्यो लवण: प्राय: चक्षुष्योऽन्यत्र सैन्धवात् । तिक्त: कटुश्च भूयिष्ठं अवृष्यो वातप्रकोपन: । न पटोलकणाशुण्ठीवेत्रामृताभया मता: ॥” राज.४प. ।

**रसमञ्जरी** । स्त्री । शालिनाथकृतरसग्रन्थे ।

**रसमञ्जरीभाष्यम्** । क्ली । श्रीवचिन्तामणिकृत-रसमञ्जरीभाष्ये ।

**रसमणि:** । पुं । हरिहरकृतरसग्रन्थे ।

**रसमण्डुरम्** । क्ली । परिणामशूले औषधम् । पाठ:—“कुडवं पथ्याचूर्णं द्विपलं गन्धाश्मलौहकिट्टञ्च । शुद्धरसस्यार्द्धपलं भृङ्गस्य केशराजस्य । प्रस्थोन्मितञ्च दत्वा पात्रे लौहे च दण्डसंघृष्टं । चूर्णं घृतमधुयुक्तं मर्दितं स्थाप्यञ्च भाजने स्निग्धे ॥” रस.र. । भृङ्गराजकेशराजयो: प्रत्येकं रसप्रस्थम् ।

**रसमर्द्दनम्** । क्ली । पारदस्य चूर्णीकरणे मारणे वा । See पारद: ।

**रसमाणिक्यम्** । क्ली । कुष्ठाधिकारे औषधम् । पाठ:—“तालकं वंशपत्राख्यं कुष्माण्डजलि-

नी चिपेत्। सप्तधा वा त्रिधा वापि दद्यात्तेन च वा पुनः। शोषयित्वा पुनः शुष्कं चूर्णयेत्तण्डुलाकृति। ततः शरावके पात्रे स्थापयेत् कुशलो भिषक्। बदरीपत्रकल्केन सन्धिलेपञ्च कारयेत्। अनया तमधः पात्रं तावज्ज्वाला प्रदीयते। साङ्गशीतं समुद्धृत्य माणिक्याभो भवेद्रसः॥" मात्रा २ र. घृतेन मामरेण वा मधुना सेव्यम्। र.सा.सं.।

**रसमारकद्रव्यम्।** क्ली। See मारकवर्गः।

**रसमारणम्।** क्ली। मारणद्रव्यैः पारदस्य मर्द्दने। र.सा.सं.।

**रसमुक्तावलिः।** स्त्री। रसग्रन्थविशेषे।

**रसमूर्च्छनम्।** क्ली। See पारदः।

**रसमैत्री।** स्त्री। मधुराम्लं, लवणाम्लं, कटुतिक्तं, कटुलवणं, तिक्तलवणञ्चेति सोच्यते।

**रसरञ्जनम्।** क्ली। पारदस्य रक्ततापादने। "गन्धकेन हतं नागं जारयेत्कम्लोदरे। एतस्य त्रिगुणे जीर्णे लाक्षाभो जायते रसः॥" रस.चि. ३ध.। [संग्रन्थे।

**रसरत्नसमुच्चयः।** पुं। अश्विनीकुमारकृते र-

**रसरत्नाकरः।** पुं। नित्यनाथकृते रसग्रन्थे।

**रसराजः।** पुं। पारदे। रसाञ्जने। रा.नि.व. १३।

**रसराजरसः।** पुं। वातव्याधौ रसः। पाठः—"पलैकं शुद्धसूतस्य व्योमसत्वञ्च कार्षिकं। तदर्द्धं काञ्चनं देयं कन्यारसविमर्दितम्। लौहं रूप्यं ततं वङ्गं वाजिगन्धा लवङ्गकं। जातीकोषं तथा क्षीरकाकोलीञ्च तदर्द्धतः। काकमाचीरसैः पिष्टा पञ्चगुञ्जामिता वटी। क्षीरञ्च शर्करातोयमनुपानं प्रकल्पयेत्॥" রসসিন্দুর ৮ তো. অভ্র ২ তো. স্বর্ণ ১ তো. ঘৃতকুমারীরসে মর্দ্দন। পরে লৌহ, রৌপ্য, বঙ্গ, অশ্বগন্ধা, লবঙ্গ, জৈত্রী, ক্ষীরকাকোলী প্রত্যেকে ॥০ তো. কাকমাচীরসে মাড়িবে। বটী ৫ রতি, অনুপান দুগ্ধ ও চিনির জল। ভৈষ.। [रसग्रन्थे।

**रसराजशिरोमणिः।** पुं। परशुरामकृते

**रसराजेन्द्रः।** पुं। शीताङ्गसन्निपातज्वरे रसः। पाठः—"पलं शुद्धस्य सूतस्य पलं ताम्रमयस्तथा। अभ्रं नागं पलं वङ्गं पलं गन्धकतालकं। पलं शुद्धविषं चूर्णं सर्व्वमेकत्र कारयेत्। मर्दयेत् काकमाच्याश्च आर्द्रकस्य रसेन च। मात्स्यवाराहमायूरच्छागमाहिषपित्तकैः। मर्दयेद्भिः भिन्नश्च त्रिकटोरसभिस्तथा। सिद्धोऽयं रसराजेन्द्रः धन्वन्तरिसुसंस्कृतः॥" मात्रा १ र.। अनुपानं तुलसीपत्ररसः। শুদ্ধপারা, তাম, লৌহ, অভ্র, সীস, বঙ্গ, গন্ধক, হরিতাল, বিষ প্রত্যেকে ১ প. কাকমাচীরস, আদার রস, পঞ্চপিত্ত ও ত্রিকটুকাথে পৃথক্ পৃথক্ ভাবনা দিয়া বটী করিবে। মাত্রা ১ রতি। অনুপান তুলসীপাতার রস। र.सा.सं.।

**रसले(लो)हः।** पुं। पारदे। रा.नि.व.१३।

**रसवती।** स्त्री। पाकशालायाम्। रन्धनशाला। अम.।

**रसवर्णकः।** पुं। दाडिमपुष्पादिद्रव्यगणे। दाडिमपुष्पकिंशुकपुष्पलाक्षाबन्धूकपुष्पहरिद्राकुसुम्भपुष्पमञ्जिष्ठासु। "दाडिमं किंशुकं लाक्षाबन्धूकञ्च निशाद्वयम्। कुसुम्भपुष्पं मञ्जिष्ठा इत्यसौ रसैवर्णकः॥" रा.नि.व.२२।

**रसवहस्रोतः।** क्ली। रसनायकधमन्याम्। हृदयं मूलं। धमन्यश्च दश। च.वि.५अ.।

**रसविरोधः।** पुं। तिक्तमधुरौ लवणमधुरौ कटुमधुराविव्येवंरूपविरुद्धरसतायाम्। सु.उ.।

**रसवीर्य्यकृत्।** पुं। सोमलतायाम्। वै.निघ.।

**रसवेधकम्।** क्ली। स्वर्णे। [illegible]निघ.।

**रसशङ्करः।** रसग्रन्थभेदे। [घण्टुविशेषे।

**रसशब्दसरणिनिघण्टुः।** पुं। वैद्यकनि-

**रसशार्दूलः।** पुं। सूतिकोपचारे रसः। पाठः—"अभ्रं ताम्रं तथा लौहं राजपट्टं रसस्तथा। गन्धटङ्कमरीचञ्च यवक्षारं समांशकं। तथाच तालकञ्चैव त्रिफलायाश्च तोलकं। तोलकञ्चामृतञ्चैव वकुञ्जा प्रमिता वटी। श्रीमसुन्दरकस्यापि नागवल्ल्या रसेन च। भावयेत् सप्तधा हन्ति ज्वरकासाङ्गसंग्रहम्॥" र.सा.सं.।

**रसशेषः।** पुं। जीर्णेऽपि चाहारे कदाचिदाहारसारो रसशेषः। सि.यो.अजीर्णचि.।

**रसशेषाजीर्णम्** । क्ली । रसशेषजन्याजीर्ण-रोगभेदे । See अग्निमान्द्यं । [निघ. ।

**रसशोणितसम्भवम्** । क्ली । मांसधातौ । वै.

**रसशोधनम्** । क्ली । टङ्कणे । সোহাগা । वै. च. । पारदस्य सीसकादिदोषसंस्करणे । পারা-শোধন । तच्च शोधनं बहुविधं रसेन्द्रसारसंग्रह-कारेण दर्शितम् । तच्च प्रथमतो द्विधा — "व्याधौ रसायने चैव द्विविधा सा प्रकीर्त्तिता । या शुद्धिः कथिता व्याधौ सा नेष्टा हि रसायने । रसायने तु या शुद्धिः सा व्याधावपि कीर्त्तिता ॥" इति । रसग्रहणपरिमाणं १०० प. ५० प. २५ प. १० प. १ प. ४ वा २ तो. शोधनार्थम् औषधप्रयोगेषु यथालाभं ग्राह्यम् । "कुमारिका चित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीविमिश्रितैः । फलत्रिकेणापि विमर्द्दितो रसो दिनत्रयं सर्व्वमलैर्विमुच्यते ॥ एवं कदर्थितः सूतः षण्ढो भवति निश्चितम्...... ॥" "शुद्धसूतस्य गृह्णीयाद्विषग्भागचतुष्टयम् । शुद्धगन्धस्य भागैकं तावत् कृत्रिमगन्धकम् । अथवा पारदस्यार्द्धं शुद्धगन्धकमेव हि । तयोः कज्जलिकां कुर्य्याद्दिन-मेकं विमर्द्दयेत् । मृत्तिकां वाससा सार्द्धं कुट्टयेद-तियत्नतः । तया वारत्रयं सम्यक्काचकूपीम्प्रलेपयेत् । मृत्तिकां शोषयित्वा तु कूप्यां कज्जलिकां क्षिपेत् । तां कूपीम्बालुकायन्त्रे स्थापयित्वा रसम्पचेत् ..॥" भा. ।

**रससंरक्षणम्** । क्ली । रसस्य शोधनमूर्च्छन-बन्धनमारणरूपे कर्म्मचतुष्टये । र.सा.सं. ।

**रससंस्कारः** । पुं । वैद्यकरसग्रन्थभेदे ।

**रससङ्केतकलिका** । स्त्री । शतद्वयश्लोकात्मक-करसग्रन्थे । [विशेषे ।

**रससङ्ग्रहसिद्धान्तः** । पुं । वैद्यकरसग्रन्थ-

**रससम्भवम्** । क्ली । रक्ते । वै.निघ. ।

**रससारः** । पुं । वैद्यकरसग्रन्थविशेषे । मधुनि । नकुल.१२ष. ।

**रससिन्दूरम्** । क्ली । रसगन्धकयोः सिन्दूरी-करणे । রসসিন্দূর । र.चि.२ष. । भा. ।

**रससुधाकरः** । पुं । वैद्यकरसग्रन्थविशेषे ।

**रससुधानिधिः** । पुं । रसग्रन्थभेदे भोजराजकृते ।

**रससूः** । पुं । रसधातौ । রস । वै.निघ. ।

**रसस्थज्वरः** । पुं । रसगतज्वरे ।

**रसस्थानम्** । क्ली । हिङ्गुले । श.च. । रसस्य आधारे । [चरणे ।

**रसस्रावः** । पुं । अम्लवेतसे । वै.निघ. । रस-

**रसा** । स्त्री । मेदायां । प.मु. । रास्नायां । रा. नि.व.६ । भा.म.१भ.ज्व.चि.लाक्षातैलं । "वासा रसानिशा ।" कर्णकज्व.चि. । "कटुकारसाभिः ।" शिलारसे । द्राक्षायां । काकोल्याम् । श.र. । पाठायां । शल्लकीवृक्षे । जिह्वायां । कङ्गुधान्ये । मे. । आम्रवृक्षे । वै.निघ. ।

**रसाखनः** । पुं । कुक्कुटे । श.च. ।

**रसाग्रजम्** । क्ली । रसाञ्जने । रा.नि.व.१३ ।

**रसाग्रम्** । क्ली । रसाञ्जने । पारदे । वै.निघ. ।

**रसाङ्कः** । पुं । श्रीवेष्टनामकसुगन्धकाष्ठे । रा. नि.व.१२ ।

**रसाज्ञानम्** । क्ली । आस्वादाज्ञाने । "भुञ्जानस्य नरस्यान्नं मधुरप्रभृतीन् रसान् । रसना यत्र जा-नाति रसाज्ञानं तदुच्यते ॥" वै.निघ. ।

**रसाञ्जनम्** । क्ली । चतुर्विधाञ्जनान्यतमे स्वना-मख्यातरसजधातौ । রসাঞ্জন । प.मु. । हिं र-सौत् । मतान्तरे तद्विविधं स्रौतोऽञ्जनं कृष्णपाषा-णाकृति धातुद्रव्यम् । अन्यत् दारुहरिद्राक्वाथेन कृत्रिमं पीतलोहितम् । सु.सू.३८अ.अञ्जनादिः, प्रियङ्ग्वादिः । "दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनं । तदा रसाञ्जनाख्यं तत् नेत्रयोः परमं हितम् । गुणाः—"रसाञ्जनं कटु श्लेष्मविषनेत्रवि-कारनुत् । उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृ-त् ॥" भा. । तच्छुद्धिः—"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं । दिनैकमातपे शुद्धं भवेत् का-र्य्येषु योजयेत् ॥" र.सा.सं. ।

**रसाञ्जनादिचूर्णम्** । क्ली । ज्वरातिसारे औषधम् । पाठः—"रसाञ्जनं सातिविषं कुटज-स्य फलत्वचं । धातकीं शृङ्गवेरञ्च पिबेत्तण्डुलवा-रिणा ॥" শুদ্ধ রসাঞ্জন, আতইচ, ইন্দ্রযব, ধাইফুল, শুঁট প্রত্যেক চূর্ণ সমভাগ । रस.र. ।

**रसाढ्यः** । पुं । आम्रातकवृक्षे । रा.नि.व.११ ।

**रसाख्या** । स्त्री । रास्नायां । रा.नि.व.६ ।

**रसादानम्** । क्ली । रसशोषणे । हे.च. । रसग्रहणे ।

**रसाधिकः** । पुं । टङ्कणक्षारे । रा.नि.व.६ ।

**रसाधिका** । स्त्री । काकोलीद्राक्षायां । रा.नि.व.११ ।

**रसाधिकारः** । पुं । हरिहरकृते वैद्यकरसग्रन्थे । [भा.नि.।

**रसानुगः** । त्रि । रसदूषके । रसानुसारिणि ।

**रसाभुग्नम्** । क्ली । बोलनामगन्धद्रव्ये । रा.नि.व.६ ।

**रसाभ्रगुड़िका** । स्त्री । रसायनाधिकारे औषधम् । पाठः—"सहदेवा बला चैव सूर्य्यावर्त्तोऽथ मारिषः । अपामार्गोऽमृता चेति सम्यक् सम्पादयेद्भिषक् । एषां पलानि चत्वारि प्रत्येकं कुट्टयेत्ततः । अथ ऊर्द्धञ्च तद्दत्त्वा मण्डूरं यत् पुरातनं । गोमूत्रेण पचेत्तावत् यावत् गोमूत्रशोषणम् । तस्मादुद्धृत्य तच्चूर्णं कुर्य्यात् पलचतुष्टयम् । त्रिकटु त्रिफला मुस्ता गुड़ूची चित्रकं त्रिवृत् । दन्ती विड़ङ्गमेकैकं कर्षमेषान्तु चूर्णयेत् । एकपत्रीकृतस्याथ वज्रकाभ्रस्य यत्पलम् । वार्य्यन्नाम्भस्त्रिरात्रस्थं वारिपर्णीरसाप्लुतम् । आतपे शोषयेत्तीक्ष्णे दिनमेकं सुरक्षया । शूरणस्य रसैः पिष्टा तत्र टङ्कणकस्य च । दत्त्वाष्टौ माषकांस्तत्र पुटपाकेन पाचयेत् । मृण्मये सुदृढ़े पात्रे मृदुना गोमयाग्निना । रसाद्द्वादशमाषांश्च कर्षं गन्धकतः पृथक् । रसे मण्डूकपर्ण्याश्च मूर्च्छितौ कज्जलीकृतौ । घृतस्य मधुनश्चापि पृथक् पलचतुष्टयम् । तत्सर्व्वमेकतः कृत्वा स्निग्धे भाण्डे निधापयेत् । ततोऽष्टौ माषकान् खादेद्दश वा द्वादशैव च । कर्षं वापि तथा कुर्य्यात् यथा दोषबलाबलम् ॥" रस.र. ।

**रसाभ्रवटी** । स्त्री । ग्रहण्यधिकारे औषधम् । पाठः—"शुद्धसूतस्य कर्षैकं कर्षैकं गन्धकस्य च । द्वयोः कज्जलिकां कृत्वा तुल्यं व्योम प्रदापयेत् । केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च । ग्रीष्मसुन्दरमण्डूकीजयन्तीन्द्राशनस्य च । श्वेतापराजितायाश्च स्वरसं पलसम्मितं । रसतुल्यं प्रदातव्यं चूर्णञ्च मरिचोद्भवं । देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम् । संमर्द्य वटिकां कुर्य्यात् कलायसदृशीं बुधः ॥" र.सा.सं. ।

**रसामृतरसः** । पुं । रक्तपित्ताधिकारे रसः । पाठः—"रसस्य द्विगुणं गन्धं माक्षिकञ्च शिलाजतु [illegible] गुड़ूची च[illegible] [illegible]ना मधुपुष्पञ्च धान्यकम् । कुटजस्य त्वचं [illegible] [illegible]तकी निम्बपत्रकम् । यष्टीमधुसमायुक्तं [illegible] [illegible]रयान्वितं । विधिना मर्द्दयित्वा तु कर्षमा[illegible] भक्षयेत् ॥" र.सा.सं. ।

**रसाम्लम्** । क्ली । वृक्षाम्ले । रा.नि.व.६ । चुक्रनामकक्षाम्लिके । रा.नि.व.१५ । पुं । अम्लवेतसे । रा.नि.व.६ । स्त्री (म्ला) । पलाशीलतायां । रा.नि.व.३ ।

**रसाम्लकः** । [illegible] तृणविशेषे । श.च. ।

**रसायनम्** । [illegible] विषे । रा.नि.व.६ । कटिदेशे । रा.नि.[illegible] तक्रे । हे.च. । जराव्याधिनाशकौषधे । [illegible]स्थस्यौजस्करं यत्तु तद्वृष्यं तद्रसायनम् ।" ते[illegible] [illegible]दीर्घायुरादिलाभः । च.चि.१अ. । तत्फलं [illegible] वयःस्थापनमायुर्मेधाबलकरं रोगापहरणस[illegible] सु.सू.१अ. । लक्षणं —"देहस्येन्द्रियदन्ता[illegible] [illegible]करणमेव च । बलीपलितखालित्यवर्जनेऽ[illegible] [illegible] क्रिया । पूर्व्ववैद्यप्रणीतं हि तद्रसायनमु[illegible] वैद्यकसंग्रहः२अ. तच्च द्विविधं कुटीप्रा[illegible]म्, वातातपिकञ्च वा.उ.३८अ. । वंशप[illegible] [illegible]ले । वै.निघ. । पुं विड़ङ्गरूपे । मे. ।

**रसायनतन्त्रम्** । क्ली । रसायनाधिकारे "रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ।" सु.सू.१अ. ।

**रसायनफला** । स्त्री । हरीतकीवृक्षे । त्रिका

**रसायनवरः** । पुं । शुक्ररसोने । स्त्री (रा) कङ्गुधान्ये । काकजङ्घायाम् । वै.निघ. ।

**रसायनश्रेष्ठः** । पुं । पारदे । रा.नि.व.१३

**रसायनामृतलौहम्** । क्ली । ज्वरातिसारलौहम् । पाठः—"कर्षं गन्धकमर्द्धपारदमुभे कुर्य्यादुभौ कज्जलिम्, चार्व्वं शूरणकञ्च पञ्चलवणासार्द्धञ्च कर्षं पृथक् । सार्द्धार्द्धं द्विपलं विचूर्ण्य [illegible] कलं शुक्राशनाम्भिश्रयेत् ॥" मात्रा आयामितम् अनु, काञ्जिकम् । रस.र. । अन्यत् शुक्ले—त्रिफला

२ श. क्वाथार्थजलं १६ श. शे. ४ श.। अम्बीररस: (গোড়ালেবুর রস) १६ प. शर्करा १६ प. एकत्र पक्वा घनीभूते तत्र त्रिफलां त्रिकटु मुस्तां विडङ्गं जीरकं कृष्णजीरकं यमानीद्वयं भूनिम्बं चित्रकं दन्तीमूलं निम्बत्वचं सैन्धवम् प्रत्येकं प. चूर्णं २ तो. लौहं २ प. घृतं ४ प. प्रक्षिप्य समालोड्य च स्थाप्यम्। भैष.।

**रसायनी।** स्त्री। गुड़ूचीलतायाम्। काकमाचीक्षुपे। गोरक्षदुग्धायाम्। रा.नि.व.३।४।५। मांसरोहिणीभेदे। रा.नि.व.१२। करञ्जभेदे। महाकरञ्ज। रा.नि.व.९। कर्णस्फोटायां। কাণছিঁড়া। प.मु.। शुकशिम्ब्याम्। আলাকুশী। शुक्तिहितायां। शङ्खपुष्प्यां। नाड्यां। कन्दगुड़ूच्यां। मञ्जिष्ठायां। वै.निघ.।

**रसालम्।** क्ली। बोले। भा.। सिह्लके। শিলারস। मे.।

**रसाल: (क:)।** पुं। आम्रवृक्षे। रा.नि.व. ११।२३। इक्षौ। प.मु.। पुण्ड्रकेक्षौ। रा.नि.व. १४।२३। पणसवृक्षे। কাঁঠাল গাছ। श.र.। कुन्दुरौ। কুন্দুরু তৃণ। रा.नि.व.८। गोधूमे। रा.नि.व.१६।२३। अम्लवेतसे। सिह्लके। শিলারস। वै.निघ.।

**रसालशर्करा।** स्त्री। रसालेक्षुरसकृतशर्करायां। गुणा: — स्निग्धा कान्तिकरी च। रा.नि.व. १४। [तृणे। नाड्यां। श.च.।

**रसालसा।** स्त्री। पुण्ड्रकेक्षौ। गोधूमे। कुन्दुरु-

**रसाला।** स्त्री। दधिमिश्रितसक्तौ। शिखरिणीति लोके। प.मु.। तत्साधनविधि:—"वस्त्रे बद्धाय गलितं दधि हिमस्यमानकम्। तस्मिन् घृतं माक्षिकञ्च प्रत्येकञ्च पलम्पलम्। निक्षिप्य शर्करां तस्मिन् मानिकाद्वितयं तथा। नागकेशरमेलात्वक्पत्रन्त्वामलसंज्ञकम्। अर्द्धकर्षं क्षिपेद्विद्वान् मरिचपिप्पली तथा। सर्व्वमेकीकृतं तत्तु भाण्डे कर्पूरवासिते। गृहीत्वा चैव वस्त्रेण सुखम्बद्धाय गालयेत्। इत्येनालोड्य यत्नेन सा रसालाभिधा स्मृता। गुणैस्तुल्या रुञ्जिकाया: शिखरिण्या: स्मृता बुधै:।" वै.निघ.। दूर्व्वायाम्। विदार्य्याम्। पुण्ड्रकेक्षौ। रसनायाम्। मे.। द्राक्षायाम्। श.र.।

**रसालाम्र:।** पुं। महाराजाम्रे। रा.नि.व.११।

**रसालिका।** स्त्री। समलतायाम्। সাতলা। वै.निघ.। [श.च.।

**रसालिहा।** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া।

**रसाली (इन्)।** पुं। कृष्णचणकक्षुपे। प.मु.। स्त्री (ली)। करङ्कशालिनामेक्षौ। পুঁড়ি ইক্ষু। रा.नि.व.१४। [व.१४।

**रसालेक्षु:।** पुं। करङ्कशालिनामेक्षौ। रा.नि.

**रसावेष्ट:।** पुं। श्रीवेष्टनामकसुगन्धद्रव्ये। रा.नि.व.१२। [नि.व.३।

**रसाश्वासा।** स्त्री। पलाशीलतायाम्। रा.

**रसाष्टकम्।** क्ली। महारसाष्टके। पारददरदाभ्रककान्तलौहविमलामाक्षिकवैक्रान्तशङ्खेषु। वै.निघ.।

**रसाह्व:।** पुं। लवणखोट्याम्। र.मा.। स्त्री (ह्वा)। लघुशतावर्य्याम्। राखायाम्। वै.निघ.।

**रसिक:।** पुं। हस्तिनि। अश्वे। सारस्वत:। सारसपक्षिणि। रा.नि.व.१९। गोधूमे। वै.निघ.। स्त्री (का)। रसालायाम्। इक्षुरसे। मे.। शरीरस्थरसधातौ। रा.नि.व.१८। रसनायाम्। विश्व.। शारिकापक्षिणि। वै.निघ.। त्रि। प्रशस्तरसवति। वा.चि.५अ.।

**रसिकालु:।** पुं। नीलालौ। वै.निघ.।

**रसुन:।** पुं। लशुने। श.च.।

**रसेन्द्र:।** पुं। पारदे। चि.यो.कमि.चि.। राजमाषक्षुपे। বরবটী। प.मु.।

**रसेन्द्रगुड़िका।** स्त्री। कासे यक्ष्मणि वा रसविशेष:। पाठ:—"कुमार्य्या: त्रिफलाचूर्णै: चित्रकस्य रसै: क्रमात्। शोधयित्वा पुनाराजीगृहधूमहरिद्रया। पक्केष्टकारजोभिश्चालम्बूषकरसेन च (वीङ्गापत्ररसेन च। २य: पाठ:)। भृङ्गराजरसेनापि (शृङ्गवेररसेनापि। २य: पाठ:) शोधयित्वा पुन: पुन:। प्रक्षालयेत् पुन: पश्चात् काञ्जिकेन घने। कर्षद्वयं रसेन्द्रस्य भावयेद्विजयाद्रवै:। शिलायां खल्लयेच्चापि यावत् पिच्छलमागतम्। जलकर्णीकाकमाचीरसाभ्यां भावयेत्पुन:। सौगन्धिकपलं शुद्धमर्ड़ मरिचटङ्कणम्। माक्षिकञ्च शिखिग्रीवमभ्रकं तालकन्तथा। एतांस्तु मिलितान्सर्व्वान् भा-

**रोचनकः** । पुं । जम्बीरवृक्षे । रा.नि.व.११ ।

**रोचनफलः** । पुं । मातुलुङ्गवृक्षे । वीजपूरे रा.नि.व.११ । स्त्री (ला) । चिर्भटिकायाम् । फुटी । रा.नि.व.७ ।

**रोचनिका** । स्त्री । वंशलीचनायाम् । रा.नि.व.६ । गुण्डारोचन्याम् । কমলাগুঁড়ি । हारा. ।

**रोचनी** । स्त्री । दन्तिवृक्षे । रा.नि व.६ । आमलकीवृक्षे । रा.नि.व.११ । गोरोचनायाम् । रा.नि.व.१२ । श्वेतत्रिवृति । गुण्डारोचन्याम् । अम. । मनःशिलायाम् । हे.च. । चुक्रायाम् । চুকাপালং । भा.पू.१भ.शा.व. । [याम् । হিঞ্চে । श.र. ।

**रोची** । स्त्री । पत्रशाकविशेषे, हिलमोचिका

**रोटिका** । स्त्री । गोधूममाषादिकृतपिष्टकविशेषे । रुटी । तत्साधनविधिः—"शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाञ्च पोलिकां । तप्तके स्वेदयेत्कृत्वा भूयोऽङ्गारेऽपि तां पचेत् । सिद्धैषा रोटिका प्रोक्ता गुणानस्याः प्रचक्ष्महे ॥ रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी । वातघ्नी कफहृद्गुर्व्वी दीप्ताग्नीनां प्रपूजिता ॥" भा. ।

**रोदनम्** । क्ली । बालरोगे । क्रन्दने । मे. ।

**रोदनिका (नी)** । स्त्री । यासरूपे । দুরাল-ভা । रा.नि.व.४ । अम. । [कोषान्तरम् ।

**रोदिका** । स्त्री । लज्जालुकायां । লজ্জাবতী ।

**रोदिनी** । स्त्री । रक्तदुरालभायाम् । वै.निघ. ।

**रोधनम्** । क्ली । वायुजन्यव्रणवेदनायाम् । सु.सू.२२अ. । [निघ. ।

**रोधिनी** । स्त्री । लज्जालौ । লজ্জাবতী । वै.

**रोध्र(क)म्** । क्ली । लोध्रकाष्ठ । লোধকাষ্ঠ । वा.सू.१५अ. अञ्जनादिव. । "रोध्रं धातकिबिल्वपेशि" । पुं । लोध्रवृक्षे । লোধ গাছ । प.मु. । वा.सू.१५अ.रोध्रादिः । 'रोध्रशावररोध्रपलाशाः ।'

**रोध्रपुष्पः (कः)** । पुं । तन्नामकशालिधान्यभेदे । गुणाः शालिवत् । सु.सू.४६अ. । मण्डलिसर्पविशेषे । सु.कल्प४अ. । मधूकवृक्षे । रा.नि.व.११ । [६ ।

**रोध्रपुष्पिणी** । स्त्री । धातकीवृक्षे । रा.नि.व.

**रोध्रयुग्मम्** । क्ली लोध्रद्वये । एकः शावरः, अन्यः पट्टिकारोध्रश्च । वा.सू.१५अ. । "न्यग्रोधपिप्पलसदाफलरोध्रयुग्मम् ।" [वा.सू.६अ. ।

**रोध्रशूकः** । पुं । रोध्रपुष्पाकारशूकशालौ ।

**रोध्रादिगणः** । पुं । रोध्रशावररोध्रपलाशजिङ्गिनीसरलकट्फलयुक्ताकुत्सिताम्बःकदलीगतशोकैलवालुपरिपेलवमोचास्तु । गुणाः—मेदःकफहरः योनिदोषहरः स्तम्भी वर्ण्यः विषघ्नश्च । वा.सू.१५अ. ।

**रोपः** । पुं । रोपणे । मे. । क्ली । छिद्रे । हे.च. ।

**रोपणः** । पुं । पारदे । भूधामनवृक्षे । वै.निघ. । क्षतादिपूरणे । अञ्जनभेदे भा. ।

**रोपणचूर्णम्** । क्ली । नेत्ररोपणाञ्जनविशेषे । यथा —"शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा । गृह्णीयात् तज्जलं सर्व्वं त्यजेच्चूर्णमधोगतम् । शुष्कं तत्र जलं सर्व्वं पर्पटीसन्निभं भवेत् विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः । कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ॥" भा. ।

**रोपणाञ्जनम्** । क्ली । कषायस्नेहसंयुक्ताञ्जने तोड़. । तिक्तद्रव्यैरञ्जने । च.द.अञ्जनाधिकारे ।

**रोपणीवर्त्तिः** । पुं । कुसुमाभिधनेत्राञ्जनवर्त्तिभेदे । यथा—"अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः । जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश । सूक्ष्मं पिष्ट्वाम्बुना वर्त्तिः कृता कुसुमिकाभिधा । तिमिरार्ज्जुन...णां नाशिनी ...... ॥" भा. ।

**रोप्यशालिः** । पुं । छिन्ने पुनरुप्ते शालौ রোওয়াধান । गुणौ —रुच्यः मलबन्धकारकश्च रा.नि.व.१६ ।

**रोप्यातिरोप्यः** । पुं । रोप्यशालौ । রোওশালি ধান । गुणाः—लघुः, आशुपाकः अदोषघ्नः बल्यः मूत्रवर्द्धनश्च । राज. ।

**रोमम्** । क्ली । पत्रे । তেজপত্র । मद.व. जले । श.च. ।

**रोमः (कः)** । पुं । महानिम्बे । वै.निघ.

**रोम (न्)** । क्ली । तमालपत्रे । তেজপ॰ मद.व.३ । लोम्नि । রোঁওয়া । रा.नि.व.१८

**रोमकम्** । क्ली । शाम्भरलवणे । रुमावतीनदीजलवणे इति । र.सा.सं.टीका । শম্বরলবণ। হি শাকম্ভরি । गुणाः — तीक्ष्णम् अत्युष्णं कटु तिक्तं दीपनं दाहशोषकरं ग्राहि पित्तकोपनञ्च । रा.नि.व.६ । कान्तलौहभेदे । रा.नि.व.१३ । [व.७ ।

**रोमकन्दः** । पुं पिण्डालौ । रक्तालौ । रा.नि.

**रोमकर्णः** । पुं । शशके । वै.निघ. ।

**रोमकाख्यम्** । क्ली । शाम्भरलवणे, मृत्तिकालवणे । कान्तलौहे । वै.निघ. ।

**रोमकूपः** । पुं । रोमविवरे ।

**रोमकेशरम्** । क्ली । चामरे । त्रिका. ।

**रोमगुच्छ(क)म्** । क्ली । चामरे । हे.च. । जटा. । [सुद्ररी.चि. ।

**रोमतत्त्वरी** । स्त्री । अरोमस्त्रियाम् । रस.र.

**रोमद्वीपः** । पुं । कूर्मे । वै.निघ. ।

**रोमन्थः** । पुं । पशूनां चर्व्वितचर्व्वणे । জাওর কাটা । अम. । [निघ. ।

**रोमफला** । स्त्री । डिण्डिशे । ঢ্যাঁড়শ । वै.

**रोमभूमिः** । स्त्री । चर्म्मणि । रा.नि.व.१८ ।

**रोमलता** । स्त्री । रोमराज्याम् । श.च. ।

**रोम(क)लवणम्** । क्ली । शाम्भरलवणे । सौवर्च्चललवणे । र.मा. । [रा.नि.व.६ ।

**रोमवल्ली** । स्त्री । कपिकच्छ्वां । আলাকুশী ।

**रोमविकारः** । पुं । रोमाञ्चे । हला. ।

**रोमशम्** । क्ली । पत्रे । তেজপত্র । मद.व.३। पुं । पिण्डालुनामकन्दशाके । रा.नि.व.७ । मेषे । ভেড়া । श.च. । कोङ्कणदेशप्रसिद्धे कुम्भीवृक्षे । रा.नि.व.६ । मन्दविषवृश्चिकभेदे । सु.कल्प.८अ. । शूकरे । रा.नि.व.१९ । [ড়া ।

**रोमशपत्रा** । स्त्री । देवताड़वृक्षे । দেয়াতা-

**रोमशफलः** । पुं । डिण्डिशवृक्षे । ঢাঁড়শ । भा.पू.१भ.शा.व. । [निघ. ।

**रोमशमूलिका** । स्त्री । हरिद्रायाम् । वै.

**रोमशा** । स्त्री । कोङ्कणे कुक्कडीति ख्याते दग्धानामवृक्षे । रा.नि.व.६ । कर्कटिकायां । কাঁকুড় । त्रिका. । अलगर्द्दनामसविषजलौकाभेदे । অলগৰ্দ্দজোঁক । सु.सू.१३अ. । मांसरोहिण्याम् । वै.निघ. ।

**रोमशातनम्** । क्ली । रोम्णाम् उद्धंसने । वै.निघ. । तदौषधं स्नुहीक्षीरेण भल्लातकस्नेहः । सु.चि.१अ. । [भा. ।

**रोमशुकम्** । क्ली । स्थौणेयके । গেঁটেলা ।

**रोमहरणम्** । क्ली । हरिताले । र.सा.सं. ।

**रोमहर्षः (कः)** । पुं । रोमाञ्चे । मा.नि. । "रोमहर्षोऽरुचिस्तमः ।" विभीतकवृक्षे । वै.निघ. ।

**रोमहर्षणम्** । क्ली । रोमाञ्चे । अम. । पुं । विभीतकवृक्षे । मे. ।

**रोमाख्यम्** । क्ली । शाम्भरलवणे । वै.निघ. ।

**रोमाञ्चः** । पुं । रोमहर्षे । अम. ।

**रोमाञ्चिका** । स्त्री । रुदन्तीनाममहाक्षुपे । रा.नि.व.५ ।

**रोमान्तीज्वरः** । पुं । ज्वरविशेषे । হামজ্বর । "रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः । कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्व्विकाः ॥" मा.नि. । भैष.मसूरि.चि. । [र्त्नी । श.मु. ।

**रोमाली** । स्त्री । रोमराजिकायाम् । वयःस-

**रोमालुः** । पुं । पिण्डालौ । रा.नि.व.७ । कपिकच्छ्वां । আলাকুশী । रा.नि.व.३ ।

**रोमालुविटपी (इन्)** । पुं । कोङ्कणदेशप्रसिद्धकुम्भीवृक्षे । रा.नि.व.६ ।

**रोमावर्त्तः** । पुं । तन्नामकमर्म्मस्थाने शिरासन्धिसन्निपातरूपे । सु.शा.६अ. । [हे.च. ।

**रोमावली** । स्त्री । नाभेरूर्द्ध रोमराज्याम् ।

**रोमाश्रयफला** । स्त्री । झिञ्झिरीटाक्षुपे । रा.नि.व.४ ।

**रोमेश्वरः** । पुं । वैद्यामृतग्रन्थकारे ।

**रोलः** । पुं । आर्द्रशुण्ठ्यां । फलविशेषे, पानीयामलके । श.च. । तालीशपत्रे । कश्चित् ।

**रोलम्बः** । पुं । भ्रमरे । त्रिका. ।

**रोषणः** । पुं । परुषकवृक्षे । ফলসা গাছ । पारदे । निकषोपले । मे. । ऊषरभूमौ । हे.च. ।

**रोमिणी** । स्त्री । लज्जालुकायाम् । লজ্জাবতী লতা। वै.निघ. ।

**रोहः** । पुं । अङ्कुरे । हे.च. । [व्याक. ।

**रोहणम्** । क्ली । शुक्रे । रा.नि.व.१८। जन्मनि।

**रोहणद्रुमः** । पुं । चन्दनवृक्षे । मलयागुरुणि। वै.निघ. ।

**रोहत्पर्व्वा** । स्त्री । वल्लिदूर्व्वायां । रा.नि.व.८।

**रोहन्तः** । पुं । वृक्षे । तरुविशेषे । उणा. ।

**रोहन्ती** । स्त्री । लतामात्रे । लताविशेषे । उणा. ।

**रोहिः** । पुं । वृक्षे । वीजे । उणा. ।

**रोहिकः** । पुं । वनरोहितनामकमृगे । বন রোহ । तन्मांसं रोहिकी हितः बलकरः वातात्मकः श्लेष्मकरश्च । अत्रि.२२अ. ।

**रोहिकाप्रियः** । पुं । महाकरञ्जे । वै.निघ.।

**रोहिणः** । पुं । कट्फलवृक्षे । र.मा. । भूतृणे । গন্ধতৃণবিশেষ । रा.नि.व.८।२२ । च.चि.३अ. । न्यग्रोधवृक्षे । বট গাছ । रा.नि.व.९ । रक्तरोहीतके । রক্তরোড়া । रा.नि.व.८ ।

**रोहिणिका (णी)** । स्त्री । शरीरे षष्ठत्वचि । "रोहिणमाणा ग्रन्थ्यपच्यर्व्वुदश्लीपदगलगण्डाधिष्ठाना ।" सु.शा.४अ. । कण्ठगते जिह्वामूलगते वा रोगविशेषे । রোহিণী রোগ । निदानं—"वातपित्तकफा यस्य युगपत् कुपितास्त्रयः । जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः । जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः । तं शीघ्रकारिणं रोगं रोहिणीकेति निर्दिशेत् । त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम् ॥" च.सू.१८अ. । ताः पञ्च वातपित्तकफसन्निपातरक्तजभेदेन । "गलशालूकाधिजिह्ववलयालासैकवृन्दवृन्दशतघ्नीगिलायुगलविद्रधिगलौघस्वरघ्नमांसतानविदारिणश्च । सम्प्राप्तिः—"गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक्समस्ताश्च तथैव शोणितम् । प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् साऽसुहरा तु रोहिणी ॥" सु.नि.१६अ. । अन्यस्य मुखरोगभेदे । ज.द.२९अ. । कण्टकशिरीषे । কাঁটাশিরীষ । र.मा. । मञ्जिष्ठायां । रा.नि.व.६ । च.द.सि.यो. ज्वरातीसा.चि.वत्सकादिः । "रोहिणी गजपिप्पली ।" कटुकायां । কট্‌কী । रा.नि.व.२३ । च.सू. ४अ. । भैष.कुष्ठ.चि.पञ्चतिक्तघृते । भा.ज्व.चि. लाक्षादितैले । गाम्भारीवृक्षे । গামার গাছ । रा.नि.व.९।२३। कट्फले । सु.सू.३८अ.न्यग्रोधादिः । मांसरोहिणीभेदे । মাংসরোহিণী । रा.नि.व.१३। वन्दाके । মান্দরা । हरीतक्याम् । सुवृत्तलमस्या लक्षणं ज्ञेयम् । प्रतिष्ठानदेशोद्भवा च । हरिद्रायाम् । रा.नि.व.२३ । स्त्रीगव्याम् । च.चि.२अ. । तन्नामकशिरायां । वा.चि.७अ. । जलचरपक्षिविशेषे । च.सू.२७अ. । [फले । सु.चि.१अ. ।

**रोहिणीफलम्** । क्ली । कट्फले । गाम्भारी-

**रोहिणेयः** } पुं । मरकतमणौ । रा नि.व.१३।
**रोहित्** } रोहितमत्स्ये । श्रीखण्डचन्दने । त्रिका. । स्त्री । लताभेदे । मे. ।

**रोहिण्याद्यघृतम्** । क्ली । गुल्मे घृतम् । पाठः—"रोहिणी कटुका निम्बमधुकं त्रिफलात्वचः । कार्षिका त्रायमाणा च पटोलत्रिवृते पले । द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि । घृतार्द्धं घृतसमं सर्पिषश्च चतुष्पलं । पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ॥" च.चि.५अ. । [मे. ।

**रोहितम्** । क्ली । कुसुम्भपुष्पे । रक्ते । कुङ्कुमे

**रोहि(ही)तः (कः)** । पुं । (Amoora Rohitaka. Syn. Andersonia Rohitaka.) दाडिम्बपुष्पक स्वनामख्यातवृक्षे । रोहिणीति लोके । রোড়া, রয়না, কড়ার। तं मुलमोदुगचेह् । र.मा. । भा.ज्व.चि.महाषट्तक्रतैले "मधुरसादिवाहरोहीतके । स श्वेतो रक्तश्च तद्गुणाः—कटुस्निग्धौ कषायौ शीतलौ कृमिव्रणदोषनेत्रामयघ्नौ च । रा.नि.व.८ । "रोहितकयकृत्प्लीहगुल्मोदरहरः स्मृतः ।" राज. । संग्रहरोहीतकाद्यघृते । हरिणविशेषे । मे. । कुसुम्भवृक्षे स्वनामख्यातमत्स्यविशेषे । রুই মাছ । तं एरकनु । तल्लक्षणं यथा—"कृष्णः शल्की श्वेतकुक्षिर्मत्स्यो यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः ।" तन्मांसगुणाः—ईषदुष्णं बलकरं वातघ्नं स्निग्धं वीर्य्यदञ्च । रा.नि.व.१७ । रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । कृष्णपक्षो भसश्रेष्ठो रोहितः कथितो बुधैः । रोहितः सर्व्वमत्स्यानां वरो हृद्योऽ

नाभिजित्। कषायानुरसः स्वादुः वातघ्नो नातिपित्तकृत्। ऊर्द्धजत्रुगतान् रोगान् हन्याद्रोहितसुखकम् ॥" भा.। "रोहितो तंहयस्यैव विवन्धी दुर्जरी घनः। ज्वरिणां विषमार्गीनामतीसारे न दास्यते ॥" चचि.२ग्र.। इति वनरोहितगुणाः।

**रौहिता**। स्त्री। मञ्जिष्ठायाम्। वै.निघ.।

**रौहितेयः**। पुं। रोहितकवृक्षे। रत्नकोषः।

**रौहिष(स)म्**। क्ली। (Andropogon schoenanthus. Syn. A. Martini.) The geranium grass. गन्धतृणे, कत्तृणे। रामकर्पूर। हिं अगियाघास, मिरचियागन्ध, रसघास। वम्. रोहिषे। उत्. पाल खरि। रा. नि.व.८। सि.यो.,च.द.च.ज्वा.चि.पञ्चगव्यघृते। भा.ज्व.चि.। "रक्तरोहिषधन्वयवासकवासाः।" पुं। रोहिकमृगे। रक्तचित्रके। श.द.।

**रौही (इन्)**। पुं। रोहितकवृक्षे। रोहा, रुहेना गाछ। र.मा.। सु.चि.१७ग्र.। महाकरञ्जे। वै.निघ.। अश्वत्थवृक्षे। वटवृक्षे। मे.।

**रौहीतकलौहम्**। क्ली। प्लीहाधिकारे लौहम्। पाठः—"रौहीतकसमायुक्तं त्रिकत्रययुतन्वयः। प्लीहानं हन्ति…… ॥" र.सा.सं.।

**रौद्रः**। पुं। आतपे। मे.। हेमन्तर्त्तौ। हे.च.।

**रौद्ररसः**। पुं। अर्व्वुदाधिकारे रसः। पाठः—"शुद्धसूतं समं गन्धं मर्द्यं यामचतुष्टयं। नागवल्लीरसैर्युक्तं मेघनादपुनर्नवैः। गोमूत्रपिप्पलीयुक्तं मर्द्यं रुद्ध्वा पुटेल्लघु। रौद्रः… ॥" १ र. लिहेत्। र.सा.सं.।

**रौद्री**। स्त्री। रुद्रजटालतायां। रा.नि.व.३।

**रौप्यम्**। क्ली। रजतधातौ। रूपा। हिं चाँदि। गुणाः—"रौप्यं शीतं कषायाम्लं स्वादुपाकरसं सरं। वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिरात् ध्रुवम्। तारं शरीरस्य करोति तापं विड्बं घनं यच्छति शुक्रनाशम्। वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम् ॥" "गुरु स्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमं। वर्णाढ्यं चन्द्रवत् स्वच्छं रौप्यं नवगुणं शुभम्। कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ॥" भा.पू.१भ.धा.व.। भस्म यथा—"हेरकवलिसूतनिर्म्मितकज्जलसममम्लपिष्टं रूप्यदलं। सिकतायन्त्रे वा गजपुटाङ्कस्म भवति गाढ़ाग्नौ। द्विभागगन्धकैकभागरसाभ्यां कज्जलिकां कृत्वा जम्बीरादिरसैरूप्यपत्रं लिप्त्वा गजपुटे पचेत् ॥" सा.कौ.। शोधनञ्चास्य स्वर्णवत्। तथा—"नागेन टङ्कणेनैव द्रावितं शुद्धिमिच्छति। रजतं दोषनिर्मुक्तं किं वा चाराम्लपाचितम् ॥" येन केनचिदम्लरसेनैकभागेन हरितालं प्रहरं सम्मर्द्य त्रिभागरौप्यपत्राणि विलिप्य मूषापुटे निरुध्य त्रिंशत्करीषैः चतुर्द्दश पुटानि देयानि। भा.। रौप्यधातुमले।

**रौप्यमलम्**। क्ली। रौप्यमाक्षिके। वै.निघ. २भ.पाण्डु.चि.त्रिफलादिलेहे।

**रौप्यमाक्षिकम्**। क्ली। स्वनामख्यातोपधातौ। रोप्यमाक्षिक। See तारमाक्षिकम्।

**रौम(क)म्**। क्ली। रौमकलवणे, शाम्भरलवणे। श.टी.रमा.।

**रौमलवणम्**। क्ली। शाम्भरलवणे। र.मा.।

**रौहिट्**। पुं। रोहिषमृगे। श.टी.भ.।

**रौहिणः**। पुं। रक्तचन्दने। चन्दनवृक्षे। त्रिका.।

**रौहिणेयम्**। क्ली। मरकतमणौ। रा.नि.व. १३।

**रौहिष(षेय)म्**। क्ली। कत्तृणे, रोहिषतृणे। पुं। रोहितमत्स्ये। मृगविशेषे। अम.। स्त्री (षी)। दूर्व्वायाम्। मृग्यां। उणा.।

**रौक्षम्**। क्ली। रूक्षतायां। सु.।

**रौक्ष्यम्**। क्ली। वायुगुणभूयिष्ठत्वे। रुक्षता। सु.।

# ल

**लक(कु)च:** । पुं । डहुकवृक्षे । মান্দার গাছ, ডহুয়া গাছ, ডেলো গাছ । र.मा. । हिं बड़हर । लकुचो डहुक इति । र.सा.सं.हिङ्गुलशोधने । गुणा:—खरसे तिक्त: कषायोष्ण: लघु: कफघ्न: दाही मलसंग्राहकश्च । रा.नि.व.९ । "आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा । मधुरञ्च तथाम्लञ्च दोषत्रितयरक्तहृत् । शुक्राग्निनाशनं वापि नेत्रयोरहितं स्मृतम् । सुपक्कं तत्तु मधुरमम्लञ्चानिलपित्तहृत् । कफवह्निकरं रुच्यं वृष्यं विष्टम्भकञ्च तत् ॥" भा. ।

**लक्तक:** । पुं । जीर्णवस्त्रखण्डे । নেকড়া । अम. । अलक्तके । আলতা । श.र. ।

**लक्तकर्म्मा** (न) । स्त्री । रक्तवर्णलोध्रे । श.च. ।

**लगण:** । पुं । नेत्रवर्त्मगतरोगविशेषे । लक्षणं —"अपाक: कठिन: स्थूलो ग्रन्थिर्वर्त्मभवोऽरुज: । सकण्डू: पिच्छिल: कोलप्रमाणो लगणस्तु स: ॥" सु.उ.३अ. । [গাঁঠি । अम. ।

**लगुड:** । पुं । करवीरवृक्षे । वै.निघ. । दण्डे ।

**लग्निका** । स्त्री । नग्निकायां । अ.टी. ।

**लघु:** । त्रि । रोगमुक्ते । रा.नि.व.२० । आकाशगुणभूयिष्ठे वाय्वग्निगुणबहुले च । सु. । स्त्री । पृक्कायाम् । পিড়ং শাক । प.मु. । च.द.वा.व्या.चि.एकादशशतिकमहाप्र.तैले । क्ली । लामज्जके । शुक्लदर्भे । रा.नि.व.१२ । कृष्णागुरुणि । मे. ।

**लघुकण:** । पुं । शुक्लजीरके । वै.निघ. ।

**लघुकण्टका** । स्त्री । लज्जालौ । লজ্জাবতী । वै.निघ. । [মেটো কুল । वै.निघ. ।

**लघुकर्कन्धु:** । पुं, स्त्री (न्धू:) । भूमिबदरे ।

**लघुकर्णी** । स्त्री । मूर्व्वायां । মূর্গা । वै.निघ. ।

**लघुकाम:** (य:) । पुं । छागे । त्रिका. । श.र. ।

**लघुकाश्मर्य्य:** । पुं । कट्फलवृक्षे । रा.नि.व.९ ।

**लघुगर्ग:** । पुं । गर्गरमत्स्ये, त्रिकण्टकमत्स्ये । গাগর মাছ । त्रिका. ।

**लघुगोधूम:** । पुं । ह्रस्वगोधूमे । ছোট গম । मं छोटागोहूं । गुणा:—स्निग्ध: गुरु: वृष्य: कफघ्न: आमदोषकर: बलकर: मधुर: वीर्य्यपुष्टिदश्च । रा.नि.व.१६ ।

**लघुचन्दनम्** । क्ली । काष्ठागुरुणि । वै.निघ. ।

**लघुचिर्भटी (र्भिटा, टिका)** । स्त्री । चिर्भटीविशेषे । मृगेर्वारौ । ছোট কাঁকুড় । रा.नि.व.७ । [२अ.रक्तातिसा.चि. ।

**लघुचेतकी** । स्त्री । बालहरीतक्यां । वै.निघ.

**लघुच्छदा** । स्त्री । महाशतावर्य्याम् । वै.निघ. ।

**लघुज(ङ्ग)ल:** । पुं । लावपक्षिणि । त्रिका. ।

**लघुदन्ती** । स्त्री । क्षुद्रदन्त्याम् । ছোট দন্তী । क्षुद्रदन्तीवीजगुणा:—रसपाकयोर्मधुरं शीतलं विण्मूत्रशोधकं गलशोथकफघ्नम् । "जयपालो दन्तिवीजं विख्यातं तिन्तिड़ीफलम् । जयपालो गुरु: स्निग्धो रेची पित्तकफापह: ॥" भा. ।

**लघुद्राक्षा** । स्त्री । काकोलीद्राक्षायाम् । किशमिशम् । रा.नि.व.११ ।

**लघुनाम** (न्) । क्ली । अगुरुणि । श.च. ।

**लघुनिदानम्** । क्ली । सुरजितकृतसंक्षिप्तनिदाने ।

**लघुपञ्चमूलम् (ली)** । क्ली, स्त्री (ली) स्वल्पपञ्चमूल्याम् । शालपर्णीपृश्निपर्णीवृहतीकण्टकारीगोक्षुरकृतकषाये । रा.नि.व.१२ । च.द.ज्व.चि. । गुणा:—"पञ्चमूलं ल[घु] [स्]वादु बल्यं पित्तानिलापहं । नात्युष्णं वृंहणं [ग्रा]हि ज्वरश्वासाश्मरीप्रणुत् ॥" भा. । [च. । शिग्रुवृक्षे । वै.निघ.

**लघुपत्र:** (क:) । पुं । गण्डारोचन्याम् ।

**लघुपत्रफला** । स्त्री । लघूदुम्बरिकाया[म्] । रा.नि.व.११ । [रा.नि.व.१

**लघुपत्री** । स्त्री । अश्वत्थीवृक्षे । গয়া অশ্ব[ত্থ]

**लघुपर्णिका** (र्णी) । स्त्री । मूर्व्वायाम् । [रा.]नि.व.३ । शतमूल्याम् । रा.नि.व.४ । [वै.नि[घ.]

**लघुपर्व्वा** (न्) । पुं । उदुम्बरवृक्षे । यज्ञडु[म्बुरे]

**लघुपाक:** । त्रि । पाकलघौ । स च बह्वि[..]त्ततया मारुतकोपेन च ज्ञेय: । सु.सू.४१अ. ।

**लघुपाकी (इन्)** । पुं । चीनधान्ये । চিনে ধান । प.मु. ।

**लघुपाण्डुरपुष्पकः** । पुं । द्वीपान्तरखर्ज्जूरिकायाम् । वै.निघ. ।

**लघुपिच्छिलः** । पुं । भूकर्बुदारवृक्षे । কাঞ্চন গাছ । रा.नि.व.१० ।

**लघुपुष्पः** । पुं । भूमिकदम्बे । কুকশিমে । रा.नि.व.८। स्त्री(ष्पा) । स्वर्णकेतक्याम् । वै.निघ.।

**लघुफलः** । पुं । लघूदुम्बरे । ছোট ডুমুর । वै.निघ. ।

**लघुवदरः** । पुं । क्षुद्रफलवदरवृक्षे । ডেমা কুল, মেটো কুল । मं क्षुद्रवोरि । कं किरुयरतरु । गुणाः—पक्वं मधुराम्लं रूच्यं कफवातघ्नं स्निग्धं क्रमिकरम् ईषत्पित्तदाहघ्नञ्च। रा.नि.व.११।

**लघुवदरी** । स्त्री । भूवदर्य्याम् । মেটো কুল। रा.नि.व.११ ।

**लघुब्राह्मी** । स्त्री। क्षुद्रब्राह्मीक्षुपे । ছোট ব্রাহ্মী শাক । मं वांवि, किर्ब्राह्मी । गुणाः—तिक्तरसा उष्णा पक्तिवातामशोफघ्नी च. रा.नि.व.५।

**लघुभण्टी** । स्त्री । चिर्भ्भीटके । চেঁচ্‌কো । वै. निघ. ।

**लघुमन्थः** । पुं । क्षुद्राग्निमन्थक्षुपे । ছোট গনিরি । रा.नि.व.८।

**लघुमांसः** । पुं । तित्तिरिपक्षिणि । তিতির পাখী । त्रिका. ।

**लघुमांसी** । स्त्री । सूक्ष्मजटामांस्याम् । गन्धमাংসী । रा.नि.व.११ ।

**लघुमूलकम्** । क्ली । क्षुद्रमूलके । नेपालमूलके । भा. ।

**लघुलता** । स्त्री । कारवेल्लके । উচ্ছে গাছ । अनन्तायां । অনন্তমূল । वै.निघ. । ज.द. ।

**लघुलयम्** । क्ली । वीरणमूले । বেণার মূল । अम.। पीतोशीरे। वै.निघ.वा.व्या.चि.एलादितैले।

**लघुशङ्खः** । पुं । क्षुद्रशङ्खे । ছোট শাঁথ । वै. निघ. ।

**लघुशीतः** । पुं । श्लेष्मातकवृक्षे । वै.निघ. ।

**लघुशेलुः** । पुं । श्लेष्मातकवृक्षे । वै.निघ. ।

**लघुश्लेष्मातकः** । पुं । श्लेष्मातकवृक्षे । वै.निघ. ।

**लघुसदाफला** । स्त्री । लघूदुम्बरिकायाम् । ছোট ডুমুর । रा.नि.व.११ ।

**लघुसोमवल्ली** । स्त्री । लघुसोमलतायाम् । वम्. रानसेरासङ्गो । वै.निघ. ।

**लघुहस्तः** । त्रि । क्षिप्रकारिणि ।

**लघुहेमदुग्धा** । स्त्री । लघूदुम्बरिकायां । ছোট ডুমুর । रा.नि.व.११ ।

**लघूदुम्बरिका** । स्त्री । क्षुद्रोदुम्बरवृक्षे । ছোট ডুমুর । गुणाः—रसवीर्य्यविपाकेषु उदुम्बरादीषद्धीनगुणा । रा.नि.व.११ ।

**लघ्वानन्दरसः** । पुं । पाण्डुधिकारे रसः । पाठः—"पारदं गन्धकं लौहं विषमभ्रकमेव च । समांशं मरिचस्याष्टौ टङ्गणस्य चतुर्गुणं । भृङ्गराजरसैः सप्त भावनाश्चाम्लवेतसैः ॥" गुञ्जाद्वयं मात्रा, पर्णेन सह देयः । र.सा.सं. । वातव्याध्युक्तेऽस्मिन् रसे भृङ्गरसैः पञ्च भावनाः, दाडिमरसेन च वटीकरणमिति विशेषः ।

**लघ्वी** । स्त्री । द्रुमिकोल्याम् । জামকোলী । मद.व.६ । पृक्कायाम् । পিঁড়িং । रा.नि.व.१२ ।

**लङ्का** । स्त्री । शिम्बीधान्यविशेषे । তেওড়া । मं मटुराचपटा । कं लांक । गुणाः—रूक्षा हिमा गौल्या गुरुः पित्तघ्नी वातकरी च । रा.नि.व. १६ । लङ्कायाम् । कुमरिचे । লঙ্কামরিচ । वै. निघ. । शाखायां । मे. । कुलटायां । प.मु. ।

**लङ्काधिपेश्वररसः** । पुं । कुष्ठाधिकारे रसः । पाठः—"मृतास्मगन्धभस्मानि गन्धं तालं शिलाजतु । अम्लवेतसतुल्यांशं चाम्लेन मर्दयेत्ततः । मध्वाज्याभ्यां वटी कार्य्या द्विगुञ्जं भक्षयेत् सदा...... । त्रिफलानिम्बमञ्जिष्ठापटोलमूलकं वचा । कटुकी रजनी तुल्यं क्वाथोऽयमनुपानतः ॥" रस.र. ।

**लङ्का(ङ्को)पि[यि,रि]का** । स्त्री । पृक्कायाम् । পিড়িং শাক । श.र. । श.च. ।

**लङ्कास्थायी** । पुं । कुटीमेदे । लङ्कासिजु ।

**लङ्केश्वररसः** । पुं । कुष्ठाधिकारे रसः । पाठः—"भस्म सूतार्कलौहानां कृष्णागन्धकटङ्गणं । कुष्ठतुल्यकतुल्यांशं मर्द्यं धुस्तूरजैर्द्रवैः । दिनैकं तु वटीं कुर्य्यात् माषमात्रञ्च भक्षयेत् । रसो लङ्केश्वरो नाम्ना प्रसूतमक्खलप्रणुत् ॥" रस.र. ।

पाले । रा.नि.व.१८ । प्रशस्तललाटे । श.र. ।

**ललाटरेखा** । स्त्री । दीर्घजीवनसूचककपाल-
स्थरेखायाम् । [७ष. ।

**ललाटास्थि** । क्ली । कपालास्थिद्वये । च.शा.

**ललामम्** । क्ली । अश्वे । शृङ्गे । चिह्ने । बाल-
धौ । मे. ।

**ललितः** । पुं। तन्नाम्ना ख्याते अर्शोऽङ्कुरविशेषे ।
लक्षणं—"गुदद्वारात् पृष्ठदेशे जायन्ते पाण्डुराङ्कु-
राः । ललितास्ते…… ॥" निदा. ।

**ललिता** । स्त्री । कस्तूर्य्यां । मृगनाभि । रा.
नि.व.१२ । लताकस्तूर्य्यां ।

**लवम्** । क्ली । जातीफले । श.च. । लामज्जके ।
रा.नि.व.१२ । पुं । लावपक्षिणि । चतुर्थभागे ।
शिकि । भैष.रसा.वसन्तकुसुमाकररसे । छेदने ।
लेशे । चिका. ।

**लवङ्ग(क)म्** । क्ली। (Caryophyllus aromaticus.) Cloves. स्वनामख्यातपण्यद्रव्ये ।
मलक्कसद्वीपजवृक्षस्य पुष्पवृन्ते । लवङ्ग । हिं लौ-
ङ्ग् । बं कं लवङ्गकलिका । फा. लौंग, मेखक् ।
ता. किरम्बिर । तें लवङ्गलु । द्रा. लवङ् ।
गुणाः—शीतलं तिक्तं चक्षुष्यं भक्तरोचनं त्रिदोषघ्नं
तीक्ष्णं शिरोरोगहरञ्च । रा.नि.व.१२ । कटुतिक्तं
कफघ्नं लघु तृषाघ्नं मुखदौर्गन्ध्यघ्नञ्च । सु.सू.४६अ.।
"आध्मानानाहशूलघ्नं लवङ्गं पाचनं लघु ।" राज.
३प. । [निघ. ।

**लवङ्गकन्दपत्रा** । स्त्री । लघुतालीशपत्रे । वै.

**लवङ्गकलिका** । स्त्री। लवङ्गे । रा.नि.व.१२।

**लवङ्गचतुस्समः** । पुं । अतीसाराधिकारे यो-
गः । पाठः—"जातीफलं त्रिदशपुष्पसमन्वितञ्च
जीरञ्च टङ्कणयुतं चरकैः प्रयुक्तं । चूर्णानि माक्षि-
कसितासहितानि लीढ्वा सामातिसारमखिलं गुरु
हन्ति शूलम् ॥" रस.र. । [गाछ । जयदेवः ।

**लवङ्गलता** । स्त्री । पुष्पवृक्षविशेषे । लवङ्ग

**लवङ्गादिचूर्णम्** । क्ली । राजयक्ष्माधिकारे
चूर्णौषधं । पाठः—"लवङ्गकक्कोलमुशीरचन्दनं न-
तं सनीलोत्पलजीरकं समं । त्रुटिः सकृष्णागुरुभृ-
ङ्गकेशरं कणा सविश्वानलदं महाम्बुदं । अहीन्द्र-
जातीफलवंशलोचनासिताष्टभागं समसूक्ष्मचूर्णितं ।
अरोचकं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रि-
दोषनुत् ॥" त्रुटिः एलाबीजं । अहीन्द्रम् अनन्त-
मूलं । महाम्बुदं मुस्तकं । भृङ्गं गुडत्वक् । नलदं
जटामांसी । वातपित्ताधिके वह्निबले सर्व्वचूर्णा-
पेक्षया शर्कराष्टगुणा । कफाधिके चाग्निमान्द्ये च
एकभागापेक्षयाष्टगुणेति । अन्यत् ग्रहण्यधिकारे
—"लवङ्गातिविषामुस्तं बिल्वं पाठाथ शाल्मली।
जीरकं धातकीपुष्पं लोध्रेन्द्रयवबालकं । धान्यकं
सर्ज्जकं शृङ्गी पिप्पली विश्वभेषजम् । समङ्गायाव-
शूकञ्च सैन्धवं सरसाञ्जनं । समभागानि चैतानि
भक्षयेत्प्रातरुत्थितः ॥" रस.र. ।

**लवणम्** । क्ली । क्षाररसद्रव्यविशेषे । लूण । हिं
निमक् । तत् पञ्चविधं — सौवर्चलसैन्धवविडौद्भि-
दसामुद्रभेदेन । श्रम. । सैन्धवसौवर्चलकाचविडगा-
ढसामुद्रदौद्भिदशौषररोमकभेदेन नवधा । रा.नि.व.
२० । तद्वर्गः—सामुद्रसैन्धवविडरोमकसौवर्चलचु-
ल्लिकाभेदेन षट् । "लवणानि च कथ्यन्ते सामुद्रं
सैन्धवं विडं । सौवर्चलं रोमकञ्च चुल्लिकालवणन्त-
था ॥" र.सा.सं. । तत्र सैन्धवं श्वेतरक्तभेदेन द्वि-
विधं । गाढलवणं शाकम्भरदेशे प्रसिद्धं । एषां
गुणाः स्वस्वपर्य्याये मृग्याः । सैन्धवलवणे । वा.सू.
१५अ. । "काचलवणक्लेदो ।" क्षारविशेषे ।
লোণার ক্ষার । [illegible]गुल्म चि. । "सलवणा
दग्ध्वा जले पाचितं ।" पुं । षड्रसान्यतमरसे । स
च सैन्धवादौ दृश्यते । गुणाः—"लवणो रुचिकृद्-
सोऽग्निदायी पचनः स्वादुकरश्च सारकश्च । अति
सेवनतो जराञ्च पित्तं शिथिलतां च ददाति कुष्ठ-
कारी ॥" रा.नि.व.२० । [illegible]—"लवणः क्ले-
दनस्तीक्ष्णः पाचनो दीपनः सरः । स्निग्धो रुचि-
करः स्यन्दी दृष्टिशुक्रहरो लघुः ॥ अपि च — लव-
णः शोधनो रुच्यः पाचनः कफपित्तदः । पुंस्त्व-
वातहरः कायशैथिल्यमृदुताकरः । सोऽतियुक्तो-
ऽक्षिपाकास्रपित्तकोष्ठचयापकृत् ॥" राज. । यो
भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्दव-
ञ्चापादयति स लवणः । सु.सू.४२अ. । त्रि ।
लवणरसयुक्ते । मे. ।

**लवणकिंशुका** । स्त्री । महाज्योतिष्मतील-
तायाम् । বড় লতাফট্কী । रा.नि.व.३ ।

**लवणख(खा)निः** । पुं । लवणाकरे । নব-
ণের খনি । हे.च. ।

**लवणतृणम्** । क्ली। स्वनामप्रसिद्धे तृणविशेषे। लोणाघास। गुणाः—क्षाराढ्यं कषायम् अस्लन्यम् अग्निवृद्धिकरञ्च। रा.नि.व.८।

**लवणत्रयम्** । क्ली। विट्सैन्धवरुचकेषु। सैन्धव, बिट्, सचल। "सैन्धवञ्च विड्ञ्चैव रुचकञ्चेति मिश्रितं। लवणत्रयमाख्यातम्.........॥" रा.नि.व.२२। च.द.ग्रहणीचि.।

**लवणद्वयम्** । क्ली। सौवर्चलसैन्धवलवणे। सचल ও सैन्धव। च.सू.२अ। [शौले। च.।

**लवणनित्यः** । त्रि। नित्यं लवणरसास्वादन-

**लवणभेदः** । पुं। लवणक्षारे। लोणार क्षार। वै.निघ.। [रा.नि.व.६।

**लवणमदः** । पुं। लवणक्षारे। लोणार क्षार।

**लवणमेहः** । पुं। मेहविशेषे। अत्र रोगी विशदं लवणतुल्यं मेहति। सु.नि.६अ।

**लवणयन्त्रम्** । क्ली। औषधपाकार्थलवणपूर्णयन्त्रविशेषे। "ऊर्द्ध तज्जलहीनं चेत् यन्त्रं डमरुकाद्वयम्। तद्यन्त्रं लवणैः पूर्णं लवणाख्यमितीरितम्॥"

**लवणव्यापत्** । स्त्री। अभ्यस्य अतिमात्रलवणभक्षणजन्यव्यापदि। "प्रभूतं लवणं यस्य भोजने वाजिनो भवेत्। केवलं वाततश्चास्य व्यापल्लमक्षतो भवेत्॥" ज.द.६०अ।

**लवणस्कन्धः** । पुं। षड्विधास्थापनेषु लवणवर्गीयद्रव्यकृतास्थापनविशेषे। च.वि.८अ।

**लवणक्षारः** । पुं। लोणारक्षारे। रा.नि.व.६।

**लवणा** । स्त्री। चुक्रिकायां। चूकापालं। वै.निघ.२भ.वा.व्या.चि.। चाङ्गेर्यां। आमरुल। लवणशाके। ज्योतिष्मतीलतायां। लताकट्की। रा.नि.व.३। लवणक्षारे।

**लवणाब्धिजम्** । क्ली। सामुद्रलवणे। रा.नि.व.६। [क्षार। रा.नि.व.६।

**लवणारम्** । क्ली। लवणक्षारे। लोणार

**लवणारजम्** । क्ली। लोणारक्षारे। रा.नि.व.६।

**लवणोत्तमम्** । क्ली। सैन्धवलवणे। र.मा.। सि.यो.ज्व.चि.।

**लवणोत्तमाद्यचूर्णम्** । क्ली। अर्शसि चूर्णम्। सैन्धवचित्रकेन्द्रयवकरञ्जमूलमहापिचुमर्दमूलानां चूर्णं प्रत्येकं २ तो.। मात्रा ८ माषा। अनु. तक्रं। च.द.।

**लवणोत्थम्** । क्ली। लोणारक्षारे। रा.नि.व.६।

**लवणोत्था** । स्त्री। ह्रस्वज्योतिष्मतीलतायाम्। छोटि लताकट्की। वै.निघ.।

**लवणोदः** । पुं। लवणसमुद्रे। अम.।

**लवनी** । स्त्री। छेदने। अम.। शीघ्रजफलभेदे। लोणा। श.च.।

**लवली** । स्त्री। फलवृक्षविशेषे। लोओयाड़ गाछ। हिं हरफरी। फलगुणाः—"लवलीफलमर्शोघ्नं कफपित्तहरं गुरु। विशदं रोचनं रूक्षं स्वादम्लं तुवरं रसे॥" भा.आम्र.। "कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदं। हृद्यं सुगन्धि विशदं लवलीफलमुच्यते॥" सु.सू.४६अ।

**लशु(शू)नम्** । क्ली,पुं। रसोने। रसुन। अम.। रा.नि.व.७। [द्रायाम्। वै.निघ.।

**लसा** । स्त्री। हरिद्रायाम्। हारा.। आमहरि-

**लसान्द्रः** । पुं। राजमाषे। वरवटी। र.मा.।

**लसि(सी)का** । स्त्री। इक्षुरसे। लालायां। श.च.। वा.उ.२६अ। भा.म.४भ.विसर्प.चि.। शर्कराविशेषे। फेणी गुड़। गुणाः—"लसीका फाणितगुडं खण्डमत्स्यण्डिका सिता। निर्म्मला लघवो ज्ञेयाः शीतवीर्य्या यथोत्तरम्। यथायथैषा नैर्म्मल्यं गुणवत् स्यात् तथा तथा॥" राज.३प.।

**लक्ष(क्ष्म)णम्** । क्ली। चिह्ने। मे.। श.र.। "लक्षणं चिह्नमाकृतिः।" मा.नि.पञ्चनिदाने। रोगस्य व्यक्तौ विशिष्टपूर्व्वरूपे। "पूर्व्वरूपं विशिष्टं यद्यक्तं तल्लक्षणं स्मृतम्।" भा.। रूपे। पुं। सारसपक्षिणि। श.र.। मुकुन्दवृक्षे। रा.नि.व.१०। मल्लवृक्षे। पाकुड़ गाछ। प.मु.। लक्षणोत्सवनामग्रन्थकारे।

**लक्ष(क्ष्म)णा** । स्त्री। श्वेतकण्टकार्य्याम्। रा.नि.व.४। वै.निघ.कल्पाद.चि.सारस्वतघृते। सारसपत्न्यां। मे.। स्वनामख्यातकन्दे। लक्ष्मणामूलम्, लक्ष्मणाकन्द। वा.उ.३१३अ। लक्षणं— "पुत्रकारकरक्ताभ्यविन्दुभिर्लाञ्छिता सदा। लक्ष्म-

या पुत्रजननी वक्तगन्धाकृतिर्भवेत् ॥" भा. । गुणाः—मधुरा शीतला वन्ध्यादोषघ्नी रसायनी बल्या त्रिदोषघ्नी च । रा.नि.व.७ । जवावृक्षे । मुचुकुन्दवृक्षे । वै.निघ. । [क.वन्ध्याप्रतीकारे ।

**लक्ष्मणाजटा** । स्त्री । लक्ष्मणामूले । चि.क.

**लक्ष्मीः** । स्त्री । श्वेततुलस्यां । रा.नि.व.१० । मुक्तानामगन्धद्रव्ये । পিড়িং । रा.नि.व.१२ । प्रियङ्गौ । ऋद्धौ । वृद्धौ । मे. । पद्मचारिण्याम् । स्थलपद्मे । रा.नि.व.१० । वा.सू.२८अ. । पद्मे । त्रिका. । शमीवृक्षे । हरिद्रायाम् । मुक्तायां । रा.नि.व.६.८.१२ । मेषशृङ्ग्याम् । মেড়াশিঙে । वै.निघ. ।

**लक्ष्मीगृहम्** । क्ली । रक्तोत्पले । त्रिका. ।

**लक्ष्मीतालः** । पुं । श्रीतालवृक्षे । कोङ्कणे मलियारीति च प्रसिद्धः । रा.नि.व.९ ।

**लक्ष्मीदासः** । पुं । योगशतकग्रन्थप्रणेतरि ।

**लक्ष्मीपतिः** । पुं । लवङ्गवृक्षे । पूगवृक्षे । विश्व. ।

**लक्ष्मीपुत्रः** । पुं । घोटके । मे. ।

**लक्ष्मीपुष्पः** । पुं । पद्मरागमणौ । हे.च. ।

**लक्ष्मीफलः** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**लक्ष्मीवान्** । पुं । पनसवृक्षे । কাঁঠাল গাছ । प्र.मा. । श्वेतरोहितके । শ্বেত রোড়া । रा.नि.व.८ । अश्वत्थवृक्षे । वै.निघ. ।

**लक्ष्मीविलासरसः** । पुं । ज्वरे वातव्याधौ च रसः । पाठः—"पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ । बलानागबलाभीरुविदारीकान्दमेव च । कृष्णधुस्तूरनिचुलं गोक्षीरवृद्धदारयोः । बीजं प्रक्षालनस्यापि जातीकोषफले तथा । कर्पूरञ्चैव कर्षांशं सूक्ष्मचूर्णं पृथक् पृथक् । गृहीत्वा चाष्टमांशेन स्वर्णं पर्णरसेन च ॥" वटिका त्रिगुञ्जचणकप्रमाणा : কৃষ্ণাভ্রচূর্ণ ৮তো. পারা, গন্ধক প্রত্যেকে ৪ তো. (মতান্তরে রস ২ তো. গন্ধক ২ তো.) শ্বেত বেলেড়া, গোরক্ষচাকুলিয়ামূল, শতমূলী, ভূমিকুষ্মাণ্ড, কাল ধুতুরার বীজ, হিজলবীজ, গোক্ষুরবীজ, বিজতাড়কের বীজ, সিদ্ধিবীজ, জায়ফল, জয়িত্রী, কপূর ইহাদের চূর্ণ প্রত্যেকে ২তো. স্বর্ণভস্ম । চারি আনা পাণের রসে মাড়িয়া বটী করিবে। মাত্রা সিদ্ধচণকবৎ। মতান্তরে জায়ফল, জয়িত্রী এক এক তো. বীজতাড়ক প্রভৃতির বীজ মিলিত ২ তো.। अन्यो महालक्ष्मीविलासः त्रिदोषरोगे। पाठः—"लौहमभ्रं विषं मुस्तं फलत्रयकटुत्रयं । धुस्तूरं वृद्धदारञ्च बीजमिन्द्राशनस्य च । गोक्षुरकद्वयञ्चैव पिप्पलीमूलमेव च । एतन्मन्त्रैः समं ग्राह्यं रसे धुस्तूरकस्य च । भावयित्वा वटी कार्या हिगुञ्जाफलमानतः ॥" লৌহ, অভ্র, বিষ, মুতা, ত্রিফলা, ত্রিকটু, ধুতুরাবীজ, বীজতাড়কবীজ, সিদ্ধিবীজ, ছোট গোখুরী বীজ, বড় গোখুরীবীজ, পিপুলমূল সমভাগ। ধুতুরাবীজের রসে ভাবনা দিয়া বটী করিবে। মাত্রা ২ কুঁচ। र.सा.सं. । अन्यः कासे— वङ्गं लौहम् अभ्रं ताम्रं कांस्यं पारदः हरितालं मनःशिला खर्परं प्र. १ प. । केशराजस्य कुलत्थस्य च क्वाथे प्र. दिनत्रयं भावयेत् । एला जातीफलं तेजपत्रं लवङ्गं यमानी जीरकं त्रिफला त्रिकटु नगरं गुडत्वक् वंशलोचना प्र. २ तो. तेन सह मिश्रयित्वा पूर्ववत् भावना देया । मात्रा चणकमिता । भैष. । [लनिर्यासे । रा.नि.व.१२ ।

**लक्ष्मीवेष्टः** । पुं । श्रीवेष्टनामसुगन्धद्रव्ये, सर-

**लक्ष्मीश्रेष्ठा** । स्त्री । स्थलपद्मिन्यां । वै.निघ.।

**लागजीरः (कः)** । पुं । शङ्खजीरके । वै.निघ.।

**लाघरकः** । पुं । हलीमकरोगे । सु.उ.४४अ.।

**लाघवम्** । क्ली । लघुत्वे । आरोग्ये । रा.नि.व.२० । लक्ष्मे । त्रिका. ।

**लाङ्क्षम्** । क्ली । पुष्पमर्दे । तालवृक्षे । मे. ।

**लाङ्गलकः** । पुं । लाङ्गलाकारे भगन्दरच्छेदे । "कुटासहितहलाकारः पार्श्वद्वये यश्छेदः स सम्पूर्णहलाकारः ।" वा.उ.२८अ. । "द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः ।" सु.चि.८अ. । भा.म.४भ.भगन्दरचि. ।

**लाङ्गलकी** । स्त्री । लाङ्गलीक्षुपे । বিষলাঙ্গুলিয়া । प.मु. । रस.र.अर्श.चि. ।

**लाङ्गलाख्या (ह्वया)** । स्त्री । लाङ्गलिकायां । বিষলাঙ্গুলিয়া । भैष.कुष्ठ.चि.। सु.सू.३९अ.।

**लाङ्गलिः (लिका, ली)** । स्त्री । लाङ्गली-

रुचे । विषलाङ्गलियां । श.र. । मेव.स्त्रीरोग.चि. । गजपिप्पल्यां । रा.नि.व.२३ । च.द.वा.व्या.एल-द्यातैले । चव्ये । चई । भा.पू.१भ. । महाराष्ट्री-लतायाम् । काँचड़ादाम । श.च. । रा.नि.व.४ । सु.सू.३६अ. । पृश्निपर्ण्याम् । चाकुलिया । मञ्जिष्ठायाम् । ऋषभके । कपिकच्छ्वाम् । आलकुशी । वै.निघ. ।

**लाङ्गलिकः** । पुं । स्थावरविषभेदे । वै.च. ।

**लाङ्गलिकी (नी)** । स्त्री । कलिकारिकायां विषलाङ्गलियां । अम. । सु.सू.३६अ.कफशोधने ।

**लाङ्गली** (इन्) । पुं. । नारिकेलवृक्षे । रा.नि.व.११ । सर्पे । श.च. ।

**लाङ्गलीशाकः** । पुं । जलजशाकविशेषे । काँचड़ा शाक । गुणाः —"लाङ्गली कफपित्तघ्नी रूक्षा वातविवर्द्धिनुत् ।" राज.३प. ।

**लाङ्गु(ङ्गू)लम्** । क्ली । पुच्छे । लेज । अ.टी. । शिश्ने । मे. ।

**लाङ्गु(ङ्गू)ला (लिका,ली)** । स्त्री । कपिकच्छ्वाम् । रा.नि.व.२ । पृश्निपर्ण्याम् । चाकुलिया । रा.नि.व.४ । पुं (ली [इन्]) । ऋषभके । रा.नि.व.५ ।

**लाजम्** । क्ली । उशीरे । वेणा । मे. । पुं । आर्द्रतण्डुले । मे. । पुंबहु, स्त्री(जा) । अक्षते । मे. ।

**लाजचूर्णम्** । क्ली । खधिचूर्णे । खैयेर गुँड़ा ।

**लाजतर्पणम्** । क्ली । लाजसक्तुकृततर्पणविशेषे । भा.म.१भ.ज्व.चि. । "दाहवम्यर्द्दितं क्षामं निरन्नं तृष्णयान्वितं । शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥"

**लाजपेया** । स्त्री । खधिकृतपेयायां । खैयेर मण्ड । वा.चि.१अ. । 'लाजपेयां सुखजरां ।" च.द. । गुणाः—"पूर्ववच्च कृता लाजपेया लघ्वी मता यतः । गुणैः प्रशस्ता विज्ञेया पूर्व्वोक्ताया गुणाधिका । त्रिकटुसैन्धवैलाभिर्युक्तातिगुणदा मता ॥" वै.निघ. । "लाजपेया श्रमघ्नी तु क्षामकण्ठस्य देहिनः । तृट्छर्द्यम्लानिदौर्बल्यकुक्षिरोगविनाशिनी ॥" राज.३प. ।

**लाजभक्तः** । पु । खधिभक्ते । गुणाः—"लाजभक्तो लघुः शीतश्चाग्निदीप्तिकरो मधुः । रुच्यो निद्राकरश्चैव कफपित्तविनाशकः । बलशोषणकारी स्यादित्यभिः परिकीर्त्तितः ॥" वै.निघ. ।

**लाजमण्डः** । पुं । खधिमण्डे । खैयेर मण्ड । गुणाः—"अग्निजननी दाहतृष्णानिवारणः ज्वरातिसारशमनश्च । अमल आमपाचनः मन्दाग्निविषमाग्निबालस्थविरयोषितां देयश्च ।" राज.३प. ।

**लाजवर्णा** । स्त्री । असाध्यलूताविशेषे । सु.कल्प.८अ. ।

**लाजश(स)क्तुः** । स्त्री । खधिचूर्णे । खैयेर छातु । शीतवीर्य्या अतः सान्निपातिके न हिता । सि.यो.ज्व.चि. ।

**लाजाः** । पुं बहु । खधिकायां । खैया,खै । भृष्टव्रीहिमात्रे । "ये केचिद्व्रीहयो भृष्टास्ते लाजाः" रा.नि.व.१६ । सतुषधान्यानि भृष्टस्फुटितानि लाजानाहुः । भा. । भृष्टधान्येषु । सि.यो.र.पि.चि. सिद्धतमयोगे । च.सू.४अ.कथ्याम् । गुणाः—"लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः । कासपित्तप्रशमना दीपना लघवो हिमाः ॥" राज.३प. ।

**लाञ्जुलम्** । क्ली । धान्ये । वै.निघ. ।

**लाञ्छनम्** । क्ली । रागिनामतणधान्ये । रा.नि.व.१६ । तन्नामकक्षुद्ररोगे । लक्षणं—"कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम् ।" वा.उ.३१अ. । चिह्ने । मे. । [नी । वै.निघ. ।

**लाटपत्रः (र्णः)** । पुं । त्वचायाम् । दारुचिनि ।

**लामज्ज(क)म्** । क्ली । उशीरभेदे । शंक्षे वेणा । सु.सू.३८अ. । च.द.सि.यो.दाह.चि. । "लामज्जनाथ मुक्तेन चन्दनेनानुलेपयेत् ।" (Andropogon laniger.) The Juncus odoratus. उशीरवत्पीतवर्णविलयविशेषे, सुगन्धवीरणं । हिं लामज्जक । तैं तेलगूहिविक । अभावे उशीरं देयम् । भा.म.१भ.ज्व.चि.महालाक्षादितैले । "लामज्जकं चन्दनञ्च ।" च.सू.२५अ. । "लामज्जकं यदा न स्यादुशीरं दीयते तदा ।" गुणाः —"हिमं तिक्तं मधुरं वातपित्तघ्नं तृष्णादाहश्रमसृक्कविकारपित्तज्वरघ्नञ्च । रा.नि.व.१२ । "दीर्घमूलं दृढं सुक्ष्ममूलं गन्धसंयुतं । देशे साधारणे जातं लामज्जं भद्रकं भवेत् ॥" भेष. ।

**लालनम्** । क्ली । प्रियालवीजे । वै.निघ. । पुं ।

मूषिकविशेषे । तद्दष्टे लालास्रावः हिक्का छर्दिश्च जायते । सु.कल्प.६ष. । वा.उ.३८ष. ।

**लालसा** । स्त्री । गर्भिणीदोहदे । साध । हे.च. ।

**लालसीकम्** । क्ली । पिच्छिले । श.र. ।

**लाला** । स्त्री । मुखस्रावे । लाल । रा.नि.व.१८ ।

**लालामेहः** । पुं । प्रमेहभेदे । लक्षणं —"लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलं । प्रमेहति......॥" निदा. ।

**लालाविषः** । पुं । लूतादौ । हे.च. ।

**लालास्रावः** । पुं । लालाक्षरणे । लालपड़ा । ऊर्णनाभौ । माकड़शा । हे.च. ।

**लालिकः** । पुं । महिषे । हे.च. ।

**लावः (कः)** । पुं । स्वनामख्यातस्थलचरपक्षिविशेषे । बटेर पाखी । चिका । मं लावगे, लावुकपिट । तन्मांसगुणाः— पथ्यं ग्राहि लघु च । रा.नि.व.७ । "पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मकः । संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः । तथा विपाके मधुरः सन्निपातेऽतिपूजितः ॥" अत्रि.२१ष. । लवक । च.द.वा.व्या. महासुगन्धितैले ।

**लावणः (णिकः)** । त्रि । लवणसंस्कृते । हे.च. । क्ली । नस्ये । र.सा.सं. । [मात्राश्रितीय अ. ।

**लावणिकतैलम्** । क्ली । तैलविशेषे । च.सू.

**लावण्यम्** । क्ली । लवणत्वे । लोणता । कान्तौ ।

**लावण्या** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**लावा** । स्त्री । लावपक्षिणि । रा.नि.व.१९ ।

**लावाचकः** । पुं । व्रीहिधान्यभेदे । व्रीहिहीनगुणः । सु.सू.४६ष. । [श.र. ।

**लावुः (वूः)** । पुं, स्त्री । अलाब्वाम् । लाउ ।

**लासः** । पुं । यूषे । झोल । श.च. ।

**लासकः** । पुं । मयूरे । मे. ।

**लास्फोटनी** । स्त्री । आस्फोटन्यां । वेधनिकायां । भ.टी.रा. ।

**लाहा** । स्त्री । पेचके । वै.निघ. ।

**लाक्षा** । स्त्री । (Coccus lacca.) Lac. स्वनामप्रसिद्धरञ्जकद्रव्ये । लाहा, गाला । हिं लाही । मं लाख । कं अरगु । तें लक्क, लक्क । भ, द.वि.ज्व.चि.षट्कतैले । "लाक्षानिशालोहितयष्टिकाभिः ।". गुणाः— तिक्ता कषाया श्लेष्मपित्तघ्नी विषघ्नी रक्तघ्नी विषमज्वरघ्नी च । रा.नि.व.६ । "लाक्षा च नूतना ग्राह्या मृत्तिकादिविवर्जिता ।" भैष. ।

**लाक्षातरुः** । पुं । पलाशवृक्षे । श.मा. ।

**लाक्षादितैलम्** । क्ली । बालरोगाधिकारे तैलम् । पाठः—"लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणं । रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुतैः । शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः । बालानां ज्वररक्षोघ्नमभ्यङ्गात् बलवर्णकृत् ॥" महालाक्षादितैलं यथा —"लाक्षारसाढके प्रस्थं तैलस्य विपचेद्भिषक् । मस्त्वाढकसमायुक्तं पिष्ट्वा चात्र समावपेत् । शतपुष्पां हरिद्राञ्च मूर्वां कुष्ठं हरेणुकां । कटुकां मधुकं रास्नामश्वगन्धाञ्च दारु च । मुस्तकं चन्दनञ्चैव पृथगक्षसमानकैः । द्रव्यैस्तैलं तत्सिद्धम् अभ्यङ्गान्मारुतापहम् । विषमाख्यान् ज्वरान्सर्वान्नाशु प्रशमं नयेत् ......॥" अत्र दोलायन्त्रविधानात् षड्गुणजलेन लाक्षामेकविंशतिवारान् परिस्राव्य लाक्षारसो ग्राह्यः । कुट्टितलाक्षा ३ श. वारि १८ श. २१ वारान् दोलायन्त्रे परिस्राव्य १६ श. ग्राह्यम् । अथवा लाक्षा ८ श. वारि ६४ श. पक्वाशे. १६ श. ग्राह्यम् । तिलतैलं ४ श. लाक्षारसः क्वाथो वा १६ श. दधिमस्तु १६ श. । कल्कार्थं— शुलुफा हरिद्रा मूर्वामूलं कुष्ठं रेणुकं कटुकी यष्टिमधु रास्ना अश्वगन्धा देवदारु मुस्तं रक्तचन्दनं प्र. २ तो. पाके सिद्धे कर्पूरं शिलारसः नखी प्र. २ तो. तैले मिश्रयेत् । रस.र. ।

**लाक्षादिवर्गः** । पुं । लाक्षारेवतकुटजाश्वमारकटफलहरिद्राद्वयनिम्बसप्तच्छदमालत्यः त्रायमाणा चेति । सु.सू.३८ष. ।

**लाक्षापुष्पा** । स्त्री । शतपत्राम्, गुलाब इति ख्यातपुष्पवृक्षे । भा. । [लोध । अम. ।

**लाक्षाप्रसादः** । पुं । पट्टिकारोध्रे । श्वेत

**लाक्षाप्रसादनः** । पुं । रक्तलोध्रे । अम. ।

**लाक्षारसः** । पुं । लाक्षाजले क्वाथे वा । लाहार रस । सि.यो.यक्ष्म.चि.चन्दनादितैले । तत्साधनविधिः—"षड्गुणेनाम्भसा लाक्षा दोलायन्त्रे स्रु

पस्थिता। त्रिसप्तधा परिस्रावा लाचारसमिमं विदुः॥" प.प्र.२ख.।

**लाक्षावृक्षः**। पुं। कोशाम्रवृक्षे। कुसुमपाइ। रा.नि.व.११। पलाशवृक्षे। हारा.।

**लिकुचम्**। क्ली। चुक्रे। চুকাপালঙ্। रा.नि.व.७। क्षुद्रपनसे। তেলো। वै.निघ.। पुं। लकुचवृक्षे। ডেলো গাছ, মান্দার গাছ। र.मा.। रा.नि.व.९।

**लिक्षा (ख्या)**। स्त्री। केशकीटभेदे। निकि। श.र.। सूर्य्यकिरणान्तर्गतसूक्ष्मरजश्चतुष्टयमाने। प.प्र,।

**लिङ्गम्**। क्ली। शिश्ने। रा.नि.व.१८। चिह्ने। अम.। लक्षणे। रोगव्यापकहेतौ। "संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः।" मा.नि.।

**लिङ्गकः**। पुं। कपित्थवृक्षे। श.च.। [व.३।

**लिङ्गजा**। स्त्री। लिङ्गिनीलतायाम्। रा.नि.

**लिङ्गनाशः**। पुं। लिङ्गम् इन्द्रियशक्तिं दृष्टिं नाशयति। नीलिकाकाचापरनामके नेत्ररोगविशेषे। काचे उपेक्षिते तृतीयं चतुर्थं पटलं वा गते लिङ्गनाशो जायते। তিমির, ছানি। छिं नञ्ला। स वातजादिभेदेन षट्। ते च पुनर्वर्णभेदेन पठिति द्वादशधा। लक्षणं—"स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः। वातेन चापि रूपाणि भ्रमन्तीव च पश्यति। आविलान्यरुणाभानि व्याविद्धानीव मानवः॥" मा.नि.। "तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः। लिङ्गनाशं मलः कुर्व्वन् छादयेद्दृष्टिमण्डलम्॥" तत्र वातेन यथा—"सपटारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनां। स लिङ्गनाशः...... ॥" पित्तजे यथा—"भृङ्गनीला निरालोका दृक्स्निग्धा लिङ्गनाशतः।" कफजे यथा—"लिङ्गनाशे तु लक्ष्यते........। मूर्त्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः। बिन्दुर्जलस्येव चलः पद्मिनीपुटसंस्थितः। उष्णे सङ्कोचमायाति छायायां परिसर्पति। शङ्खकुन्देन्दुकुमुदस्फटिकोपमशुक्लिमा॥" रक्तजे यथा—"लिङ्गनाशेन ताहृग्दृक् निष्प्रभा हतदर्शना।" सन्निपातजे यथा—"संसर्गे सन्निपातेषु विद्यात्सङ्कीर्णलक्षणान्।" कफजं विना लिङ्गनाशान् असाध्यान् विदुः। वा.उ.१२ष.।

**लिङ्गरोगः**। पुं। उपदंशे। भा.।

**लिङ्गवर्त्तिः**, **लिङ्गार्शः** } क्ली। शुकरोगविशेषे। लक्षणं—"अङ्कुरैरिव सञ्जातैरुपर्य्युपरि संस्थितैः। क्रमेण जायते वर्त्तिः ताम्रचूडशिखोपमा। मेढ्रसन्धौ नृणां केचित् केचित् सर्व्वाश्रयाः स्मृताः। रुजादाहार्शिबहुलास्तथातोदसमन्विताः। स्त्रीणां पुंसाश्च जायन्ते ह्युपदंशाः सुदारुणाः॥" मा.नि.।

**लिङ्गवर्द्धनः**। पुं। कपित्थवृक्षे। श.च.।

**लिङ्गवर्द्धिनी**। स्त्री। अपामार्गवृक्षे। আপাঙ্। श.च.।

**लिङ्गसम्भवा (भूता)**। स्त्री। लिङ्गिनीलतायां। रा.नि.व.३।

**लिङ्गालिका**। स्त्री। क्षुद्रमूषके। हारा.।

**लिङ्गिनी (ङ्गी)**। स्त्री। स्वनामख्यातायां लतायां। পঞ্চগুড়িয়া। শিবলিঙ্গিনী। गणाः—कटुः उष्णा दुर्गन्धा रसायनी च। रा.नि.व.३।

**लिप्तः**। त्रि। विषलिप्ते। विगनाशी। मे.।

**लिप्तास्यता**। स्त्री। मुखस्य श्लेष्मलिप्ततायां। মুখ চট্‌চট্‌ করা। मा.नि.।

**लिम्पाकः**। पुं। (Citrus acida.) जम्बीरवृक्षविशेषे। পাতিলেবুর গাছ। करुणालिम्पाकगुणाः—"करुणं कफवातास्रमेदोघ्नं पित्तकोपनम्।" राज.३प.।

**लि(ली)क्षा**। स्त्री। लिक्ष्यायाम्। লিখি। अम.शर.। परिमाणभेदे, सर्षपषष्टांशे। श.च.।

**लीका**। स्त्री। ह्रस्वमूषिकमार्य्यां। ছোট ইন্দুরগাছী। वै.निघ.।

**लीलाविलासरसः**। पुं। अम्लपित्ताधिकारे रसः। पाठः—"रसो बलिवशोऽम रविश्च लौहं धात्रचक्षनीरैस्त्रिदिनं विमर्द्य। तदल्पशुद्धं मृदुमार्कवेण सम्मर्द्दयेदस्य च वल्लयुग्मं। हन्त्यम्लपित्तं मधुनावलीढं... ॥" र.सा.सं.। [ ] वै.निघ.।

**लुङ्गः**। पुं। मातुलुङ्गवृक्षे। ছোলঙ্গ লেবুর

**लुङ्गमांसम्**। क्ली। मातुलुङ्गमांसे। वै.निघ.।

**लुङ्गाम्लम्**। क्ली। मातुलुङ्गाम्ले। र.सा.स.अम्लवर्गे।

**लुङ्गुषः** । पुं । मातुलुङ्गवृक्षे । ছোলঙ্গ লেবুর গাছ । र.मा. । [म.च. ।

**लुण्टकः** । पुं । शाकविशेषे । নটিয়া শাক ।

**लुण्ठनम्** । क्ली । लुठने । লোটা । श.र. ।

**लुण्ठाकः** । पुं । काके । त्रिका. ।

**लुण्डिका** । स्त्री । लोमादिगोलके । लूटी । "मेषलोमलुण्डिकया ।" भैष. । [वै.निघ. ।

**लुब्धकः** । पुं । चोरनामगन्धद्रव्ये । গেঁঠেলা ।

**लुलापः (यः)** । पुं । महिषे । प.मु. ।

**लुलाप(य)कन्दः** । पुं । महिषकन्दे । शूक्राली । रा.नि.व.७ । [नि.व.१६ ।

**लुलाप(य)कान्ता** । स्त्री । महिष्याम् । रा.

**लूता** । स्त्री । नाड़ीव्रणरोगे । रा.नि.व.२० । ऊर्णनाभौ । মাকড়শা । ইং মাকড়ী । एषा विषात्मिका भवति कीटेभ्यश्च घोरा । "कीटेभ्यो दारुणतरा लूताः षोड़श ता जगुः ।" निरुक्तिः —"यस्माल्लूनं तृणम्प्राप्ता मुनेः प्रस्वेदबिन्दवः । तस्माल्लूताः प्रभाष्यन्ते संख्यया ताश्च षोड़श ॥" सु.कल्प.८अ. । "अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः । सहस्ररश्म्यनुचरा वदन्त्यन्ये सहस्रशः । बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥ रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसङ्करात् । कृच्छ्रसाध्या पृथग्दोषैरसाध्या त्रिचयेन सा ॥" दंशलक्षणं — "लूतादंशश्च सर्व्वोऽपि दद्रुमण्डलसन्निभः । सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरुन्नतः । मध्ये कृष्णोऽथवा श्यावः पर्य्यन्ते जालकावृतः । विसर्पवान् शोफयुतस्तप्यते बहुवेदनः । ज्वराशुपाकी विक्लेदकोथावदरणान्वितः । क्लेदेन यस्य शल्यन्तु तत्रापि कुरुते व्रणम् । श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्त्तवैः । अष्टाभिरुद्वमन्त्येषा विषं वक्रैर्विशेषतः । लूता नाभेर्दशत्यूर्द्धम् ऊर्द्ध्वं वाधश्च कीटकाः ॥" लूतादंशः दिनार्द्धे नैव लक्ष्यते । प्रथमे दिने सूच्यौव्यधनवत्, द्वितीये उन्नतं पिड़काचितं, तृतीये पुलकरक्तमण्डलातिवेदनारोमकूपस्रावश्च, चतुर्थे महाशोफतापः, पञ्चमे विषकोपजविकारः, षष्ठे मर्म्मव्याप्तिः, सप्तमे च दिने नाशः । चिकित्सा—दंशोद्धारदाहादिकं कार्य्यम् । अगदाश्च पद्मक-मन्दर गन्धमादनादयो हिताः । वा.उ.३७अ. । तदुत्पत्त्यादि —"विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् । वसिष्ठं कोपयामास गत्वाश्रमपदं किल । कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः । अपतन् दर्शनादेव भवस्तान्नीष्णवर्षसः । लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च । ततो जातास्त्विमे घोरा नानारूपा महाविषाः । अपकाराय वर्त्तन्ते नृपसाधनवाहने । कृच्छ्रसाध्यास्तथासाध्या लूतास्तु द्विविधाः स्मृताः । तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु । त्रिमण्डला तथा श्वेता कपिला पीतिका तथा । आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता । ताभिर्दष्टे शिरोदुःखं कण्डुर्दंशे च वेदना । भवन्ति च विशेषेण गदा श्लैष्मिकवातिकाः । सौवर्णिका लाजवर्णा जालिनी एणीपदी तथा । कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृताः । ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च । ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः । पिड़का विविधाकाराः मण्डलानि महान्ति च । शोफा महान्तो मृदवः रक्ताः श्यावाश्चलास्तथा ॥" सु.कल्प.८अ. । [व.४ ।

**लूतारिः** । पुं । वृश्चिकायां । থিকুই । रा.नि.

**लूतिका** । स्त्री । लूतायां । মাকড়শা । श.र. ।

**लूनः** । त्रि । छिन्ने । अम. ।

**लूनम्** । क्ली । लाङ्गूले । अम. ।

**लूनविषः** । पुं । पुच्छदंशकप्राणिमात्रे, वृश्चिकादौ । हे.च. ।

**लेखः** । पुं । तालपत्रे । प.मु.

**लेखनम्** । क्ली । कार्श्ये । হরেকম্ । लेखनौषधे अनिलानलभूयिष्ठे द्रव्ये । सु. । भूर्ज्जत्वचि । तालपत्रे । मे. । दूषवर्म्मदारणे । तन्नामकाञ्जने । "लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमुच्यते ।" तोड. । भा. । पुं । कासतृणे । কেশে । रा.नि.व.८ । तन्नामकनिरूहवस्तौ । "त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः । ऊषकादिप्रतीवापैर्वस्तयो लेखनाः स्मृताः ॥" भा. । त्रि । वान्तिकरे । मे. ।

**लेखनाञ्जनम्** । क्ली । कषायाम्लकटुद्रव्यैरञ्जने । च.द. ।

**लेखनामकम्** । क्ली । कतकबीजे । वै.निघ. ।

**लेखनी** । स्त्री । खटिकायां । খড়িমাটি ।

काशतृणे । वै.निघ.। वर्त्तिविशेषे, चन्द्रोदयवर्त्तौ । शङ्खनाभिमनःशिलापथ्याविभीतकमज्जापिप्पलीमरिचवचाकुष्ठचेति द्रवैः छागदुग्धेन वर्त्तिः । सा. कौ. ।

**लेखनीयवर्गः** । पुं । चरकोक्ततृतीयदशके । यथा—"मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रकचिरविल्वहैमवत्यः ।" इति दशेमानि लेखनीयानि भवन्ति । चिरविल्वः करञ्जः । हैमवती शुक्लवचा । च.सू.४अ. । [भा. ।

**लेख(ख्य)पत्रः** । पुं । तालवृक्षे । भूर्ज्जवृक्षे ।

**लेखशा(सा)टः (कः)** । पुं । शेलुवृक्षे । वै. निघ. ।

**लेखार्हः** । पुं । तालवृक्षभेदे, शीताल इति कोङ्कणे प्रसिद्धे । শীতাল, তেড়েট্ । रा.नि.व.९।

**लेख्यः** । पुं । शीतालवृक्षे । रोहिण्यादिरोगे । सु.नि.५अ. । त्रि । लेखनीये, लेखनार्हे ।

**लेगडम्** । क्ली । खड्डायां । ন্যাড় । भूरिप्र. ।

**लेनीतकः** । पुं । औत्तरापथिकपाषाणभेदे । सि.यो.कर्द्दि.चि. ।

**लेपः (नम्)** । पुं, क्ली । सुधायां । চূণ । विश्व. । भोजने । चन्दनादिद्रव्यमर्द्दने । গায়ে লেপা । लेपस्त्रिविधः—दोषघ्नो विषहा वर्ण्यश्चेति । पुनश्च तस्य द्वौ भेदौ आलेपः प्रदेहश्चेति । तयोरालेपः पित्तघ्नः आर्द्रमाहिषचर्म्मवच्छीतलः तनुर्विशोषी च । द्वितीयः वातश्लेष्मघ्न आर्द्रः घनउष्णश्चेति । प्रलेपनिषेधो रात्रौ केवलं व्रणे पथ्यः । शुष्यमाणश्च तं न धारयेदिति । तदुक्तं—"दोषघ्नो विषहा वर्ण्यो लेपस्त्वेवं त्रिधा मतः। द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ॥ तमसा पिहितो ह्युष्मा रोमकूपेषु संस्थितः । विना लेपेन निर्याति रात्रौ नालेपयेदतः ॥" गुणाः—"सुशीतो लेपसंज्ञः स्यादुष्णः प्रोक्तः प्रदेहकः । प्रलेपः शीतलः प्रोक्तः रक्तपित्तहरः परः ॥ प्रदेहः कफवातघ्नः पाचनः परिकीर्त्तितः । यदार्द्रं माहिषञ्चर्म्म तस्योत्सेधेन लेपनं ॥ लोमाभिमुखमादेयौ प्रलेपाख्यप्रदेहकौ । अङ्गुष्ठस्य चतुर्भागो मुखलेपो विधीयते ॥ न रात्रौ लेपनं दद्यात् दत्तं निष्पतितं तथा । न च पर्य्युषितं चापि शुष्यमाणं न धारयेत् । न चापि मुखमालिम्पेत् तेन दोषः प्रसिध्यते ॥" सु. । "अपाकि शोथे विषमे गम्भीरे कफवातुना । संयुक्तरक्ते विहितो रात्रौ लेपश्च निन्दितम् ॥ षड्भागाः पैत्तिके स्नेहाः चतुर्भागाश्च वातिके । अष्टभागास्तु कफजे स्नेहमात्राः प्रदापयेत् ॥" डल्लणः । अथ कृष्णात्रेयः । "षोडशांशं षडंशञ्च चतुर्थांशं प्रदापयेत् । लेपप्रदेहयोः चौद्रं विपरीतं त्वपेक्षितम् । विकारतत्त्वप्रकृतिप्रमाणे सैन्धवादिके । उपनाहो मतस्तस्मात् यस्मादुपरि बध्यते ॥ स्नेहाम्ललवणं तत्र व्यक्तं कृत्वा विनिक्षिपेत् । विषदोषहराबाधौ तयोरर्थे विधिस्त्वयम् ॥ यस्तु बध्यो न तस्यैषा इति वृद्धपरम्परा ॥" अथ शिरोलेपविधिः—"उक्तानुक्तेषु लेपेषु संवेष्ट्यैरण्डपत्रकैः । कुर्य्याद्रात्रौ दिवास्नानं युक्तिरेषा प्रशस्यते ॥" इति लेपविधिः । चन्दनलेपगुणाः—"चन्दनं शीतलं तिक्तं तृष्णादाहास्रपित्तजित् ।" अगुरुलेपगुणाः—"अगुरु व्रणजित्तिक्तङ्कटूष्णं कफवातजित् ।" कुङ्कुमलेपगुणाः—"कुङ्कुमम्भदि वैवर्ण्यकण्डूवातकफापहम् ।" कस्तूरीलेपगुणाः—"कस्तूरी कर्द्ददौर्गन्ध्यरक्तपित्तज्वरापहा ।" लताकस्तूरीलेपगुणाः—"लताकस्तूरिका हृद्या शीता तिक्तास्यरोगनुत् ।" तेजपत्रलेपगुणाः—"पत्रकङ्कफवातार्शोहृल्लासारोचकापहम् ।" कक्कोलादिलेपगुणाः—"कक्कोलः कटुको हृद्यः सुगन्धिः कफवातजित् ।" शट्यादिलेपगुणाः—"शटी वातकफश्वासकासज्वरविनाशिनी ।" "उशीरं स्वेददौर्गन्ध्यदाहपित्तास्ररोगजित् । रक्तपित्तहरं वर्ण्यं चक्षुष्यं रक्तचन्दनम् । श्रीवासः सरलं पूतिः कुन्दुरुर्ग्रन्थिपर्णकं । सिह्लकः परमा मांसीदेवदारुसुरानखं । सर्व्वेऽमी परमा लक्ष्मी रक्षोघ्ना ज्वरनाशनाः ॥" राज.२प. । [१२ ।

**लेपनः** । पुं । सिह्लके । শিলারস । रा.नि.व.

**लेलिहः** । पुं । कृमौ । पुरीषजकृमिविशेषे । च.वि.७अ. ।

**लेलीनः (कः)** । पुं । गन्धके । वै.निघ. ।

**लेहः (नम्)** । पुं, क्ली । आस्वादने । চাটা । रा.नि.व.२० । हे.च. । भोजने । अवलेहे । प.प्र. १ख. । लेहपाकविधिः—"लेहे यत्रास्ति यो भागो निर्द्दिष्टो द्रवकल्कयोः । तत्रापि पादिकः कल्कः द्रवात् कार्य्यो विजानता ॥ तुलाद्रवं जलद्रोणे

द्वौ द्रवेर तु सा मता ॥ द्वैधी गुड़: सिता वापि इति सर्व्वत्र निश्चितम् । अवलिह्य लिह्य तस्य मानं पलद्वयम् ॥ सुखमर्द्य: सुखस्पर्शी गन्धवर्णर-सान्वित: । पीड़ितो भजते लेहं लेह: पाकमुपागत: ॥" वा. । [हि.च. ।

**लेहिन: ।** पुं । टङ्गणक्षारे । সোহাগার খৈ ।

**लेही ।** स्त्री । कर्णपालीरोगे । निदा. ।

**लेह्यम् ।** क्ली । अष्टविधान्नान्यतमान्ने । रा.नि.व. २० । अमृते । श.मा. । त्रि । लेहनयोग्ये ।

**लैङ्गिकी ।** स्त्री । वमनविरेचनयो: औषधविशेषे । च.द.वमनाधिकारे ।

**लैङ्गी ।** स्त्री । लिङ्गिनीलतायाम् । रा.नि.व.३ ।

**लोक: ।** पुं । प्रसिद्ध:, स द्विविध: स्थावरो जङ्गमश्च । "द्विविधात्मक एवाग्नेय: सौम्यश्च पञ्चात्मको वा" इति । सु.सू.१अ. । [व.५ ।

**लोककान्ता ।** स्त्री । ऋद्धिनामौषधे । रा.नि.

**लोकतुषार: ।** पुं । कर्पूरे । रा.नि.व.१२ ।

**लोकनाथ: ।** पुं । पारदे । वै.निघ. ।

**लोकसंज्ञा (ज्ञिका) ।** स्त्री । कन्दगुडूच्यां । रा.नि.व.३ ।

**लोकस्कन्द: ।** पुं । तमालत्वचे । वै.निघ. ।

**लोकहिता ।** स्त्री । तुत्थाञ्जने । कुलत्थायाम् । वनमान्दरा । रा.नि.व.५ ।

**लोकेश: ।** पुं । पारदे । रा.नि.व.१३ ।

**लोचक: ।** पुं । नेत्रकनीनिकायां । कज्जले । कदल्यां । भ्रुव: शिथिलचर्म्मणि । मे. । मांसलड्डुके । बदरीवृक्षे । नीलवस्त्रे । निर्म्मितौ । त्रिका. । अहिनिर्मोके । श.र. ।

**लोचकर्कट: ।** पुं । लोचमस्तके । अ.टी.स्वा. ।

**लोचनम् ।** क्ली । नेत्रे । रा.नि.व.१८ । जीरके । वै.निघ. । गवाक्षे । वा.उ.३८अ. ।

**लोचनहिता ।** स्त्री । कुलत्थाञ्जने । रा.नि. व.१३ ।

**लोच(भ)ना (नी,या) ।** स्त्री । महाश्रावणिकायां । মুণ্ডীরী । रा.नि.व.५ ।

**लोचनामय: ।** पुं । नेत्ररोगे । त्रिका. ।

**लोचमर्कट: ।** पुं । मयूरशिखायाम् । कुक्कुटी । अ.टी.स्वा. । [मयूरशिखायां । अम. ।

**लोचमस्तक: ।** पुं । अजमोदायां । भा. ।

**लोचशिर: ।** क्ली । अजमोदायां । वै.निघ. ।

**लोचिका ।** स्त्री । लुचीति ख्याते खाद्यद्रव्ये । লুচি । पाकराजेश्वर: । [लः । वै.निघ. ।

**लोटा (टिका) ।** स्त्री । चुक्रायां । চুকাপালং ।

**लोठनम् ।** क्ली । इतस्ततश्चालने । চালা । লোটা । मा.नि. ।

**लोड़ा (णा) ।** स्त्री । चाङ्गेर्याम् । আমরুল শাক । लोणिकाद्वये । ছোট নুনী বড় নুনী শাক । रा.नि.व.५ । क्षुद्रलोणिकायाम् । भा. ।

**लोणकम् ।** क्ली । लवणे । वै.निघ. ।

**लोणत्वणम् ।** क्ली । लवणतृणे । रा.नि.व.८ ।

**लोणाम्ला ।** स्त्री । क्षुद्राम्लिकायाम् । ক্ষুদে নুনী । रा.नि.व.५ ।

**लोणारम् ।** क्ली । लवणक्षारे । लोणार खार इति दाक्षिणात्ये प्रसिद्धम् । লোণার ক্ষার । गुणा: — अत्युष्णं तीक्ष्णं पित्तवृद्धिकरं वातगुल्मघ्नं शूलघ्नम् ईषल्लवणञ्च । रा.नि.व.६ ।

**लोणिका ।** स्त्री । लोणीशाके । ক্ষুদে নুনী, বন নুনী । प.मु. । चाङ्गेर्यां । আমরুল । भा.पू. २भ. । चुक्रायां । চুকাপালং । वै.निघ. ।

**लोणी ।** स्त्री । (Portulaca quadrifida. Syn. Meridiana or Oleracea.) Indian Purslane. पत्रशाकभेदे । বড় বা বন নুনী, ক্ষুদে নুনী । हिं लुनियाशाक वा लुणिया, खुरफा । तै पइलकुर । बम्. कुर्फा । ता. कोरिलकोरइ । सा द्विधा क्षुद्रा बृहती च । तयो: क्षुद्रा रूक्षा गुरु: वातश्लेष्महरी अर्शोघ्नी दीपनी अम्ला मन्दाग्निहरी च । बृहती अम्ला सरा उष्णा वातकृत् कफपित्तघ्नी वाग्दोषघ्नी व्रणघ्नी गुल्मघ्नी श्वासकासप्रमेहघ्नी शोथे नेत्ररोगे च हिता । भा.पू.१भ.शा.व. ।

**लोत: (त्रम्) ।** पुं, क्ली । लवणे । नेत्रजले । त्रिका. । चिह्ने । उणा. ।

**लोध: (ध्र:,क:) ।** पुं । (Symplocos

racemosa.) स्वनामख्यातवृक्षे । লোধ গাছ, লোধ কাষ্ঠ । हिं लोध । तैं तेल्ललोद्दुगचेट्टु । गुर्ज. लोदर । सु.सू.३७अ.लोध्रादि: । च.द.ज्व.चि.लोध्रादि: । "लोध्रोत्पलामृतापद्म ।" स द्विविध: वल्कसामान्यभेदात् । तत्र विशिष्टो वल्करोध्र इति । रा.नि.व.६ । सा. गुणा:—रोध्रद्वयं कषायं शीतलं वातकफरक्तघ्नं चक्षुष्यं विषघ्नञ्च । "रोध्रो ग्राही लघु: शीतश्चक्षुष्य: कफपित्तनुत् । कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत् ॥" भा.।

**लोध्रपुष्प:** । पुं । मधूकवृक्षे । মউল গাছ । वै.निघ. । [१भ.धा.व. ।

**लोध्रपुष्पक:** । पुं । शालिधान्यविशेषे । भा.पू.

**लोध्रपुष्पिणी** । स्त्री । क्षुद्रधातक्यां । क्षुद्र धाই फুল । वै.निघ. ।

**लोध्रवलम्** । क्ली । तन्नामके चक्रपाणिदत्तस्य कुले । त्रि (लो । तत्कुलसम्भूते । च.द. ।

**लोध्रवृक्ष:** । पुं । मधूकवृक्षे । रोध्रवृक्षे । वै.निघ. ।

**लोध्रादि:** । पुं । पित्तज्वरघ्नकषाये । च.द.पि.ज्व.चि । "लोध्रोत्पलामृतापद्मशारिवाणां समकर: । क्वाथ: पित्तज्वरं हन्यात् ।"

**लोपाक:** । पुं । शृगालभेदे । स लाङ्गलकशृगाल इत्युच्यते । लोमाश इति लोके । খ্যাঁকশিয়াল । सु.चि.८अ. । अयं विलेशयगुण: ।

**लोपाकि(शि)का** । स्त्री । धूर्तशृगालिकायाम् । খ্যাঁকশিয়ালী । श.मा. । हारा. ।

**लोपाशक:** । पुं । शृगाले । খ্যাঁকশিয়াল । हारा. ।

**लोभनम्** । क्ली । मांसे । वै.निघ. ।

**लोभ्य:** । पुं । हरिताले । वै.निघ. । शिम्बीधान्यभेदे, मुद्गे । मुग । है.च. ।

**लोमम्** । क्ली । लाङ्गूले । লেজ । जटा. ।

**लोम** (न्) । क्ली । केशे । रोम्णि । রোঁওয়া । अम. । तदुक्तं —"अस्य मलानि लोमानि असंख्यानि भवन्ति हि ।" भा. । [नि.व.१२ ।

**लोमकरणी** । स्त्री । मांसरोहिणीभेदे । रा.

**लोमकर्कटी** । स्त्री । अजमोदायां । वै.निघ. ।

**लोमकर्ण:** । पुं । शशके । খরগোস । है.च. ।

**लोमकूप:** । पुं । त्वक्रन्ध्रे । "सन्ति यावन्ति रोमाणि तावन्तो लोमकूपका: ।" भा. ।

**रोमघ्नम्** । क्ली । इन्द्रलुप्तरोगे । টাকপোকা । त्रि । लोमपातने । निदा. ।

**लोमद्वीप:** । पुं । शोणितजक्रिमिभेदे । रक्तजक्रिमि । च.वि.७अ. । [नि.व.११ ।

**लोमफलम्** । क्ली । भव्यफले । চালতা । रा.

**लोमविध्वंस:** । पुं । क्रमौ । কৃমি । वै.निघ. ।

**लोमविष:** । पुं । व्याघ्रादौ । है.च. ।

**लोमश:** । पुं । मध्वालौ । মউ আলু । धातुकाशीषे । "काशीषे तमालपत्रे वा ।" च.द. । मेषे । त्रिका. । कोकड़नामविलेशयमृगे । रा.नि.व.१९ ।

**लोमशकर्ण:** । पुं । शशके । শশক । सु.सू.४६अ. । [কুড় গাছ । रा.नि.व.७ ।

**लोमशकाण्डा** । स्त्री । कर्कटिकायां । को-

**लोमशच्छद:** । पुं । देवताडवृक्षे । দেয়াতাড় । प.मु. । पीतदेवदाल्याम् । त्रिका. ।

**लोमशपत्रा (त्रिका)** । स्त्री । पीतदेवदाल्याम् । वै.निघ. । [पी । प.मु. ।

**लोमशपर्णिनी** । स्त्री । माषपर्ण्याम् । মাষা-

**लोमशपुष्पक:** । पुं । शिरीषवृक्षे । रा.नि.व.९ ।

**लोमशमार्जार:** । पुं । गन्धमार्जारे । গন্ধগকুল । तन्मुष्कगुणा:—कफवातघ्न: चक्षुष्य: सुगन्धि: वीर्य्यकर: कण्ठकोठघ्नश्च । रा.नि.व.१९ ।

**लोमशा** । स्त्री । गन्धमांस्यां, सुगन्धजटामांस्यां । গন্ধমাংসী, সুগন্ধ জটামাংসী । रा.नि.व.१२ । वचायाम् । বচ । काकोल्यां । কাকোলী । रा.नि.व.२३ । मिष्यां । মউরী । च.सू.३अ. । काकजङ्घायां । शुकशिम्ब्यां । महामेदायां । मे. । शणपुष्पायाम् । एर्व्वारौ । কাঁকুড় গাছ । रा.नि.व.४।७ । अतिबलायां । विश्व: । [टी । तन्त्रम् ।

**लोमशातनम्** । त्रि । लोमनाशके हरिताला-

**लोमशी** । स्त्री । कर्कटीविशेषे । वै.निघ. ।

**लोमहृत्** । पुं । हरिताले । है.च. ।

यामकाञ्जिके । शूल.चि. । गुणा:—"वाट्यमण्डो विवधघ्न: शूलानाहविनाशन: । रोचनो दीपनो हृद्य: पित्तश्लेष्मानिलापह: ॥" राज.३प. ।

**वाट्यायनी** । स्त्री । श्वेतवाट्यालके । শ্বেত বেলেড়া । च.सू.४ष. । [र. ।

**वाट्याल:** । पुं । वाट्यालके । বেলেড়া । श.

**वाट्यालक:** । पुं । पीतपुष्पबलायां । পীত বেলেড় । भा. । बलायां । বেলেড়া । र.मा. । च.द.वा.व्या.चि. ।

**वाट्याल(लि)का** । स्त्री । लघुवाट्यालके । ছোট বেলেড়া । महाबलायाम् । বড় বেলেড়া। वै.निघ. । [र. । महाबलायाम् । वै.निघ ।

**वाट्याला (ली)** । स्त्री । लघुवाट्यालके । श.

**वाट्याह्वम्** । क्ली । पुष्करमूले । वै.निघ. ।

**वाड़वाग्निरस:** । पुं । स्थौल्याधिकारे रस । पाठ:—"शुद्धसूतं समङ्गन्धं ताम्रं तालं समं समं । अर्कक्षीरैर्दिनं मर्द्यं क्षीद्रैर्लेह्यं द्विगुञ्जकम् ॥" रस. र. ।

**वाण:** । पुं । भद्रमुञ्जे । अम. । शरतृणे । শর গাছ । रा.नि.व.८ । गोस्तने । मे । पीतझिण्ट्यां । प.मु. । शरपुङ्खायाम् । বননীল । भैष.कुष्ठ.चि. षड्बिन्दुतैले । [रा.नि.व.४ ।

**वाणपुङ्खा** । स्त्री । शरपुङ्खायां । বননীল ।

**वाणा (णी)** । स्त्री । नीलझिण्ट्यां । प.मु. । शरपुङ्खायां । বননীল । च.द.व्रण.शो.चि. ।

**वाणाह्वम्** । क्ली । नीलकमले । उत्पले । रा. नि.व.१० । स्त्री । (ह्वा) क्षुद्रशणपुष्पिकायां । क्षुद्र অতসী । रा.नि.व.४ । मुञ्जतृणे । वै.निघ. ।

**वात:** । पुं पञ्चभूतान्तर्गतचतुर्थभूते । বাতাস্ । रा.नि.व.२१ । पूर्व्वादिदिग्भववायौ । प्राचीवातादिप्रकृतिगुणा: —"शीतोऽतिमाधुर्य्यगुण: प्रयुक्तो वातप्रकोपी बलकृद्विशेषात् वाताधिकानां व्रणशोषिणाञ्च प्राचीप्रवृत्त: पवनो न शस्त: ॥ किञ्चित् सतिक्तो मधुरान्वित: स्यात् कफ: समीरोद्भवरोगकारी । सुशीतल: शोफवतां व्रणानां शस्तो न चाग्नेयसमीरणश्च॥ तिक्त: कषायो मधुरातिमन्द: सुगन्धसंशीतगुणै: प्रकृष्ट: । वदन्ति संज्ञां मलयानिलेति प्रकृष्टरामाजनचित्तहारी ॥ मनोभवस्य प्रकरो मरुत्स्यात् कफोद्भव: सम्भवति प्रचार: । न चातिशीतो न तथोष्णको वा शुभश्च याम्यप्रभव: समीर: ॥ रूक्षोष्णवातप्रशम: समीर: कटूष्णपित्तास्रजिदोषकारी । प्रशोषणो देहबलस्य वायु: कफान्वितो नैर्ऋतिक: समीर: ॥ अथातिरूक्षो मरुत: प्रशस्त: करोत्यवाच्यास्तु दिश: प्रवृत्त: । वायुस्तथोदीरति रक्तपित्तं शस्तो व्रणानां कफशोषिणां वा॥" "वायव्यजातो मरुत: प्रशस्त: कषायसंशुष्कगुणप्रसन्न: । करोति वातस्य वशं नराणां शस्तो न निन्द्यो व्रणशोषिणाञ्च॥ स्वादु: कषायश्च कफप्रकोपी वायु: कुवेरस्य दिश: प्रवृत्त: । करोति मेघागमनं जलस्य शीतो न चोष्णो न च निन्द्य एष: ॥ शीतोऽतिगौल्य: कफवातकोपम् करोति चैशानदिश: प्रवृत्त: । शस्तश्च नासौ व्रणशोफकासक्षये तथा श्वासविकारिणाञ्च ॥" अथ वस्त्रादिवातगुणा:—"वस्त्रं नानाविधं चर्म्मवैणवं तालवृन्तकं । उशीरं शिखिपिच्छन्तु प्रत्येकेन गुणोत्तमा: ॥ वस्त्रप्रवृत्ता मरुतो न शस्ता व्रणशोषिणां । रक्तवाससः उत्पन्नं विशेषेण तु वर्जयेत् ॥ करोति कफरक्तस्य कोपनं बहुरोगकृत् । श्रमग्लानिपिपासासु तन्द्रानिद्राकरी भृशम् ॥ वैणवं व्यजनं तन्द्रानिद्राकरणमेव च । रूक्षोऽतिकषायरस: स च वातप्रकोपन: ॥ कांस्यपात्रमरुदुष्ण: सोष्णो वातस्य शान्तिकृत् । दाहश्रमघ्न: स्वेदघ्नो निद्रासौख्यकरो नृणाम् ॥ तालपत्रस्य रम्भाया दलस्य व्यजनं हिमम् । मधुरातिश्रमघ्नं स्यादार्द्रत्वात् कफकोपनं । निद्राकरं प्रीतिकरं शोकरोगविकारहं । दाहपित्तश्रमग्लानिनाशनं भ्रमशान्तिकृत् ॥ उशीरमूलरचितं व्यजनं शिखिपिच्छकै: । व्यजनेन सुगन्ध: स्यात् मन्दशीतगुणात्मक: । ग्लानिमूर्च्छाभ्रमशोषविसर्पविषदर्पहा । इति पञ्चविधो वायुरुपायेन कृतो नृणाम् ॥" इति वर्षादिशवातगुणा:—"हेमन्ते पूर्व्वकृद्वायुराग्नेय: शिशिरे मरुत् । वसन्ते दक्षिणो वायुर्ग्रीष्मे नैर्ऋतकस्तथा ॥ वर्षासु पश्चिमो वायुर्वायव्य: शरदि स्मृत: । हेमन्ते शिशिरे चैव कथितश्चोत्तरोऽनिल: ॥ वर्षाऽङ्ग: परतो वदन्ति निपुणास्त्विष्टिशोषे शरत् । प्रोक्ता शैशिरिकस्ततो हिमऋतु: सूर्य्योदयादग्रत: ॥ मध्याह्ने च तथा वदन्ति निपुणा ग्रीष्म: ऋतु: प्रागतो वासन्त: कथितो ऋतुस्तु सुनिभि: पूर्व्वापराह्णे सदा ॥ कार्त्तिके मार्गशीर्षे वा

मासे चाषाढ़संज्ञके । ऋतुसन्धौ च हेमन्ते सविषः स्यात्तु मारुतः ॥" अत्रि.५अ. । वायुरोगे, वात व्याधौ । ते च शिरोग्रहादयोऽशीतिः । प्रस्पन्दनो-द्वहनपूरणविवेकधारणलक्षणशरीरस्थसञ्चालनक-धातौ ॥ स "दोषधातुमलादीनां नेता शीघ्रः समीरणः । रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघु-श्चलः ॥" भा. । "देहे विचरतस्तस्य लक्षणानि निबोध मे । दोषधात्वग्निसमतां सम्प्राप्तिं विषयेषु च । क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिलः । यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः । भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः । प्राणोदानौ समानश्च व्यानश्चापान एव च । स्था-नस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥" सु. नि.१अ. । स मतान्तरे दशविधः । तन्मते नाग-कूर्म्मकृकलदेवदत्तधनञ्जया इति अधिकाः पञ्च प्राणादयश्च पञ्च इति दश वायवः । नागादयः प्राणादीनां संज्ञान्तरमिति सुखबोधः । तेषु प्राणः हृदयान्तरस्थ ऊर्द्धं गमनशीलः, रूक्षः, अन्नप्रवेश-कश्च । अपानो गुदादिमध्यस्थः, अधोगमनशीलः, मलमूत्रोत्सारकः, लघुश्च । समानो नाभिमण्डल-स्थः, रसधातुसञ्चालकः, अन्नस्य पाचकः, शीतल-श्च । उदानः कण्ठस्थानः, ऊर्द्धमुत्क्रमणशीलः, वाक्प्रवर्त्तकः, खरश्च । व्यानः सर्व्वशरीरव्यापी, निमेषादिप्रवर्त्तकः, सूक्ष्मश्च । नाग उद्गारप्रवर्त्त-कः । कूर्म्मः नेत्रोन्मीलनकः । कृकलः क्षुधाजन-कः । देवदत्तो जृम्भाप्रवर्त्तकः । धनञ्जयः सर्व्वश-रीरव्यापी । भा. । शिष्टं वातप्रकोपादि प्रकोप-शब्दे मृग्यम् ।

**वातकः ।** पुं । अश्मन्तपर्णीवृक्षे । বিজসার । গোকর্ণীম্ । অপরাজিতা । अम. ।

**वातकण्टकः ।** पुं । वातव्याधिविशेषे । लक्ष-णं — "रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते य-दा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥" मा.नि. । "रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्ट-के । पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव च ॥" सु.नि.१अ. ।

**वातकफज्वरः ।** पुं । वायुश्लेष्मजन्यज्वरे । ल-क्षणं — "स्तैमित्यं पर्व्वणां भेदः निद्रागौरवमेव च । शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनं । स न्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥" मा.नि. ।

**वातकर्म्म (न्) ।** क्ली । अपानवायुनिःसरणे । पर्द्दने । वराहपु. ।

**वातकासः ।** पुं । वायुजन्यकासरोगे ।

**वातकी ।** स्त्री । शेफालिकावृक्षे । रा.नि.व.४। पुं (न्) । वातरोगिणि । अम. ।

**वातकुण्डलिका ।** स्त्री। मूत्राघातरोगे । नि-दानादि — "रौक्ष्याद्वेगविघाताद्वा वायुर्बस्तौ सवे-दनः । मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः । मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्त्तते । वातकुण्ड-लिकां तां तु व्याधिं विद्यात्सुदारुणम् ॥" मा.नि.।

**वातकुम्भः ।** पुं । करिगण्डाधोभागे । हे.च. ।

**वातकेतुः ।** पुं । धूल्यां । धूला । त्रिका. ।

**वातगजाङ्कुशः ।** पुं । वातव्याधौ रसः । पाठः — "मृताभ्रतीक्ष्णताम्रञ्च सूततालकगन्धकम् । भार्गीं शुण्ठीं बलां धान्यं कट्फलं चाभयां वि-षम् । मर्द्दयेच्च चपलाद्रावैः निष्कैकां भक्षयेद्वटीम्··· ··· ॥" रस.र. । अन्यच्च — "मृताभ्रतीक्ष्णकान्तञ्च ताम्रतालकगन्धकम् ।" अन्यच्च यथा — "मृतं सूतं मृतं लौहं गन्धं तालकमाक्षिकं । पथ्या शृङ्गी विषं व्योषमग्निमन्थञ्च टङ्कणं । तुल्यं खल्ले दिनं मर्द्दं मुण्डीनिर्गुण्डिजद्रवैः । द्विगुञ्जां वटिकां खा-देत् ॥" रस.कौ. ।

**वातगण्डः ।** पुं । वातजगलगण्डरोगे । निदा. ।

**वातगुल्मः ।** पुं । वातुले । त्रिका. । वायुजन्य गुल्मरोगे । निदा. । See वायुगुल्मः ।

**वातघ्नः ।** त्रि । वातघ्ने मधुराम्ललवणद्रव्य-मात्रे उष्णस्निग्धत्वात् । सु.सू.४२अ. ।

**वातघ्नी ।** स्त्री । शालपर्ण्यां । अश्वगन्धायां शिगुड़ीक्षुपे । रा.नि.व.४ । [स्वादिगणे

**वातङ्गिनी ।** स्त्री । वार्त्ताक्याम् । सु.भद्रा

**वातचटकः ।** पुं । तित्तिरपक्षिणि ।

**वातजः ।** त्रि । वातिके । रा.नि.व.२० ।

**वातनाड़ी ।** स्त्री । दन्तमूलगतरोगे । लक्षण — "तत्रानिलात् परुषसूक्ष्ममुखी सशूला फेनानु-विद्धमधिकं स्रवति क्षपासु ।" मा.नि. ।

**वातपर्य्ययः ।** पुं । सर्व्वगताक्षिरोगविशेषे लक्षणं — "वारंवारञ्च पर्य्येति भ्रुवौ नेत्रे च मा

त:। रुजश्च विविधास्तीव्रा: स ज्ञेय:...... ॥" मा.नि.। [शू.।

**वातपाण्डु:** । पुं । वायुजन्यपाण्डौ । वाउपा-

**वातपित्तघ्न:** । त्रि । वातपित्तनाशके गुरुपा कद्रव्यमात्रे । सु.सू.४१अ.।

**वातपित्तजशूलम्** । क्ली । वातपित्तजन्यशू-लरोगे । तस्यौषधं मातुलुङ्गरस: गुड़ाज्ययुक्त: । वै.जीवनम्।

**वातपित्तज्वर:** । पुं । वातपित्तप्रधाने ज्वरे । लक्षणं—"तृष्णा मूर्च्छा भ्रमो दाह: स्वप्ननाश: शिरोरुजा । कण्ठास्यशोषो वमथु: रोमहर्षोऽरु विजृम्भ: । पर्व्वभेदश्च जृम्भा च वातपित्तज्वराकृ-ति: ॥" मा.नि.। [ज्व.१०। अम.।

**वातपोत: (थ:)** । पुं । पलाशवृक्षे । रा.नि.

**वातप्रकृति:** । त्रि । वायुप्रकृतौ । लक्षणं— "य: कृष्णवर्णश्चपलोऽतिसूक्ष्म: केशाल्पकक्षो बलवा-न् चम: स्यात् । सूक्ष्मातिदन्तो नखवृद्धिमिति दी-र्घस्वनश्चंक्रमणे चमोऽसौ । दीर्घाक्रमो लोलुपदृष्टी-नमलस्तथैव चाम्लरसभोजनेच्छ: । संस्वेदनेनाति-विमर्द्दनेन सौख्यं समागच्छति वातलो ना ॥" भ्रवि.पूअ.।

**वातप्रमी:** । पुं । द्रुतगामिहरिणे । वाउटे हरिण । अम.। घोटके । नकुले । उणा.।

**वातप्रशमनी** । स्त्री । आरुके । आलूबो-खारा । वै.निघ.। [नि । फुस्फुसे । भूरिप्र.।

**वातफुल्लान्त्रम्** । क्ली । वातरोगे । उदराध्मा-

**वातमृग:** । पुं । द्रुतगामिहरिणे । जटा.।

**वातरक्तम्** । क्ली । रोगविशेषे । तस्य निदानं —"लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनै: । क्लि-न्नशुष्काम्बुजानूपमांसपिण्याकमूलकै: । कुलत्थमा-षनिष्पावशाकादिपललेक्षुभि: । दध्यारनालसौवी-रशुक्ततक्रसुरासवै: । विरुद्धाध्यशनक्रोधदिवास्वप्न-प्रजागरै: । प्रायश: सुकुमाराणां मिथ्याहारविहा-रिणां । स्थूलानां सुखिनाञ्चापि कुप्यते वातशो-णितम् ॥ हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च वीदाह्यन्नं स विदाहोऽशनस्य ॥" सम्प्राप्ति:—"कृत्स्नं रक्तं वि दहत्याशु तच्च दुष्टं स्रुतं पादयोश्चीयते तु । तत्स

स्पृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातर-क्तम् ॥" भा.। [म.ख.।

**वातरक्तघ्न:** । पुं । कुक्कुरद्रुमे । कुकुरमुरा ।

**वातरक्तान्तकरस:** । पुं । वातरक्ताधिकारे रस: । पाठ: – "गन्धकं पारदं लौहं घनतालमन:-शिला: । शिलाजतु पुरं शुद्धं समभागं विचूर्णये-त् । विडङ्गत्रिफलाव्योषमञ्जिष्ठेनं पुनर्नवा । देव-दारु चित्रकञ्च दार्व्वीं श्वेतापराजिता । चूर्णमेषां पृथक् तुल्यं सर्व्वमेकत्र कारयेत् । त्रिफला भृङ्ग-राजस्य रसेनैव त्रिधा त्रिधा । भावना खलु दात-व्या तत: सञ्चूर्ण्य भक्षयेत् । मधुना माषमात्रञ्च प्रात:काले दिने दिने ॥" रस.र.। रस.कौ.।

**वातरक्तारि:** । पुं । गुड़ूच्याम् । श.च.।

**वात(द)रङ्ग:** । पुं । अश्वत्थवृक्षे । श.र.। त्रिका.। [पार्श्वे । काण्ड । उत्पाते । मे.।

**वातरायण:** । पुं । सरलवृक्षे । श.र.। कर

**वातरेता: (तस्)** । त्रि । यस्य शुक्रं वातभूयि-ष्ठम् । रस.र.सू.घा.चि,चित्रकाद्यघृते ।

**वातरोग:** । पुं । वातव्याधौ । रा.नि.व.२०।

**वातरोगी (इन्)** । त्रि । वातरोगयुक्ते । अम.।

**वातरोहिणी** । स्त्री । गलरोगभेदे । लक्षणं —"जिह्वां समन्ताद्भृशवेदना ये मांसाङ्कुरा: कण्ठ-निरोधना: स्यु: । तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढ़युक्ताम् ॥" सु.नि.१६अ.।

**वातल:** । पुं । चणके । छोला । श.च.। स्त्री (ला) । समङ्गायाम् । वराक्रान्ता । अ.द.।

**वातवलासक:** । पुं । तन्नामकज्वरे । वात-वलासक ज्वर । लक्षणं—"नित्यं मन्दज्वरो रूक्ष: शूनकस्तेन सीदति । स्तब्धाङ्ग: श्लेष्मभूयिष्ठो नरो वातवलासकी ॥" मा.नि.। अन्यस्य तन्नामकरो-गे । "कफमारुतसम्भूत: स्फूरासंस्तिसमाश्रित: । शोथो वातवलासाख्यो मृदुश्चैव सुवेदन: ॥ तेना-तिस्वल्पतोऽप्यस्य स्तम्भं पर्व्व च जायते । स्त्रीरक्तं वेधयेत् सम्यक् वसातैलञ्च सर्पिषा ॥" अ.द.।

**वातवस्ति:** । पुं । मूत्राघातरोगविशेषे । नि-दानादि—"वेगं विधारयेद्यस्तु मूत्रस्याकुशलो न-र: । निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिल: ॥

मूत्रवती भवेत्तेन बस्तिकुक्षिनिपीडितः । वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥” इत्यादि । मा.नि. ।

**वातविध्वंसनः (रसः)** । पुं । वातव्याधौ रसः । पाठः—“सूतमभ्रकमभ्रञ्च कांस्यं ग्रहञ्च माक्षिकं । गन्धकं तालकं सर्व्वं भागोत्तरविवर्द्धितं । तत्समांशं तीक्ष्णचूर्णं वातारिश्वेतसंयुतं । सप्ताहं मर्द्दयित्वा तु गोलकोकृत्य यत्नतः । निम्बुद्रावेण सम्भेद्य तिलकल्केन लेपयेत् । पञ्चाङ्गुलदलेनैव परिशोष्य प्रयत्नतः । प्रपचेद्वालुकायन्त्रे द्वादशप्रहरमतः ······ ॥” र.सर. । [वातपर्य्ययः ।

**वातविपर्य्ययः** । पुं । सर्व्वगताक्षिरोगे । See

**वातविसर्पः** । पुं । वायुजन्यविसर्पे । लक्षणं—“तत्र वातात् स वीसर्पो वातज्वरसमव्यथः । शोफस्फुरणनिस्तोदभेदायासार्त्तिहर्षवान् ॥” मा.नि. । [भा. । रक्तैरण्डे । वै.निघ. ।

**वातवैरिः** । पुं । वातादवृक्षे । बादाम गाछ ।

**वातव्याधिः** । पुं । वायुरोगे । बाइ रोग । स चाशीतिविधः । च. । तस्य निदानं—“रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः । विषमादुपचाराच्च दोषासृक्स्रवणादपि । लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टनैः । धातूनां सङ्क्षयाच्चिन्ताशोकरोगातिकर्षणात् । वेगसन्धारणादामादभिघातादभोजनात् । मर्म्मबाधाद्गजोष्ट्राश्वशीघ्रयानादिसेवनात् । देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली । करोति विविधान् व्याधीन् सर्व्वाङ्गैकाङ्गसंश्रयान् ॥ अव्यक्तं लक्षणं तेषां पूर्व्वरूपमिति स्मृतम् ॥” इत्यादि । “अभ्यङ्गं स्वेदनं वस्तिर्नस्यं स्नेहो विरेचनम् । स्निग्धाम्ललवणस्वादु हृद्यं वातामयापहम् । स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः । अभ्यङ्गस्नेहवस्त्याद्यैः सर्व्वानेवोपपादयेत् । पित्ते सावरणे वातरोगे शीतोष्णभेषजम् । कफसावरणे वायौ रूक्षोष्णं भक्ष्यभेषजम् । केवले पवनव्याधौ स्निग्धोष्णं भक्ष्यभेषजम् । स्निग्धोष्णरूक्षशीताद्यैर्वातजो यो न शाम्यति । विकारास्तत्र विज्ञेयाः दुष्टशोणितसम्भवाः ॥” निदा. ।

**वातशीर्षम्** । क्ली । वस्तिस्थाने । स्त्रियो गर्भस्थाने । “गर्भस्थानञ्च सत् स्त्रियः ।” रा.नि.व.१८

**वातशोणितम्** । क्ली । वातरक्तरोगे । म

**वातसङ्गः** पुं । वायुरोधे । च.सिद्धि.११

**वातसारः** । पुं । विल्ववृक्षे । वै.निघ. ।

**वातस्तम्भनिका** । स्त्री । चिञ्चायाम् । तूल । वै.निघ. ।

**वात(ता)हतवर्त्म** (न्) । क्ली । नेत्रवर्त्मरोगभेदे । लक्षणं यथा—“विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य निमील्यते । एतद्वातहतं विद्यात् सरुजं यदि वाऽरुजम् ॥” सु.उ.३अ. ।

**वातहरः** । त्रि । वातनाशके ।

**वातहरवर्गः** । पुं । वातघ्नद्रव्यगणे । यथा—“महानिम्बश्च कार्पासः द्विधैरण्डो वचा द्विनिर्गुण्डी च द्विधा हिङ्गु गणोऽयं वातनाशनः” रा.नि.व.१ । भद्रदार्व्वादिगणे । सु.सू.३९अ.

**वाताटः** । पुं । जाङ्गलमृगविशेषे, वातमृ.र. । चि.२ अ. ।

**वाताण्डः** । पुं । अण्डस्य वायुजन्यमुष्करोगभेदे । यथा—“वृषणौ दूषयेद्वायुः शेफसा यस्य युतः । तस्य मुष्कशल्यकौ रोगो वाताण्डकः ॥” ज द.५०अ. । [दे । वा.उ.३६

**वातातपिकम्** । क्ली । रसायनानां प्रकार

**वातातिसारः** । पुं । वायुजन्यातिसारे । लक्षणं—“अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः शकृदामं सरुक्शब्दं मारुतेनातिसार्य्यते ॥” नि

**वातात्मकः** । त्रि । वातप्रकृतौ ।

**वातादः (मः)** । पुं । (*Prunus amygdalus. Syn. Amygdalus communis. Terminalia catappa.*) The Almond, Bitter Almond, Sweet Almond. तामवृक्षे । बादाम गाछ । हिं वम्. जंलिबादाम । तें वेदम । ता. नटवडुम । स कटुमिष्टवनतामभेदेन द्विधा । गुणाः—“वाताद उष्णः स्निग्धः वातघ्नः शुक्रकृद्गुरुः । वातादमज्जा मधुरो वृष्यः पित्तानिलापहः । स्निग्धोष्णः कफकृद्रक्तपित्तविकारिणाम् ॥” भा. ।

**वाताभिष्यन्दः** । पुं । सर्व्वगताक्षिरोगभेदे । वायुजन्य चक्षु उठा । लक्षणं—“वातेन नेत्रे

...दे नासानाड्योऽस्यशीफता । शङ्खाक्षिभ्रूललाटा... ...शीदस्फुरणभेदनम् ॥" वा.उ.१५अ.। [श.मा.।

**...तामोदा** । स्त्री । कस्तूर्य्याम् । मृगनाभि ।

**...तायनः** । पुं । घोटके । त्रिका. ।

**...तायुः** । पुं । हरिणे, वातमृगे । अम. ।

**...तारिः** । पुं । एरण्डवृक्षे । प.मु. । जन्तुका-...तायाम् । विड़ङ्गे । रा.नि.व.२३। पुत्रदात्र्याम् । ...क्रियापुत्रा । रा.नि.व.३ । शतावर्य्याम् । श.च. । ...शेफालिकायाम् । श्वेतनिर्गुण्ड्याम् । रा.नि.व.१०। पीतलोध्रे । शुक्लरसोने । वै.निघ. । यवान्याम् । रा.नि.व.६ । भार्ग्याम् । रा.नि.व.६।२३ । तिल-कवृक्षे । सुह्याम् । रा.नि.व.८ । शूरणे । ओल । रा.नि.व.७।२३ । भल्लातकवृक्षे । रा.नि.व.११। २३ । पृथुशिम्बश्योणाके । श्वेतैरण्डे । नीलवृक्षे । रा.नि.व.८।२३ ।

**वातारिगुग्गुलुः** । पुं । वातव्याधौ औषधम् । पाठः—"वातारितैलसंयुक्तं गुग्गुलुं परिपेषयेत् । गन्धकत्रिफलाचूर्णैः सुश्लक्ष्णैर्मिश्रयेत्ततः । भक्षयेत् प्रत्यहम्प्रातरुष्णतोयानुपानतः ॥" रस.र. ।

**वातारितण्डुला** । स्त्री । विड़ङ्गायाम् । रा.नि.व.६ ।

**वाताष्ठीला** । स्त्री । वातव्याधिविशेषे । वायु-जन्य अष्ठीला । लक्षणं—"नाभेरधस्तात्सञ्जातः सञ्चारी यदिवाचलः । अष्ठीलावद्धनो ग्रन्थिरूर्द्धमायत उन्नतः । वाताष्ठीलां विजानीयात् बहिर्मार्गावरोधिनीम् ॥" मा.नि. ।

**वातासहः** । पुं । वातुले । श.र. ।

**वातास्रम्** । क्ली । वातरक्ते । निदा. ।

**वातिकः** । त्रि । वातजव्याधौ । रा.नि.व.२० ।

**वातिकप्रियः** । पुं । अम्लवेतसे । वै.निघ. ।

**वातिकरक्तपित्तम्** । क्ली । वायुजन्यरक्तपित्ते । See रक्तपित्तम् ।

**वातिकषण्ढः** । पुं । गर्भविकारजन्यनष्टवृषणपुरुषे । यथा—"वायुग्निदोषाद्वृषणौ तु यस्य नाशं गतौ वातिकषण्ढकः सः ।" च.शा.२अ. ।

**वातिगमः** । पुं । वार्त्ताकुवृक्षे । श.र. ।

**वातिङ्गनः** । पुं । वार्त्ताकुवृक्षे । र.मा. ।

**वातीकः** । पुं । पक्षिविशेषे । वर्त्तं विवरी लघुः शीतमधुरकषायश्च । सु.सू.४६अ. ।

**वातीयम्** । क्ली । । काञ्जिके । श.च. ।

**वातु(तू)लः** । पुं । वातुलीनामवातव्याधौ । वात-नि धान । रा.नि.व.१६ । वात्यायाम् । भ.टी.म.। त्रि । उन्मत्ते । [हारा. ।

**वातुलिः** । पुं । तक्तुलिकायाम् । वाद्‌ड़ ।

**वातूकः** । पुं । मत्स्यविशेषे । रा.नि.व.१७ ।

**वातोदरम्** । क्ली । वातजनितोदररोगे । लक्षणं यथा—"संगृह्य पार्श्वोदरपृष्ठनाभीर्यद्वर्द्धते कृष्णशिरावनद्धं । सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तदिति ॥" सु.नि.७अ. ।

**वातोल्वणः** । त्रि । वाताधिके ।

**वात्सीपुत्रः** । पुं । नापिते । त्रिका. ।

**वादः** पुं । शास्त्रीयविवादे । "वादो नाम यः परस्परेण सह शास्त्रपूर्व्वकं विगृह्य कथयति । स वादो द्विविधः संग्रहेण जल्पो वितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः । जल्पविपर्य्ययो वितण्डा ।" च.वि.८अ. ।

**वादमर्य्यादा** । स्त्री । वादस्य मर्य्यादायाम् । लक्षणं—"इदं वाच्यमिदमवाच्यं एवं सति पराजितो भवति इतीमानि खलु पदानि ।" च.वि. ८अ. ।

**वादरम्** । क्ली । कार्पासजवस्त्रादौ । सूतार कापड़ आदि । स्त्री (रा) । कार्पास्याम् । कापास । श.र. । [श.च. ।

**वादलम्** । क्ली । मधुयष्टिकायाम् । यष्टिमधु ।

**वादलीयः** । पुं । रम्भवंशे । रा.नि.व.७ ।

**वादामम्** । क्ली । स्वनामख्यातफले । बादाम । गुणाः—उष्णं स्निग्धं वातहरं बल्यं शुक्रकरञ्च । राज. । [हं.च. ।

**वादालः** । पुं । मत्स्यविशेषे । बोयाल माछ ।

**वादिरम्** । क्ली । शृगालकोलौ । शेयाकुल । श र. । [योगिरो.चि. ।

**वादुलिः** । पुं । चर्म्मचव्याम् । बाद्‌ड़ । च.द.

**वाद्यमण्डः** । पुं । चतुर्द्दशगुणजलेन साध्ये भर्जितयवमण्डे ।

**वाघनः ।** त्रि। वाधाजनके। सद्यःप्राणहरे। च. चि.१अ.।

**वाघपुष्पी ।** स्त्री। प्रियङ्गौ। ज.द.।

**बाधा ।** स्त्री। भक्तवत्पीड़ायाम्। मा.नि.।

**बाधिर्य्यम् ।** क्ली। वातव्याधिविशेषे। काला। तत्कारणम्—"यदा शब्दवहं स्रोतः वायुरावृत्य तिष्ठति। शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते ॥" सु.नि.१अ.।

**वाध्रीनसः ।** पुं। गण्डके। गण्डार। हारा।

**वानः ।** त्रि। शुष्के। क्ली। शुष्कफले। शुकना फल। मे.। गोदुग्धजतवर्त्तौरि। रा.नि.व.६।

**वानप्रस्थः ।** पुं। पलाशवृक्षे। प.मु.। मधुकवृक्षे। भा.। [सु.मू.४६अ.।

**वानरः ।** पुं। कपौ। अयं पर्णमृगजातीयः।

**वानरप्रियः (या) ।** पुं, स्त्री। क्षीरीवृक्षे। क्षीरिणी। र.मा.। वै.निघ.। [छ। र.मा.।

**वानराघातः ।** पुं। लोध्रवृक्षे। लोध गा-

**वानराक्षः ।** पुं। अजभाग्वविशेषे। ज.द.२ अ.। वन्यच्छागे। हारा.।

**वानरी ।** स्त्री। शूकशिम्ब्याम्। आलकुशी। श.र.। च.द.यक्ष्म.चि.सर्पिर्गुड़े।

**वानरीबीजम् ।** क्ली। शूकशिम्बीबीजे। आलाकुशीर बीज। यो.रत्ना उ.रतिवृद्धिकरपाके। "रजो वानरीबीजतः।" सा.कौ.शतावरीमोदके।

**वानलः ।** पुं। कृष्णवर्व्वरके। काल बाबुइ तुलसी। श.च.। [लवृक्षे आम्रातौ। अम.।

**वानस्पत्यः ।** पुं। फलपुष्पवति वृक्षे। पुष्पजफ-

**वाना ।** स्त्री। वर्त्तिकपक्षिणि। बटेर। जटा.।

**वानी(ने)यम् ।** क्ली। कैवर्त्तमुस्तके। केओट-मूता। अम.।

**वानीरः ।** पुं। जलवेतसे। रा.नि.व.८। च. चि.३अ.। वेतसवृक्षे। र.मा.। मद.। प्लक्षवृक्षे। वै.निघ.। [८।

**वानीरकः ।** पुं। मुञ्जतृणे। मुँज। रा.नि.व.

**वानीरजः ।** पुं। मुञ्जायां। मुँज। रा.नि. व.७। दर्भे। क्ली। कुष्ठौषधे। कुड़। रा.नि.व.१२।

**वान्तादः ।** पुं। कुक्कुरे। त्रिका.। [मा.।

**वान्तिः ।** स्त्री। छर्द्याम्। नेकार, बाँत। र.

**वान्तिका (दा) ।** स्त्री। कटुक्यां। कट्‌की। श.च.। वै.निघ.। [श.च.।

**वान्तिकृत् ।** पुं। मदनवृक्षे। मयना गाछ।

**वान्तिशोधनी ।** स्त्री। जीरके। वै.निघ.।

**वापः (कः) ।** पुं। मुण्डने। पीतचन्दने। वै. निघ.।

**वापिः (पी) ।** स्त्री। सरोवरे। दिघी। भ. द्विरूपकोषः। लक्षणं—"पाषाणैरिष्टकाभिर्वा बद्धः कूपो वृहत्तरः। ससोपाना भवेद्वापी तज्जलं वाप्यमुच्यते ॥" गुणाः—सन्तापकरं गुरु वातश्लेष्मकरञ्च। रा.नि.व.१४।

**वापीहः ।** पुं। चातकपक्षिणि। त्रिका.।

**वाप्यम् ।** क्ली। कुष्ठौषधे। कुड़। अ.टी.। वै. निघ.चन्दनादितैले। वापीजले। रा.नि.व.१४। पुं। शालिधान्यभेदे। बोना धान। गुणाः— शालिवत्। च.मू.२७अ.।

**वाप्यक्षीरम् ।** क्ली। सामुद्रलवणे। रा.नि.व.६।

**वाभटः ।** पुं। वैद्यकसंहिताप्रणेतरि। शास्त्रदर्पणनिघण्टुकारे।

**वाभटनिघण्टुः ।** पुं। तत्कृतनिघण्टुग्रन्थे।

**वामम् ।** क्ली। वास्तूकशाके। जटा.। पुं। पयोधरे। मे.। स्त्री (मा)। क्र॰ ॰टकायाम्। वै. निघ.।

**वामनः ।** पुं। अङ्कोटवृक्षे। आँकोड़ गाछ। मे.। महाश्रावणिकायाम्। बड़ आतुसी गाछ। तन्नामकधूमपानभेदे। तत्र धूमनाड़ी १० अङ्गुला कलायमण्डलस्थूला, स्नायुचर्म्माद्यं द्रव्यं भाव्यम्। भा.। द्रुत्कटे। ওকড়া। र.मा.। स्त्री (नी)। महाशणे। प.मु.। त्रि। ह्रस्वे। अम.।

**वामलूरः ।** पुं। वल्मीके। উইঢিপি। अम.।

**वामसंज्ञः ।** पुं। कर्पूरभेदे। भीमसेनीकपूर। वै.निघ.।

**वामस्कन्धः ।** पुं। शूकरे। वै.निघ.।

**वामापीड़नः ।** पुं। पीलुवृक्षे। श.च.।

**मावर्त्तफला** । स्त्री । रुद्री । वै.निघ. ।

**मावर्त्ता** । स्त्री । आवर्त्तकीलतायां । रा.नि. व.३ ।

**मिनी** । स्त्री । योनिव्यापद्विशेषे । लक्षणं — "षड़हात् सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत्। वमेत् सरुजनीरुजो वा यस्याः सा वामिनी मता ॥" वा उ.३३ध. ।

**वामी** । स्त्री । शृगाल्यां । जलजाख्याम् । वड़वायाम् । वै.निघ. । गर्द्दभ्यां । मे. ।

**वायनम्** । क्ली । पिष्टान्नविशेषे । त्रिका. ।

**वायवालम्** । क्ली । मरकतमणौ । रा.नि.व. १३ ।

[स्वायुभदच्छायाविशेषे ; अ.द.३ध. ।

**वायव्या** । स्त्री । वल्लीकरञ्जे । वै.निघ. । अश्व-

**वायसः** । पुं । काके । अगुरुवृक्षे । सरलनिर्यासे । मे. ।

**वायसजङ्घा** । स्त्री । काकजङ्घायाम् । वै.निघ.२भ.जीर्णज्व.चि. । भैष.क्षुद्ररो.चि. । मुद्गामूले । च.द.राजयक्ष्म.चि. ।

**वायसतुण्डः** । पुं । तन्नामके ह्न्वोरुभयतः सन्धौ । सु.शा.५ध. । स्त्री (ण्डी) । काकतुण्डिकायाम् । কুঁচ । কেউয়া ঠুঁটী । र.सा.सं.रसमारणे ।

**वायसा (सी)** । स्त्री । श्वेतगुञ्जायाम् । वै.निघ. । काकोदुम्बरिकायाम् । मे. । महाज्योतिष्मतीलतायाम् । रा.नि.व.३ । (सी) काकतिक्तायां । কুঁচ গাছ । কেউয়াঠুঁটী । रा.नि.व.३ । काकतिक्ता चिरविल्वपोटिकेति । सु.चि.९ध.। च.द.कास.चि. । वा.उ.३९ध. । काकमाच्यां । কাকমাচী, গুড়কাঁউলী । रा.नि.व.४ । काङ्क्षा. र.सा.सं.रसशोधने । सु.चि.९ध. । भैष.कुष्ठ.चि.। "वायस्येडगजा ;" च.द.कुष्ठ.चि.अ.पि.चि. । काकजङ्घायां । रा.नि.व.४ । महाकरञ्जे । वै.निघ. ।

**वायसादनी** । स्त्री । महाज्योतिष्मतीलतायां। বড় লতাফট্কী । काकादनीलतायाम् । শ্বেত কুঁচ । रा.नि.व.३ ।

**वायसारातिः** । पुं । पेचके । अम. ।

**वायसाह्वा** । स्त्री । काकनासायां । শ্বেত র-
ক্ত কুঁচ । रा.नि व.३ । काकमाचीक्षुपे । কাকমাচী । रा.नि.व.४ ।

[रञ्जे । वै.निघ. ।

**वायसीवल्ली** । स्त्री । करञ्जवल्ल्याम् । লতাক-

**वायसीशाकम्** । क्ली । शाकविशेषे, काकमाचीशाके । वा.चि.१ध. ।

[र.मा. । प.मु. ।

**वायसेक्षुः** । पुं । कासतृणे, कासभेदे । কেসে।

**वायसोलिका (ली)** । स्त्री । काकोल्यां । কাঁকলা । रा.नि.व.३ । अम. । मधुली । মাল-কাঁকড়ী । र.मा. । महाज्योतिष्मतीलतायाम् । रा.नि.व.३ । पत्रशाकभेदे । কাণছিড়া । प.मु. ।

**वायुः** । पुं । वाते । रा.नि.व.२१ ।

**वायुकेतुः** । पुं । धूल्यां । हारा ।

**वायुगण्डः** । पुं । अजीर्णे । त्रिका. ।

**वायुगुल्मः** । पुं । वायुदोषजन्यगुल्मरोगे । "यः स्थानसंस्थानरुजाविकल्पं विड़्वातसङ्गं गलवक्त्रशोषं। श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजञ्च ॥ करोति जीर्णे त्वधिकम्प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च । वातात् सगुल्मो न च तत्र रुक्षं कषायतिक्तं कटु चोपशेते ॥" मा.नि. ।

**वायुफलम्** । क्ली । करकायां । আকাশের শীল । मे. ।

**वायुभक्ष्यः** । पुं । सर्पे । रा.नि.व.१७ ।

**वायुवाहः** । पुं । धूमे । हे.च. ।

[याम् । सु. ।

**वायुवाहिनी** । स्त्री । वातसञ्चारिणीशिरा-

**वायुव्यवस्था** । स्त्री । ऋतुविशेषे वायोरवस्थायाम् । यथा --वसन्ते दक्षिणः, वर्षायां पश्चिमः शरद्युत्तरः, हेमन्ते शिशिरे च पूर्व्व इति ।

**वायुषः** । पुं । मत्स्यविशेषे । কালিবস্ মৎস্য। गुणाः—वायुषो मधुरो वृष्यो वृंहणो धातुवर्द्धनः । राज.३प. ।

**वारम्** । क्ली । जले । पिप्पल्यां । मदिरापात्रे । हे.च. । पुं । कुलकवृक्षे । त्रिका. ।

[हारा. ।

**वारकम्** । क्ली । ह्रीवेरे । বালা । कष्टस्थाने ।

**वारकीरः** । पुं । यूकायां । জোঁক । मे. ।

**वारङ्कः** । पुं । पक्षिणि । त्रिका. ।

**वारङ्गः** । पुं । खड्गादिमुष्टौ । বাঁট । सु.मु.

१७अ. । षट्गुणवदावतयद्गि । অঙ্কুশের ন্যায় গোল বোঁটে । सु.सू.७अ. ।

**वारटा** । स्त्री । हंस्याम् । हे.च. ।

**वारणः** । पुं । हस्तिनि । अम. । क्षुद्रशिंशपायाम् । पारिभद्रवृक्षे । পালতে মান্দার । श्वेतकुटजवृक्षे । वै.निघ. ।

**वारणकणा** / **वारणपिप्पली** } स्त्री । गजपिप्पल्याम् । वै.निघ.२भ.वातव्या.दार्व्यादि; भैष.शीर्षाच.त्रिकटुादिलौह । च.द.कुब्जप्रसारणीतैल ।

**वारणवल्लभा** । स्त्री । कदलीवृक्षे । त्रिका. ।

**वारणबुषा (सा)** । स्त्री । कदलीवृक्षे । अम. ।

**वारणा** । स्त्री । कदलीवृक्षे । भा. ।

**वारला** । स्त्री । वरटायाम् । বোলতা । हे.च. । कदलीवृक्षे । भा. । हंस्यां । हे.च. ।

**वारलीकः** । पुं । वल्वजातृणे । বাবুই । श.र. ।

**वारबु(वृ)षा** । स्त्री । कदलीवृक्षे । श.र. ।

**वारषः** । पुं । मत्स्यविशेषे । वै.निघ. ।

**वारा** । स्त्री । काकमाच्यां । গুড়কাউলী । रा.नि.व.४ ।

**वारासनम्** / **वास्सदनम्** } क्ली । भाण्डभेदे । জালা । त्रिका. ।

**वाराहः** । पुं । कृष्णमदनवृक्षे । কাল ময়না গাছ । गुणाः — वमने प्रशस्तः कटुः तिक्तः रसायनः कफहृद्रोगामाशयपक्वाशयशोधनश्च । रा.नि.व.८ । जलवेतसे । वै.निघ. । [८अ. ।

**वाराहकः** । पुं । प्राणहरकीटभेदे । सु.कल्प.

**वाराहकर्णी** । स्त्री । अश्वगन्धायाम् । रा.नि.व.४ । [क्षुद्ररोगे । भा.म.४भ. ।

**वाराहदशनाह्वयः** । पुं । शूकरदंष्ट्रकनाम

**वाराहपत्री** । स्त्री । अश्वगन्धायां । रा.नि.व.४ ।

**वाराहपुटम्** । क्ली । पुटविशेषे । "अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते ।" भा. । प्रयोगा. ।

**वाराहपुटभावना** । स्त्री । अष्टपलक्वतभावनायाम् । वै.निघ. ।

**वाराहाङ्गी** । स्त्री । दन्तीवृक्षे । भा. ।

**वाराही (कन्द)** । स्त्री,पुं । (Dioscorea.) An esculent root, or a yam. स्वनामख्यातमहाकन्दशाकविशेषे । চুবড়ি আলু । हिं गेठी । मं वाराहीकन्दा तें ब्राह्मदंडिचेहु, पाचितीर्कि, नेललाड़िचेहु । वम्. डुकरकन्द । अस्या उत्पत्तिः समस्तस्थूलपर्वते । "अनूपसम्भवे देशे वाराह इव लोमवान् ।" भा. । गुणाः — तिक्ता कटुका विषपित्तकफघ्नी कुष्ठमेहकृमिघ्नी वृष्या बल्या रसायनी च । रा.नि.व.७ । "वराहकन्दः श्लेष्मघ्नो वातगुल्मनिवारणः ।" अत्रि. १६अ. । "वाराहीकन्दः श्लेष्मघ्नः पित्तकृद्बलवर्द्धनः ।" राज.३प. । महौषधिविशेषे । See औषधिः । शुक्लभूमकुष्माण्डे । वै.निघ. । वृद्धदारके । वा.उ.३९अ. । प्रियङ्गौ । मे । वराहक्रान्तायां । বরাহক্রান্তা । भा. । सु.चि.३०अ. । श्यामाकपक्षिणि । শ্যামা পাখী । रा.नि.व.१९ । पवर्गीयापि मेदिन्याम् ।

**वारि** । क्ली । जले । रा.नि.व.१४ । ह्रीवेरे । বালা, গন্ধ বালা । रा.नि.व.१० । भा.उ.वार्त्ती. रतिवल्लभपूगपाके । "विश्वावीरणवारिवारिद ।" भा.म.१भ.ज्वरचि.लाक्षादितैल । "त्वक्पत्रक वारि सुरा समुस्ता ।" [त्रिका. ।

**वारिकण्टकः** । पुं । शृङ्गाटके । শিঙ্গাড় ।

**वारिकफः** । पुं । समुद्रफेने । वै.निघ. ।

**वारिकर्णिका** । स्त्री । कुम्भीकायां । শুশুনী, পানা । श.र. ।

**वारिकर्पूरः** । पुं । इल्लिशमत्स्ये । त्रिका. ।

**वारिकुब्जः (कः)** । पुं । शृङ्गाटके । শিঙ্গাড়া । श.र. । त्रिका. । [त्रिका. ।

**वारिकृमिः** । पुं । जलौकायां । জোঁক ।

**वारिचत्वरः** । पुं । कुम्भीकायां । পানা । त्रिका. । [रस.र.भैष.चि.त्रिकटुादिवर्णी ।

**वारिचरः** । पुं । मत्स्ये । शङ्खे । शङ्खनाभौ ।

**वारिचामरम्** । क्ली । शैवाले । শেয়ালা । त्रिका. ।

**वारिजम्** । क्ली । द्रोणीलवणे । रा.नि.व.६ । पद्मे । गौरसुवर्णे । পাকাসোণা । लवङ्गे । रा.

नि.व.१०।१३।१२। पुं। शङ्खे। शाँक। इ.च.। शम्बूके। शामुक। श.मा.। हिज्जलवृक्षे। श.द.।

**वारितरम्** । क्ली। उशीरे। रा.नि.व.१२।

**वारित्रा** । स्त्री। जलत्राणायां। टोका, पेटेक। चिका.। [च.द.काम.चि.।

**वारिदम्** । क्ली। ह्रीवेरे। बाला। श.र.।

**वारिदः** । पुं। मुस्तायां। रा.नि.व.६। भा.म. वाजी.रतिवल्लभपूगपाके। "विश्वावीरकवारिवारिद..." मेघे। मे.। [निघ.।

**वारिधरः** । पुं। भद्रमुस्तायाम्। मुता। वै.

**वारिपर्णी** । स्त्री। शैवाले। कुम्भिकायाम्। पाना। तें तुटिकूर। बम्. जलकुम्भी। गुणाः— "...हिमा तिक्ता लघ्वी स्वाद्वी सरा पटुः। दोषत्रयकरी रूक्षा शोणितज्वरशोषकृत् ॥" राज.।

**वारिपालिका** । स्त्री। आकाशमूलिकायाम्। पाना। श.मा.।

**वारिप्रवाहः** । पुं। वारिनिर्झरे। श.मा.।

**वारिप्रश्नी** । स्त्री। वारिपर्ण्यां। पाना। श.मा.।

**वारिप्रसादनम्** । क्ली। कतकफले। निर्मला। वै.निघ.।

**वारिबदरः (रा)** । स्त्री। प्राचीनामलके। पानि आमला। चिका.। [हारा.।

**वारिबालकम्** । क्ली। ह्रीवेरे। बाला।

**वारिब्राह्मी** । स्त्री। जलब्राह्मीक्षुपे। वै.निघ.।

**वारिभक्तवटिका** । स्त्री। अजीर्णाधिकारे वटी। "रसगन्धकमभ्रञ्च गुडूचीसत्त्वमेव च। विडङ्गं मरिचञ्चैव सर्व्वमेकत्र कारयेत्। आर्द्रकस्य रसेनापि गुड़िकां कारयेद्बुधः। भक्षयेन्माषमात्रन्तु शीततोयानुपानतः...... ॥" कज्जलि—अभ्र, गुलूञ्चर पाल, विड़ङ्ग, मरिच प्रत्येक समभाग। आदार रसे माड़िबे। मात्रा १माष। रस.र.। [नि.व.१३।

**वारिभवम्** । क्ली। स्रोतोऽञ्जने। सुर्मा। रा.

**वारिमानम्** । क्ली। पाचनादौ जलदानपरिमाणे। तत्र प्रबलाग्निबलपुरुषापेक्षया क्वाथ्यद्रव्यस्य पलं ग्राह्यम्। तत्साधनार्थं प्रस्थार्द्धं जलं दत्त्वा पादावशिष्टं काथ्येम्। प्रस्थार्द्धत्वात् जलमष्टगुणं शरावद्वयं पादशेषेण पलचतुष्टयं ग्राह्यम्। आर्द्रकठिनातिकठिनानां मिलितानां द्रव्याणां पाचनादिसाधनविधौ द्रवपरिमाणे अनुक्ते जलपरिमाणमष्टगुणं दत्त्वा पाच्यम्। तदुक्तं—"कर्षादौ तु पलं यावत् दद्यात् षोड़शिकं जलम्। ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत्। चतुर्गुणमतश्चोर्द्धं यावत् प्रस्थादिकं भवेत्। क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम्। मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं भवेत्। कठिनात् कठिनं यत्र दद्यात् षोड़शिकं जलम्। मृद्वादिद्रव्यसंघाते मानानुक्ते चिकित्सकाः। मध्यस्योभयभागित्वादिच्छन्त्यष्टगुणं जलमिति।" प.प्र.१ख.। [वारिपर्ण्यां। श.र.।

**वारिमूली** । स्त्री। कुम्भिकायां। पाना।

**वारिरुहम्** । क्ली। कमले। रा.नि.व.१०।

**वारिवदरम्** । क्ली। करमर्द्दके। हिं करौदा। जटा.। [ड़ा। रा.नि.व.७।

**वारिवल्लभा** । स्त्री। विदार्य्यां। भुँइ कुम-

**वारिवल्ली** । स्त्री। कारवल्ल्याम्। मद.।

**वारिवाहः** । पुं। मुस्तायां। मुता। अम.। अग्निमा.चि.भक्तविपाकवट्यां। [वै.निघ.।

**वारिशिरीषिका** । स्त्री। जलशिरीषे।

**वारिशुक्तिः** । स्त्री। जलशुक्तौ। झिनुक। वै.निघ.।

**वारिसम्भवम्** । क्ली। लवङ्गे। रा.नि.व.१२। २२। लवणे। वै.निघ.। सौवीराञ्जने। रा.नि.व. १३। कृमिशङ्खे। श्वेतगन्धचन्दने। उशीरे। रा. नि.व.२२। पुं। यावनालशरे। जनार गाछ। रा.नि.व.८। रामशरे। शर।

**वारिसात्मकम्** । क्ली। दर्भे। वै.निघ.।

**वारुजः** । पुं। गौरसुवर्णशाके। वै.निघ.।

**वारुणम्** । क्ली। जले। रा.नि.व.१४। हरिताले। वै.निघ.।

**वारुणः** । पुं। सूर्य्यभेदे। दारुवदन। वै.निघ. २भ.मर्व्वज्व.माचादितैले। वरुणवृक्षे। वै.निघ.।

**वारुणात्मजा** । स्त्री। मद्ये। वै.निघ.।

**वारुणी ।** स्त्री । स्वनामख्यातदूर्वे । सा कौड़ी-घादेशे कारवीरुणीति प्रसिद्धा । हस्तिन्याम् । रा. नि.व.२३ । पश्चिमदिशि । अम. । सुरायां, मद्ये । रा.नि.व.१४ । तालादिरसैः शतमद्ये । ताड़ि । "यत्तालखर्जूररसैराश्रिता सैव वारुणी ।" प.प्र.३ ख. । "शमज्वरातुरे शोषे शोफपाण्डामये क्षये । मतेः क्रमेऽपस्मारे च पक्षाघाते भमेषु च । आन्ते वा विपरीते वा सर्पदष्टे जलोदरे । रक्तपित्ते तथा श्वासे वारुणी न हिता मता । शुद्धस्फटिकसंकाशा सुस्निग्धा चैव वारुणी ॥" अत्रि.६अ. । इन्द्रवारुणीलतायां । राखालशशा । नकुल.१६अ. । रा. नि.व.३ । पुनर्नवाशालिपिष्टकृतसुरायाम् । भूम्या मलक्याम् । महादन्त्याम् । वै.निघ. । गण्डदूर्व्यायाम् । रा.नि.व.८ । [चमले । पिठुटी । मे. ।

**वारुगड़ः ।** पुं । कर्णगूथे । कापेर थाल । ने

**वारूषकः ।** पुं । मत्स्यविशेषे । स स्थूलः महिषाकारः तालुस्थाने नीरजाभां धत्ते, स्थूलशल्की च । तन्मांसगुणाः—वीर्य्यकरं दीपनं बृष्यदश्च । रा.नि.व.१७ ।

**वारेन्द्रपत्रम् ।** क्ली । सुगन्धवर्गीयपत्रविशेषे । पचा पाता । "पत्रं वारेन्द्रसम्भवम् ।" सा.कौ. ग्रहणी.चि.शतावरीमोदके ।

**वार्क्षः ।** पुं । हंसे । व्याक. ।

**वार्जम् ।** क्ली । कमले । रा.नि.व.१० ।

**वार्त्तम् ।** क्ली । आरोग्ये । रा.नि.व.२० ।

**वार्त्तकः ।** पुं । वार्त्ताकौ । বেগুন । मे. । वर्त्तकपक्षिणि । हिं वटेर । भा. ।

**वार्त्ता ।** स्त्री । वार्त्ताकौ । বেগুণ গাছ । चिका. । पाषाणभेदे । পাথরকুচি । बृहत्याम् । ব্যাকুড় । प्रयोग.ग्रहणी.चि.मध्यनायीचूर्णे । वार्त्तकपक्षिणि । গুড়গুড়ে, বটের । भा. ।

**वार्त्ताकः ।** पुं । तित्तिरपक्षिणि । भा. । वार्त्ताकौ । বেগুণ গাছ । चिका. ।

**वार्त्ताकिनी ।** स्त्री । बृहत्यां । हिं वरहँटा । भा.४भ.योनि.रोग.चि. । "नतवार्त्ताकिनीकुष्ठं ।"

**वार्त्ताकी ।** स्त्री । बृहत्यां । বিরুতি । रा.नि. व.४ । कण्टकार्य्याम् । (वृन्. पुं, स्त्री । (Solanum melongena. Syn. S. Esculentum.) स्वनामख्यातफलशाके । বেগুণ গাছ । हिं भण्टा, बांगण । तें वङ्कएहिरिवंग । उत्. वाइगुण । तम्. वांगे । ता. कुठिरिकइ । गुणाः —कटुका मधुरा रुच्या पित्तघ्नी बलपुष्टिकरी गुरुः वाते वर्ज्या च । रा.नि.व.७ । तत्फलं— "निद्राकरं प्रीतिकरं गुरु स्यात् सवातलं कासविकारकारि । श्रेष्ठं सुदीर्घं कफवर्द्धनञ्च समासकासारुचिवर्द्धनञ्च ॥" अत्रि.१६अ. । कोमलपक्ववार्त्ताकीगुणाः—"सा बाला कफपित्तघ्नी पक्वा सक्षारपित्तला ।" मध्यमवार्त्ताकीगुणाः—"सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी । कण्डूकच्छूहरी चैव वार्त्ताकी गुणवत्तरा ॥" कण्टकवार्त्ताकीगुणाः —"कण्टकी कटुतिक्तोष्णा रक्तपित्तप्रकोपनी । कण्डूकच्छूहरी चैव वार्त्ताकी दीपना मता ॥"

**वार्त्ताकुः ।** पुं, स्त्री । वार्त्ताकाम् । বেগুণ গাছ । प.मु. । च.द.ज्व.चि.शाकविधौ । "पटोलपत्रं वार्त्ताकुम् ।" गुणाः—"अग्निप्रदा मारुतनाशिनी च शुक्रप्रदा शोणितवर्द्धिनी च । हृद्रासकासारुचिनाशिनी च वार्त्ताकुरेषा गुणसम्प्रयुक्ता ॥" दग्धवार्त्ताकुगुणाः—"अङ्गारपक्वा वार्त्ताकुः किञ्चित् पित्तकरी मता । कफमेदोऽनिलहरा सरा लघुतरा परम् ॥" राज.३प. ।

**वार्त्ति(र्त्ती)कः ।** पुं । वर्त्तिकपक्षिणि । वातघटके । हिं बगेरा । भा. । वार्त्ताकौ । श र. ।

**वार्त्ति(र्त्ती)का ।** स्त्री । वार्त्ताकौ । वर्त्तिकपक्षिणि । বগেরী, বটের পাখী । हारा. ।

**वर्त्ती (इन्)** । त्रि । निरामये । रा.नि.व.२० ।

**वार्द्दरम् ।** क्ली । काकचिञ्चायां । मे. । गुञ्जायां । दक्षिणावर्त्तशङ्खे । मे. । आम्रबीजे । जले । विश्व. ।

**वार्द्दलम् ।** क्ली । दुर्द्दिने । বাদল । मे. ।

**वार्द्धक(क्य)म् ।** वृद्धावस्थायाम् । मे. ।

**वार्द्धिकरा ।** स्त्री । गुड़ूच्यां । रा.नि.व.३ ।

**वार्द्धिभवम् ।** क्ली । दक्षिणावर्त्तशङ्खे । आम्रबीजे । जले । द्रोणीलवणे । रा.नि.व.६ ।

**वार्द्धिवृक्षः ।** पुं । पिप्पल्याम् । वै.निघ. ।

**वार्द्धिसम्भवम् ।** क्ली । द्रोणीलवणे । वै.निघ

**वार्ह्येयम्** । क्ली । द्रोणीलवणे । रा.नि व.६ ।

**वार्द्धीणसः** । पुं । गण्डके । गण्डार । नीलग्रीवरक्तशीर्षपक्षिविशेषे । का.पुराणं । [वै.निघ. ।

**वार्भटः** । पुं । कुम्भीरे । त्रिका. । शिशुमारे ।

**वार्य्युद्भवम्** । क्ली । कमले । धनञ्जयः ।

**वार्य्योकः** । पुं । जलौकायां । জোঁক । सु.कल्प.५अ. ।

**वार्व्वाणा** । स्त्री । नीलमक्षिकायां । श.र. ।

**वार्षिकम्** । क्ली । त्रायमाणायाम् । मे. । रालं । धूना । वै.निघ. ।

**वार्षिका (की)** । स्त्री । (Jasminum sambac.) वर्षाभवमल्लिकाभेदे । বেল ফুল, মল্লিকা ফুল । तें कुलवक्रान्तचेट् । सा च दीर्घवर्त्तुलपुष्पविशेषादनेकनिर्देशा । गुणाः—शीतला हृद्या सुगन्धा पित्तघ्नी कफवातविस्फोटकृमिदोषघ्नी च । रा.नि.व.१० । शीतला लघ्वी तिक्ता दीपनत्रयापहा कर्णाक्षिमुखरोगघ्नी च । तत्तैलं तद्गुणं स्मृतम् । भा. । कासवीजे । हिं चम्बा, मुगरा, वेल । बम्. मोगरी । ता. मल्लपु । त्रायमाणाख्यलतायां । গোয়ালিয়া লতা, দলা লতা । रा.नि.व.३ । [श.च. ।

**वार्षिला** । स्त्री । करकायां । মেঘের শীল ।

**वार्हतम्** । क्ली । बृहतीफले । अम. । वा.सू.१५अ. । वै.निघ.२भ.अपस्मा.चि.भैरवरसायने । चुद्रवार्त्ताकीफले । বিঙ্গতি ফল । अम. ।

**वार्ष्णिः** । पुं । ऋषिविशेषे । च. ।

**वाल(क)म्** । क्ली । बालके । বালা । ज.द. । वै.निघ.२भ.ज्व.चि. । [१९ ।

**वालधिप्रियः** । पुं । चमरीमृगे । रा.नि.व.

**वालुकायन्त्रम्** । क्ली । औषधपाकार्थं यन्त्रविशेषे । तल्लक्षणं—"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते । भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रमेतद्धि यन्त्रं तत्र बुधैः स्मृतम् ॥" भा. । [त्रिका. ।

**वाल्कली** । स्त्री । मदिरायां । गौड़ीमद्ये ।

**वावयः** । पुं । तुलसीभेदे । বাবুই । श.र. ।

**वावरी** । स्त्री । वर्व्वूरवृत्ते । বাবলা গাছ । भेष.मृतसञ्जीवनीसुरायां । [স গাছ । श.र. ।

**वाशा (शिका)** । स्त्री । वासकवृत्ते । বাক

**वाशुरा** । स्त्री । रात्रौ । उणा. ।

**वाष्पः** । पुं । अश्रुणि । নেত্রজল । अम. । उष्मणि । मे. ।

**वाष्पकः** । पुं । मारिषे । নটিয়া শাক । भा. ।

**वाष्प(ष्पि)का** । स्त्री । हिङ्गुपत्र्याम् । রাঙ্কুনী । श.र. । वा.चि.४अ. । कृष्णजीरके । म.द.व.२ । चुद्रराजिकायां । र.स.र. । सूतिका.चि. । वर्व्वूरवृत्ते । वै.निघ.२भ.वा.व्या.चि. ।

**वाष्पी (का)** । स्त्री । हिङ्गुपत्र्यां । রাঙ্কুনী । श.र. । गुणाः—"वाष्पीका कटुतिक्तोष्णा क्रिमिशोथापहा मता ।" राज.३प. ।

**वासः** । पुं । वाट्यालके । र.मा. । वासकवृत्ते । श.र. । गृहे । अम. । वस्त्रे । अ.टी. । क्ली (स) । तेजपत्रे । रा.नि.व.६ । वस्त्रे । अम. ।

**वासकः (का)** । पुं । (Justicia adhatoda adhatoda vasaca.) स्वनामप्रसिद्धपुष्पशाकवृत्ते । ছোটি বাসক, বাসকফুলের গাছ । मधुवासक । मं हिं अरुषा । अड़ूसा । कं अडुसा, आड़सोगे । तें अडसर । ता. अधडोडु । गुणाः—तिक्तः कटुः शीतः कासघ्नः पित्तजित् कामलाज्वरश्वासचयरोगघ्नश्च । रा.नि.व.४ । "आटरूषः शीतवीर्य्यो लघुर्हृद्यः कटुः स्मृतः । तिक्तः स्वर्य्यः कासहन्ता कामलारक्तपित्तहा । विवर्णताज्वरकफश्वासमेहचयापहः । कुष्ठार्त्तिवृष्णावान्तिनाशकः परिकीर्त्तितः ॥" वैद्यकम् । "वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि । कटुपाकानि तिक्तानि कासचयहराणि च ॥" राज.३प. ।

**वासगृहम्** । क्ली । मध्यभवने । अम. । वासभवने ।

**वासतः** । पुं । गर्दभे । श.र. ।

**वासतेयी** । स्त्री । रात्र्यां । त्रिका. ।

**वासनम्** । क्ली । धूपने । वस्त्रे । मे. । [निघ. ।

**वासनाह्वयः** । पुं । नागवल्लीलतायाम् । वै.

**वासनी** । स्त्री । वस्रादनीलतायां । रा.नि.व.३ ।

**वासन्तः** । पुं । कृष्णमुद्गे । प.मु. । रा.नि.व. १६ । मुद्गे । মুগ । त्रिका. । कोकिले । रा.नि.व. १६ । तिलक्षुपे । रा.नि.व.१० । विभीतकवृक्षे । रा.नि.व.११ । जातीपुष्पवृक्षे । काके । उष्ट्रे । मलयसमीरे । त्रिका. । मदनवृक्षे । श.मा. । क्ली । सिन्दूरे । वै.निघ. ।

**वासन्ती** । स्त्री । स्वनामख्यातपुष्पवृक्षे, नवमल्लिकायां । বাসন্তীফুলের গাছ । বেলফুলের গাছ । हिं वसंतीनेवारि । मं विरवन्ति । कं विरवन्तिगे । गुणाः—शीता हृद्या सुरभिः श्रमघ्नी च । रा.नि.व.१३ । शीतला लघ्वी तिक्ता त्रिदोषघ्नी च । भा. । माधवीलतायां । प.मु. । रा.नि.व.१० । यूथिकायां । জুই । प.मु. । जातीवृक्षे । कोङ्कणे गणिकारिकेति प्रसिद्धे वृक्षे । पाटलायां । পারুল গাছ । रा.नि.व.१० । कोकिलायाम् । दन्तीपुष्पे । रा.नि.व.१३ ।

**वासपुष्पा** । स्त्री । चन्द्रशूरे । भा. ।

**वासयोगः** । पुं । चूर्णे । আবীর । अम. ।

**वासरः** । पुं । दिवसे । अम. ।

**वासवः** । पुं । कृष्णमुद्गे । वै.निघ. ।

**वासा** । स्त्री । स्वनामख्याततिक्तशाकवृक्षे । বাসকফুলের গাছ, মধুবাসক । वासन्ती । रा.नि.व.४ । वा.सू.१५अ.दूर्वादौ । "दूर्वानन्तानिम्बवासात्मगुप्ताः ।" च.द.पि.ज्व.चि.दुरालभादिः । "भूनिम्बवासाकटुरोहिणीनाम् ।"

**वासाकुष्माण्डखण्डः** । पुं । रक्तपित्तकासे औषधम् । पाठः—"पञ्चाशच्च पलं ग्राह्यं कुष्माण्डात् प्रस्थमाज्यतः । ग्राह्यं पलशतं खण्डं वासाक्वाथाढके पचेत् । मुस्ता धात्री शुभा भार्गी त्रिसुगन्धैश्च कार्षिकैः । ऐलेयविश्वधन्याकमरिचैश्च पलांशिकैः । पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत् ॥" काथार्थ—বাসাছাল ৬৪প. জল ৬৪ শ. শে. ১৬ শ. কুষ্মাণ্ডকুড়ি ৫০প. ঘৃত ১৬ প.। প্রক্ষেপ—মুতা, আমলা, বংশলোচন, বামুনহাটী, গুড়ত্বক্, তেজপত্র, এলাইচ প্রত্যেকে ২ তো. এলবালুক, শুঁঠ, ধনে এবং মরিচ প্রত্যেকে ৮ তো. পিপুলচূর্ণ ৩২ তো. মধু ১ শ. ।

**वासास्रवा** । स्त्री । कृष्णमूर्व्वायां । वै.निघ. ।

**वासिः** । पुं । कुठारभेदे । বাইস । उणा. ।

**वासिका** । स्त्री । वासकवृक्षे । श.र. ।

**वासिनी** । क्ली । शुक्लझिण्टाम् । श.च. ।

**वासिष्टम्** । क्ली । रुधिरे । है.च. ।

**वासिष्ठलेहः** । पुं । कासाधिकारे औषधम् । अत्र दशमूलादिचूरकान्तं प्र. १ प. । हरीतकी ११००शतं यवः १६ श. वारि १२८ श. शे. १६ श. पुरातनगुडः १२॥० श. तैलं ४ श. घृतं ४ श. आमलकीक्वाथः ४ श. । पाकसिद्धे मधु २ श. पिप्पलीचूर्णं ४ प. त्रिजातकं प्र. ३ श. कलसे पूरयित्वा मासं स्थापयेत् । दशमूलादि प्र. १ प.। হরীতকী ১১০০, যব ১৬ শ. জল ১২৮ শ. শে. ১৬ শ. পুরাতনগুড় ১২॥০ শ. তৈল ৪ শ. ঘৃত ৪ শ. আমলারস ৪ শ. । পাকসিদ্ধে মধু ২ শ. পিপুলচূর্ণ ৪ প. ত্রিজাতক প্রত্যেকে ৩ প. কলসে ভরিয়া ধান্যরাশিতে ১ মাস রাখিবে । वा.चि.३अ. ।

**वासिष्ठी** । स्त्री । वसिष्ठकृतवैद्यके ।

**वासी** । क्ली । तक्षण्यां । বেন্দা, ঘিসকাপ । वै.निघ. । त्रिका. ।

**वासुकी** । स्त्री । बिल्ववृक्षे । वै.निघ. ।

**वासुदेवप्रियङ्करी** । स्त्री । शतावर्य्यां । शतमूली । रा.नि.व.४ ।

**वासुदेवी** । स्त्री । शतमूल्याम् । रा.नि.व.४ ।

**वास्तिका** । स्त्री । वनमेथिकायाम् । वै.निघ. ।

**वास्तु** । क्ली । वास्तुकशाके । रा.नि.व.७ ।

**वास्तुकम्** । पुं, क्ली । (Chenopodium album.) स्वनामख्यातपत्रशाकवृक्षे । বেতুয়া বা বেতোশাক । मं चकवत । कं चक्रवर्त्त । तच्च क्षुद्रवृहत्पत्रभेदेन द्विविधं । भा.पू.१भ. शा.व. । अस्य रसः पाके लघुः । प्रभावश्च कृमिनाशित्वं मेधाग्निबलकरत्वञ्च । सक्षारमिदं कृमिघ्नं मेध्यं रुच्यं अग्निबलवर्द्धनञ्च । च.द.द्र.गु. । गुणाः—मधुरं शीतं क्षारम् ईषदम्लं त्रिदोषघ्नं रोचनं ज्वरघ्नम् अर्शोघ्नं मलमूत्रशुद्धिकृच्च । रा.नि.व.७ । "वास्तुकं मधुरं हृद्यं वातपित्तार्शसां हितम्" अत्रि.१६अ. ।

"कटुर्विपाके क्रमिहा मेधाग्निबलवर्द्धनः। सक्षारः सर्वदोषघ्नः वास्तुको रोचकः सरः॥" सु.सू.४६ अ.। "तदेव तु बृहत्पत्रं रक्तं स्यात् गौरवास्तुकं।" भा.। जीवशाके। पुनर्नवायाम्। वै.निघ.।

**वास्तुकशाकटम्।** क्ली। वास्तुकशाकक्षेत्रे। रा.नि.व.२।

**वास्तुकाकारा।** स्त्री। पट्टशाके। পাটশাক। वै.निघ.। [तरमुज। प.मु.।

**वास्तुकालिङ्गः।** पुं। तरम्बुजलतायाम्।

**वास्तुकी।** स्त्री। चिल्लीशाके। रा.नि.व.७। वास्तुके। वै.निघ.।

**वास्तुपरिग्रहः।** पुं। सर्वतः स्थानग्रहणे। আয়তন লওয়া, স্থল লওয়া। च.सू.१७अ.।

**वास्तुपुष्पा।** स्त्री। चन्द्रशूरे। भा.।

**वास्तुरुजा।** स्त्री। स्फोटपिड़काधिष्ठानवेदनायाम्। টাড়ুশ। भा.म.४भ.। [व.७।

**वास्तुवस्तूकम्।** क्ली। वास्तुकशाके। रा.नि.

**वास्तूकम्।** वास्तुकशाके। रा.नि.व.७।

**वास्तूकी।** स्त्री। श्वेतचिल्लीशाके। रा.नि.व.७।

**वास्पः।** पुं। लौहे। उष्मणि। कश्चित्। [गे।

**वास्पसेकः।** पुं। रोदने। भा.म.४भ.नासारो-

**वास्पस्वेदः।** पुं। गुल्मे स्वेदविशेषे। वातहरे क्वाथे कुम्भीं पूरयित्वा भूमौ निखन्य तदुपरि शय्यां कृत्वा वाष्पस्वेदो ग्राह्यः। रस.र.।

**वास्येयः।** पुं। नागकेशरवृक्षे। र.मा.।

**वाहः।** पुं। घोटके। अम.। च.द.कामाग्निसन्दीपने। वृषे। गर्द्दभे। परिमाणभेदे। पायली परिमाणे। वाहौ। मे.। ग्रीवास्कन्धयोरन्तभागे। जय.द.२अ.।

**वाहद्विषन्।** पुं। महिषे। प.मु.।

**वाहश्रेष्ठः।** पुं। घोटके। रा.नि.व.१८।

**वाहसः।** पुं। सुनिषण्णकशाके। শুশুনি শাক। मे.।

**वाहा।** स्त्री। वाहौ। रा.नि.व.१८।

**वाहित्थम्।** क्ली। करिगण्डाधोभागे। अम.।

**वाहुवारः।** पुं। श्लेष्मान्तकवृक्षे। रा.नि.व.११।

**वाह्यकी।** स्त्री। अग्निप्रकृतिकीटे। सु.कल्प. ८अ.। [चि.१अ.।

**वाह्यद्रुतिः।** पुं। रसस्य संस्कारविशेषे। रस.

**वाह्यायामः।** पुं। धनुस्तम्भभेदे। लक्षणं—"वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च। तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम्।" सु.नि. १अ.।

**वाह्येन्द्रियम्।** क्ली। वहिरिन्द्रिये चक्षुरादौ।

**वाह्नि(ह्लो)कम्।** कुङ्कुमे। रा.नि.व.१२। वै.निघ.क्रमि.चि.सुवर्चिकचूर्णे। हिङ्गुनि। रा. नि.व.६। भा.। सौतोऽञ्जने। प.मु.।

**विकम्।** क्ली। सद्यःप्रसूताया गोः क्षीरे। গাঁজলা। श.च.।

**विकङ्कः।** पुं। विकङ्कतवृक्षे। वै.निघ.।

**विकङ्कटः।** पुं। गोक्षुरक्षुपे। श.मा.।

**विकङ्कतः।** पुं। (Flacourtia Ramontchi, Var sapida.) स्रुवावृक्षे। বৈঁচি গাছ। दा.। हिं कंटाइ, बज्र। मं गुलघोगरी। कं हल-सानिका। तें कानरेगुचेट्टु। उत्. बइचकुड़ि। पञ्जा. ककोया। गुणाः—अम्लः मधुरः मधुरपाकः लघुः दीपनः पाचनः कामलाघ्नः पित्तघ्नश्च। रा.नि.व.६। "विकङ्कतफलं पक्वं मधुरं सर्वदोषनुत्।" भा.।

**विकङ्कता।** स्त्री। अतिबलायां। रा.नि.व.४।

**विकचा।** स्त्री। महाश्रावणिकायाम्। গোরক্ষমুণ্ডী। रा.नि.व.५।

**विकटः।** पुं। साकुरुण्डवृक्षे। रा.नि.व.६। सोमलतायाम्। वै.निघ. विस्फोटके। श.र.।

**विकटविषाणः**
**विकटशृङ्गः** } पुं। सम्बरमृगे। वै.निघ.।

**विकण्टकः।** पुं। यवासे। দুরালভা। कटा.। स्वनामख्यातवृक्षे। गुणाः—कषायः कटुः उष्णः रूक्षः दीपनः कफघ्नः वक्तरञ्जकश्च। रा.नि.व.११।

**विकरः।** पुं। रोगे। श.च.। [वै.निघ.।

**विकरणी।** स्त्री। तिन्दुकवृक्षे। তৈঁদ গাছ।

**विकर्णकः**
**विकर्णरोमा (न)**
**विकर्णसंज्ञः** } पुं। ग्रन्थिपर्णभेदे। ‌ठो-रा। वम्. भटौरा। [अम.।

**विकर्त्तनः** । पुं। अर्कवृक्षे। आकन्द गाछ।

**विकर्त्तिका** । स्त्री। हृदयस्यावर्त्तच्छेदनके इव रुग्विशेषे। वा.चि.६अ.।

**विकर्षणम्** । क्ली। विगृह्याकर्षणे। मांसादि-प्रतिबद्धशल्यस्य मोचने। सु.सू.७अ.।

**विकलपाणिकः** । त्रि। विकलहस्ते। हात भाङ्गा। हला.।

**विकलाङ्गः** । त्रि। पङ्गुकाये।

**विकल्पः** । पुं। सम्प्राप्तिरोपाधिकभेदे। "दोषाणां समवेतानां विकल्पोऽंशांशकल्पना।" मा.पञ्चनि.। इदमेव विकल्पः। यथा रसौदनः सघृता यवागूर्वा। सु.उ.६५अ.।

**विकषा (सा)** । स्त्री। मञ्जिष्ठायाम्। प.मु.। भैष.वृहत्खदिरवटी। मांसरोहिण्याम्। रा.नि.व.१२। भैष.वातरक्तचि.। च.द.वा.व्या.एलादि-भेदे। रक्तपुनर्नवायां। वै.निघ.। [व.५।

**विकस्वरा** । स्त्री। रक्तपुनर्नवायाम्। रा.नि.

**विकारः** । पुं। व्याधौ। रा.नि.व.२०। विकृते रोगे। निका.। प्रकृतेरन्यथाभावे। अम.। धातुवैषम्ये। च.सू.१अ.।

**विकालः** । पुं। सायाह्ने। दैकाल। श.र.।

**विकालिका** । स्त्री। मानरन्ध्रायां। ताँबी, घड़ी। त्रिका.।

**विकिरः** । पुं। पक्षिणि। अम.। वृहत्कूपे। त्रिका.। सु.सू.४५अ.। लक्षणं—"नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी। उद्धार्यते ततो यत्तु तज्जलं विकिरं विदुः॥" जलन्तु—शीतलं स्वच्छं निर्दोषं लघु स्वादु पित्तघ्नं वारघ्न। क्ली। चरणे। भा.। सु.नि.३अ.। [चेपर्णे।

**विकीरणः** । पुं। रक्तार्के। प.मु.। क्ली। वि-

**विकीर्ण(क)म् (का)** । क्ली, स्त्री। ग्रन्थिपर्णभेदे। वै.निघ.। त्रि। विच्छिन्ने।

**विकोर्णफलः (कः)** । पुं। रक्तार्के। वै.निघ.।

**विकीर्णरोम (न)**
**विकीर्णसंज्ञम्** } क्ली। स्थौणेयके। गैंठि-ञाला। रा.नि.व.१२।

**विकुम्भः** । पुं। कनकवृक्षे। रस.कौ.ज्वरारिरसे।

**विकूणिका** । स्त्री। नासिकायाम्। हे.च.।

**विकूणनम्** । क्ली। सङ्कोचने। वा.उ.१५अ.।

**विकृतः** । त्रि। रोगिणि। रा.नि.व.२०। अ-संस्कृते। मे.। क्ली। विकारे। [हे.च.।

**विकृतिः** । स्त्री। विकारे। रोगे। डिम्बे।

**विकेशिका** । स्त्री। वर्त्तौ। पलते। सु.सू.१८अ.।

**विक्रमः** । पादे। रा.नि.व.१८।

**विक्रमी (इन्)** । पुं। सिंहे। रा.नि.व.१९।

**विक्रान्तम्** । क्ली। वैक्रान्तमणौ। रा.नि.व.१३। पुं। सिंहे। रा.नि.व.१९।

**विक्रान्ता** । स्त्री। वत्सादनीलतायाम्। रा.नि.व.३। अग्निमन्थवृक्षे। वै.निघ.। जयन्त्यां। रा.नि.व.४। मूषिककर्ण्याम्। वराहक्रान्तायां। च.द.वा.रक्त.वृह.गुडूचीतैले। आदित्यभक्तायां। रा.नि.व.४। हुड़हुड़ा। अपराजितायाम्। हंसपादीलतायां। रक्तलज्जालुकायाम्। रा.नि.व.५।

**विक्रिया** । स्त्री। विकारे। अम.।

**विक्लवः** । त्रि। जडे। विह्वले। अम.।

**विक्लेदः** । पुं। आर्द्रतायाम्। भा.नासारोगे।

**विखः (खुः) (ख्यः)** । त्रि। अनासिके। थौंदा। हे.च.।

**विखः (खुः)** । त्रि। अनासिके। नाककाटा। हे.च.। श.र.। [प्रसूतयाम्। सु.शा.१०अ.।

**विगतसूतिका** । स्त्री। पुनरार्त्तवदर्शनपर्य्यन्तं

**विगतार्त्तवा** । स्त्री। निवृत्तरजस्कायां। श.र.।

**विगन्ध(न्धि)कः** । पुं। इङ्गुदीवृक्षे। रा.नि.व.८। [रा.नि.व.४।

**विगन्धिका** । स्त्री। हपुषायां। अजगन्धायाम्।

**विगिरः** । पुं। विष्किरपक्षिभेदे। अर्क.र.चि.४र्थ.शतके।

**विग्रः** । त्रि। अनासिके। थौंदा। हे.च.।

**विग्रहः** । पुं । शरीरे । रा.नि.व.१८ । विभागे । मे. ।

**विग्रहावरम्** । क्ली । पृष्ठे । श.च. ।

**विघट्टम्** । क्ली । वङ्गे । वै.निघ. ।

**विघट्टिकाकन्दः** । पुं । गुदकन्दरोगे ।

**विघण्टा (ण्टिका)** । स्त्री । गुलञ्चकन्दे । रा.नि.व.७ ।

**विघसम्** । क्ली । भोजने । रा.नि.व.२० । सिक्थके । पुं । भोजनशेषे । अम. ।

**विघ्नप्रियम्** । क्ली । यवक्षतयवाग्वाम् । যবের নাড়ু । प.मु. । [व.१९ ।

**विघ्नेशवाहनः** । पुं । महामूषिके । रा.नि.

**विघ्नेशानकान्ता** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.व.८ ।

**विङ्कः** । पुं । खुरे । त्रिका. ।

**विचकिलः** । पुं । दमनकवृक्षे । भा.म.१भ. मेद.चि. । मल्लिकावृक्षे । वै.निघ. ।

**विचण्डिका** । स्त्री । रक्तकरवीरवृक्षे । वै.निघ. ।

**विचर्च्चिका** । स्त्री । सूक्ष्मस्फोटके । रा.नि.व.२० । क्षुद्रकुष्ठभेदे । খস, চুলকুনি । तल्लक्षणम् —राज्योऽतिकण्ड्वर्त्तिरुजः सुरूक्षा भवन्ति गात्रेषु विचर्च्चिकायाम् । सु.नि.५अ.१३ ।

**विचक्षणा** । स्त्री । नागदन्त्याम् । হাতিশুঁড় । रा.नि.व.५ ।

**विचक्षुः** । त्रि । विमनसि । त्रिका. ।

**विचित्रः (कः)** । पुं । अशोकवृक्षे । रा.नि.व.१० । तिलकवृक्षे । वै.निघ. । भूर्जवृक्षे । रा.नि.व.९ । [लौकायाम् । सु.सू.१३अ. ।

**विचित्रकर्वुरा (वर्णा)** । स्त्री । सविषज-

**विचित्रा** । स्त्री । मृगेर्वारुके । রাখালকাঁকুড় । रा.नि.व.८ । [श.च. ।

**विचित्राङ्गः** । पुं । मयूरे । श.र. । व्याघ्रे ।

**विचित्रान्नम्** । क्ली । खिचरिकायाम् । খিচড়ি ।

**विचिलकः** । पुं । प्राणहरकीटभेदे । सु.कल्प.८अ. ।

**विघूर्णनम्** । क्ली । अवघूर्णने । भा.म.४अ. ।

**विचेष्टनम्** । क्ली । विरुद्धचेष्टायां, बलवद्ग्रहादौ । निदा. ।

**विच्छत्रकः** । पुं । सुनिषण्णकशाके । ज.द. ।

**विच्छर्दिका** । स्त्री । वमने । रा.नि.व.२० ।

**विच्छलः** । पुं । वेतसलतायाम् । र.मा. ।

**विच्छित्तिः** । पुं । कषाये । त्रिका. ।

**विच्छिन्नः** । पुं । बालरोगे । क्ली । कुसादवगाढे मर्यादावर्त्ती । वा.उ.२६अ. ।

**विजपिलम्** । क्ली । पङ्के । हला. ।

**विजयचूर्णम्** । क्ली । अर्शसि औषधम् । ত্রিকটু, ত্রিফলা, ত্রিমদ, বচ, হিঙ্গু, আকনাদি, যবক্ষার, হরিদ্রা, দারুহরিদ্রা, চই, চিরেতা, ইন্দ্রযব, চিতারমূল, বেলেড়া, শুল্‌ফা, পঞ্চলবণ, পিপুলমূল, বেলশুট ও যমানী সমভাগ । च.द. ।

**विजयन्ती** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**विजया** । स्त्री । स्थावरविषान्तर्गतमूलविषे । सु.कल्प२अ. । शेफालिकायाम् । रा.नि.व.४ । हरीतकीभेदे । भा.म.१भ. । रा.नि.व.११ । सा विन्ध्यगिरिजा । वा.चि.१अ. । जयन्त्यां । रा.नि.व.४आनन्दभैरवीवद्याम् । दन्तीवृक्षे । वै.निघ. । निर्गुण्ड्याम् । वचायां । श्वेतवचायां । रा.नि.व.६ । नीलीवृक्षे । बलायां । प.मु । शमीभेदे । मञ्जिष्ठायाम् । नीलदूर्व्वायां । रा.नि.व.८ । अग्निमन्थे । रा.नि.व.९ । भङ्गायां । হিঁ भाङ्, सिद्धि । श.च. । गुणाः— कटुः कषाया उष्णा तिक्ता वातकफघ्नी संग्राहिणी वाक्प्रदा बल्या मेधाकारिणी सुष्ठु दीपनी च । रा.नि.व.६ ।

**विजयाबन्धः** । पुं । अपराजितावन्धने । यथा—"सायंकालेऽभिमन्त्र्यैव विजयां प्रातरुद्धरेत् । बद्धा शिरसि तन्मूलं ज्वरं तज्ज्वरहरं परम् ॥" वै.निघ. ।

**विजयावहः** । पुं । सर्षपे । वै.निघ. ।

**विजयिनी** । स्त्री । वनमल्लिकायाम् । वै.निघ. ।

**विजला** । स्त्री । चञ्चुक्षुपे । रा.नि.व.४ ।

**विजिलम्** । क्ली । दधिप्रकारे । ईषत्सारसव्यञ्ज-

जादौ। अम.। "पाककपरसासक्तौ व्यञ्जने तु भवेसयम्। तैलपाकसुसंस्कारे प्रायशसुपसंस्कृतम्। पिच्छिलं लालसीकञ्च विजिलं विज्जिलञ्च तत्॥" श.र.। [श.र.।

**विजिविलम्।** क्ली। विजिले। भ.टी.रा.।

**विजुलः** पुं। शाल्मलीकन्दे। रा.नि.व.७।

**विजृम्भनम्।** क्ली। जृम्भणे। হাইতোলা।

**विजृम्भितम्** क्ली। चेष्टायां। मे.।

**विज्ज(ज्जि)लम्।** क्ली। विजिले। अम.।

**विज्जलः।** पुं। बाल्यालके। বেলেড়া। वै. निघ.।

**विज्जुलम् (ला)।** क्ली, स्त्री। गुडत्वचि। रा.नि.व.६। त्रि। पिच्छिले। च.वि.८ष.।

**विज्जुलि(ल्लि)का।** स्त्री। जन्तुकालतायाम्। रा.नि.व.३।

**विञ्जुडिः।** स्त्री। जटामांस्याम्। श.च.।

**विज्ञानतैलगर्भः।** पुं। अङ्कोलवृक्षे। रा. नि.व.८।

**विज्ञामरम्।** क्ली। चक्षुषः शुक्लदेशे। कश्चित्।

**विटः।** पुं। खदिरे। मूषिके। वै.निघ.। [मा.। लवणभेदे। विट् लवण। मे.। नागरङ्गवृक्षे। श.

**विटपः।** पुं। आदित्यपत्रे। रा.नि.व.४। क्ली। तन्नामकसक्थिमर्म्मणि। तस्य च स्थानं वंक्षणवृषणयोर्मध्यभागः। सु.शा.६ष.। [वृक्षे। अम.।

**विटपी (न्)।** पुं। वटवृक्षे। रा.नि.व.११।

**विटप्रियः।** पुं। मुद्गरवृक्षे। गन्धराजफुलेर गाछ। रा.नि.व.११। [क्रिक। हे.च.।

**विटमाक्षिकः।** पुं। धातुमाक्षिके। স্বর্ণমা-

**विटलवणम्।** क्ली। विड्लवणे। विट्लून। रा.नि.व.६। [१०।

**विटवल्लभा।** स्त्री। पाटलीवृक्षे। रा.नि.व.

**विटिः।** स्त्री। पीतचन्दने। श.मा.। [मा.नि.।

**विट् (ड्)।** स्त्री। विष्ठायाम्। रा.नि.व.१८।

**विट्कता।** स्त्री। विष्ठायाम्। मा.ज्व.नि.।

**विट्खदिरः।** पुं। अरिमेदखदिरवृक्षे, विशागन्धखदिरे। গুয়েবাবলা। गुणाः—कटुः उष्णः तिक्तः रक्तव्रणदोषहरः कण्डूविषविसर्पघ्नः ज्वरकुष्ठोन्मादहरश्च। रा.नि.व.८।

**विट्घातः।** पुं। मूत्राघाते। বিড়্ঘাত।

**विट्चरः।** पुं। ग्राम्यशूकरे। अम.। [निघ.।

**विट्प्रियः।** पुं। शिशुमारे। শুশুক। वै.

**विट्सङ्गः।** पुं। पुरीषाप्रवृत्तौ। भा.भ.मा. चि.। "विट्सङ्ग आध्मानमथाविपाकः।"

**विट्सारिका।** स्त्री। सारिकाभेदे। গুয়ে শালিক। जटा.।

**विड्ः।** पुं। रसजारणे चारबहुलद्रव्यसमष्टौ। यथा—"वास्तुकैरण्डकदलीदेवदालीपुनर्नवाः। वासापलाशनिचुलतिलकाञ्चनमोचकाः। सर्व्वाङ्गखण्डं सच्छिद्रं नातिशुष्कं शिलातले। दग्धं काण्डं तिलानाञ्च पञ्चाङ्गं मूलकस्य च। स्रावयेन्मूत्रवर्गेण जलं तस्मात् परिस्रुतम्। लौहपात्रे पचेद् यत्नैर्हंसपाकाग्निमानवित्। वाष्पाणां बुद्बुदानाञ्च बहूनामुद्गमे यथा। तदा काशीशसौराष्ट्रीचारत्रयकटुत्रयम्। गन्धकञ्च सिता हिङ्गुर्लवणानि च षट् तथा। एषां चूर्णं क्षिपेद्देवि लौहसंपुटमध्यतः। सप्ताहं भूगतं पश्चाद्राब्धेस्तु प्रचुरो विड़ः॥" तिलकाण्डचारं सर्व्वचारसम इति नित्यनाथः। "टङ्कणं शतधा भाव्यं द्रावैः पालाशवृक्षजैः। विड़ो वह्निमुखो नाम द्वितीयः सर्व्वजारणे॥" र.चि. ३ष.।

**विड्म्।** क्ली। लवणविशेषे। [illegible] लवण। चि. क्र.क.कंशरपाके। हिं विड़ [illegible] सौचर। प.मु.। गुणाः—दीपनम् उष्णं वातघ्नं रुच्यम् अजीर्णशूलघ्नं गुल्ममेहघ्नञ्च। रा.नि.व.६। विड़ङ्गे। वै.निघ. २भ.संग्रहणीचि.विड़ङ्गादियोगे। पाक्यलवणे। अम.।

**विड्ङ्गः।** त्रि। (Embelia ribes.) Seeds of Embelia ribes. क्रिमिघ्नपण्यद्रव्यविशेषे। বিড়ঙ্গ। हिं वाविराङ् वायविड़ं। तें वायुविड़ङ्गपुचेट्टु। बम्. वर्वहि, अम्बट कार्कणनी। ता. वायविलं। गुणाः—कटु उष्णं लघु कफवातघ्नम् अग्निमान्द्यघ्नम् अरुचिक्रिमिघ्नञ्च। रा.नि.व.६। ईषत्तिक्तं विषघ्नं क्रिमिघ्नञ्च। सु.सू.४६ष.। वा.सू. १५ष.सुरसादिः। "कालमालाविड़ङ्गम्।"

**विड़ङ्गसारः** । पुं । विड़ङ्गतण्डुले । चारगुड़िकायाम् । (हेमाद्रिविरेचनाध्याये) ।

**विड़ङ्गादिचूर्णम्** । क्ली । कासाधिकारे । पाठः –"विड़ङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् । भार्गीं चारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥" वा.चि.३ष. ।

**विड़ारः (लः)** । पुं । मार्जारे । বিড়াল । सुगन्धमार्जारे । গন্ধগকুল । क्ली । हरिताले । हे.च. । [१ख. ।

**विड़ालपदकम्** । स्त्री । कर्षे, २तो. । प.प्र.

**विड़ालास्थि** । क्ली । मार्जारास्थनि । বিড়ালের হাড় । वा.उ.२८ष.। इदं भगन्दरे हितं ।

**विड़ालिका (ली)** । स्त्री । भूमिकुष्माण्डे । ভূঁইকুমড়া । रा.नि.व.७ ।

**विड़ुलः** । पुं । वेतसवृचे । हे.च. ।

**विड़्गन्धम् (न्धि)** । क्ली । विड़्लवणे । प.मु. ।

**विड्ग्रहः** । पुं । बद्धकोष्ठतायाम् । निदा. ।

**विड्भेदः** । पुं । पित्तजन्यरोगे । भा. ।

**विड्लवणम्** । क्ली । विड्लवणे । र.मा. ।

**विड्वराहः** । पुं । ग्राम्यशूकरे । जटा. ।

**विड्वलः** । पुं । गोमयके । নিশাদল । प.मु. ।

**विड्विघातः** । पुं । मूत्राघातरोगविशेषे । लक्षणं –"रूचदुर्बलयोर्वातेनोदावर्त्ते शकृद्यदा । मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः । विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥" मा.नि.।

**विड्विभेदः** । पुं । विड्विघातरोगे । मा.नि. ।

**विणमार्गः** । पुं । गुदे । वा.चि.२ष. ।

**वितण्डा** । स्त्री । करवीरवृचे । मे. । कचुनामकन्दशाके । কচু । जटा.। दर्व्यां । হাতা । हारा.।

**वितस्ता** । स्त्री । भारतीयनदीविशेषे । वितस्ता काश्मीरे प्रसिद्धा । तज्जलगुणाः—स्वादु त्रिदोषघ्नं लघु प्रज्ञाबुद्धिप्रदं तापहरं आद्यहरं पथ्यञ्च । रा.नि.व.१४ ।

**वितस्तिः** । स्त्री। कनिष्ठिकाङ्गुष्ठयुतकरविस्तारे । ১২ অঙ্গুলি । रा.नि.व.१८ ।

**वितानः (बन्धः)** । पुं । शिरोव्रणस्य बन्धन भेदे । "शीर्षे वितानसंज्ञस्तु वितानाकारसंयुतः ।" इति लक्षणं । सु.सू.१८ष. ।

**वितानकम्** । क्ली । धान्यके । धनियां । प.मु. । पुं । माड़वृचे । रा.नि.व.२३ ।

**वितानमूलकम्** । क्ली । कौङ्कणदेशप्रसिद्धे वीरणमूले । বেণারমূল । रा.नि.व.६ ।

**वितुन्नम्** । स्त्री । सुनिषण्णके । শুশুনি শাক । ष्म. । शैवाले । मे. ।

**वितुन्नकम्** । क्ली । धान्ये । धने । रा.नि.व. ६ । म.द.व.२ । तुत्थके । कैवर्त्तमुस्तके । वितुन्नकनाम्नो वृचस्य त्वक् मुस्ताकृतिः । कौसची मोथा गुड़तर्जी इति च ख्यातम् । কৈবর্ত্তমুতা, কেওটমুতা । भा. । पुं । भामलकीवृचे । ष्म. । स्त्री (का) । भूम्यामलक्याम् । ভূঁই আমলা । वै. निघ. । [আমলা । वै.निघ. ।

**वितुन्नभूता** । स्त्री । भूम्यामलक्याम् । ভূঁই

**वितुन्ना (न्निका)** । स्त्री । भूम्यामलक्याम् । ভূঁই আমলা । रा.नि.व.५ ।

**वित्तनः** । पुं । वृषभे । श.च. । [श.च. ।

**विथ्या** । स्त्री । गोजिह्वायाम् । গজিয়া শাক ।

**विदंशः** । पुं । व्यञ्जने । চাট । रा.नि.व.२० ।

**विदः** । पुं । तिलकवृचे । वै.निघ. ।

**विदग्धम्** । क्ली । लघुरोहितवृचे । वै.निघ. ।

**विदग्धाजीर्णम्** । क्ली । दग्धाजीर्णभेदे । See अग्निमान्द्यम् ।

**विदग्धाम्लदृष्टिः** । स्त्री । दृष्टिगतरोगभेदे । लक्षणं –"भृशमम्लाशनाद्दोषैः साम्लैर्या दृष्टिराचिता । सक्लेदकण्डूकलुषा विदग्धाम्लेन सा स्मृता ॥" वा.उ.१२ष. ।

**विदन्ता** । स्त्री । वराटकभेदे । रा.नि.व.१३ ।

**विदरम्** । क्ली । विषमारके । ফণিমনসা । श.च. । पुं । स्फोटने । ফোটান্‌হোটা । ष्म. ।

**विदरणम्** । क्ली । विदर्भी । रा.नि.व.२० ।

**विदर्भः** । पुं । दन्तमूलगतरोगे । लक्षणं– "घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् । यस्मिंश्चलन्ति दन्ताश्च स विदर्भोऽभिघातजः ॥" वा. उ.२१ष. ।

**विदलम्** । क्ली । विदले । দালি । दाड़िम्ब-बीजे । ডালিমের দানা । अम.भ.लिङ्गसंग्रहे । पुं । रक्तकाञ्चने । श.र. । पिष्टके । পিঠা । श.च. । स्त्री (ला) । त्रिवृति । তেউড়ী । रा.नि.व.६ । सातलायाम् । रा.नि.व.४ ।

**विदलान्नम्** । क्ली । दाल्याम् । দাল । यथा —"यवगोधूमचणका माषो मुद्गाढ़की तथा । मकुष्ठकः कुलत्थश्च मसूरस्त्रिपुटस्तथा । निष्पावकः कलायश्च विदलान्नं प्रकीर्त्तितम् ॥" अत्रि.१५अ. । गुणाः— स्वस्वपर्य्याये मृग्याः । [वा.उ.२६अ. ।

**विदलितम्** । क्ली । मज्जरक्तपरिस्रुतसद्योव्रणे ।

**विदारकम्** । क्ली । वज्रक्षारे । रा.नि.व.६ । जलमध्यस्थलकर्शलादौ । अम. ।

**विदारणः** । पुं । कर्णिकारवृक्षे । श.र. । खर्परे । খাপর । वै.निघ. । क्ली । वायुजन्यव्रणवेदनाविशेषे । सु.सू.२२अ. । त्रि । विदीर्णकरणे ।

**विदारिका** । स्त्री । शालपर्ण्याम् । শালপাণি । प.मु. । गाम्भारीवृक्षे । वै.निघ. । प्रमेहपिड़काविशेषे । लक्षणं —"विदारीकन्दवद्वृत्ता कठिना च विदारिका ।" सु.नि.६अ. । क्षुद्ररोगविशेषे । लक्षणं यथा —"विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु । रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम् ॥" सु नि.१३अ. । कर्णरोगभेदे । "………सन्निपाताद्विदारिका । सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः । कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति । सङ्कोचयति रूढ़ा च सा ध्रुवं कर्णशष्कुलीम् ॥" वा.उ.१७अ. ।

**विदारि(री)गन्धा** । स्त्री । शालपर्ण्याम् । শালপাণি । सु.सू.३८अ. । तिक्ततुम्ब्याम् । তিৎলাউ । च.द.मू.कृ.चि.सुकुमारकुमारके घृते । च.सू.४अ. । [६ ।

**विदारिणी** । स्त्री । गाम्भारीवृक्षे । रा.नि.व.

**विदारी** । स्त्री । गलरोगभेदे । लक्षणं यथा —"सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसं । पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥" सु.नि.१६अ. । क्षुद्ररोगभेदे । কাঁকবিড়ালী । लक्षणं—"विदारीकन्दकठिना विदारी कक्षवङ्क्षणे ।" वा.उ.३१अ. । (Ipomoea digitata. Syn. Paniculata.) महाकन्दशाकविशेषे । ভূঁইকুমড়া । हिं बिलाइकन्द, क्षीरविदारी गेठी च । कं नेलकुबल । तें नेलगुम्मडि । उत्. भूइँकखारु । बम्. भूमिकोहले । गुणाः—मधुरा शीता गुरुः स्निग्धा रक्तपित्तघ्नी कफकरी बल्या वीर्य्यवर्द्धनी च । रा.नि.व.७ । कोहलाकारो लोहितकुसुमः, स च द्विधा दीर्घकन्दो बहुक्षीरः, हस्तिपादको महाक्षीरश्च । सु.सू.३८अ. । च.चि.८अ. । सुवर्च्चलायाम् । वाराहीकन्दे । क्षीरकाकोल्यां । वै.निघ. । विदार्य्यादिगणः यथा— पञ्चाङ्गुलवृश्चिकालीवृश्चीरदेवाह्वयशूर्पपर्णीकण्डूकरीजीवनह्रस्वपञ्चमूलगोपसुतात्रिपादात्मके वर्गे । गुणाः— हृद्यो बृंहणः वातपित्तहा शोषगुल्माङ्गमर्द्दोर्द्ध्वश्वासकासहरश्च । वा.सू.१५अ. । [ड़া । रा.नि.व.७ ।

**विदारीकन्दः** । पुं । विदार्य्यां । ভূঁইকুম-

**विदारीद्वयम्** । पुं । कुष्माण्डभूमिकुष्माण्डयोः । কুমড়া ও ভূঁইকুমড়া । वै.निघ.क्षय.चि.शिवगुट्याम् ।

**विदारुः** । पुं । कृकलासे । কাঁকলাস । त्रिका. ।

**विदाहः** । पुं । पित्तजन्यरोगे, पित्तजन्यज्वालायाम्, करपादादिदाहे । भा. ।

**विदाहकः** । त्रि । दाहजनके ।

**विदाहि** । त्रि । अतिदाहजनकवस्तुनि । तल्लक्षणं—"विदाहि द्रव्यमुद्गारमम्लं कुर्य्यात्तथा तृषाम् । हृदि दाहञ्च जनयेत् [illegible] गच्छति तच्चिरात् ॥" राज. ।

**विदिक्चङ्गः** । पुं । हरिद्राङ्गपक्षिणि । হরিয়াল বা কৃষ্ণগোকুল । श.च. ।

**विदुः (दूः)** । पुं । करिकुम्भमध्यावकाशे । अ.टी. । अश्वस्य कर्णाधः षड़ङ्गुले भागे । ज.द.२अ. ।

**विदुलः** । पुं । वेतसलतायाम् । जलवेतसे । प.मु. । वा.सू.१५अ. । गन्धरसे । र.मा. ।

**विदुला** । स्त्री । सातलायाम् । रा.नि.व.४ । विट्खदिरे । গুয়েবাব্‌লা । "विदुलायास्तु मूलञ्च ।" प्रयोगा.वन्ध्याधिकारे ।

**विदूरजम्** । क्ली । वैदूर्य्यमणौ । रा.नि.व.१२

**विद्धः** । पुं । सन्निपाते । क्ली । सद्योव्रणविशेषे । लक्षणं—"सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद्विना । उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥" सु.चि.२अ. । [दि । भ.द्विरूपकोषः ।

**विद्धकर्णः** । पुं । अविद्धकर्णायां । आकनादि ।

**विद्धकर्णा (र्णिका, र्णी)** । स्त्री । पाठायाम् । आकनादि । भ.द्विरूपकोषः । अम. । रा.नि.व.६ ।

**विद्धमाचिकम्** । क्ली । मद्ये । वै.निघ. ।

**विद्धा** । स्त्री । क्षुद्ररोगभेदे । लक्षणं यथा—"या पद्मकर्णिकाकारा पिटिका पिटिकान्विता । सा विद्धा वातपित्ताभ्याम्······ ॥" वा.उ.३१अ. ।

**विद्या** । स्त्री । गणिकारिकायाम् । गणिरि । अ.च. । ज्ञाने । जटा. ।

**विद्यादलः** । पुं । भूर्ज्जवृक्षे । अ.मा. ।

**विद्याधरयन्त्रम्** । क्ली । डमरुयन्त्रनामके औषधपाकार्थं यन्त्रविशेषे । तस्य लक्षणम्—"अथ स्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि । स्थालीमूर्द्धमुखीं सम्यङ्निरुध्य मृदुमृत्स्नया । ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य यत्नतः । अधस्ताज्ज्वालयेदग्निं यावत्प्रहरपञ्चकम् । स्वाङ्गशीतं ततो यन्त्रादूर्द्ध्वस्थाल्यास्थितं रसम् । विद्याधराभिधं यन्त्रम्······उदाहृतम् ॥" भा. ।

**विद्याधररसः** । पुं । गुल्मे रसः । पाठः—"गन्धकं तालकं ताप्यं मृततांम्रं मनःशिलां । शुद्धसूतञ्च तुल्यांशं मर्द्दयेद्दारवर्य्येद्दिनम् ॥ पिप्पल्याः सुकषायेण वज्रीक्षीरेण भावयेत् । निष्कार्द्धं भक्षयेत् क्षौद्रैः ····· ॥" गन्धक, हरिताल, स्वर्णमाक्षिक, तामा, मनछाल, शुद्धरस प्रत्येके २ तो. पिपुलेर क्वाथ ओ वज्रीक्षीरे भावना दिबे । सा.कौ. ।

**विद्याधराभ्रम्** । क्ली । शूलाधिकारे औषधम् । पाठः—"विडङ्गमुस्तत्रिफला गुडूची दन्ती त्रिवृच्चित्रककटुत्रिकञ्च । प्रत्येकमेषां पिचुभागचूर्णं पलानि चत्वार्य्ययसो मलस्य । गोमूत्रसिद्धस्य पुरातनस्य किंवास्य देयानि च राटिकायाः । कृष्णाभ्रचूर्णस्य पलं विशुद्धं निश्चन्द्रकञ्चामलतीव मृतात् । पादोनकर्षं स्वरसेन खल्ले शिलातले मत्सुमयी नी- दलस्य । संशोध्य यत्नादपि शुद्धमभ्रं पाषाणचूर्णेन पिचून्मितेन । युक्त्या ततः पूर्व्वरजांसि दत्वा सर्पिर्मधुभ्यामवमर्द्य यत्नात् । निधापयेत् स्निग्धविशुद्धभाण्डे···॥" इत्यादि । विड़ङ्ग, मुता, त्रिफला, शुलुञ्च, दन्तीमूल, तेउड़ीमूल, चितामूल, त्रिकटु प्रत्येके २ तो. शुद्धमण्डुर अथवा शुद्धलौहचटिका ४ प. जारिताभ्र १ प. ; धूलकुड़िस्वरसे शोधित पारा ১॥० तो. शुद्धगन्धक २तो. कज्जली करिया, सेइ कज्जली ओ पूर्वोक्त द्रव्यसमूह घृत ओ मधु द्वारा मर्द्दन करिया स्निग्धभाण्डे राखिबे । मा. ১।২।৩ रति पर्य्यन्त । सा.कौ. ।

**विद्यापतिः** । पुं । चिकित्साग्रन्थप्रणेतरि ।

**विद्युच्छिखा** । स्त्री । स्थावरविषान्तर्गतमूलविषभेदे । सु.कल्प.२अ. ।

**विद्युज्ज्वाला** । स्त्री । कलिकारीक्षुपे । विषलाङ्गलिया । रा.नि.व.४ ।

**विद्युत्** । स्त्री । सन्ध्यायाम् । मे. ।

**विद्युत्प्रियम्** । क्ली । कांस्यधातौ । वै.च. ।

**विद्रम्** । क्ली । छिद्रे । अ.च. ।

**विद्रधिः (धी)** । पुं, स्त्री । शुक्रदोषभेदे । अयमपि विद्रधिलक्षणः । सु.नि.१४अ. । रोगभेदे । पेटे फोड़ा, राजफोड़ । स षड्विधः वातपित्तकफशोणितक्षतत्रिदोषजभेदात् । निदानं—"त्वग्रक्तमांसमेदांसि संदूष्यास्थिसमाश्रिताः । दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशं । महामूलं रुजावन्तं वृत्तं वाप्यथवायतं । स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥" मा.नि. । "पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा । षण्णामपि हि तेषान्तु लक्षणं संप्रवक्ष्यते । कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः । चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः । पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् । क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः । शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः । चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः । तनुपीतसितास्त्वेषामास्रावाः क्रमशः स्मृताः । नानावर्णरुजास्रावो घाटालो विषमो महान् । विषमं पच्यते वापि विद्रधिः सान्निपातिकः । तैस्तैर्भावैरभिहते क्षते चापथ्यसेविनः । क्ष-

तीषा वायुविसृत: सरक्तं पित्तमीरयेत् । ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिन: । एष विद्रधिरागन्तु: पित्तविद्रधिलक्षण: । आभ्यन्तरानत ऊर्द्ध विद्रधीन् परिचक्षते । गुर्व्वसात्म्यविरुद्धान्नशुष्कसंक्लिष्टभोजनात् । अतिव्यवायव्यायामवेगाघातविदाहिभि: । पृथक्सम्भूय वा दोषा: कुपिता गुल्मरूपिणम् । वल्मीकवत्समुन्नद्धमन्त: कुर्व्वन्ति विद्रधिम् । गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयो: प्लीह्नि यकृति हृदये क्लोम्नि वा तथा । तेषां लिङ्गानि जानीयात् बाह्यविद्रधिलक्षणै: । आमपक्वैषणीयेन पक्वापक्वं विनिर्दिशेत् । गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता । नाभ्यां हिक्का तथाटोप: कुक्षौ मारुतकोपनम् । कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ । वृक्कयो: पार्श्वसङ्कोच: प्लीह्न्युच्छ्वासावरोधनं । सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुण: । श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका । आमो वा यदि वा पक्वो महान् वा यदि वेतर: । सर्व्वो मर्म्मोत्थितश्चापि विद्रधि: कष्ट उच्यते । स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितै: । दाहज्वरकरो घोरो जायते रक्तविद्रधि: । अपि सम्यक्प्रजातानामसृक्कायादनि:सृतं । रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कल्लसंज्ञितम् ॥" सप्ताहान्नोपशान्तश्चेत्ततोऽसौ सम्पपद्यते । सु.नि.९अ. । गुल्मादस्य विशेष: गुल्मशब्दे द्रष्टव्य: ।

**विद्रधिका** । स्त्री । प्रमेहपिटकायाम् । लक्षणं —"विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधै: ।" सु.नि.६अ. ।

**विद्रधिघ्न: (नाशन:)** । पुं । शिग्रुवृक्षे । शोभाञ्जनवृक्षे । सजिना गाछ । त्रिका. । [व.४ ।

**विद्राविणी** । स्त्री । काकमाच्याम् । रा.नि.

**विद्रुम:** । पुं । प्रवाले । पला । रा.नि.व.१३ ।

**विद्रुमफल: (ला)** । पुं,स्त्री । मधुरकुन्दुरौ । वै.निघ. । [म्रद्रव्ये । अम. । रा.नि.व.१२ ।

**विद्रुमलता (तिका)** । स्त्री । नलीनामगन्धद्रव्ये ।

**विद्रुमवाक्** । स्त्री । मधुरकुन्दुरौ । वै.निघ. ।

**विद्रुल:** । पुं । वेतसवृक्षे । वै.निघ. ।

**विद्वान्** । पुं । वैद्ये । रा.नि.व.२० ।

**विद्वेष्यम्** । क्ली । कङ्कोले । कक्कोल । रा.नि. व.१२ । [धने । भ.रभस: । मे. । त्रिका. ।

**विध: (धा)** । पुं, स्त्री । ऋद्धौ । हस्त्यन्ने । वे.

**विधवनम्** । क्ली । कम्पने । व्याक. ।

**विधसम्** । क्ली । मधूच्छिष्टे । मम । वै.निघ. ।

**विधाता (तृ)** । पुं । मद्ये । रा.नि.व.१४ ।

**विधात्री** । स्त्री । पिप्पल्यां । श.च. ।

**विधानम्** । क्ली । व्यवस्थायाम् । जटा. । (कम्) । व्यथायां श.र. । [वै.निघ. ।

**विधानिका** । स्त्री । वृहत्याम् । विकृतौ ।

**विधि:** । पुं । कल्पने । भेदे । सु. । वैद्ये । रा.नि.व.२० ।

**विधु:** । पुं । कर्पूरे । मे. ।

**विधुफल्गुज्वर:** । पुं । सन्निपातज्वरभेदे । लक्षणं —"विधुफल्गू च तौ नाम्ना सन्निपाताबुदाहृतौ । श्लेष्मानिलाधिकौ यस्य सन्निपात: प्रकुप्यति ॥" भा. ।

**विधुरा** । स्त्री । कर्णपृष्ठाध:स्थे ऊर्द्धजत्रुमर्म्मद्वये । तत्र च वाधिर्य्यम् । सु.शा.६अ. । रसालायाम् । मे. ।

**विधुवन(ल)म्** । क्ली । कम्पने । जटा. । अम. ।

**विनता** । स्त्री । प्रमेहपिड़काभेदे । लक्षणं— "महती पिड़का नीला पिड़का विनता स्मृता ।" सु.नि.६अ. ।

**विनद:** । पुं । सप्तपर्णवृक्षे श.च. ।

**विनमनम्** । क्ली । नम्रीकरणे । सु.सू.७अ. ।

**विनम्र(क)म्** । क्ली । तगरपुष्पे । रा.नि.व.१ ।

**विनया** । स्त्री । वाट्यालके । बेरेला । मे. ।

**विनस:** । त्रि । नासाहीने । जटा. ।

**विनाम:** । पुं । व्यथया शरीरनमने । भा.म. ३भ. ।

**विनारुहा** । स्त्री । त्रिपर्णिकाकन्दे । रा.नि. व.७ । [तनाशिके । जटा. ।

**विनाश:** । पुं । नाशे । अम. । (क:) त्रि । गु-

**विनाशोन्मुखम्** । क्ली । पक्वे । अम. ।

**विनासिका** । स्त्री । अग्निप्रकृतिकीटभेदे । सु.कल्प.८अ. ।

**विनिपातः** । पुं । दैवादिव्यसने । मे. ।

**विनीतः** । पुं । दमनकवृक्षे । দনা । रा.नि.व.१० ।

**विनीयः** । पुं । कल्के । र.मा. ।

**विन्दुः** । पुं । परिमाणभेदे । जलकणायां । अम. । भ्रुवोर्मध्यभागे । मे. ।

**विन्दुचित्रकः** । पुं । मृगविशेषे । श.र. ।

**विन्दुपत्रः** । पुं । भूर्जवृक्षे । रा.नि.व.९ ।

**विन्दुराजिः** । पुं । राजिमत्सर्पविशेषे । सु.कल्प.४अ. ।

**विन्दुरेखकः** । पुं । पक्षिविशेषे । श.च. ।

**विन्दुलः** । पुं । अग्निप्रकृतिकीटविशेषे । सु.कल्प.८अ. । See कीटः ।

**विन्दुवासरः** । पुं । गर्भे सन्तानोत्पत्तिकरशुक्रपातदिने । ज्योतिषम् । [श.च. ।

**विन्धपत्री** । स्त्री । विल्वशलाटौ । বেলশুঁট ।

**विन्ध्यजातः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**विन्ध्यवासियोगः** । पुं । राजयक्ष्माधिकारे योगः । पाठः—"व्योषं शतावरी चैव फलानि द्वे पले तथा । सर्व्वामयहरो योगः सोऽयं लौहरजोऽन्वितः ..... ॥" अत्र सर्व्वचूर्णसमं लौहम् । ত্রিকটু, শতমূলী, ত্রিফলা, বেলেড়া, শ্বেত বেলেড়া প্রত্যেকে ১ তো. লৌহ ৯ তো. একত্র মাড়িবে । रस.र. ।

**विन्ध्या** । स्त्री । लवलीवृक्षे । নোয়াড় গাছ । मे. । एलायाम् । हे.च. ।

**विन्याकः** । पुं । सप्तपर्णवृक्षे । श.च. ।

**विपत्तिः** । स्त्री । विपदि । अम. ।

**विपदापहा** । स्त्री । वनकुलत्थे । वै.निघ. ।

**विपन्नः** । पुं । सर्पे । मे. ।

**विपरीतमल्लतैलम्** । क्ली । शारीरव्रणाद्यधिकारे तैलम् । पाठः—"सिन्दूरहिङ्गुविषकुष्ठरसोनचित्रबाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम् । प्रह्लादमन्नयुतमुत्कलनकीणः क्लिन्नव्रणप्रशमनो विपरीतमल्लः...... ॥" चित्रको रक्तचित्रकः । बाणाङ्घ्रिः शरपुङ्खामूलं । जलं चतुर्गुणम् । तैलं ४ श. । कल्कः प. १ प. ।

**विपर्णकः** । पुं । पलाशवृक्षे । श.च. ।

**विपर्य्ययः** । पुं । "यद्यस्याभिहितं तस्य प्रातिलोम्यम् ।" सु.उ.६५अ. । व्यतिक्रमे । अम. ।

**विपाकः** । पुं । स्वेदे । पाचने । मे. । द्रव्यभक्षणानन्तरं पाके सति माधुर्य्यादिपरिणामे । "जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः । मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः । कटुतिक्तकषायाणां पाकः स्यात् प्रायशः कटुः ॥" इति । तेषु मधुरविपाकस्य श्लेष्मकारिता, अम्लपाकस्य पित्तकारिता वातश्लेष्मरोगघ्नता, कटुपाकस्य वातकफपित्तनाशिता च । भा. ।

**विपाण्डुः** । पुं । वनजकर्कट्याम् । वै.निघ. ।

**विपाण्डुरा** । स्त्री । महामेदायाम् । प.मु. ।

**विपादिका** । स्त्री । पादस्फोटरोगे । रा.नि.व.२० । पादगतक्षुद्रकुष्ठभेदे । तल्लक्षणं—"कण्डूमती दाहरुजोपपन्ना, विपादिका पादगतेयमेव ।" सु.नि.५अ. । See पादस्फोटः । [व.५ ।

**विपादी** । स्त्री । हंसपादीलतायाम् । रा.नि.

**विपाशा** । स्त्री । भारतीयनदीविशेषे । रा.नि.व.४ ।

**विपिनद्रुः** । पुं । कालशाके । वै.निघ. ।

**विपिननृपः** । पुं । आरग्वधवृक्षे । সোঁদাল গাছ । "विपिननृपदलोत्थैः ।" रस.र.ज्व.चि. ।

**विपुलरसः** । पुं । इक्षौ । कोषाम्लरम् ।

**विपुल(ला)स्रवा** । स्त्री । गृहकन्यायाम् । घृतकुमारी । रा.नि.व.५ । [नि.व.४ ।

**विपुषा** । स्त्री । क्षुपायाम् । হবুষ ফল । रा.

**विपूयः** । पुं । बहुपूयतायाम् । भा.म.कुष्ठचि. । मुञ्जतृणे । व्याक. ।

**विप्रः** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ । शिरीषवृक्षे । वै.निघ. । रेणौ । त्रिका. ।

**विप्रकाष्ठम्** । क्ली । तूलकाष्ठे । रा.नि.व.९ ।

**विप्रकृष्टः** । त्रि । दूरे । हला. ।

**विप्रतिपत्तिः** । स्त्री । अन्यभाविते । सु.सू. ३२अ. । विरोधे ।

**विप्रत्ययः** । पुं । कार्य्याकार्य्यहिताहितशुभाशु-भेषु विपरीताभिनिवेशे । च.शा.५अ. ।

**विप्ररूढः** । पुं । फलमूलादिशुष्कद्रव्ये । अ.च. ।

**विप्रप्रियः** । पुं । पलाशवृक्षे । रा.नि.व.२२ ।

**विप्रलम्बी (लोभी)** (इन्) । पुं । देववर्वूर-के, किङ्किरातवृक्षे । ख़ाँटी । रा.नि.व.१० ।

**विप्लुता** । स्त्री । योनिरोगविशेषे । लक्षणं यथा —"......योनिः विप्लुताख्या त्वधावनात् । सञ्जा-तकण्डुः कण्डूला कण्डूा चातिरतिप्रिया ॥" वा.उ. ३३अ. ।

**विफलः** । पुं । वन्ध्याकर्कोटिकायाम् । वै.निघ. ।

**विफला** । स्त्री । केतक्याम् । रा.नि.व.१० ।

**विबद्धः** । पुं । पुन्नागवृक्षे । वै.निघ. ।

**विबन्धः** । पुं । आनाहरोगे । रा.नि.व.२० ।

**विबन्धबन्धः** । पुं । पृष्ठोदरोरःस्थव्रणबन्धनवि-शेषे । "विबन्धो विविधो बन्ध इति लक्षणम् ।" सु. । ड. ।

**विबन्धवर्त्तिः** । स्त्री । अश्वस्य शूलरोगभेदे । "नोत्सृजेद्दयः पुरीषन्तु सानाहः शूलपीड़ितः··· ···।" ज.द.४३अ. ।

**विभाकरः** । पुं । चित्रकवृक्षे । চিতাগাছ । अर्कवृक्षे । আকন্দ গাছ । अम. ।

**विभाण्डिका** । स्त्री । आहुल्यक्षुपे । अक्काहु-ली । वै.निघ. ।

**विभाण्डी** । स्त्री । आवर्त्तकीलतायाम् । रा. नि.व.३ । नीलापराजितायाम् । वै.निघ. ।

**विभावरी** । स्त्री । हरिद्रायाम् । रा.नि.व.६ । मेदायां । र.मा. । रात्री । अम. ।

**विभावरीयुगम्** । क्ली । हरिद्रादारुहरिद्र-योः । भा.१भ.ज्व.चि. । "विश्वावर्षविभावरीयुग-वरा ।"

**विभावसुः** । पुं । चित्रकवृक्षे । अर्कवृक्षे । नी. । अग्नौ । सूर्य्ये । अम. । चन्द्रे । हे.च. ।

**विभीतकः (की)** । पु, स्त्री । (Terminalia belerica.) Beleric myrobalan. वृक्षविशेषे । বহেড়া গাছ । हिं बहेड़े, सिनास, भेरा, बहेड़ा । म. बेहड़ा । क. तांड़े । ते तांड़े-चेट्टु । ता. तनि तण्ड्रि, तोअण्ड्रि । गुणाः—कटुः तिक्तः कषाय उष्णः कफघ्नः चक्षुष्यः पलितघ्नः विपाके मधुरः लघुश्च । वैभीतको मदकरः कफ-मारुतनाशनः । सु.सू.४६अ. । विभीतफलं—स्वा-दुपाकं कषायं कफपित्तघ्नम् उष्णवीर्य्यं हिमस्पर्शं भेदनं कासघ्नं रूक्षं नेत्रकेशप्रसादनं क्रमिविस्वरता-हरञ्च । तन्मज्जा—तृष्णाच्छर्दिकफवातशान्तिकरं लघु कषायं मदकारि च । भा.पू १भ. । विभीतक-फलोत्थतैलगुणाः—स्वादु हिमं केश्यं गुरु पित्ता-निलपीड़ाघ्नञ्च । रा.नि.व.१५ । मधुरं मधुरवी-र्य्यविपाकं वातपित्तशमनं शीतवीर्य्यम् अभिष्य-न्दि सृष्टविण्मूत्रम् अग्निसादनञ्चेति । सु.सू.४५अ. ।

**विभीषणः** । पुं । नलतृणे । নলগাছ । रा. नि.व.८ ।

**विभ्रंशः** । पुं । शरीरस्तम्भे । च.सू.१५ अ. ।

**विभ्रमः** । पुं । भ्रान्तौ । मा.नि. ।

**विमर्द्दः** । पुं । चक्रमर्द्दक्षुपे । চাকন্দা । रा. नि.व.४ । कालकृतक्षुपे । কালকাশন্দা । र.मा.

**विमर्द्दकः** । पुं । चक्रमर्द्दक्षुपे । रा.नि.व.४ घृतसुक्तकान्वितद्रव्ये । वा.उ.२९ अ. ।

**विमलम्** । क्ली । पद्मलाक्षे । रौप्ये । सैन्धव-वर्षे । वै.निघ. । रौ[illegible]धके । रा.नि.व.१[illegible] त्रि । निर्म्मले । वै.नि[illegible]घ. ।

**विमलजाता** । स्त्री । सावित्रेण द्रवीकृत खण्डादौ । খণ্ডাদির রস । इयं मत्स्यण्डिकादि-द्गुणा । सु.सू.४५अ. । [रा.नि.व.१

**विमलमणिः** । पुं । कर्पूरमणौ । स्फटि[illegible]

**विमला** । स्त्री । रूप्यमाक्षिके । प.मु. । [illegible] तारमाक्षिकम् । सातलायाम् । वै.निघ. । [illegible] लमणौ । वै निघ.२भ चय.चि. । गोदन्ता গোদন্তাদি বিষ । दारुमोच इति यस्याः [illegible]द्धिः । तच्छुद्धिः—"अम्बीरस्य रसे स्विन्ना रम्भ-येन वा पचेत् ।" विमला शुद्धिमायाति दो-लेण निश्चितम् । सा.कौ. ।

**विमलाशन:** । पुं । शिरीषवृक्षे । र.मा. ।

**विमान:** । पुं । घोटके । मे. ।

**विम्बम्** । क्ली । विम्बीफले । তেলাকুচার ফল। र.मा. । पुं । कृकलासे । কাঁকলাস । मे. ।

**विम्बकम्** । क्ली । विम्बीफले । তেলাকুচা । अ.र. । [अ.र. ।

**विम्बजा** । स्त्री । विम्बीलतायां । তেলাকুচা ।

**विम्बट:** । पुं । सर्षपवृक्षे । अ.च. ।

**विम्बा (म्बि[म्बी]का)** । स्त्री । विम्बयाम् । তেলাকুচা । रा.नि.व.३ । वा.सू.१५अ. । सु.सू. ४६अ. । [रा.नि.व.१८ ।

**विम्बिनी** । स्त्री । नेत्रकनीनिकायाम् । তারা।

**विम्बी** । स्त्री । शालिधान्यविशेषे रा.नि.व.१६। बिम्बिकायाम् । তেলাকুচা । च.सू.वमन. । सु. सू.३८अ. । कुन्दुरिकायाम् । सु.सू.३९ अ. ।

**विम्बु:** । स्त्री । गुवाके । कश्चित् ।

**विम्लापनम्** । अङ्गुल्यादिविमर्दनेन शोथविलायने । सु.चि.१अ. ।

**वियच्चारी** (इन्) । पुं । चिल्लपक्षिणि । চীলপাখী । श.मा. ।

**वियोगी** (इन्) । पुं। चक्रवाकपक्षिणि । श.च.।

**वियोनि:** । त्रि । विकृतयोनौ। सु.नि.१२अ. ।

**विरङ्गम्** । क्ली । कङ्कुष्ठे । रा.नि.व.१३ । विडङ्गे । प.मु. ।

**विरजा:** । त्रि । विगतार्त्तवायाम् । जटा. ।

**विरजा** । स्त्री । दूर्व्वायाम् । हारा. । गन्धविरजायाम् । भैष.वाजी.पल्लवसारतैले । कपित्थानीवृक्षे । र.मा. ।

**विरट:** । पुं । तिलकवृक्षे । वै.निघ. ।

**विरणम्** । क्ली । वीरणमूले । বেণারমূল। च. सु. । रस.र.वा.व्या.चि.गन्धराजतैले ।

**विरदा** । स्त्री । अश्वगन्धायाम् । कश्चित् ।

**विरलम्** । क्ली । पातलदधनि । रा.नि.व.१५।

**विरलद्रवा** । स्त्री । विरलद्रवयवाग्वाम् । जटा.।

**विरला** । स्त्री । तिन्दुक्याम् । "कोलीकदम्बविरला: ।" वा.सू.१५अ.न्यग्रोधादौ । कश्चित्तु इति । वै.निघ. ।

**विरा** । स्त्री । मद्ये । रा.नि.व.१४ ।

**विराटकम्** । क्ली । कान्तपाषाणे । চুম্বক । र.सा.सं. ।

**विराटज:** । पुं । राजपट्टमणौ । त्रिका. ।

**विरात्तक:** । पुं । अर्ज्जुनवृक्षे । वै.निघ. ।

**विराध(धा)नम्** । क्ली । पीडायाम् । श.र.।

**विराल:** । पुं । विडाले । अ.टी. ।

**विरुक्** । पुं । दृढाङ्गे । रा.नि.व.१९ ।

**विरुद्धम्** । त्रि। देशकालप्रकृतिसंयोगविपरीते ।

**विरुद्धता** । स्त्री । विरुद्धं नाम यत् दृष्टान्तसिद्धान्तसमयैर्विपरीतम् । च.वि.८अ. ।

**विरुद्धा(ध्य)शनम्** । क्ली । विरुद्धभोजने । "क्षीरमत्स्यादि यद्भुक्तं तद्विरुद्धाशनं मतम् ।" योगर.अ.सा.चि.। "विरुद्धाध्यशनाजीर्ण ।" विरुद्धभोजनजरोगा यथा —"नक्तान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणां । मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयव्यालविषस्य चैव । किलासकुष्ठग्रहणीगदानां शोथातिसारज्वरपीनसानां । सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् । विरुद्धाहारजनितरोगान् हन्ति विरेचनम् । वमनं शमनं वापि...... ।" राज.३प. ।

**विरूढ:** । त्रि । अङ्कुरिते । मे. । च.सू.१८अ. ।

**विरूढकम्** । क्ली । अङ्कुरितधान्ये । वै.निघ. ।

**विरूढधाना** । स्त्री । अङ्कुरितयवे । যবের অঙ্কুর । गुणौ— गुरु: पुष्टिकरो च । च.सू.२७अ.।

**विरूपम्** । क्ली । पिप्पलीमूले । रा.नि.व.६ । स्त्री (पा) । दुरालभायाम् । रा.नि.व.४ । शुक्लशिम्ब्याम् । আলাকুশী । कृष्णातिविषायाम् । रा. नि.व.६ ।

**विरूपाक्ष:** । पुं । अपस्मारग्रहभेदे । "विरूपाक्षग्रहीते तु कम्प: स्वेदश्च जायते ।" अ.द. ५७अ. । [टी । रा.नि.व.१९ ।

**विरूपी** (इन्) । पुं । जाहके । কাল গিরগি-

**विरूक्षणम्** । क्ली । रूक्षीकरणे । वा.सू.१२अ.।

**विरेकः** । पुं । कर्पूरे । वै.निघ. । विरेचने । জোলাপ । मा.नि. । मलभेदे । श.र. ।

**विरेकी** (इन्) । पुं । कम्पिल्लके । वै.निघ. ।

**विरेचकः** । त्रि । विरेककारिणि ।

**विरेचनम्** । क्ली । विरेके, मलभेदे । জোলাপ । सर्व्वाण्येव विरेचनद्रव्याणि भूवारिगुणभूयिष्ठानि भूवारिणां गुरुत्वादधोगच्छन्ति । तानि च द्रव्याणि त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाचीच्छगलान्त्रीस्नुकसुवर्णचीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्कज्योतिष्मत्यश्चेति । सु.सू. ३९अ. । तानि च षट् भवन्ति चीररसकल्ककषायशृतशीतचूर्णभेदेन । तानि यथोत्तरं लघूनि । सु.सू.४४अ. । “विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापौ गुर्व्व्यः गुरुत्वादधो गच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् ।” सु.सू. ४१अ. । तत्पात्रं स्निग्धस्विन्नवान्ताः । तद्गुणाः— “बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनातिदीप्तिम् । चिराच्च पाकं वपुषः करोति विरेचनं सम्यगुपास्यमानम् ॥” सु. । तस्य मात्रा यथा—“मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तकं । वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः । द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत् । पलार्द्धञ्च कषायाणां कनीयस्कं विरेचनम् ॥” अन्यच्च —“पलन्तु श्रेष्ठमाख्यातं मध्यन्त्वर्द्धपलं भवेत् । कर्षमानं कनीयः स्यात् ज्ञेयं श्रेष्ठाद्यपेक्षया ॥” आनन्दसेनः । “वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥” इति । तन्निषेधः—“बालवृद्धनवज्वरिनवप्रसूतादयो न विरेच्या जीर्णज्वरिप्रभृतयो विरेच्याः । शरदि वसन्ते च पाचनैरामबलासं स्निग्धस्य स्नेहनैः स्विन्नस्य च स्वेदैर्विरेकः कार्य्यः ॥” प.प्र.४ख. ।

**विरेचवः** । पुं । पीलुवृक्षे । रा.नि.व.११ । घृतकरञ्जे । रा.नि.व.९ ।

**विरेचनफलः** । पुं । पीलुवृक्षे । वै.निघ. ।

**विरेचनोपयोगि** । त्रि । विरेचके । च. ।

**विरोचनः** । पुं । पृथुशिम्बश्योणाकवृक्षे । শোণাপাঠা । घृतकरञ्जे । रा.नि.व.९ । रोहितकवृक्षे । রোহিতা গাছ । रा.नि.व.८ । अर्कवृक्षे । আকন্দ গাছ । केचित् ।

**विलः** । पुं । वेतसवृक्षे । श.च. ।

**विलकारी** (इन्) । पुं । मूषिके । रा.नि.व.१९ ।

**विलम्बिका** । स्त्री । तन्नामकविसूचिकाभेदे । लक्षणं—“दुष्टञ्च भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्ध्वमधश्च यस्य । विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः [illegible] ॥” मा.नि. ।

**विलम्बी** (इ[illegible]) पुं । सद्योव्रणे । मत्स्यविशेषे । गुणाः—वातकरः पित्तकरः कफकरश्च । अत्रि. २२अ. ।

**विलयः** । पुं । विस्रापने । वा.उ.३२अ. ।

**विलया** । स्त्री । बलायाम् । र.मा. ।

**विलवासः** । पुं । जाहकजन्तौ । কাল গিরগিটি । रा.नि.व.१९ ।

**विलवासी** (इन्) । पुं । सर्पे । श.र. ।

**विलालः** । पुं । विड़ाले । अ.टी. ।

**विलासिनी** । स्त्री । हरिद्रायाम् । रा.नि.व. ६ । शङ्खपुष्प्याम् । वै.निघ. । [श्वित् । वै.निघ.

**विलिखा** । स्त्री । मत्स्यभेदे । इल्लीश इति क

**विलेपः (नम्)** । पुं, क्ली । सुगन्धलेपनद्रव्ये अम. ।

**विलेपनी** । स्त्री । यवाग्वाम् । যাউ । मे.

**विलेपी** । स्त्री । यवागूविशेषे । যাউবিশেষ अम. । मं गिलहथी । चतुर्गुणवारिसिद्धविरलवयवाग्वाम् । “विलेपीमुचिताद्भक्ताच्चतुर्थांशक वदेत् ।” सु.चि.३९अ. । “चतुर्गुणजले सिद्धा लेपी विरलद्रवा ।” प.सु. । तण्डुलापेक्षया न णवारिसाध्या यवागूः ज्ञेया । “विलेपी विर वा ।” च.द.ज्व.चि. । “बहुभक्ता विलेपी ।” नि.व.२० । “विलेपी तु चतुर्गुणे ।” “वि च घना सिक्थैः सिद्धा नीरे चतुर्गुणे ।” —“विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी प.प्र.२ख. । “विलेपी दीपनी ग्राह्या हृद्या हिणी लघुः । व्रणाक्षिरोगिणां पथ्या तर्पणी ज्वरापहा । आमशूलहरा स्वादुः दीपनी व

ष्टिकृत् ॥" वै.निघ. । "विलेपी तर्पणी लघ्वी ग्राहिणी तृत्र्षापहा ।" राज.३प. । अन्या यथा — "कृता च षड्गुणे तोये विलेपी भाष्टतण्डुलैः । सा चाग्निदीपनी लघ्वी हिता मूर्च्छाज्वरापहा ॥" वै. निघ. ।

**विलेप्यः** । पुं । यवाग्वाम् । श.र. । स्त्री । विलेप्याम् । "पेयां विलेप्यामकृतम्"। च.द.वमने।

**विलेवासी** (इन्) । पुं । सर्पे । श.र. ।

**विलेशयः** । पुं । विलवासिनि अहिनकुलशल्य-काधादिसर्पे । गुणाः—"विलेशया वातहरा मधुरा रसपाकयोः । वृंहणा बद्धविण्मूत्रा वीर्योष्णा अपि कीर्त्तिता ॥" भा. । तन्मांसं श्वासवातकासहरं पित्तदाहकरञ्च । रा.नि.व.१७ । कोकड़ना-मकविलेशयमृगे । रा.नि.व.१९ । अन्ये विलेशया-स्तु कोकड़ीन्दुरिकादयः । तेषाञ्च गर्हितं मांसं मान्द्यगौरवदुर्जरम् ॥ प.मु. ।

**विलोचनम्** । क्ली । नेत्रे । रा.नि.व.१८ ।

**विलोटकः** । पुं। वल्लीगड़मत्स्ये । বেলেগাছ। श.च. । [अवेदनाविशेषे । सु.सू.२२अ. ।

**विलोड़नम्** । क्ली । आलोड़ने । वायुमन्थन-

**विलोड़ितम्** । क्ली । पादजलेन विभागदधिकृते तक्रे । रा.नि.व.१५ ।

**विलोमः** । पुं । कुक्कुरे । सर्पे । मे. ।

**विलोमी** । स्त्री । आमलक्यां । मे. । [श.र. ।

**विल्लम्** । क्ली । विड्ङ्गे । प.मु. । हिङ्गौ । हिং।

**विल्लकम्** । क्ली । विषे । प.मु. ।

**विल्लमूला** । स्त्री । वाराहीकन्दे । श.च. ।

**विल्वम्** । क्ली । विल्वफले । मे. । विल्वशलाटौ । বেলশুঁঠ। । च.द.ज्वरातीसा.चि.कलिङ्गाद्यगुड़िका. । पत्रे । ८ तो. । श.मा. । प.प्र. ।

**विल्वः** । पुं । (Ægle marmelos.) स्वनामख्याततरौ । বেল গাছ । हिं बेल । मं बम्. बेल, बिल । कं बेलवन । तें मारेडु । ता. विल्व । गुणाः—मधुरः हृद्यः पित्तघ्नः गुरुः कषायः कफज्वरातिसारघ्नः रुचिकृत् दीपनश्च । विल्वमूलं — त्रिदोषघ्नं मधुरं लघु वातघ्नञ्च । कोमलं फलं — स्निग्धं गुरु संग्राहि दीपनञ्च । पक्वं फलं —गुरु मधुरं कटुतिक्तकषायोष्णं संग्राहि त्रिदोषघ्नञ्च । रा.नि.व.११ । "फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् । विल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम् । द्राक्षाविल्वशिवादीनां फलं शुष्कं गुणाधिकम् ॥" भा.आसव. ।

**विल्वजा** । स्त्री । शालिधान्यविशेषे । सा च मागधीगुणैस्तुल्या । "विल्वजा मागधी पीता सामान्याता गुणागुणैः । रुचिकृद्बलकृन्मूत्रदोषघ्नी च श्रमापहा ॥" अत्रि.१५अ. ।

**विल्वतैलम्** । क्ली । कर्णरोगाधिकारे तैलम् । "फलं विल्वस्य मूत्रेण पिष्टा तैलं विपाचयेत् । एतत्कल्कमदायैव वाधिर्य्ये परमौषधम् ॥" रस.र.।

**विल्वपत्रम्** । क्ली । विल्वदले । বেলপাতা । रस.र.ग्रहणीकवाटरसे । [सु.२७अ. ।

**विल्वपर्णी** । स्त्री । वातघ्नपत्रशाकविशेषे । च.

**विल्वपेशि(षि)का (शी)** । स्त्री । विल्वमज्जायां, विल्वशलाटौ । বেলশুঁটা । वा.सू.१५ अ. । चि.४अ. । गुणाः—"कफवातामशूलघ्नी ग्राहिणी विल्वपेषिका ।" राज.३प. ।

**विल्वमध्यम्** । क्ली । विल्वशस्ये । বেলশুঁটা । सु.चि.३८अ. ।

**विल्वा** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

**विल्वादिकषायः** । पुं । विल्वादिपञ्चमूलैः गुड़ूच्यामलकधान्यकैश्च कृते कषाये । स वातज्वरे हितः । च.द.वा.ज्व.चि. । "विल्वादिपञ्चमूलीय-गुड़ूच्यामलके तथा ।"

**विल्वान्तरः** । पुं । कण्टकिवृक्षविशेषे, ऊशीराख्यवीरतरौ । तें वेणुतुरुचेट्टु । आन्ध्रदेशे नर्म्मदातटे चर्म्मण्वतीनदीसमीपे च । तल्लक्षणमुच्यते —"विल्वान्तरो जगति वीरतरुः प्रसिद्धः श्वेतासिताख्यविलोहितपीतपुष्पः । स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात् कुण्टकी विजलदेशज एव वृक्षः ॥" इति डल्वणः । सु.सू.३८।२९अ. । सु.चि.१५अ. । "वीरतरुः उशीराख्यः ।" वा.सू. १५अ. । गुणाः—कटुरुष्णः आग्नेयः पथ्यः वातरोगघ्नः अश्मशूलघ्नश्च । रा.नि.व.८ । "विल्वान्तरो रसे पाके तिक्तस्तूष्णः कफापहः । मूत्राघाताश्मजित् ग्राही योनिमूत्रानिलप्रणुत् ॥" भा. ।

**विवर्णत्वम्** । क्ली । म्लानगात्रत्वे । मा.नि. ।

**विवर्त्तनम्** । क्ली । कर्णवायौः निष्काशयितु मिष्टस्य कर्णलग्नस्य पुनर्विवर्त्तनरूपयन्त्रकर्म्मणि । यन्त्रस्य कर्णान्तरेव भ्रमणकर्म्मणि । सु.सू.७अ. ।

**विवर्त्तितः** । त्रि । परिवर्त्तिते । भा. ।

**विवर्त्तितसन्धिः** । पुं । सन्धिमुक्तभग्नरोगविशेषे । "विवर्त्तिते तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च ।" सु.नि.१५अ. ।

**विवर्द्धनम्** । क्ली । वृते । वै.निघ. । [अम. ।

**विवस्वान्** । पुं । अर्कवृक्षे । আকন্দ গাছ ।

**विविधविषापहा** । स्त्री । निर्विषीवृक्षे । वै. निघ. ।

**विवृता (त्ता)** । स्त्री । क्षुद्ररोगभेदे । लक्षणं —"विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् । विवृतामिव तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥" सु नि १३अ ।

**विवृताक्षः** । पुं । स्थलचरपक्षिविशेषे । কুক্‌ড়া । त्रिका. । गुणाः—"विवृताक्षस्त्रिदोषघ्नो बल्यः शुक्रविवर्द्धनः ।" अत्रि.२१अ. ।

**विशम्** । क्ली । रौप्ये । वै.निघ. । मृणाले । अ. टी.रा. । सु.चि.११अ. । पुं । मनुष्ये ।

**विशदम्** । क्ली । कासीसे । शिरकम् । वै. निघ. । स्त्री (दा) । वृहत्याम् । मद. ।

**विशर्द्धनम्** । क्ली । गुदे कुत्सितशब्दकरणे । বায়ুত্যাগ । सु.नि.३अ. ।

**विशल्यकरणी** । स्त्री । औषधिविशेषे । निर्विषी, আয়াপান । रामायणम् ।

**विशल्यकृत्** । पुं । भूपलाशे, आस्फोतके । হাপরমালী । र.मा. ।

**विशल्या** । स्त्री । गुडूच्याम् । रा.नि.व.३ । विकङ्कतवृक्षे । বৈঁচি গাছ । लाङ्गलिकायाम् । विषलाङ्गुलिया । रा.नि.व.४ । बा.सू.१५अ.अर्कादिव. । उ.६अ. । शाकभेदे । दन्तिवृक्षे । अम. । च.द.विषाधिकारे । त्रिवृतायाम् । তেউড়ী । पाटलायाम् । পারুল । सु चि.१८अ. । च.द. विषाधिकारे । नागदन्त्यां । হাতিশুঁড়ে । र.मा. । त्रिपुटायाम् । मे. । अजमोदायां । रा.नि.व.६ ।

**विशाकरः** । पुं । हस्तिदन्त्याम् । रा.नि.व.६ । हस्तिशुण्ड्याम् । হাতিশুঁড়ে । प.मु. । पाटलावृक्षे । পারুল গাছ । भा.म.४भ.गर्भ.चि. । मद. चूडवृक्षे । লঙ্কাসিজু । श.च. ।

**विशाखः** । पुं । पुनर्नवायाम् । শ্বেত পুণা । रा.नि.व.५ । स्कन्दापस्मारे । सु.उ.३७अ. ।

**विशाखग्रहः** । पुं । बिल्ववृक्षे । বেল গাছ । वै.निघ. । [গাছ । श.च. ।

**विशाखजः** । पुं । नागरङ्गवृक्षे । টাবা লেবু

**विशाखपत्रः** । पुं । बालरोगभेदे । निदा. ।

**विशाखा (खिका)** । स्त्री । श्वेतरक्तपुनर्नवायाम् । वै.निघ.२भ.वा.व्या.चि.षड्शीतिगुग्गुलौ । कृष्णापराजितायाम् । वै.निघ. । कठिल्लकवृक्षे । मे. । तन्नामनक्षत्रे । अम. ।

**विशारदः** । पुं । वकुलवृक्षे । रा.नि.व.१० । स्त्री (दा) । क्षुद्रदुरालभायाम् । रा.नि.व.४ । कपिकच्छ्वां । वै.निघ. । [मृगविशेषे । श.र. ।

**विशालः** । पुं । वृक्षविशेषे । पक्षिभेदे । मे. ।

**विशालतैलगर्भः** । पुं । अङ्कोटवृक्षे । আঁকোড় গাছ । रा.नि.व.८ ।

**विशालत्वक्** । पुं । सप्तपर्णवृक्षे । प.मु. ।

**विशालपत्रः** । पुं । श्रीतालवृक्षे । रा.नि.व. ८ । माणे । মানকচু । प.मु. । [नि.व.७ ।

**विशालफलिका** । स्त्री । [illegible] । रा.

**विशाला** । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা, মামানড়ী । रा.नि.व.३ । भा.म.४भ. मसूरी.चि., अर्श.चि.पथ्यादिगुडे । वै.निघ.ज्व. चि.द्वात्रिंशाङ्गे । इन्द्रवारुणीफले । वा.सू.१५अ. । महेन्द्रवारुणीलतायाम् । মাকাল গাছ । वै.निघ.जीर्ण.ज्व.चि.कल्याणघृते । उपोदक्याम् । পুঁই গাছ । रा.नि.व.३ । मुरामांस्याम् । शाकभेदे । রাজগিরা । वै.निघ. । गोरक्षकर्कट्याम् । রাখালকাঁকড়ী । च.द.पाण्डु.चि. । उन्मा.चि. ।

**विशालाक्षी** । स्त्री । नागदन्त्याम् । रा.नि. व.५ । [रा.नि.व.६ ।

**विशाली** । स्त्री । अजमोदायाम् । রাকুনী ।

**विशिखः** । पुं । शरवृक्षे । रा.नि.व.१८ । स्त्री (खा) । अपत्यमार्गे । सु.शा.१०अ. । कर्म्ममार्गे । सु.सू.१०अ. ।

**विशिखपुङ्खा** । स्त्री । शरपुङ्खायाम् । भा.म. ४भ. । "श्वेतया विशिखपुङ्खया सह ।" चि.क.क. बन्ध्याप्रतीकारे ।

**विशिष्टः** । पुं । शीवके । वै.निघ. । [क्षार. ।

**विशिष्टपत्रः** । पुं । ग्रन्थिपर्णवृक्षे । गेँटेला ।

**विशीर्णपत्रः (र्णः)** । पुं । निम्बवृक्षे । निम् गाछ । रा नि.व.९ ।

**विशेषः** । पुं । धात्वोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्च असामान्यदर्शने । च.शा.५अ. । पृथक्त्वकृत्त्वे । व्यावृत्तबुद्धिकृत्त्वे । च.सू.१अ. ।

**विशेषकः** । पुं । तिलकवृक्षे । तिलगाछ । रा. नि.व.१० ।

**विशोकः** । पुं । अशोकवृक्षे । रा.नि.व.१० ।

**विशोध(धि)नी** । स्त्री । नागवल्लीलतायाम् । नीलीवृक्षे । वै.निघ. । नागदन्त्यां । हातिशुँड़े । रा.नि.व.५ । दन्तिवृक्षे । जयपाल । रा.नि.व.६ ।

**विशोधनीवीजम्** । क्ली । जैपालवीजे । वैद्यकम् ।

**विश्रामः** । पुं । आयासादहर्णे । गुणाः— "विश्रामो बलकृत् खेदश्रमनुत् स्वास्थ्यदः शुभः ।" राज.२प. ।

**विश्लिष्टसन्धिः** । पुं । अस्थिभङ्गविशेषे, सन्धिमुक्तभग्नरोगविशेषे । यथा —"विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च ।" सु.नि.१५अ. । See भङ्गम् । [सु.सू.२२अ. । पृथक्करणे ।

**विश्लेषणम्** । क्ली । वायुजन्यव्रणवेदनायाम् ।

**विश्वम्** । क्ली । शुण्ठ्याम् । शुँठ् । बोलनामगन्धद्रव्ये । निशादल । रा.नि.व.६ । वै.निघ.२भ. ज्व.चि.विश्वादिकषाये । परिमाणभेदे । "विश्वं बिंशपलं प्रोक्तम् ।" शब्दकल्पे ज्योतिष्मती ।

**विश्वकद्रुः** । पुं । मृगयानिपुणकुक्कुरे । अम. ।

**विश्वका** । स्त्री । गङ्गाचिल्ल्यां । गाङ् चिल । क्षार. । [नि :

**विश्वक्सेना** । स्त्री । प्रियङ्गुलतायाम् । काँि

**विश्वगन्धम्** । क्ली । बोलनामगन्धद्रव्ये । निशादल । रा.नि.व.६ । पुं । पलाण्डौ । रा.नि.व. ७ । स्त्री (न्धा) । पृथिव्याम् । श.च. ।

**विश्वग्रन्थिः** । स्त्री । हंसपादीलतायाम् । रक्तलज्जालुकायाम् । रा.नि.व.५ ।

**विश्वग्वायुः** । पुं । सर्व्वतोगामिवायौ । एलोमेलो वातास । गुणाः—"विश्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् । सर्व्वर्त्तुलिङ्गकौ कृत्वा क्लृत्योत्पातप्रदः सदः ॥" राज. ।

**विश्वजा** । स्त्री । शुण्ठ्याम् । सा.कौ.वा.ज्व.चि. ।

**विश्वतुलसी** । स्त्री । (Ocymum basilicum. Syn. Pilosum.) Common sweet basil. तुलसीभेदे, मधुरतुलस्यां । बाबुई तुलसी । दा. हिं सवजा । ते कद्रगेड़ । ता. तिरुनितु । पञ्जा. बवरि । बम्. बाबाइतुलसी । गुणाः—वीजं शीतलं । क्वाथः मेहघ्न उदरामयघ्नः रक्तातिसारघ्नश्च । पत्ररसः कृमिघ्नः सर्पदंशे हितश्च । कश्चित् ।

**विश्व(श्वे)देवा** । स्त्री । गोरक्षतण्डुलायाम् । गोरक्षचाकुलिया । जटा । रा.नि.व.४ । सु.सू. ३८अ. । गाङ्गेरुकीति पूर्व्वदेशे, अन्ये भिन्नकुसुमां बलाम् । सु.चि.८अ. । नागबलायाम् । र.मा. । रक्तकुसुमनागबलायाम् । र.मा. । च.चि.८अ. ।

**विश्वपर्णी** । स्त्री । भूम्यामलक्याम् । भूँइ आमला । रा.नि.व.५ ।

**विश्वभेषजम्** । क्ली । शुण्ठ्याम् । शुँठ । भा. म.१भ. । रा.नि.व.६ । च.द.वातपित्तज्व.चि.पञ्चभद्रे । "किरातं विश्वभेषजम् ।"

**विश्वम्भरः** । पुं । सौम्यकीटविशेषे । सु.कल्प. ८अ. । See कीटः । स्त्री (रा) । भूनिम्बे । चिरेता । भा.म.१भ.ज्वरातिसा.चि. । "विश्वम्भरा निम्बविषाः ।"

**विश्वरूपकम्** । क्ली । कृष्णागुरुणि । रा.नि.व. १२ । पुं । राजादनवृक्षे । क्षीरिणी गाछ । वै. निघ. ।

**विश्वरोचनः** । पुं । पेलुके । कचु । त्रिका. ।

**विश्ववर्णा** । स्त्री । भूम्यामलक्याम् । भूँइ आमला । वै.निघ. ।

**विश्वसारकम्** । क्ली । विदरवृक्षे । फणिमनसा । श.च. । [नि.व.४ ।

**विश्वस्था** । स्त्री । शतावर्य्याम् । शतमूली । रा.

**विश्वा** । स्त्री । शतावर्य्याम् । शतमूली । शुण्ठ्याम् । शुंठि । अतिविषायाम् । रा.नि.व.६।२३। शल्लिन्यां । वै.निघ. ।

**विश्वाख्या** । स्त्री । शतावर्य्यां । रा.नि.व.४ ।

**विश्वाची** । स्त्री । तन्नामकवातव्याधौ । लक्षणं —"तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः । बाह्वोः कर्म्मक्षयकरी विश्वाचीति सोच्यते ॥" मा.नि. । सु.नि.१अ. । "दशमूली बला माषक्वाथं तैलाज्यमिश्रितं । सायं भुक्ता चरेन्नस्यं विश्वाच्यामवबाहुके ॥"

**विश्वादिः** । पुं । कषायविशेषे । "विश्वाम्बुपपटोशीरघनचन्दनसाधितम् । दद्यात् सुशीतलं वारि तृट्छर्द्दिज्वरदाहनुत् ॥" च.द.पि.ज्व.चि. ।

**विश्वामित्रप्रियः** । पुं । नारिकेलवृक्षे । श.र. ।

**विश्वाह्वा** । स्त्री । शुण्ठ्यां । वै.सं.बाहुशालगुड़े ।

**विश्वोरः** । पुं । रक्तार्के । र.मा. ।

**विश्वौषधम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**विषम्** । क्ली । जले । रा.नि.व.१४ । पुं, क्ली । वत्सनाभे । काठविष । रा.नि.व.२३ । बोले । रा.नि.व.६ । पद्मकेशरे । अ.टी. । स्वनामख्याते जीवितघ्नद्रव्यमात्रे । विष । तच्च द्विविधं — स्थावरं जङ्गमञ्चेत्यकृत्रिमं विषम् । गरसंज्ञकं कृत्रिमं नाम । तत्र स्थावरं पञ्चपञ्चाशद्विधः । जङ्गमसंख्यमिति । विशेषाः स्वस्वपर्य्याये मृग्याः । सामान्यतः तस्योत्पत्त्यादि —"प्रजाःमिमामात्मयोनेर्ब्रह्मणः सृजतः किल । अकरोदसुरो विघ्नं कैटभो नाम दर्पितः । ततः क्रुद्धस्य वै वक्त्राद्ब्रह्मणस्तेजसो निधेः । क्रोधो विग्रहवान् भूत्वा निपपाताय दारुणः । स तं ददाह गर्जन्तमनलाभं महाबलम् । ततोऽसुरं घातयित्वा तत्तेजोऽवर्द्धताद्भुतं । ततो विषादं देवानामभवत् निरीक्ष्य वै । विषादजननत्वाच्च विषमित्यभिधीयते । ततः सृष्टा प्रजाः शेषं तदा तं क्रोधमीश्वरः । विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च ॥" सु.कल्प.३अ. । सः गुणाः— विषं हि नाम निखिलरसायनानामूर्जस्वलमखिलव्याधिविध्वंसविधायकतामासादयति । रस.चि. । "विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च । आग्नेयं वातकफहृत् योगवाहि मदावहम् । तदेव युक्तियुक्तन्तु प्राणदायि रसायनम् । योगवाहि त्रिदोषघ्नं बृंहणं वीर्य्यवर्द्धनम् । ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात् । तस्माद्विषम्प्रयोगेषु शोधयित्वा प्रयोजयेत् ॥" भा. । "तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु । विकाशि सूक्ष्ममव्यक्तरसं विषमपाकि च । ओजसो विपरीतं तत् तीक्ष्णाद्यैरन्वितं गुणैः । वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् । विषं हि देहं संप्राप्य प्राग्दूषयति शोणितम् । कफपित्तानिलांश्चानु समं दोषान् सहाशयान् । ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥" वा.उ.३५अ. । तच्छोधनं यथा— "गोमूत्रे त्रिदिनं स्थाप्यं विषं तेन विशुध्यति । तन्नवधा — कालकूट हालाहल ब्रह्मपुत्र वत्सनाभ हारिद्रक सक्तुक प्रदीपन सौराष्ट्रिक शृङ्गकेषु । महाकूट सूची साक्तक-याग्गन्ध मदाभ दुर्गमोनीति षट् । मतान्तरे शृङ्गी-कालकूट-मुस्तक-वत्सनाभ-शङ्खकर्णीति पञ्च महाविषाणि । स्नुहीकरवीरार्कलाङ्गलीविषमुष्टीनीति उपविषाणि ।

**विषकङ्का(ङ्को)लिका (ली)** । स्त्री । क्षुपविशेषे । विषकोकिला । नकुल.१६अ. ।

**विषकण्टः** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८ ।

**विषकण्टकः** । पुं । यासक्षुपे । दुरालभा । रा.नि.व.४ । [स्याक्कर्कोटिकायाम् रा.नि.व.३ ।

**विषकण्टका (किनी, की)** । स्त्री । ब-

**विषकण्टालिका (ली)** । स्त्री । विषकण्टालीति प्रसिद्धवृक्षे । र.सा.सं.स्वच्छन्दभैरवरसे ।

**विषकण्ठी** । स्त्री । बलाकायां । रा.नि.व.१८ ।

**विषकन्दः** । पुं । महिषकन्दे । नीलकन्दे । रा.नि.व.७ । इङ्गुदीवृक्षे । वै.निघ. ।

**विषगन्धकः** । पुं । ह्रस्वसुगन्धवृक्षे । वै.निघ. ।

**विषगन्धा** । स्त्री । कृष्णगोकर्ण्याम् । काल अपराजिता । वै.निघ. । [श.चि.बलाद्यघृते ।

**विषग्रन्थिः** । पुं । मृणालपर्व्वणि । च.द.य-

**विषघा** । स्त्री । गुडूच्याम् । श.च. ।

**विषघाती (तिन्)** । पुं । शिरीषवृक्षे । श.मा. ।

**विषघ्नः** । पुं । यवासक्षुपे । দুরালভাবিশেষ । रा.नि.व.४ । चम्पकवृक्षे । जटा. । भूकदम्बे । কুকশিমা । रा.नि.व.९ । सुगन्धार्जके । वै.निघ. । तण्डुलीयक्षुपे । भा पू.१भ.शा.व. । शिरीषवृक्षे । रा.नि.व.९ । [वा.उ.६अ. ।

**विषघ्ना** । स्त्री । अतिविषायाम् । আতইচ ।

**विषघ्निका** । स्त्री । श्वेतकिणिहीवृक्षे । श्वेतापामार्गे । वै.निघ. ।

**विषघ्नी** । स्त्री । हिलमोचिकायाम् । হিঞ্চে । कटुकायां । त्रिका. । रास्नायाम् । क्षुप.भेदे । হবুষ গাছ । रा.नि.व.४ । इन्द्रवारुणीलतायां । রাখালশশা । रा.नि.व.३ । वनबर्व्वरिकायाम् । বনবাবুই । रा.नि.व.१० । भूम्यामलक्यां । ভূঁই আমলা । रक्तपुनर्नवायाम् । रा.नि.व.५ । हरिद्रायाम् । रा.नि.व.६ । वृश्चिकाल्याम् । বিছাতী । प.मु. । महाकरञ्जे । रा.नि.व.९ । देवदाल्यां । দেয়াতাড়া । प.मु. । रा.नि.व.३ । पीतदेवदाल्याम् । भा. । काष्ठकदल्याम् । श्वेतापामार्गे । वै.निघ. । [निघ. ।

**विषचक्रः (कः)** । पुं । चकोरपक्षिणि । वै.

**विषजिह्वः** । पुं । देवताड़वृक्षे । দেয়াতাড়া र.मा. ।

**विषज्वरः** । पुं । तन्नामकागन्तुज्वरे । लक्षणम् —"श्यावास्यता विषकृते दाहोऽतीसार एव च । भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥" निदानम् । महिषे । श.र. ।

**विषण्डम्** । क्ली । मृणाले । श.र. ।

**विषतन्त्रम्** । क्ली । तन्नामसर्पादिविषोपशमनतन्त्रभेदे । यथा—"सर्पवृश्चिकलूतानां विषोपशमनी तु या । सा क्रिया विषतन्त्रञ्च नाम प्रोक्तं मनीषिभिः ॥" वैद्य.सं.२अ. ।

**विषतरुः** । पुं । कुचेलकवृक्षे । কুঁচিলা গাছ । भैष.वातरक्तचि.विषतिन्दुकतैले ।

**विषतिन्दुः (कः)** । पुं । (Diospyros montana.) विषद्रुमे । কুঁচিলা গাছ । हिं विषतेन्द । तें मचितन्की, माकड़टेण्डि । रा.नि.व.२३ । भा. । वै.निघ.नवज्व.चि.विश्वतापहरणरसे । See कारस्करः ।

**विषतिन्दुकजम्** । क्ली । मधुरतिन्दुकफले । रसा.सं.त्रैलोक्यडम्बररसे । कारस्करफले । কুঁচিলা ফল । गलत्कुष्ठारिरसे ।

**विषदम्** । क्ली । पुष्पकाशीशे । रा.नि.व.१३ ।

**विषदंशः (कः)** । पुं । मार्जारे । वै.निघ. ।

**विषदंष्ट्रा** । स्त्री सर्पकङ्कालिकायाम् । प.मु. । र.सा.सं. । नागदमन्याम् । वै.निघ. ।

**विषदन्तः (कः)** । पुं । विड़ाले । वै.निघ. । (कः) सर्पे । श.च. । [नि.व.७ ।

**विषदमूला** । स्त्री । बहुमूलमाकन्याम् । रा.

**विषदर्शनमृत्युकः** । पुं । चातकपक्षिणि । हे.च. ।

**विषदाता** (तृ) । पुं । विषप्रयोक्तृपुरुषे । लक्षणं—"न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च । अपार्थं बहुसङ्कीर्णं भाषते चापि मूढवत् । स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत् । वेपथुर्जायते तस्य त्रस्तश्चान्योन्यमीक्षते ॥" इत्यादि । सु.कल्प.१अ । [ড়া গাব । रा.नि.व.९ ।

**विषद्रुमः** । पुं । विषतिन्दुके । কুঁচিলা, গক্-

**विषधरः** । पुं । सर्पे । अम. । [श.च. ।

**विषधर्म्मा** । स्त्री । शूकशिम्ब्यां । আলকুশী ।

**विषध्वंसी** (इन्) । पुं । नागरमुस्तायाम् । वै.निघ. । [माणके । মানকচু । प.मु. ।

**विषनाशनः** । पुं । शिरीषवृक्षे । प.मु. ।

**विषनाशिनी** । स्त्री । सर्पकङ्काल्याम् । श.च. । वन्ध्याकर्कोटिकायाम् । वै.निघ. ।

**विषनुत्** । श्योणाकवृक्षे । श.च. ।

**विषपत्रिका** । स्त्री । पत्रविषभेदे । तत्तु नेपालादिवीजमध्यस्थपत्रम् । सु.कल्प.२अ. ।

**विषपुष्पम्** । क्ली । अतसीपुष्पे । रा.नि.व.२३ । नीलपद्मे । श.मा. । [व.८ ।

**विषपुष्पः (कः)** । पुं । मदनवृक्षे । रा.नि.

**विषप्रशमनी** । स्त्री । वन्ध्याकर्कोटक्याम् । वै.निघ. । [দন্তী গাছ । रा.नि.व.६ ।

**विषभद्रा (द्रिका)** । स्त्री । भद्रदन्त्याम् ।

**विषभिषक्** । पुं । विषवैद्ये । हे.च. ।

**विषभुजङ्गः** । विषधरसर्पे । वैद्यकम् ।

**विषमः** । त्रि । बन्धुरे । असमान । अनियत-कालस्थायिनि । "वेपथुर्विषमो वेगः ।" मा.नि.।

**विषमग्राहि** । त्रि । एकदेशग्राहिणि । सु.सू. ७अ. । [গাছ । प.मु. ।

**विषमच्छदः** । पुं । सप्तपर्णवृक्षे । ছাতিম

**विषमज्वरः** । पुं । ज्वरविशेषे । "यः स्याद-नियतात् कालात् शीतोष्णाभ्यां तथैव च । वेगत-श्चापि विषमः स ज्वरो विषमः स्मृतः ॥" र.सा.सं. । रसरक्ताश्रितज्वरे । एकाहिकद्वित्रिचतुर्थकज्वरे-षु । निदानादि—"दोषोऽल्पोऽहितसम्भूतो ज्व-रोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम् । सन्ततः सततोऽन्येद्युस्तृतीयकचतु-र्थकौ । सन्ततो रसधातुस्थः सततो रक्तधातुगः । भिषजा स च विज्ञेयः सोऽन्येद्युः पिशिताशयः । मेदोगतस्तृतीयेऽह्नि अस्थिमज्जागतः पुनः । कुर्य्या-च्चतुर्थकं घोरमन्तकं रोगसङ्करम् । विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते । तेनार्द्धं शीतलं देहम-र्द्धमुष्णं प्रजायते । काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः । तेनोष्णत्वं शरीरस्य शीतत्वं ह-स्तपादयोः । काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितं । शीतत्वं तेन गात्राणामुष्णत्वं हस्तपा-दयोः ॥" इत्यादि । मा.नि. ।

**विषमज्वराङ्कुशलौहम्** । क्ली । विषमज्व-रे औषधम् । पाठः—"रक्तचन्दनह्रीवेरपाठोशीर-कणाशिवाः । नागरोत्पलधात्रीभिस्त्रिमदैन सम-न्वितम् । लौहं निहन्ति विविधान् समस्तान् वि-षमज्वरान् ... ॥" पुस्तकान्तरेऽस्य नाम चन्दना-दिलौहम् । रस.चि. ।

**विषमज्वरान्तकरसः** । पुं । विषमज्वरे पु टपक्कम् औषधम् । पाठः—"हिङ्गुलसम्भवं सूतं गन्धकेन सुकज्जलम् । पर्पटीरसवत्पाच्यं सूताङ्घ्रि-हेमभस्मकम् । लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं तथा । वङ्गकं गैरिकञ्चैव प्रवालञ्च रसार्द्धकम् । मुक्ता शङ्खं शुक्तिभस्म प्रदेयं रसपादिकम् । मुक्ता-गर्भे च संस्थाप्य पुटपाकेन साधयेत् ॥" इत्यादि । হিঙ্গুলোত্থ পারা ১ তো. গন্ধক ১ তো. এ-কত্র কজ্জলি করত পর্পটীবৎ পাক করিবে। স্বর্ণভস্ম ।০ আনা। লৌহ, তাম্র, অভ্র প্র-ত্যেকে ২ তোলা। বঙ্গ, গেরিমাটী এবং প্রবাল প্রত্যেকে ॥০ তোলা। মুক্তা, শঙ্খ-ভস্ম, শুক্তিভস্ম প্রত্যেকে ।০ আনা। সমস্ত একত্র জলে মাড়িয়া উহা ঝিনুকের ভিতর ভরিয়া উহাতে গোময়মৃত্তিকার লেপ দিবে। শুকাইলে ১৫।২০ খানি ঘুঁটের পুট দিয় লক্ষ্য রাখিবে, যেমন গন্ধকের গন্ধ বাহির হইবে অমনি তুলিয়া লইবে। भैष. ।

**विषमभोजनम्** । क्ली । विषमाशने । मा.नि.।

**विषमई(हिं)निका (नी)** । स्त्री । गन्ध-नाकुल्याम् । গন্ধরাস্না । रा.नि.व.७ ।

**विषमवल्कलः** । पुं । करुणनिम्बुके । নারঙ্গ-লেবু । प.मु. ।

**विषमवेगः** । पुं । न्यूनाधिकवेगे । मा.नि. ।

**विषमा** । स्त्री । सौवीरबदरे । भा. ।

**विषमाग्निः** । पुं । न समानाग्नौ । येन कदा-चित् सम्यक् पच्यते कदाचिन्न न पच्यते । निदा.।

**विषमाधुरम्** । क्ली । शृङ्गीविषे । भैष.ज्व.चि. पानीयवध्याम् ।

**विषमाधूकम्** । क्ली । द्रव्यविशेषे । विगमा इति लोके । भैष.शिरो.रो. । किङ्किणीतैले ।

**विषमाशनम्** । क्ली [illegible] काले बहूनि लोके वा भोजने । 'बहु[illegible] [illegible]नि वा तज्ज्ञेयं विष-माशनम् ।'' गुणाः—[illegible]आलस्यगौरवाटोपशब्दाश्च कुरुतेऽधिकं । हीनमात्रं तनोः कार्श्यं करोति च बलक्षयम् ।" भ[illegible] । [ला । वै.निघ. ।

**विषमाशुकरः** । पुं । ग्रन्थिपर्णमूले । গেঁঠে-

**विषमुष्ककः** । पुं । मदनवृक्षे । ময়না গাছ । वै.निघ. ।

**विषमुष्टिः** । पुं । महानिम्बे । মহানিম্ । म-दनवृक्षे । रा.नि.व.८।२३ । राजनिम्बे, चुद्रक्षुप-विशेषे । ঘোড়ানিম্ । हिं विषदोड़ी, कर्कश-क्षे । गुणाः—तिक्तः कटुः दीपनः कफवातघ्नः कण्ठरोगघ्नः हृद्यः रक्तपित्तहरश्च । रा.नि.व.४ । र सा.सं.अमितुण्डीरसे । कुचेलायाम् । কুঁচলে । वै.निघ.२भ.अर्श:-चि.विषमुष्टिचूर्णे । लाङ्गलिका-याम् । वै.निघ. ।

**विषमुष्टिकः (का)** । पुं, स्त्री । विषमुष्टी । रा.नि.व.२३ । सु.सू.३८अ.सुरसादिः । "तथाच विषमुष्टिका ।" वृहद्दलमुषेति केचित् । कर्कोटी वा ।

**विषमूला** । स्त्री । शिरामलके । प.मु. ।

**विषमृत्युः** । पुं । जीवञ्जीवपक्षिणि । চকোর । त्रिका. । [:शयाकुल । वै.निघ. ।

**विषमोभयकण्टकः** । पुं । घण्टाबदरे ।

**विषयः** । पुं । इन्द्रियभोग्येषु रूपरसस्पर्शगन्धशब्देषु । रा.नि.व.१८ । मुञ्जतृणे । मूँज । वै.निघ. ।

**विषयि** । क्ली । इन्द्रिये । [रा.नि.व.१८ ।

**विषयेन्द्रियम्** । क्ली । शब्दादिग्राहकेन्द्रियेषु ।

**विषरूपा** । स्त्री । अतिविषायाम् । আতইচ । रा.नि.व.६ । महानिम्बके । वृहद्दलम्बुषायाम् । कर्कोट्यां । वा.सू.१५अ.सुरसादिः । अरुणः ।

**विषरोगः** । विषजन्यरोगमात्रे ।

**विषलम्** । क्ली । विषे । श.च. ।

**विषलता** । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ ।

**विषलिप्तकम्** । क्ली । विषसञ्चरणे । विषचर्या । वा.उ.३६.अ. ।

**विषवज्रपातः** । पुं । रसे । रस.र.विष.चि. ।

**विषवल्ली** । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ । [ज्ञानशास्त्रे ।

**विषविद्या** । स्त्री । विषघ्नमन्त्रभेदे । विषवि-

**विषवृक्षः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর । प.मु. । [अम. ।

**विषवैद्यः** । पुं । विषमन्त्राभिज्ञे वैद्ये । ওঝা ।

**विषवैरिणी** । स्त्री । निर्विषायाम् । निर्विषी घास । रा.नि.व.६ ।

**विषशालूकः** । पुं । पद्मकन्दे । পদ্মের গেঁড়ো । गुणाः—गुरुः विष्टम्भी शीतलश्च । राज. ।

**विषशूकः** । पुं । भृङ्गरोले । ভীমরুল । भूरिप्र. ।

**विषशृङ्गी (इन्)** । पुं । भृङ्गरोले । हारा. ।

**विषशोकापहः** । पुं । तण्डुलीयवृक्षे । কাঁটা নটিয়া । वै.निघ. ।

**विषसंयोगः** । पुं । सिन्दूरे । वै.निघ. ।

**विषसूचकः** । पुं । चकोरपक्षिणि । है.च. ।

**विषसृक्का (क्कन्)** । पुं । भृङ्गरोले । ভীমরুল । त्रिका. । [भा. ।

**विषस्फोटः** । पुं । स्फोटकभेदे । বিষফোঁড়া ।

**विषहन्ता (न्तृ)** । पुं । शिरीषवृक्षे । रा.नि.व.६ । [राजितायाम् । रा.नि.व.७ ।

**विषहन्त्री** । स्त्री । अपराजितायाम् । श्वेताप-

**विषहरः** । पुं । वन्यिपर्णभेदे । त्रि । विषघ्नौषधादौ ।

**विषहरा (रा)** । स्त्री । देवदालीलतायाम् । দেয়াতাড়া । रा.नि.व.३ । निर्विषायाम् । रा.नि.व.६ ।

**विषहरी** । स्त्री । मनसादेव्यां । श.र. ।

**विषहरी(वर्त्तिः)** । स्त्री । विषे हिता । पाठः —"जयपालभवां मज्जां भावयेन्निम्बुकद्रवैः । एकविंशतिवारन्तु ततो वर्त्तिं प्रकल्पयेत् । मनुष्यलालया घृष्टा ततोऽञ्जनं तयाञ्जयेत्··· ॥" रस.चि. ।

**विषहारकः** । पुं । भूकदम्बे । वै.निघ. ।

**विषहारिणी** । स्त्री । निर्विषायां । वै.निघ. ।

**विषा** । स्त्री । अतिविषायाम् । আতইচ । रा.नि.व.६ । चि.क्र.क.प्रदर.चि. । "लोध्रं विषा गैरिकम् ।" वै.निघ.२भ.कफकुल.ज्व.चि. । "विषानलकपुष्कराः ।" लाङ्गलिकायाम् । বিষলাঙ্গুলিয়া । वै.निघ. । कटुतुम्ब्यां । কটুতরাই । रा.नि.व.३ । काकोल्यां । वा.उ.५अ. ।

**विषाख्या** । स्त्री । शुक्लकन्दातिविषायाम् । শ্বেত আতইচ । वा.सू.१५अ.मुस्तादिः । "भल्लातपाठाविफलाविषाख्या ।" वा.उ.५अ. ।

**विषाङ्कुरः** । पुं । शल्यास्त्रे । त्रिका. ।

**विषाणम्** । क्ली । कुष्ठौषधे । কুড় । इक्षिदन्ते । पशुशृङ्गे । मे. ।

**विषाणिका** । स्त्री । आवर्त्तकीलतायाम् । रा.नि.व.१ । च.सू.१अ. । सु.चि.१८अ. । कर्कट-

शृङ्गाम्। रा.नि.व.६। वै.निघ.२भ.वा.व्या.चि. षड्शीतिगुग्गुली। मेषशृङ्गाम्। মেড়াশিঙে। र.मा.। रा.नि.व.९। सु.सू.३९अ.अधःसंशमने। वा.सू.१५अ.वरुणादिः। ऋषभके। शृङ्गाटके। शातलायाम्। रा.नि.व.४।५।७। काकोल्याम्। वै.निघ.।

**विषाणी**। स्त्री। क्षीरकाकोल्याम्। मे.। चर्मकषायाम्. वृश्चिकाल्याम। रा.नि.व.९। अजशृङ्गाम्। अम.। आवर्त्तकीलतायाम्। रा.नि.व.३। क-दलीवृक्षे। रा.नि.व.११। तिन्तिड्यां। श.च.। पुं (इन्)। कुञ्जरे। वृषे। रा.नि.व.२३। शृङ्गाटके। रा.नि.व.७। तिन्तिड्याम्। ऋषभके। रा.नि.व.५।

**विषादनी**। स्त्री। पलाशीलतायाम्। শাপরমালী। रा.नि.व.३। इन्द्रवारुणीलतायाम्। রাখালশশা। वै.निघ.।

**विषाननः**। पुं। सर्पे। श.मा.।

**विषान्नम्**। क्ली। सर्पपादौ।

**विषापहः**। पुं। कृष्णमुष्ककवृक्षे। ঘণ্টাপারুল। रा.नि.व.११।

**विषापहा**। स्त्री। इन्द्रवारुणीलतायाम्। রাখালশশা। रा.नि.व.३। निर्व्विषायाम्। रा.नि.व.६। नागदमन्यां। নাগদনা। भा.। अर्कपत्राम्। ঈষের মূল। सर्पकङ्कालिकायाम्। र.मा.। त्रिपर्णीनाममहाकन्दे। रा.नि.व.७।

**विषाभावा**। स्त्री। निर्विषायां। रा.नि.व.६।

**विषायुधः**। पुं। सर्पे। श.र.।

**विषारः**। पुं। सर्पे। श.च.। [१०।

**विषारातिः**। पुं। कृष्णधुस्तूरवृक्षे। रा.नि.व.

**विषारिः**। पुं। महाचुञ्चुशाके। रा.नि.व.४। घृतकरञ्जे। रा.नि.व.९।

**विषाला**। स्त्री। मत्स्यविशेषे। गुणाः—"शकुली च विषाला च ज्ञेयौ वातकफात्मकौ।" अत्रि.२२अ.।

**विषास्यः**। पुं। सर्पे। श.र.।

**विषास्या**। स्त्री। भल्लातकवृक्षे। श.च.।

**विषूचिका**। स्त्री। रोगविशेषे, विसूचीरोगे।

**विषौषधी**। स्त्री। नागदन्त्याम्, हस्तिशुण्ड्यां। र.मा.।

**विष्कलः**। पुं। ग्रामवराहे। रा.नि.व.१९।

**विष्कलनम्**। क्ली। भोजने। त्रिका.।

**विष्किरः**। पुं। पक्षिणि। পাখী। कपोतकुक्कुटतित्तिरादिषु। अम.। [illegible] भूमिं विलिख्य भक्षयन्तीति विष्कि[illegible]काः। तन्मांसगुणाः—कषायं मधुरं [illegible] शीतलं रुचिकरञ्च। एवं यथाक्रमं पक्षिणामपि गुणो ज्ञेयः। रा.नि.व.१७। दर्वीकरसर्पभेदे। सु.कल्प.४अ.।

**विष्टब्धाजीर्णम्**। क्ली। वातविदग्धाजीर्णे।

**विष्टम्भः**। पुं। विबन्धरोगे। আনাহরোগ। रा.नि.व.२०। [ष्टब्धाजीर्णकरपदार्थे।

**विष्टम्भी** (इन्)। त्रि। मलरोधकद्रव्ये। वि-

**विष्टरः**। पुं। अर्कवृक्षे। আকন্দ গাছ। रा.नि.व.१०। वृक्षे। त्रिका.।

**विष्टरा**। स्त्री। गुण्डासिनीतृणे। रा.नि.व.८।

**विष्टिका**। स्त्री। क्षुद्रशणपुष्पिकायाम्। रा.नि.व.४।

**विष्ठा**। स्त्री। पुरीषे। रा.नि.व.१८।

**विष्ठाभुक् (ग्)**। पुं। ग्राम्यशूकरे। वै.निघ.।

**विष्ठारुहा**। स्त्री। सुवर्णकेतक्याम्। रा.नि.व.१०।

**विष्ठेष्टा**। स्त्री। हरिद्रायाम्। वै.निघ.।

**विष्णुकन्दः**। पुं। कोङ्कणे स्वनामख्यातमहाकन्दे। गुणाः—मधुरः शीतलः पित्तदाहशोफघ्नः रुच्यः सन्तर्पणश्च। रा.नि.व.७।

**विष्णुक्रान्ता**। स्त्री। नीलापराजितायाम्। নীল অপরাজিতা। मं विष्णुक्रान्ता। कं विष्णुकान्ते. गुणाः—कटुः तिक्ता कफवातघ्नी च। रा.नि.व.५। कटुः मेध्या कृमिव्रणकफघ्नी च। मद.व.१। वाराहीकन्दे। वै.निघ.।

**विष्णुगुप्तः**। पुं। महामूलके। विष्णुकन्दे। रा.नि.व.७। क्ली। चाणक्यमूले। रा.नि.व.१३।

**विष्णुगुप्तकम्**। क्ली। चाणक्यमूले। रा.नि.व.२३।

**विष्णुतैलम्** । क्ली । वातव्याधौ तैलम् । पाठः —"शालपर्णी पृश्निपर्णी बला गोरक्षतण्डुला । एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च । शतावरी सहचरं पचेदेतैः पलान्वितैः । तैलप्रस्थं पयो दत्त्वा गव्यं वाजं चतुर्गुणम् ॥" इत्यादि । र-स.र. । तिलतैलं ४ श. गव्यं छागं वा दुग्धं १६ श. । कल्कार्थं शालपर्णी, पृश्निपर्णी (চাকুলিয়া) वाट्यालकं, गोरक्षतण्डुली (গোরক্ষচাকুলিয়া) एरण्डमूलं, वृहती, कण्टकारी, पूतिकरञ्जमूलं (নাটার মূল) शतमूली, झिण्टीमूलं प्र. १ प. । क्वाथान्तराभात् कश्चित् चीरचतुर्गुणं वारि ददाति। "स्वरसचीरमाङ्गल्यैः पाको यत्नेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत् ॥" प.प्र. इति स्वल्पम् । वृहद्विष्णुतैलं यथा —"जलधरोऽश्वगन्धा च जीवकर्षभकौ शटी । काकोली चीरकाकोली जीवन्ती मधुयष्टिका । देवदारु मधुरिका पद्मकाष्ठञ्च सैन्धवम् । मांसी चैला त्वचं कुष्ठं वचा शैलजचन्दनं । मञ्जिष्ठा मृगनाभिश्च श्वेतचन्दनकुङ्कुमं (रेणुकं) । पर्णिन्यः कुन्दरवोटिश्च ग्रन्थिकश्च नखौ तथा । एतेषां पलिकैर्भागैः तैलञ्चापि तथाढकं । शतावरीरससमं दुग्धञ्चापि समं भवेत् । विष्णुतैलवरं श्रेष्ठं सर्व्ववातविकारनुत् .. ॥" इत्यादि । तिलतैलं १६ श. । शतमूलीरसः १६ श. दुग्धं १६ श. वारि ३२ श. । कल्कार्थं—मुस्ता अश्वगन्धा जीवकः ऋषभकः (अभावे गुडूची वंशरोचना) शटी काकोली चीरकाकोली जीवन्ती यष्टिमधु देवदारु मधुरिका पद्मकाष्ठं सैन्धवं जटामांसी एला गुड़त्वक् कुष्ठं वचा शैलजं रक्तचन्दनं मञ्जिष्ठा मृगनाभिः श्वेतचन्दनं कुङ्कुमं शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी कुन्दुरुवोटिः ग्रन्थिपर्णं नखी च प्र. १ प. । रस.र. ।

**विष्णुपदम्** । क्ली । आकाशे । अम. । पद्मे । हे.च. । [लिग्रा । वै.निघ. ।

**विष्णुपर्णिका** । स्त्री । पृश्निपर्ण्याम् । চাকু[लिग्रा । वै.निघ. ।

**विष्णुपर्णी** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**विष्णुप्रिया (हिता)** । स्त्री । तुलसीवृक्षे । वै.निघ. । [পাথী । त्रिका. ।

**विष्णुलिङ्गी** । स्त्री । वर्त्तिकापक्षिणि । বটেন[पाथी । त्रिका. ।

**विष्णुवल्लभा** । स्त्री । तुलसीवृक्षे । रा.नि.व. १० । अग्निशिखायाम् । विषलाङ्गुलिया । श.च. ।

**विष्वक्पर्णी** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**विष्वक्सेनकान्ता (प्रिया)** । स्त्री । वाराहीकन्दे । रा.नि.व.७ । अम. । च.शा.८अ. ।

**विष्वक्सेना** । स्त्री । प्रियङ्गुलतायाम् । अम. । भैष कुष्ठ.चि.महाभल्लातकगुड़े ।

**विष्वग्वायुः** । पुं । घूर्णितवाते । এলোমেলো বাতাস । गुणाः—"विष्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् । सर्व्वर्त्तुलिङ्गकौ हन्ता छर्द्युत्पातपुरःसरः ॥" राज.२प. ।

**विसम्** । क्ली । मृणाले । रा.नि.व.१० । च.द. हृद्रो.चि.श्वदंष्ट्राद्यघृते । [व.१० ।

**विसकुसुमम्** । क्ली । कमले, पद्मे । रा.नि.

**विसग्रन्थिः** । पुं । पद्ममूले । পদ্মের মূল । जलप्रसाधनद्रव्यमिदम् । सु.सू.४५अ. ।

**विसङ्कटः** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८ । सिंहे । श.च. ।

**विसजम्** । क्ली । पद्मे । श.कल्प. । [त्रिका. ।

**विसनाभिः** । स्त्री । पद्मिन्याम् । পদ্মের ঝাড় ।

**विसप्रसूनम्** । क्ली । पद्मे । अम. ।

**विसर्गः** । पुं । मोक्षे । त्यागे । वर्षाशरद्धेमन्तकालेषु । मा.ज्व.नि.वि.र. । मलनिर्गमे । मे. ।

**विसर्पः** । पुं । पाण्डुरोगे । रा.नि.व.२० । स्वनामकक्षुद्रकुष्ठे । तन्निदानादि—"लवणाम्लकटूष्णादिसंसेवाद्दोषकोपतः । विसर्पः सप्तधा ज्ञेयः सर्व्वतः परिसर्पणात् । पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः । वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः । चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः । आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः । यस्तु कर्द्दमको घोरः स पित्तकफसम्भवः । रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः । विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥" मा.नि. । अन्यच्च—"त्वङ्मांसशोणितगताः कुपितास्तु दोषाः सर्व्वाङ्गसारिणमसंस्थितमात्मलिङ्गम् । कुर्व्वन्ति यं विस्तृतमुन्नतमाशुशोफं तं सर्व्वतो विसरणाच्च विसर्पमाहुः ॥" तत्र वातात्मकोऽसितमृदुपरुषत्वादिलक्षणः वर्ण्यश्च । पित्तात्म-

क्तो द्रुतगतिर्ज्वरदाहपाकस्फोटप्रभेदबहुल:, श्लेष्मात्मक: मन्दसर: अशीघ्रपाक: स्निग्ध: सित:, अल्पवेदन उग्रकण्डू: सर्व्वात्मक: सर्व्वलक्षणयुक्तोऽवगाढ़: पक्वश्च मांसशिरानाशात् न सिध्यति। इत्यादि। सु.नि.१०अ.। [सर्पि:पानादिकं अस्त्रम्।

**विसर्पज्वर:** । पुं। तज्जन्यागन्तुज्वरे। तत्र

**विसर्पणम्** । क्ली। काये सञ्चरणे। तन्तुव्रणविटपादे: विसर्पणे। म.।

**विसर्पि:** । पुं। विसर्परोगे। रा.नि.व.२०।

**विसर्पिणी** । स्त्री। श्वेतकुञ्जायाम्, यवतिक्तालतायाम्। रा.नि.व.३।

**विसलम्** । क्ली। पल्लवे। त्रिका.।

**विसवर्त्म** (अन्) । क्ली। वर्त्मगतनेत्ररोगविशेषे। लक्षणं—"शूनं यद्वर्त्म बहुभि: सूक्ष्मैश्छिद्रै: समन्वितं। विसमन्तर्जल इव विसवर्त्मेति तन्मतम्॥" सु.उ.३अ.।

**विसशालूकम्** । क्ली। पद्मकन्दे। পদ্মের গেঁড়ো। गुणा:—गुरु विष्टम्भि शीतलञ्च। राज. ३प.।

**विसार:** । पुं। मत्स्ये। अम.। रा.नि.व.४।

**विसारिणी** । स्त्री। माषपर्ण्याम्। মাষাণী। रा.नि.व.३। [पद्मिन्यां। अम.।

**विसिनी** । स्त्री। मृणाले। रा.नि.व.१०।

**विसूचिका (ची)** । स्त्री। अजीर्णजातरोगविशेषे। ওলা উঠাবিশেষ। निरुक्ति:—"सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिल:। यत्राजीर्णेन सा वैद्यैर्विसूचीति निगद्यते॥" तस्य निदानं यथा—"अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम्। विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका। न तां परिमिताहारा लभन्ते विदितागमा:। मूढ़ास्तामजितात्मानो लभन्तेऽशनलोलुपा:॥" लक्षणं—मूर्च्छातिसारौ वमथु: पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहा:। वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेद:॥" तदुपद्रवानाह—"निद्रानाशोऽरति: कम्पो मूत्रघातो विसंज्ञता। अमी उपद्रवा घोरा विसूच्या: पञ्च दारुणा:॥" तस्या अरिष्टं श्यावदन्तादि। इत्यादि। मा.नि.।

**विसृत:** । त्रि। निर्गते। वा.उ.२६अ.।

**विस्तारी** (इन्) । पुं। वटवृक्षे। वै.निघ.।

**विस्तीर्णपर्णम्** । क्ली। माणकन्दे। মাণকচু। श.च.।

**विस्फा(स्फु)रक:** । पुं। वातोल्वणसन्निपातज्वरे। लक्षणं—"श्वास: कासो भ्रमो मूर्च्छा प्रलापो मोहवेपथू। पार्श्वयो: वेदना जृम्भा कषायत्वं मुखस्य च। वातोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। एष विस्फारको नाम्ना सन्निपात: सुदारुण:॥" भा.म.१भ.।

**विस्फुरणी** } **विस्फूर्जनी** } स्त्री। तिन्दुकवृक्षे। তেঁদগাছ। वै.निघ.।

**विस्फुरितम्** । क्ली। काण्डभग्नास्थिभङ्गभेदे। तेनास्थि स्तोकं विदीर्णं भवति। भा.म.३भ.।

**विस्फुलिङ्ग:** । पुं। विषभेदे। हे.च.।

**विस्फोट:** । पुं। दुष्टस्फोटके। বিষফোড়া। रा.नि.व.२०। तस्य निदानपूर्व्वां सम्प्राप्तिमाह—"कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च। तथर्त्तुदोषेण विपर्य्ययेण कुप्यन्ति दोषा: पवनादयस्तु॥ त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च। घोरान् कुर्व्वन्ति विस्फोटान् सर्व्वान् ज्वरपुर:सरान्॥" इत्यादि [illegible]।

**विस्फोटज्वर:** । पुं [illegible] जन्यागन्तुज्वरे।

**विस्रम्** । क्ली। चा [illegible] मूलके। भा.पू.१भ.शा. व.। त्रि। पूतिगन्धे, आमगन्धिनि। अम.।

**विस्रगन्ध: (न्धा, न्धि:)** । पुं, स्त्री। पलाण्डौ। পেঁয়াজ। रा.नि.व.७। गोदन्तहरिताले, हरिताले। हे.च.। हवुषायां। হবুষ ফল। रा.नि व.४। [नि.व.२१।

**विस्रगन्धक:** । पुं। गोदन्तहरिताले। रा.

**विस्रसा** । स्त्री। जरायाम्। अम.।

**विस्रा** । स्त्री। हवुषायाम्। হবুষ ফল। रा.नि.व.४। वसायाम्। अम.। [वै.निघ.।

**विस्राव:** । पुं। अन्नमण्डे। ভাতের মাড়।

**विस्रावणम्** । क्ली। उत्थितस्य व्रणस्य वेदनोपशमार्थं पाकशमनार्थञ्चोपक्रमविशेषे। सु.चि.१अ.। सु.सू.१४अ.।

**विस्राव्य:** । त्रि । विद्रधिकुष्ठादिविस्रावणार्हे । स्रावयोग्ये । सु.सू.५अ. ।

**विहग: (ङ्गम:)** । पुं । पक्षिणि । अम. ।

**विहङ्गम्** । क्ली । स्वर्णमाक्षिके । रस.कौ.ज्वरान्तकरसे ।

**विहङ्गमा** । स्त्री । भारयष्ट्यां । বাঁক্ । श.र. ।

**विहायस:** । पुं । पक्षिणि । अ.टी.भ. ।

**विहाया: (स्)** । पुं । पक्षिणि । क्ली । आकाशे । त्रिका. ।

**विहार:** । पुं । चेष्टायाम् । भ्रमणे । मे. । बिन्दुरेखकपक्षिविशेषे । श.च. ।

**विह्वाव:** । पुं । छिक्कायाम् । হাঁচি । वै.निघ. । कासे । भा. । [গাছ । रा.नि.व.१० ।

**विक्षीर:** । पुं । रक्तार्के । अर्कवृक्षे । আকন্দ

**विक्षेप: (णम्)** । पुं, क्ली । वायुजन्यव्रणवेदनाविशेषे । सु.सू.२२अ. । हस्तादिचालने । मा.नि. । अवधूनने । वा.चि.४अ. ।

**वीक्षा** । स्त्री शुकशिम्ब्यां । আলাকুশী । हे.च. ।

**वीजम्** । क्ली । अङ्कुरे । मे. । मज्जायाम् । शुक्रधातौ । रा.नि.व.१८ । वीजसारे । पद्मवीजे । भा.म.२भ.अश्मरी.चि. । पुष्करमूले । रा.नि.व. ६ । कारणे । अम. । शस्ये । বিচি । वीजानां शोधनं यथा—"वीजमादौ समादाय रौद्रयन्त्रे विशोषयेत् । ईषत्सैन्धवयुक्तेन द्रवेण यत्नत: सुधी: । अपामार्गकषायेण निम्बुवीजं विशोधयेत् । शिगुकार्पासवीजानि अपामार्गस्य वीजकम् । घर्म्मेण शोधनं तेषां न दद्यात् सैन्धवं तत: । तिक्तां कोषातकीं दन्तीं पटोलीं चेन्द्रवारुणीम् । कटुतुम्बीं देवदालीं काकतुण्डीञ्च शोधयेत् । धात्रीफलरसेनैव महाकालस्य शोधनम् । करञ्जयुग्मयोर्वीजं भृङ्गराजेन शोधयेत् । गुञ्जादिसर्व्ववीजानां नरमूत्रै: पटुं विना । नारिकेलाम्बुना शोध्यं विल्वं भल्लातकोद्भवम् । गुडूचीं त्रिफलाक्वाथे क्षीरे चैव विशेषत: । पक्वा च खण्डश: शुद्धं स्टक्षीयान्मृदुगुग्गुलुम् । वृद्धदारकवीजन्तु पक्वं दोलाकृतं पचेत् । दुग्धपूर्णेषु पात्रेषु तत: शुध्यति निश्चितम् ॥" इत्यादि । र.सा.सं. ।

**वीजक:** । पुं । प्रियालवृक्षे । পিয়াশাল । हिं विजयसार । प.मु. । See असनक । रस.र.शिरोरो.चि. । "त्रिकटु पुष्करवीजक: ।" मातुलुङ्गवृक्षे । रा.नि.व.११ । वै.निघ.२भ.क्षय.चि.दशमूलासवे । मूढगर्भभेदे । "यस्तु निर्गच्छत्येकशिरोभुज: स वीजक: ।" सु.नि.८अ. । श्वेतशिग्रौ । वै.निघ. । क्ली । वीजे । [वै.निघ. ।

**वीजकर:** । पुं । माषव्रीहौ । মাষকলায় ।

**वीजकर्कटिका (टी)** । स्त्री । दीर्घकर्कटिकायां । লম্বা কাঁকুড় । वै.निघ. ।

**वीजकसार:** । पुं । प्रियालवीजे । सु.चि.२७अ. । भा.कुष्ठचि.महाभल्लातके । मातुलुङ्गसारे । रा.नि.व.११ ।

**वीजका** । स्त्री । कपिलद्राक्षायाम् । वै.निघ. ।

**वीजकाह्व:** । पुं । मातुलुङ्गवृक्षे । वै.निघ. ।

**वीजकृत्** । क्ली । वाजीकरणे । रा.नि.व.२० ।

**वीजकोश: (ष:)** । पुं । पद्मकर्णिकायाम् । পদ্মের চাকি বা ফোঁপল । भा. ।

**वीजकोशकम्** । क्ली । वृषणे । वै.निघ. ।

**वीजगर्भ:** । पुं । पटोले । रा.नि.व.३ । भा. ।

**वीजगुप्ति:** । स्त्री । धान्यादिकञ्चुकाम् । धान्यादির খোসা । शिम्ब्यां । শীম্ । रा.नि.व.१६ ।

**वीजद्रुम:** । पुं । असनवृक्षे । পিয়াশাল । रा.नि.व.२३ । [नि.व.६ ।

**वीजधान्यम्** । क्ली । धान्यके । ধনিয়া । रा.

**वीजन:** । पुं । पीतलोध्रे । वै.निघ. । जीवञ्जीवपक्षिणि । सारस्वत: ।

**वीजपादप:** । पुं । असनवृक्षे । পিয়াশাল । वै.निघ. । भल्लातकवृक्षे । रा.नि.व.११ ।

**वीजपुष्प: (क:)** । पुं, क्ली । यवनालवृक्षे । জনার গাছ । रा.नि.व.१६ । मदनवृक्षे । मरुबकवृक्षे । मे. ।

**वीजपूर: (क:)** । पुं । (Citrus medica) The citron. जीवलवृक्षे । টাবা লেবুর গাছ । हिं वीजौरा । प.मु. । सा.कौ.पि.ज्व.चि. । गुणा:—"वीजपूरफलमम्लकटूष्णं श्वासकासशमनं

पचनञ्च । कण्ठशोधनपरं लघु हृद्यं दीपनञ्च रुचिकृत् पवनञ्च ॥" तथाच—बालं पित्तमरुत्कफास्रकारणं मध्यञ्च तादृग्विधं पक्वं वर्णकरञ्च हृद्यमथ तत् पुष्णाति पुष्टिं बलम् । शूलाजीर्णविबन्धमारुतकफश्वासार्त्तिमन्दाग्निजित् कासारोचकशोकशान्तिदमिदं… । अन्यच्च—"त्वक् तिक्ता दुर्ज्जरा स्यात् क्रिमिकफपवनध्वंसिनी स्निग्धमुष्णं मध्यं शूलार्त्तिपित्तप्रशमनमखिलारोचकघ्नञ्च गौल्यं । वातार्त्तिघ्नं कटाह्नं जठरगदहरं केसरं दीप्यमम्लं वीजं तिक्तं कफार्शःश्वयथुशमकरं वीजपूरस्य पथ्यम् ॥" रा.नि.व.११ । तन्मज्जगुणाः—स्वादुपाकः आग्नेयः बलकृत् स्निग्धः पित्तघ्नश्च । सु.सू. ४६अ. । फलगुणाः—रुच्यं रसाम्लं लघु दीपनं रक्तपित्तकरं कण्ठजिह्वाहृदयशोधनम् । मद.व.६। मधुरकर्कट्यां । शरबती लेबु । गुणाः—"वीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी । मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥" भा. ।

**वीजपूरमज्जा** (न्) । पुं । मातुलुङ्गमज्जनि । टाबा लेबुर वीचिर शाँस । रा.नि.व.११ ।

**वीजपूरफलम्** । क्ली । मातुलुङ्गफले । टाबा लेबु । हिं वीजौरा । मद.व.६ ।

**वीजपूर्णः** । पुं । वीजपूरवच्चे । प.मु. । मधुरमातुलुङ्गे । शरबती लेबु । वै.निघ. ।

**वीजपेशिका** । स्त्री । वृषणे । अण्डकोष । रा.नि.व.१८ ।

**वीजफलकः** । पुं । मातुलुङ्गवच्चे । मधुवीजपूरे । टाबा लेबु, शरबती लेबु । रा.नि.व.११ ।

**वीजमातृका** । स्त्री । पद्मवीजे । द्वारा. ।

**वीजरत्नः (वरम्)** । पुं, क्ली । माषकलाये । हे.च. । [illegible] [यो वीजवरकः ।" हे.च. ।

**वीजरुहः** । पुं । शालिधान्यादौ । "शाल्याद-

**वीजरेचक(न)म्** । क्ली । जैपालवीजे । रा.नि.व.६ ।

**वीजवृक्षः** । पुं । असनवच्चे । पियाशाल । "असनो वीजवृक्षकः ।" रा.नि.व.२३।६ । भल्लातकवच्चे । वै.निघ. ।

**वीजस्नेहः** । पुं । पलाशवच्चे । वै.निघ. ।

**वीजाख्यः** । पुं । जैपालवच्चे । क्ली । तद्वीजे । जयपाल गाछ वा तत्फल । वै.निघ. ।

**वीजाम्लम्** । क्ली । वृक्षाम्ले । रा.नि.व.२१ । पिण्डाम्ले । रा.नि.व.२२ ।

**वीजाविकः** । पुं । उष्ट्रे । वै.निघ. ।

**वीजाह्वः** । पुं । मातुलुङ्गवच्चे । रा.नि.११अ.।

**वीजी** (इन्) । पुं । तण्डुलीयकवच्चे । वै.निघ. ।

**वीजोदकम्** । क्ली । करकायां । मे. ।

**वीटिः (टिका,टी)** । स्त्री । ताम्बूलवल्ल्यां । पान गाछ । सज्जितताम्बूले । पानेर वीड़ा । शब्दकल्पद्रुमः ।

**वीतनः** । पुं । कृकपार्श्वयोः । कण्ठाग्रभागेर पार्श्वद्वय । "कृकाटं कन्धरामध्यं कृकपार्श्वौ तु वीतनौ ।" हे.च. ।

**वीतशोकः** । पुं । अशोकतरौ । श.मा. ।

**वीतिः** । पुं । घोटके । हे.च. । [illegible] वै.निघ. ।

**वीतिका** । स्त्री । यष्टिमधुनि । नीलिकायां ।

**वीभत्सः** । पुं । विकृतौ । निका. ।

**वीरम्** । क्ली । (पवर्गीयमपि) । उशीरे । वीरणमूले । वेणार मूल । रा.नि.व.१२ । सिन्दूरे । प.मु. । मरिचे । रा.नि.व.६ । शालपर्ण्याम् । च.चि.२४अ.हंसगौगुड़िकायां । पुष्करमूले । कुड़मूल । लौहे । वै.निघ. । काञ्जिके । रा.नि.व.१५ । नले । मे. । आरुके । [illegible].व.११ । पुं । अर्ज्जुनवच्चे । हे.च. । भल्लातकवच्चे । अम. । वीरसे । शुक्लदर्भे । काकोल्याम् । वै.निघ. । पीतभिण्ट्याम् । एकवीरवच्चे । ऋषभके । र.मा. । श्वेतकरवीरे । रा.नि.व.१० । लताकरञ्जे । रा.नि.व.८ । वाराहीकन्दे । तण्डुलीयक्षुपे । कोटानटिका । रा.नि.व.७ ।

**वीरकः** । पुं । श्वेतकरवीरे । रा.नि.व.१० ।

**वीरणम् (मूलं, लिका)** । क्ली, स्त्री । उशीरतृणे । वेणार मूल । हिं खस । तें वट्टिवेरु । उत्. विणा, गन्दविणा । बम्. खसखस । ता. वेत्तिवेर । रा.नि.व.१२ । च.सू.४अ.स्तन्यजनने । भा.उ.वाजी.रतिवल्लभमोदके । गुणाः— "वीरणं पाचनं शीतं वान्तिहृल्लघु तिक्तकम् । स्तम्भ-

नं ज्वरनुत् वान्तिमदजित् कफपित्तहृत्। तथा स्वविषवीसर्पकृच्छ्रदाहव्रणापहम् ॥" भा.। कुशा दितृणगणे। यथा—"कुशः काशश्च दर्भश्च क त्तृणं भूतृणं तथा। श्वेतदूर्व्वा नीलदूर्व्वा गण्डदूर्व्वे ति वीरणम् ॥" अर्कगुणाः—एतदर्कौ हरेत्शूलं सम्भुक्षयति चानलम्। वातसन्धानकृद्दृष्यं बलं कु र्य्यादनेकधा ॥" अर्क.चि.। [कञ्चुपे। कश्चित्।

**वीरतण्डुलनामा** (न्) । पुं। तण्डुलीयशा-

**वीरतरम्** । क्ली। वीरणमूले। বেণার মূল। प.मु.।

**वीरतरः** । पुं। शरवृक्षे। শর গাছ। विल्वा-न्तरवृक्षे। रा.नि.व.८। महाशाली। भल्लातकवृक्षे। प.मु.। श्वेतकोकिलाक्षे। শ্বেত কুলিয়াখাড়া। र.मा.।

**वीरतरुः** । पुं। भल्लातकवृक्षे। विल्वान्तरवृक्षे। अर्जुनवृक्षे। रा.नि.व.११.८.९। शरतृणे। শর গাছ। "अन्ये तु वीरतरुर्विल्लान्तर इति वद न्ति।" सु.सू.३८अ.। श्वेतकोकिलाक्षे। प.मु.। प्रियालवृक्षे। वै.निघ.।

**वीरतर्व्वादिगणः** । पुं। तदादिद्रव्यवर्गे। यथा—वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकु [illegible] कुरुण्टकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति। गणो-ऽयं वातघ्नः अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहर-श्च। सु.सू.३८अ.। अन्यः—"वीरतरुः सहचरौ दर्भौ वृक्षादनी नलः। गुन्द्राकासकुशावश्मभेदमो रटटुण्टुकाः। कुरुण्टकोऽथ वशिरो वसुकः साग्नि मन्थकः। इन्दीवरी श्वदंष्ट्रा च तथा कापोतवङ्क कः। वीरतर्व्वादिरित्येष गणो वातविकारनुत् ॥" শর বা বিল্বান্তর, পীত নীল ঝাটীদ্বয়, উলু, রাস্না বা বান্দরা,নল, গুলঞ্চ বা মুতা, কাশ, কুশ, পাষাণভেদমূল, ইক্ষুমূল, শোণাছাল, শ্রীহস্তিনী, শুনিঠা বা গজপিপুল, বকবৃক্ষ বা জাম-আঁটী, আগস্ত, চুঞামূল, গোক্ষুরী, কাউ-আঁটী। च.द.मू.घा.चि.,अश्मरी.चि.।

**वीरद्रुः** । पुं। अर्जुनवृक्षे। रा.नि.व.९। वि-ल्वान्तरवृक्षे। वै.निघ.।

**वीरनायकः** । पुं। उशीरे। বেণা। वै.निघ.।

**वीरपत्रा** (त्री) । स्त्री। विजयायाम्। भि-क्षि। रा.नि.व.६। धारणीनाममहाकन्दे। रा.नि. व.७। [नि.व.१०।

**वीरपर्णम्** । क्ली। सुरपर्णाभिधसुगन्धपत्रे। रा.

**वीरपादपः** । पुं। विल्वान्तरवृक्षे। वै.निघ.।

**वीरपुष्पा** (ष्पी) । स्त्री। बाल्यालकभेदे, म-हाबलायाम्। वै.निघ.। सिन्दूरपुष्पीवृक्षे। रा.नि. व.१०।

**वीरभद्रः** । पुं। वीरणे। বেণা। मे.।

**वीरभद्रकम्** । क्ली। वीरणे। বেণা। जटा.।

**वीरभद्ररसः** । पुं। सन्निपातज्वरे रसः। पा-ठ.—"त्रूषणं पञ्च लवणं हिङ्गीरं जीरकद्वयं। क्षारत्रयं समांशेन चूर्णमेषां पलत्रयम्। शुद्धसूतं मृताभ्रञ्च गन्धकञ्च पलं पलम्। आर्द्रकस्य द्रवैः खल्ले दिनमेकं विमर्दयेत्। वीरभद्ररसः ख्यातो माषैकं सन्निपातजित्। चित्रकार्द्रकसिन्धूत्थमनु-पानं जलेन च ॥" रस.चि.।

**वीररजः** (स्) । क्ली। सिन्दूरे। रा.नि.व.१३।

**वीरवती** । स्त्री। मांसरोहिण्याम्। भा.।

**वीरवल्ली** । स्त्री। देवदाल्याम्। দেয়াতাড়া। वै.निघ.।

**वीरवृक्षः** । पुं। भल्लातकवृक्षे। अम.। महा-शाली। देवधान्ये। গোটাধান, দেধান। प.मु.। विल्वान्तरवृक्षे। रा.नि.व.८। अर्जुनवृक्षे। हे.च.।

**वीरवेतसः** । पुं। अम्लवेतसे। रा.नि.व.६।

**वीरशाकः** । पुं। वास्तूकशाके। বেতো শা-ক। वै.निघ.।

**वीरसिंहः** । पुं। वीरसिंहावलोकनप्रणेतरि।

**वीरसिंहावलोकनम्** । क्ली। वीरसिंहकृ-तवैद्यकग्रन्थे।

**वीरसेनः** । पुं। आरुकवृक्षे। रा.नि.व.११।

**वीरा** । स्त्री। मद्यसामान्ये। रा.नि.व.१४। पृ-श्निपर्ण्यां। চাকুলিয়া। च.द.उन्मा.चि.। दुग्ध-लायाम्। शतावर्य्याम्। तालमूल्याम्। कटुक्यां। कृष्णातिविषायाम्। काकोल्याम्। रा.नि.व.२२। वा.उ.६अ.महापैशाचघृते। क्षीरकाकोल्यां। मे.।

रा.नि.व.३। च.चि.५अ.वायमाणाष्टते। प्रयोगा. थर्श:-चि.सुनिषण्णकचाङ्गेरीष्टते। च.द.उन्मा.चि. महाकल्याणष्टते। आमलक्याम्। एलवालुके। र. मायां। विदार्य्यां। भूमिकुष्माण्ड। मे.वा.टी.ह्रि मा.वमनकल्पे। चीरविदार्य्याम्। शुक्र भूमिकुष्माण्ड। सुरामांस्यां। मे.। महाशतावर्य्याम्। ब्राह्म्याम्। रा.नि.व.४। शिंशपावृत्ते। र.मा.। घृतकुमार्य्याम्। रा.नि.व.५। भूम्यामलक्याम्। रा.नि.व.५। वै.निघ.चय.चि.शिवगुटी। जटामांस्यां। च.द.रसायने। "ऋद्धियुग ऋषभवीरा।"

**वीरान्तक:** । पुं। अर्जुनवृत्ते। वै.निघ.।

**वीराम्ल:** । पुं। अम्लवेतसे।। रा.नि.व.६।

**वीरायतच्छदा** । स्त्री। कदलीवृत्ते। वै.निघ।

**वीरावकम्** । क्ली। आरुके। रा.नि.व.११।

**वीरुत् (धा)** । स्त्री। विस्तृतलतायाम्। अम.। श.र.।

**वीरुपत्रिका** । स्त्री। चुच्चुशाके। रा.नि.व.४।

**वीरेश्वररस:** । पुं। विषमज्वरे रस:। पाठ:—"मृतसूताभ्रतीक्ष्णञ्च तालं गन्धकमर्कटफलं। शिवघ्नी वचा शुण्ठी भार्गी पथ्या च बालकं। भान्यकं मर्दयेत्तुल्यं पर्पटीत्थद्रवैर्दिनं। मर्दो माषं लिहेत् चाद्रै:······ काकमाचीरसञ्चानु सैन्धवेन युतं पिबेत्॥" रस.कौ.।

**वीर्य्यम्** । क्ली। बले। प्रभावे। अम.। शुक्रधातौ। रा.नि.व.१८। द्रव्यगतशक्तौ। "द्रव्याणि येन कुर्व्वन्ति तद्वीर्य्यम्।" सु.सू.४१अ.। "उष्णशीतगुणोत्कर्षात् बुधैर्वीर्य्यं द्विधा स्मृतम्। यत्सम्भिसोमीयं दृश्यते भुवनत्रयम्॥" भा.। अन्यत्र—तद्द्विविधं चिन्त्याचिन्त्यक्रियाहेतुत्वेन। तत्र चिन्त्यक्रियाहेतुर्या द्रव्यरसादीनां स्वस्वकर्म्मणि स्वभावसिद्धा शक्ति:। अचिन्त्यक्रियाहेतुश्च प्रभावापरपर्य्याय:। द्रव्याणां रसाद्यननुरूपकार्य्यकरणशक्ति:। तदुक्तं—"भूतप्रभावातिशयो द्रव्ये पाके रसे स्थित:। चिन्त्याचिन्त्यक्रियाहेतुवीर्य्यं धन्वन्तरेर्मतम्॥" शिवदास:। वीर्य्यगुणा:—शीतोष्णस्निग्धरूक्षमृदुतीक्ष्णपिच्छिलविशदा:। तत्र शीतोष्णौ आग्नेयौ। शीतपिच्छिलौ अम्बुगुणभूयिष्ठौ। मार्दवस्य तोयाकाशभूयिष्ठत्वं, रौक्षस्य वायुभूयिष्ठत्वं वैशद्यस्य च क्षितिवायुभूयिष्ठत्वम्। सु.सू.४१अ.। तेजसि। मे।

**वीर्य्या** । स्त्री। वीर्य्ये। अ.टी.भ.।

**वीहा** । स्त्री। वनकुलत्थे। वै.निघ.।

**वीघ:** । पुं। हट्टौ। व्याक.।

**वृंहणम्** । क्ली। बलवर्द्धने। घृततैलादिशीतक्रियायाम्। सा.कौ.।

**वृंहण:** । त्रि। बलवर्द्धके। पृथिव्यम्बुभूयिष्ठे। सु.सू.४१अ.। तन्नामकधूमपाने। भा.। स्त्री। अश्वगन्धायाम्। कपिलद्राक्षायाम्। भूकुष्माण्डे। वै.निघ.। वराहमांससाधितयवाग्वाम्। च.सू.२अ.।

**वृंहणवस्ति:** । पुं। निरूहवस्तिभेदे। "वृंहणद्रव्यनि:क्वाथै: कल्कैर्मधुरकैर्युता:। सर्पिर्मांसरसोपेता वस्तयो वृंहणा: स्मृता:॥" भा.।

**वृंहणीयवर्ग:** । पुं। वृंहणाय हिते कषायवर्गे। यथा—चीरिणीराजचवककाकोलीचीरकाकोलीवाट्यायनीभद्रौदनीभारद्वाजीपयस्याऋष्यगन्धा इति दशेमानि वृंहणीयानि। ক্ষীরলতা, খিরাই, বেলেড়া, কাকোলী, ক্ষীরকাকোলী, শ্বেত বেলেড়া, পীত বেলেড়া, বনকাপাস, ভূমিকুষ্মাণ্ড, শুক্ল ভূমিকুষ্মাণ্ড। च.सू.४अ.।

**वृक:** । पुं। ईहामृगे। हिं हुण्डार। घीष इति लोके। नायी इति महाराष्ट्रादौ। रा.नि.व.१९। काके। उणा.। शृगाले। हारा.। वकवृत्ते। श.र.। सरलनिर्य्यासे। भ.रभस:।

**वृकदंश:** । पुं। कुक्कुरे। हे.... [वै.निघ.।

**वृकदन्ती** । स्त्री। पाठायाम्। আকনাদি।

**वृकधूप: (क)** । पुं। बहुसुगन्धद्रव्यकृतकृत्रिमधूपे। अम.। सरलद्रवे। তার্পিন্। अम.।

**वृकधूर्त्त:** । पुं। शृगाले। हारा.।

**वृका** । स्त्री। पाठायाम्। আকনাদি। रा.नि.व.६। वै.निघ.२भ.ज्व.चि.। सूर्पद्वयपरिमाणे।

**वृकाराति: (रि:)** । पुं। कुक्कुरे। रा.नि.व.१९। श.मा.।

**वृकाची** । स्त्री। त्रिवृति। তেউড়ী। र.मा.।

**वृकि: (की)** । स्त्री। पाठायां। আকনাদি। वै.निघ.२भ.वा.व्या.चि.महाराजादौ।

**वृजनः** । पुं । केशे । उणा० ।

**वृजिनः** । पुं, क्ली । केशे । मे. । क्ली । शोणिते । रक्तचर्म्मणि । हे.च. । [श.र. ।

**वृतिङ्करः** । पुं । विकङ्कतवृक्षे । बँइँची गाछ ।

**वृत्तम्** । क्ली । स्तनाग्रे । रा.नि.व.१८ । पुं । धवलयावनाले । श्वेत जनार । रा.नि.व.१६ । गुण्डतृणे । रा.नि.व.८ । श्वक्षीरवृक्षे । वै.निघ. । सप्तपर्णवृक्षे । प.मु. । कच्छपे । रा.नि.व.१९ ।

**वृत्तकम्** । क्ली । वेत्रे । वै.निघ. ।

**वृत्तकर्कटी** । स्त्री । वर्त्तुलाकारकर्कट्याम् । थर्मुजा । रा.नि.व.७ ।

**वृत्तका** । स्त्री । उपोदकायां । पुँइ । वै.निघ. ।

**वृत्तकोशा** । स्त्री । देवदाल्याम् । रा.नि.व.३।

**वृत्तकोषः** । पुं । पीतदेवदाल्याम् । देयाताड़ा । भा. ।

**वृत्तगुण्डः** । पुं । गुण्डतृणे । गुणाः—मधुरः शीतलः कफपित्तघ्नः अतीसारदाहरक्तघ्नश्च । रा. नि.व.८ ।

**वृत्ततण्डुलः** । पुं । यावनालनामकशिम्बीधान्ये । जनार, जुओयारि । रा.नि.व.१६ ।

**वृत्ततुम्बी** । स्त्री । वृत्तालाब्वां । गोल लाउ । वै.निघ. ।

**वृत्ततृणम्** । क्ली । गुण्डतृणे । वै.निघ. ।

**वृत्तनिष्पाविका** । स्त्री । नखनिष्पाव्यां, कृष्णशिम्ब्याम् । छोटि मटर शुँटी । रा.नि.व.७ ।

**वृत्तपत्रः** । पुं । उत्तमशाकविशेषे । नटिया शाक । प.मु. । स्त्री (त्रा) । पुत्रदात्र्याम् । रा. नि.व.३ । [छागल बँटे । रा.नि.व.३ ।

**वृत्तपर्णिका** । स्त्री । अजान्त्रीलतायाम् ।

**वृत्तपर्णी** । स्त्री । पाठायाम् । आकनादि । रा.नि.व.६ । महाश्रावणपुष्पिकायाम् । रा.नि.व.४ ।

**वृत्तपद्मः** । पुं । क्षुद्रशङ्खे । वै.निघ. ।

**वृत्तपुष्पः** । पुं । कदम्बवृक्षे । शिरीषवृक्षे । मल्लिकावृक्षे । मुद्गरवृक्षे । रा.नि.व.२३। जलवेतसे । भूकदम्बे । रा.नि.व.९। स्त्री (ष्पा) । नागदमन्यां नागदमनी । रा.नि.व.५ । कौङ्कणदेशप्रसिद्धवृक्षपुष्पवृक्षे । रा.नि.व.१० । [जीरके । वै.निघ. ।

**वृत्तफलम्** । क्ली । मरिचे । रा.नि.व.६ ।

**वृत्तफलः** । पुं । दाड़िमवृक्षे । डालिम गाछ । बदरवृक्षे । कुल गाछ । कपित्थवृक्षे । कयेत् गाछ । रा.नि.व.११ । रक्तापामार्गे । भा.पू.१भ.। करञ्जवृक्षे । तरम्बुजे । तरमुज, थर्मुज । वै.निघ.।

**वृत्तफला** । स्त्री । वार्त्ताकीवृक्षे । बेगुन गाछ । रा.नि.व.७ । शशाण्डुल्याम् । क्षेत्रकर्कटी । आमलक्याम् । रा.नि.व.११ । [श.च. ।

**वृत्तभोजनः** । पुं । गण्डीरे । शमठ शाक ।

**वृत्तमल्लिका** । स्त्री । श्वेतार्के । वै.निघ. । त्रिपुरमल्लिकायाम् । मं वाटीगरे । कं दुन्दुभि मल्लिका । वम्. वटमोगरी । गुणाः—नेत्ररोगघ्नी कटुः उष्णा व्रणघ्नी बहुगन्धा मुखरोगघ्नी च । रा.नि.व. १० । [वै.निघ. ।

**वृत्तयुग्मः** । पुं । वातामवृक्षे । बादाम गाछ ।

**वृत्तवीजः** । पुं । राजमाषे । बरबटी । रा. नि.व.१६ । भिण्डातुपे । रा.नि.व.४ ।

**वृत्तवीजका (जा)** । स्त्री । पाण्डुरफल्याम् । रा.नि.व.५ । आढक्यां । अरहर । रा.नि.व.१६।

**वृत्ता** । स्त्री । मांसरोहिण्याम् । प्रियङ्गुलतायां । रा.नि.व.१२ । श्वेतनिष्पावे । श्वेत शीम् । रा.नि. व.१६ । झिञ्झिरीटाक्षुपे । रा.नि.व.४ । नागदमन्याम् । नागदना । रा.नि.व.५ । रेणुकायाम् । रेणुक । रा.नि.व.६ । वै.निघ.२भ.वा.व्या.चि.वातारिरसे । हस्तिकोशातक्याम् । हस्तिघोषा । रा. नि.व.७ ।

**वृत्तिः** । स्त्री । जीवनोपाये । अम. ।

**वृत्तिस्थः** । पुं । कृकलासे । रा.नि.व.१९ ।

**वृत्तेर्व्वारुः** । पुं । खर्म्मूजावृक्षे । थर्मुजा गाछ । रा.नि.व.७ । [वि.१८ ।

**वृथार्त्तवा** । स्त्री । वन्ध्यायां स्त्रियाम् । रा.नि.

**वृद्धम्** । क्ली । शैलजनामगन्धद्रव्ये । शैलज । रा.नि.व.१२ । पुं । एकपञ्चाशद्वर्षे वृद्धे, स्थविरे । रा.नि.व.१८ । वृद्धदारकलतायाम् । रा.नि. व.३ ।

**वृद्धकण्टः (कः)** । पुं । इङ्गुदीवृक्षे । वै.निघ. ।

**वृद्धकर्णिका** । स्त्री । पाठायां । रा.नि.व.६ ।

**वृद्धकाकः** । पुं । द्रोणकाके । दाँड़काक । हे.च. । [कल्प.४अ. ।

**वृद्धगोनसः** । पुं । मण्डलिसर्पविशेषे । सु.

**वृद्धतिक्ता** । स्त्री । पाठायाम् । आकनादि । वै.निघ. ।

**वृद्धत्वम्** । क्ली । वार्द्धक्ये । अम. ।

**वृद्धदारकः (रः, कः)** । पुं । (Gmelina asiatica or Rourea santaloides.) स्वनामख्याततलताविशेषे । बीजताड़क । हिं व धार । स द्विविधः श्वेतरक्तभेदेन । गुणाः—"वृद्धदारुद्वयं गौल्यं पिच्छिलं कफवातहृत् । बल्यङ्कासामदोषघ्नं द्वितीयं स्वल्पवीर्य्यदम् ॥" रा.नि.व. ३ । कृष्णवृद्धदारके । वै.निघ. ।

**वृद्धदारकादिलौहम्** । क्ली । ऊरुस्तम्भाधिकारे औषधम् । पाठः—"वृद्धदारचित्रहस्तीकरिकर्णाग्निमानकैः । त्रिकत्रययुतो लौह आमवातान्तको मतः ॥" इदं योगरत्नाकरस्य । रस.र. ।

**वृद्धधूपः** । पुं । शिरीषवृक्षे । श्रीवासवृक्षे । वै. निघ. ।

**वृद्धधूमा** । स्त्री । श्लेष्मातकवृक्षे । वै.निघ. ।

**वृद्धनाभिः** । त्रि । उच्चनाभौ । (गोंड़ा) । अम. ।

**वृद्ध(द्धि)बला** । स्त्री । महासमङ्गायां । बड़ लज्जालुका । रा.नि.व.४ । महाबलायाम् । वै. निघ. ।

**वृद्धराजः** । पुं । अम्लवेतसे । कश्चित् ।

**वृद्धरुहा** । स्त्री । शतावर्य्यां । च.सू.४अ. ।

**वृद्धवाहनः** । पुं । आम्रवृक्षे । कश्चित् ।

**वृद्धविभीतकः** । पुं । आम्रातकवृक्षे । आम्ड़ा गाछ । श.मा. ।

**वृद्धसूत्रकम्** । क्ली । इन्द्रतूलके । हारा. ।

**वृद्धा** । स्त्री । पश्चाशीर्षे प्राचीनायाम् । बुड़ि । भा. । तत्सम्भोगे मरणं भवति । राज. । महाश्रावणिकायां । रा.नि.व.५ । अङ्गुष्ठे । बुड़ा आङ्गुल । श.र. ।

**वृद्धाङ्गुलिः** । स्त्री । अङ्गुष्ठाङ्गुली । बुड़ा आङ्गुल । श.र. ।

**वृद्धिः** । स्त्री । आधिक्ये । च.सू.१अ. । स्वनामख्यातौषधौ । वृद्धि । एषा दक्षिणावर्त्तफला गौड़े प्रसिद्धा । "ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले । वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः । प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् ॥" गुणाः—"वृद्धिर्गर्भप्रदा शीता बृंहणी मधुरा स्मृता । वृष्या पित्तास्रशमनी क्षतकासक्षयापहा ॥" भा. मधुरा स्निग्धा तिक्ता शीतला रुचिमेधाकरी श्लेष्मकुष्ठक्रमिघ्नी च । रा.नि.व.५ । वा.सू.१५अ.पद्मकादिः । रोगविशेषे । ताः सप्तविधाः- वातपित्तकफशोणितमेदोमूत्रान्त्रजा इति । निदानादि —"क्रुद्धोऽनूर्द्ध्वगतिर्वायुः शोथशूलकरश्चरन् मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः । प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः । दोषास्रमेदोमूत्रान्त्रैः सवृद्धिः सप्तधा गदः ॥" मा.नि. । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे, केवलमुत्पत्तिहेतुरन्यतमः । अधः प्रकुपितोऽन्यतमो हि दोषः फलकोषवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति तां वृद्धिमित्याचक्षते । तासां भविष्यतीनां पूर्ब्बरूपाणि वस्तिकोटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति । तत्र वातवृद्धिं वातपूर्णदृतिमिव परुषां, पित्तवृद्धिं पक्कोदुम्बरसङ्काशां, श्लेष्मवृद्धिं कठिनामल्पवेदनां शी[illegible] कण्डूमतीं, रक्तवृद्धिं कृष्णस्फोटावृतां पि[illegible]लिङ्गां, मेदोवृद्धिं मृदुस्निग्धां कण्डूमतीम[illegible]दनाञ्च जानीयात् । मूत्रवेगधारणशीलस्य मूत्रवृद्धिर्भवति । सु.नि.१२ अ. ।

**वृद्धिका** । स्त्री । शङ्खपुष्प्याम् । (श्वेत अपराजिता) । अर्कपुष्प्याम् । वै.निघ. । ऋद्धौ । श.मा. ।

**वृद्धिदः** । पुं । जीवकनामक्षुपे । जीवक । रा.नि.व.५ । वाराहीकन्दे । रा.नि.व.७ ।

**वृद्धिदात्री** । स्त्री । वृद्धौ । वृद्धि । रा.नि.व.५

**वृद्धिपत्रम्** । क्ली । षड़ङ्गुलशस्त्रविशेषे छेदने भेदने च । सु.सू.८अ. । वृद्धेः पत्रमिव वृद्धिपत्रं । तत् द्विविधं—अग्रोन्नताग्रं प्रयताग्रञ्च । द्वे अपि समाङ्गुलम् अर्द्धपञ्चाङ्गुलं वृन्तं सार्द्धाङ्गुलफलञ्च कार्य्यं । तयोः प्रथमं क्षुरमाह । सु.टी.ड. ।

**वृद्धिभाक्** । स्त्री । वृद्ध्यौषधी । नकुल.१०अ. ।

**वृद्धेला** । स्त्री । स्थूलैलायाम् । বড় এলাচ । वै.निघ. ।

**वृधसानः** । पुं । मनुष्ये । उणा. ।

**वृन्तम्** । क्ली । प्रसूनबन्धने । বোঁটা । अम. । कुचाग्रे । मे. ।

**वृन्ताकः** । पुं । शाकविशेषे । নটিয়া শাক । रा.नि.व.२३ । उपोदिकायाम् । পুঁই । वार्त्ताकीवृक्षे । বেগুন গাছ । रा.नि.व.७ । क्ली । तत्फले । বেগুন । भा.नवज्व.चि. । "वृन्ताकाख्यं पथ्यमेतत् प्रदिष्टम् ।" गुणाः—"वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् । ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु । तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं लघु । वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघु दीपनम् । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् । अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् । तदर्शःसु विशेषेण हितं हीनञ्च पूर्व्ववत् ॥" भा.पू.१भ.शा.व. । [वृहत्याम् । मद. ।

**वृन्ताकी** । स्त्री । वार्त्ताकीवृक्षे । रा.नि.व.७ ।

**वृन्तिका** । स्त्री । कटुकायां । কট্‌কী । श.च. ।

**वृन्दः** । पुं । वृन्दाचार्य्यकृतचिकित्सासंग्रहे ।

**वृन्दा** स्त्री । तुलसीवृक्षे । श.र. । वृक्षोपरिजातलतायाम् । वै.निघ. ।

**वृशः** । पुं । वासकवृक्षे । বাসক গাছ । अ.टी.भ. । उन्दुरौ । श.र. । स्त्री । वासायाम् । বাসক । उणा. । [चि.कण्टकारीघृते ।

**वृश्चिः** । पुं । रक्तपुनर्नवायाम् । वै.निघ.कास.

**वृश्चिकः** । पुं । श्वेतपुनर्नवायाम् । रक्तपुनर्नवायाम् । वै.निघ.२भ.वा.व्या.चि महाराम्नादौ । तन्नामककीटविशेषे । বিছা । हिं बिच्छू । मं विंचू । तद्विषगुणाः—"वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् । ऊर्द्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति । दंशः सद्योऽतिरुक्‌श्यावस्तुद्यते स्फुटतीव च ॥" वा.उ.३७अ. । ते त्रिविधाः मन्दमध्यमहाविषभेदेन । तत्र मन्दविषा गोमयकोथजाः द्वादश, मध्यविषाः काष्ठेष्टिकोद्भवास्त्रयः, उत्तमाश्च महाविषाः सर्पकोथजाः विषजाश्च पञ्चदश । एवं त्रिंशद्वृश्चिकजातयः । तेषां मन्दविषाः यथा—"कृष्णः श्यावः कर्व्वुरः पाण्डुवर्णो गोमूत्राभः कर्कशो मेचकश्च । श्वेतो रक्तो रोमशः शाद्वलाभो रक्तश्चैते मन्दवीर्य्या मतास्तु । दष्टलक्षणानि—एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च । शाखादष्टे वेदना चोर्द्ध्वमेति दाहस्वेदौ दंशशोफो ज्वरश्च ।" इति । मध्या यथा—"रक्तः पीतः कापिलेनोदरेण सर्व्वे धूम्राः पर्व्वभिश्च त्रिभिः स्युः । एते मूत्रोच्चारपूत्यण्डजाता मध्या ज्ञेयास्त्रिप्रकारोरगाणां । जिह्वाशोफो भोजनस्यावरोधो मूर्च्छा चोग्रा मध्यवीर्य्याभिर्दष्टे ।" उत्तमा यथा—"श्वेतश्चित्रः श्यामलो लोहिताभो रक्तः श्वेतो रक्तनीलोदरौ च । पीतो रक्तो नीलपीतोऽपरश्च रक्तो नीलो नीलशुक्लस्तथा च । रक्तो वभ्रुः पूर्व्ववच्चैकपर्वा यश्चापर्व्वा पर्व्वणी द्वे च यस्य । नानारूपा वर्णतश्चापि घोरा ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः । जन्मैतेषां सर्पकोथात् प्रदिष्टं देहेभ्यो वा घातितानां विषेण । एभिर्दष्टे सर्पवेगप्रवृत्तिः स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च । खेभ्यः कृष्टं शोणितञ्चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव ॥" सु.कल्प.८अ. । ओषधिविशेषे । मे. । शूककीटे । শুয়াপোকা । अम. । मदनवृक्षे । कर्कटे । गोमयकीटे । গোবরে পোকা । भरतः । स्त्री (का) । क्षुद्रक्षुपविशेषे । मं चिञ्चुवा । कं इङ्गुलि । बम्. विच्चुवा । गुणाः—पिच्छिला अम्ला अन्त्रवृद्धिघ्नी च । रा.नि.व.५ । चि.क्र.क.५प. । पश्चिपण्याम् । চাকুলিয়া । श्वेतपुनर्नवायाम् । वै.निघ. । [शाक । श.मा. ।

**वृश्चिकप्रिया** । स्त्री । पूतिकायाम् । পুঁই

**वृश्चिकर्णी** । स्त्री । आखुकर्णीलतायाम् । মূষাকাণী লতা । रा.नि.व.३ ।

**वृश्चिकविषम्** । क्ली । वृश्चिककीटस्य विषं ।

**वृश्चिकविषापहा** । स्त्री । महाराम्नायाम् । नाकुल्याम् । वै.निघ. ।

**वृश्चिकाली** । स्त्री । (Fragia involucrata.) स्वनामख्यातक्षुपविशेषे । বিছাতী । हिं बरहंटा । मं वृश्चिकाली । कं इलिगुलु । तें तुलघोंड़ी । ता. कञ्चुरि । बम्. शेढ़शिंगी । गुणाः—कटुः तिक्ता हृदयवक्त्रशोधनी रक्तपित्तघ्नी विष-

भारीचकघ्नी बल्या च। रा.नि.व.८। कासघ्नी वातघ्नी च। राज.। कण्टकितमेषशृङ्गतुल्याकारफला। इति। सु.सू.३८।३९अ.वातशमने। उष्ट्रधूम्रकमेषशृङ्ग्यां। इति। वा.सू.१५अ.अर्कादिः। "भार्गी रास्ना वृश्चिकाली प्रकीर्या।" कण्टकितमेषशृङ्गतुल्याकारफला पाठापत्रा ईषद्रोमशा श्वेतपुष्पगुच्छा दक्षिणावर्त्तवल्ली मेषशृङ्गीभेदः। सु.चि. ८अ.। सि.यो.उन्मा.चि.। च.द.क्षारगुडे।

**वृश्चिकाहिविषापहा**। स्त्री। नाकुल्यां। গন্ধরাস্না। वै.निघ.।

**वृश्चिपत्री (र्णी)**। स्त्री। वृश्चिकाल्याम्। विछाती। प.मु.। र.मा.। लघुमेषशृङ्ग्याम्। क्षुद्र মেড়াশিঙে। वै.निघ.। [अ.।

**वृश्ची**। स्त्री। वृश्चीरक्षुपे। पूनर्नवा। वा.चि.३

**वृश्चीद्वयम्**। क्ली। वृश्चीरयुगले। श्वेतरक्तपुनर्नवयोः। चि.क्र.क.१स्त.३अ.।

**वृश्चीरः (वः) (कः)**। पुं। श्वेतपुनर्नवायाम्। শেয়াপুন্না। प.मु.। च.सू.४अ.। र.सा.सं.क्षुधावतीगुड्यां नागबलातैले च। च.द.वि.ज्व.चि.। "वृश्चीरविल्ववर्षाभू।" वा.सू.१५अ.विदार्य्यादौ। च.द.कास.चि.बृहत्कण्टकारीघृते। च.द.वा.व्या. चि.एकादशशतप्रसारणीतैले। वा.र.पि.चि.अमृताद्यघृते।

**वृषः**। पुं। बलीवर्द्दे। ষাঁড়। अम.। तन्मूत्रगुणाः—"वृषमूत्रञ्च शोफघ्नं कृमिदोषविनाशनम्। कामलायक्ष्मपाण्डुनाशनञ्चाग्निदीपनम्॥" अत्रि. ९अ.। ऋषभकौषधौ। रा.नि.व.५। दुरालभायाम्। रा.नि.व.२३। वासकवृक्षे। रा.नि.व.४। च.चि.३अ.। च.द.गुड़.घृते, कामदेवघृते। नदीभल्लातके। गोधूमे। प.मु.। मूषिके। मे.। क्ली। वासामूले। वहे। श.मा.।

**वृषकर्णिका (र्णी)**। स्त्री। सुदर्शनालतायाम्। সুদর্শন গুলুঞ্চ, উরতি পূরতি। च.सू. ४अ.। वा.सू.१५अ.सुरसादौ। "खरवुषवृषकर्णी कट्फलं कासमर्दः।"

**वृषगन्धा (न्धिका)**। स्त्री। छगलान्त्र्याम्। ছাগলবেঁটে। रा.नि.व.२। अतिबलायाम्। পীত বেলেড়া। वै.निघ.।

**वृषणः**। पुं। अण्डकोशे। रा.नि.व.१८। तदुत्पत्तिः—मांसरुधिरकफमेदसां सारांशात् वायुयोगेन भवति। सु.शा.४अ.।

**वृषणकच्छूः**। पुं। क्षुद्ररोगविशेषे। চর্মিপো-কা। निदानादि—"स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः। प्रक्लिद्यते यदा स्वेदात् स कण्डूं जनयेत्तदा। तत्र कण्डूयनात् क्षिप्रं स्फोटः स्रावश्च जायते। प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजां।" सु.नि.१३अ.। मा.नि.।

**वृषदंशः (कः)**। पुं। विड़ाले। अम.। च.द.वात.ज्व.चि.। "पयसा वृषदंशस्य शकृत्।" वा.उ.३अ.। [रा.नि.व.६।

**वृषध्वाङ्क्षा (ङ्क्षी)**। स्त्री। नागरमुस्तायाम्।

**वृषनाशनः**। पुं। विड़ङ्गे। श.मा.।

**वृषपत्रिका**। स्त्री। वस्तान्त्र्याम्। ছাগলবেঁটে। रा.नि.व.३।

**वृषपर्णिका**। स्त्री। ब्राह्मणयष्टिकायां। বামনহাটী। च.सू.४अ.कृमिघ्न-गणः।

**वृषपर्णी**। स्त्री। आखुकर्णीलतायाम्। ইন্দুরকাণী। পূরাতী। प.मु.। कृष्णादन्त्याम्। र.मा.।

**वृषपर्व्वा (न्)**। पुं। कशेरौ। কেশুর। विश्व।

**वृषभः**। पुं। वृषे। मे.। ऋषभके। उणा.।

**वृषभध्वजा**। स्त्री। दादखीवृक्षे। বড় দন্তী। वै.निघ.।

**वृषभपल्लवः**। पुं। वासावृक्षे। বাসকবৃক্ষ। वै.निघ.। भ ...। वक्ष...रसे।

**वृषभाक्षी**। स्त्री। इन्द्रवारुणीलतायाम्। রাখালশশা। रा.नि.व.३।

**वृषमूलम्**। क्ली। वासामूले। বাসকমূল। वातरक्तचि.रुद्रतैले।

**वृषलः**। पुं। गृञ्जने। গাজর। घोटके। मे.

**वृषलोचनः**। पुं। मूषिके। हे.च.।

**वृषवीभत्सः**। पुं। कपिकच्छूभेदे। वै.निघ.

**वृषसारः**। पुं। शुक्लवटे। देवकुम्भायाम्। वै. निघ.। [श.मा.

**वृषस्कन्धी (इन्)**। पुं। भृङ्गरोले। ভীমরল

**वृषस्यन्ती** । स्त्री । अतिकामुकायाम् । अम. ।

**वृषा** (न्) । पुं । घोटके । वृषे । हे.च. । कर्णे । मे । स्त्री (षा) । लघुमूषिकपर्णीलतायां । पुराती । रा.नि.व.३ । द्रवन्त्यां । बड़ दन्ती । रा.नि.व.५ । इयम् एरण्डवत्पत्रविटपा, अत्रामे दन्ती दिया । भा.मस्त्रिकज्व.चि. । अश्वगन्धायाम् । भा.सन्निकज्व.चि.वचादि: । महार्ज्योतिष्मतीलतायाम् । कपिकच्छ्वां । हे.च. । मे. ।

**वृषाकपायी** । स्त्री । शतावर्य्याम् । जीवन्त्यां ।

**वृषाकरः** । पुं । माषे । मासकलाय । रा.नि.व.१६ । [षण्डे । मे. ।

**वृषाङ्कः** । पुं । पानीयभल्लातके । जलभेला ।

**वृषाणी** (इन्) । पुं । ऋषभके । रा.नि.व.५ ।

**वृषादनी** । स्त्री । इन्द्रवारुण्याम् । राखालशशा । वै.निघ. ।

**वृषायणः** । पुं । चटकपक्षिणि । हारा. ।

**वृषाह्वारः** । पुं । बिड़ाले । हारा. ।

**वृषी** (इन् । पुं । मयूरे । श.मा. ।

**वृष्टिः** । स्त्री । जलवर्षणे । गुणा:—"वृष्टिर्निष्यन्दिनी शीता निद्राश्लेष्मबलप्रदा । मलापहारिणी वायुदायिनी वह्निवारिणी ॥" राज.२प. । वृष्टिजलं भूमिपतितमष्टविधं भवति । तद्यथा—श्रावणभाद्राश्विनकार्त्तिकभवजलानीति चतुर्विधं, तथा धारकारतौषारहैममेदेन च चतुर्विधमित्यष्टविधं वृष्टिजलम् । तच्च पुनर्दिवावृष्टिरात्रिवृष्टिर्दुर्दिनवृष्टिभवत्वेन भिन्नगुणं भवति । यथा—"निशाजलं कफकरं घनं शीतगुणात्मकं । सामुद्रतोयस्य समं विज्ञेयं वातकोपनम् । दिवा सूर्य्यांशुतप्ता च मेघा वर्षन्ति दत्पय: । तत्कफघ्नं पिपासाघ्नं लघु वातप्रकोपनम् । दुर्दिने वृष्टिसम्भूतं वातभूतं सवातलम् । कफकृच्छ्रोषहननं तर्पणं दोषकोपनम् ॥" अथ श्रावणवृष्टिजलगुणा:—"तथा श्रावणवृष्टिश्च दोषरोगकरी नृणाम् । कण्डुत्रिदोषजननं पानीयं न प्रशस्यते ॥" अथ भाद्रवृष्टिजलगुणा:—"सघनं नाभसं नीरं श्लेष्मकृद्वातकोपनं । शमनं पित्तरोगाणां मधुरं रक्तदोषकृत् ॥" अथाश्विनवृष्टिजलगुणा:—"रूक्षं पित्तकरं चाम्लं गुल्मरक्तविकारकृत् । विपाकवातसम्भूतं खरं शस्त्रविदोषकृत् ॥" अथ कार्त्तिकवृष्टिजलगुणा:—"कार्त्तिकवृष्टिसम्भूतं शान्तिसन्तापशीतलं । नाशनञ्च त्रिदोषाणां सर्व्वामयप्रवर्द्धनम् । शीतलं बलकृद्धृष्यं विदाहज्वरनाशनं । क्वचित् पुण्यतरे देशे प्रवर्षति माधवम् । पित्तज्वरविनाशाय शस्यनिष्पत्तिहेतवे । अम्बरस्थं सदापथ्यममृतं स्वातिसम्भवं । गगनाम्बु त्रिदोषघ्नं गृहीतं यत्र भाजने । बल्यं रसायनं मेध्यं यत्नापेक्ष्यं तत: परं । अनार्त्तवं विसृजन्ति जलं धाराधराश्च यत् । पतितं तत् त्रिदोषाय सर्व्वेषां देहिनामपि ॥" इति चातुर्मासिकजलम् । चचि.७अ. । अन्यच्चतुर्विधं जलशब्दे द्रष्टव्यम् । अकालवृष्टिजलं श्लेष्मरोगकरं न प्रशस्तञ्च । [ण ।

**वृष्टिका** । स्त्री । आरण्यशणपुष्प्यां । बुनो शण ।

**वृष्टिघ्नी** । स्त्री । क्षुद्रैलायां । गुजराटी एलाच । श.च. ।

**वृष्टिभूः** । पुं । भेके । हारा. ।

**वृष्णिः** (ष्णी) (इन्) । मेषे । अम. ।

**वृष्यम्** । क्ली । मनोहर्षणे । "मनसो हर्षणं यच्च तद्वृष्यमुच्यते ।" यथा—वृष्यं मात्रापीतं हर्षणं भवति । "स्वस्थस्योजस्करं यत्तु तद्वृष्यम् ।" च.चि.१अ. । पुं । इक्षुदण्डे । रा.नि.व.१४ । माषे । मासकलाय । हे.च. । आमलके । त्रि । शुक्रवृद्धिकरे । भा. ।

**वृष्यकन्दका** (न्दा) । स्त्री । विदार्य्यां । भूमिकुष्माण्ड । रा.नि.व.७ । मूलके । वै.निघ. ।

**वृष्यगन्धा** । स्त्री । वृद्धदारके । बीजदारक । श.र. । अजान्त्रीलतायाम् । छागलादि । रा.नि.व.३ । अतिबलायाम् । पीतबेलेड़ा । वै.निघ. । [बेलेड़ा । रा.नि.व.४ ।

**वृष्यगन्धिका** । स्त्री । अतिबलायां । पीत-

**वृष्यचण्डी** । स्त्री । महाम्लिकायाम् । बड़ मुषाकाणी । वै.निघ. ।

**वृष्यपर्णी** । स्त्री । भूमिकुष्माण्डे । वै.निघ. ।

**वृष्यफला** । स्त्री । आमलकीवृक्षे । वै.निघ. ।

**वृष्यवल्लिका** (ल्ली) । स्त्री । भूमिकुष्माण्डे । रा.नि.व.७ ।

**वृष्या** । स्त्री । ऋद्धौ । र.मा. । शतावर्य्यां । भू-

भ्यामलक्याम्। रा.नि.व.५। आमलक्याम्। रा.नि.व.११। भूमिकुष्माण्डे। अतिबलायाम्। बृहद्दन्त्याम्। वै.निघ.।

**बृहच्चित्तः** । पुं। फलपूरे। श.च.।

**बृहच्चुञ्चुः** । पुं। महाचुञ्चुशाके। रा.नि.व.४।

**बृहच्छतावरीघृतम्** । क्ली। असृग्दराधिकारे घृतम्। पाठः—"शतावरीरसप्रस्थं क्षीरद्विगुणितं भिषक्। अत्र कल्कानिमान् दद्यात् स्थूलोडुम्बरसम्मितान्। जीवनीयानि यान्यष्टौ यष्टी चन्दनपद्मकौ। श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा। शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयं। शर्करा च समा देया काश्मर्य्याश्च फलानि च। सम्यक्सिद्धञ्च विज्ञाय तद्घृतञ्चावतारयेत्॥" च.द.असृग्दर.चि.। [शाक। वै.निघ.।

**बृहच्छदः** । पुं। अक्षोटवृक्षे। आकरोट

**बृहच्छफरी** । स्त्री। महाप्रोष्ठीविशेषे। सरलपुटी। गुणाः—"स्निग्धास्यकण्ठरोगघ्नी श्रेष्ठा प्रोष्ठी प्रकीर्त्तिता।" राज.। [माछ। जटा.।

**बृहच्छल्कः** । पुं। चिङ्गटमत्स्ये। चिंड़ि-

**बृहच्छालपर्णी** । स्त्री। (Flemingia congesta.) महाशालपर्ण्याम्। बड़ शालपानि। हिं बड़ शालपान्, भालइ कसन्द। बम्. तौड़ीला। [म। वै.निघ.।

**बृहच्छिम्बी** । स्त्री। महाशिम्ब्याम्। बड़ शि-

**बृहज्जीरकम्** । क्ली। स्थूलजीरके। मोटा-जीरा। भा.वाजी.चि.। "बृहज्जीरकमप्यत।"

**बृहज्जीवन्ती** । स्त्री। स्वनामख्यातौषधिविशेषे। बड़जीवन्ती। रा.नि.व.३।

**बृहज्जीवा** । स्त्री। बृहज्जीवन्त्याम्। रा.नि.व.३।

**बृहतिका (ती)** । स्त्री। वार्त्ताक्यां। वेगुन। र.मा.। (Solanum Indicum.) क्षुद्रवार्त्ताकी। व्याकुड़। हिं वार्हण्टा। वम्. डोरली विङ्गनी। तें कुकमाचि। ता. चेरुचुण्ट। सा द्विधा श्विका श्वेता चेति। गुणाः—"बृहती पाचनी सोष्णा ग्राहिणी वातनाशिनी।" राज.। "श्विका बृहती तिक्ता कटुकषा च तत्समा। युक्त्या द्रव्यविशेषेण धारासंस्तम्भसिद्धिदा। विशेषा श्वेतबृहती वातश्लेष्मविनाशिनी। कष्या चाञ्जनयोगेन नानाचामयापहा॥" रा.नि.व.४। तत्फलगुणाः—"तथा बृहत्याः फलमेव शस्तं सन्दीपनं स्यात् कफवातनाशि। कण्डूविसर्पज्वरकामलानां तथारुचौ शस्तमिदं वदन्ति॥" अत्रि.१६अ.। कण्टकार्य्याम्। अम.। च.द.कफज्व.चि.निम्बादिः। च.द.कास.चि.। वै.निघ.ज्व.चि.तिक्तादिकषाये। ज्व.चि.बलाद्यघृते। पृष्ठमर्म्मविशेषे। सु.शा.६अ.।

**बृहतीकल्पः** । पुं। चिकित्साकल्पभेदे।

**बृहतीद्वयम्** । क्ली। बृहती कण्टकारी चेति द्वये। सु.सू.३८अ.। च.द.वा.ज्व.चि.किरातादिः। "बृहतीद्वयगोक्षुरैः।" भा.मि.ज्वर.चि.। सूक्ष्मफला स्थूलफला चेति बृहतीद्वये। सु.चि.८अ.।

**बृहतीफलम्** । क्ली। बृहत्या वीजे।

**बृहत्कन्दः** । पुं। विष्णुकन्दे। रा.नि.व.७। गृञ्जने। र.मा.।

**बृहत्कालशाकः** । पुं। महाकासमर्द्दे। बड़ कालकाशन्दा। त्रिका.। [सु.।

**बृहत्काशः** । पुं। खग्गड़तृणे। थागड़ा। प.

**बृहत्कुक्षिः** । त्रि। तुन्दिले। अम.।

**बृहत्कोशातकी** । स्त्री। हस्तिकोशातक्याम्। धुन्दुल। रा.नि.व.७। [पिण्डीखेजूर। वै.निघ.।

**बृहत्खर्जूरिका** । स्त्री। राजखर्ज्जूरिकायां।

**बृहत्तालः** । पुं। हिन्तालवृक्षे। रा.नि.व.६।

**बृहत्तिक्ता** । स्त्री। पाठायाम्। आकनादि। रा.नि.व.६।

**बृहत्तृणः** । पुं। वंशतृणे। श.च.।

**बृहत्त्वक्** । पुं। सप्तपर्णवृक्षे। छातिम गाछ। "बृहत्त्वक् सप्तपर्णः स्यात्।" रा.नि.व.२३।

**बृहत्त्वचः** । पुं। निम्बवृक्षे। प.मु.।

**बृहत्पञ्चमूलम्** । क्ली। विल्वाग्निमन्थटुण्टुक-(श्योणाक)पाठाकाश्मरीषु। सु.सू.३८अ.। "विल्वश्योणाकगाम्भारीपाटलागणिकारिकाः......पञ्चमूलमिदं महत्।" च.द.ज्व.चि.। गुणाः—"पञ्चमूलं महत्तिक्तं कषायं कफवातनुत्। मधुरं श्वासकासघ्नमुष्णं लघ्वग्निदीपनम्॥" भा.।

**बृहत्पत्रः** । पुं । हस्तिकन्दे । रा.नि.व.७ । श्वे-तलोध्रे । मधुवास्तूके । मिठा বেতো । वै.निघ. ।

**बृहत्पत्रा** । स्त्री । त्रिपर्णिकायाम् । रा.नि व. ७ । कासमर्दक्षुपे । वै.निघ. ।

**बृहत्पर्णः** । पुं । शुक्लरोध्रे । वै.निघ ।

**बृहत्पर्णी** । स्त्री । महाशणपुष्पीविशेषे । বন-শণ । रा.नि.व.४ । [त्रिका. ।

**बृहत्पाटलिः (ली)** । पुं, स्त्री । धुस्तूरवृक्षे

**बृहत्पादः** । पुं । वटवृक्षे । श.च. ।

**बृहत्पारे(ले)वतम्** । क्ली । महापारेवतफले । বড় পেয়ারা । रा.नि.व.११ ।

**बृहत्पाली (न्)** । पुं । वनजीरकक्षुपे । বন-জীরা । रा.नि.व.११ ।

**बृहत्पीलुः** । पुं । महापीलुवृक्षे । পাহাড়ে আকরোট । रा.नि.व ११ ।

**बृहत्पुष्पः** । पुं । महाकुष्माण्डे । वै निघ. । स्त्री । कदलीवृक्षे । वै.निघ. ।

**बृहत्पुष्पी** । स्त्री । शणवृक्षे । प.मु. ।

**बृहत्फलम्** । क्ली । कुष्माण्डे । भा.पू १भ.शा. व. । पनसफले । কাঁটাল । जम्बूफले । জাম । वै. निघ. । स्त्री (ला) । अलाब्वाम् । লাউ । प.मु. । कटुतुम्ब्याम् । তিতলাউ । रा.नि.व.३ । महेन्द्र-वारुण्याम् । মাকাল । कुष्माण्ड्याम् । কুমড়া গাছ । रा.नि.व.७ । राजजम्ब्वाम् । বড় জাম । रा.नि.व.१० । र.मा. ।

**बृहत्यादिः** । पुं । तदादिद्रव्यात्मककषाये । यथा—"बृहती पुष्करं भार्गी शटी शृङ्गी दुराल-भा । वत्सकस्य च बीजानि पटोलं कटुरोहिणी । ......सन्निपातज्वरे हितः ।" च.द.ज्व.चि. ।

**बृहदम्लः** । पुं । कर्म्मरङ्गवृक्षे । কামরাঙা গাছ । श.च. । [रा.नि व.६ ।

**बृहदेला** । पुं । स्थूलैलायाम् । বড় এলাচ ।

**बृहद्गोलम्** । क्ली । तरम्बुजे । তরমুজ । श.च. ।

**बृहद्दन्ती** । स्त्री । एरण्डपत्रविटपदन्तीविशेषे । सैव द्रवन्तीत्युच्यते । गुणाः—"दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्मशूलार्शःकण्डू-कुष्ठविदाहनुत् ।"

**बृहद्दलः** । पुं । पट्टिकालोध्रे । শুক্ললোধ । रा.नि.व.६ । सप्तपर्णवृक्षे । ছাতিম গাছ । वै. निघ. । हिन्तालवृक्षे । হেন্তাল গাছ । रा.नि. व.६ । रक्तरसोने । वै.निघ. । स्त्री । लज्जालुका-याम् । ক্ষুদ্র লজ্জাবতী । वै निघ. ।

**बृहद्द्रोणी** । स्त्री । द्रोणीपरिमाणे । १२८ श. । प.प्र १ख. ।

**बृहद्धान्यः** । पुं । चेवेणी । ধনার গাছ । महाशालौ । प.मु. ।

**बृहद्बदरम्** । क्ली । महाकोलीफले । गुणाः— कफपित्तकरं गुरु सरञ्च । मद.व.६ ।

**बृहद्बला** । स्त्री । महाबलायाम् । পীত বে-লেড় । "रास्नैरण्डबृहद्बला ।" सि.यो.उन्मा.चि. चैतसघृते । शुक्लरोध्रे । लज्जालुकायाम् । লজ্জা-বতী । वै.निघ ।

**बृहद्भण्डी** । स्त्री । त्रायमाणालतायाम् । বড় গোয়ালিয়া । प्रयोग.कनकतैलं ।

**बृहद्भानुः** । पुं । अग्नौ । चित्रकवृक्षे । अम ।

**बृहद्राव (वी) (न्)** । पुं । क्षुद्रपेचके । रा.नि.व.१९ । [মাক্ষিক । र.सा.सं. ।

**बृहद्वर्णः** । पुं । माक्षिकनामोपधातौ । স্বর্ণ-

**बृहद्वल्कः (लः)** । पुं । पट्टिकालोध्रे । रा. नि.व.६ । सप्तपर्णवृक्षे । वै.निघ. । [मद. ।

**बृहद्वल्ली** । स्त्री । कारवल्लयां । করলা,উচ্ছে ।

**बृहद्वातः** । पुं । देवधान्ये । দেধান । अयं अश्मरीहरः । र.मा. ।

**बृहद्वारुणी** । स्त्री । महेन्द्रवारुणीलतायाम् । বড় মাকাল । রাখালশশা । रा.नि.व.३ ।

**बृहद्बीजः** । पुं । आम्रातकवृक्षे । আমড়া গাছ । श.च. । [গাছ । मे. ।

**बृहन्नलः** । पुं । महापोटगले । বড় নল

**बृहन्निम्बः** । पुं । महानिम्बे । वै.निघ. ।

**बृहन्मरीचः** । पुं । मरीचे । वै.निघ. ।

**बृहस्पतिः** । पुं । अयस्य ग्रहभेदे । तद्दृष्टौ अयः शुनाधिकृटः रत्नाच्च क्षमः सुदुष्टबलनष्टो-लय भवेत् । ज.द.५७भ. ।

**वृक्षः** । पुं । तरौ । গাছ । तस्य षट्जातयः—"कुक्कुटाद्या अग्रबीजा मूलजाश्चूत्पलादयः । पर्व्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः । शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः । स्युर्वनस्पतिकायस्य षडेते मूलजातयः ॥" हे.च. । लोध्रद्रुमे । লোধ গাছ । रा.नि.व.६ । धवबृक्षे । ধাওয়া গাছ । र.मा. ।

**वृक्षकः** । पुं । श्वेतकुटजवृक्षे । কুড়চি গাছ । र.मा. । च.कल्प.५अ. । सु.सू.३७अ. । चि.२३अ. । ३८अ. । नन्दिवृक्षे । তুনগাছ । धन्वन्तरिः ।

**वृक्षचरः** । पुं । वानरे । धनञ्जयः ।

**वृक्षतपनः** । पुं । कर्णिकारवृक्षे । কনিকার ফুলের গাছ । वै.निघ. ।

**वृक्षधूपः** । पुं । श्रीवेष्टनामकगन्धकाष्ठे । সরল ধূপ । रा.नि.व १२ ।

**वृक्षधूमकम्** । क्ली । शैवाले । শেওলা । वै.निघ. ।

**वृक्षनाथः** । पुं । वटवृक्षे । श.र. ।

**वृक्षपाकः** । पुं । वटवृक्षे । श.च. ।

**वृक्षभक्षा** । स्त्री । वन्दायाम् । মান্দড়া । भा. ।

**वृक्षभेदी** (इन्) । पुं । वृक्षादने । মান্দড়া । अम. । अश्वत्थवृक्षे । कश्चित् ।

**वृक्षमर्कटिका** । स्त्री । काष्ठविड़ालिकायां । কাটবিড়াল । कश्चित् ।

**वृक्षमृङ्गः** । पुं । जलवेतसे । श.च. ।

**वृक्षराजः** । पुं । महामेदायाम् । द्वीपान्तरवचायाम् । তোপচিনি । वै.निघ. ।

**वृक्षरुहा** । स्त्री । वन्दायाम् । মান্দড় বনা । रा.नि.व.५ । च.सू.४अ. । आकाशलतायां । আলোকলতা, পরগাছা । च.सू ४अ. । जतुकालतायाम् । रा.नि.व.३ । विदारीकन्दे । र.मा. । अमृतस्रवालतायाम् । महासमङ्गायाम् । रा.नि.व.३।४ । पुष्करमूले । वै.निघ. ।

**वृक्षवान्** । पुं । पर्व्वते । रा.नि.व.२ ।

**वृक्षवीरा** । स्त्री । भूम्यामलक्याम् । ভুঁই আমলা । वै.निघ. ।

**वृक्षशायिकः** । पुं । गोलाङ्गूलवानरे । মুকপোড়া । अयं मर्त्त्यमृगगणः । सु.सू.४६अ. ।

**वृक्षादनः** । पुं । अश्वत्थवृक्षे । मे. । पियालवृक्षे । धरणिः । वन्दायाम् । মান্দড়া । हिं नेहाली । अम. । मधुच्छत्रे । मे. । स्त्री (नी) । वन्दायाम् । পরগাছা । रा.नि.व.५ । सु.सू ३७अ. । च.द.बा.ज्व.चि.रास्नादिः । "रास्ना वृक्षादनी दारु ।" विदारीकन्दे । ভুঁই কুমড়া । वै. । भैष.नेत्ररो.चि. ।

**वृक्षामयः** । पुं । लाक्षायाम् । লাহা । वै.निघ. ।

**वृक्षाम्लम्** । क्ली । तिन्तिड्याम् । তেঁতুল । अ.टी.रा. । महदा इति अ.टी.भ. । अम्लकुटा इति प.मु. । चूका इति भानुदीक्षितः । हिं विषाबिल । च.द.अ.च.चि. । च.सू.४अ. । गुणाः—अम्लं कटुकं कषायं कफार्शोघ्नं तृष्णाघ्नं वातघ्नं हृद्रोगघ्नमुदरामयघ्नं गुल्मातिसारव्रणघ्नञ्च । रा.नि.व.६ । अम्ललोण्यां । আমরুল । बृहदग्निमुखचूर्णे । च.सू.४अ.हृद्यगणे ।

**वृक्षाम्लः** । पुं । आम्रातकवृक्षे । আমড়া গাছ । श.च. । अम्लवेतसे । অম্লবেতস । वै.निघ. ।

**वृक्षायुर्वेदः** । पुं । वृक्षरोपणपोषणादिशास्त्रे । स आग्नेयपुराणे दृश्यः ।

**वृक्षार्हा** । स्त्री । महामेदायाम् । रा.नि.व.५ ।

**वृक्षाश्रयी** (इन्) । पुं । क्षुद्रोलूके । কুঠুরে পেঁচা । रा.नि.व.१९ । [४अ. ।

**वृक्षेशयः** । पुं । निर्विषसर्पविशेषे । सु.कल्प.

**वृक्षोत्पलः** । पुं । द्रुमोत्पले । ভূঁইচাঁপা । र.मा. ।

**वेकटः** । पुं । मत्स्यभेदे । ভেকটীমাছ । मे. ।

**वेगः** । पुं । गुदेन मलनिर्गमप्रवृत्तौ । भ. । त्वरायाम् । वृद्धौ । प्रवृत्तौ । मा.नि. । महाकालफले । मे. । शुक्रे । हे.च. । स्त्री (गा) । महाज्योतिष्मतीलतायाम् । বড় লতাকটকী । वै.निघ. ।

**वेगधारणम्** । क्ली । मलादीनां वेगनिरोधे । यथा—"न वेगान् धारयेद्धीरः कामादीनान्तु धारयेत् ।" राज.१प. ।

**वेगनाशनः** । पुं । श्लेष्मणि । श.र. ।

**वेगनिरोधः** । पुं । वेगविधारणे । निदानम् ।

**वेगविघातः** । पुं । मूत्रपुरीषादिहठधारणे ।

अत्ताभिरमणैर्वेगविघातैः ।” भा.प्र.सा.चि. ।

**गिहरिणः** । पुं । शीकारिमृगे । रा.नि.व. १८ । [राज. । रा.नि.व.१८ ।

**गी** (इन्) । पुं । श्येनपक्षिणि । बाजपाखी ।

**दृचन्दनम्** । क्ली । श्रीखण्डचन्दनान्यतरे चन्दने । শ্বেত চন্দন । मं वेद्श्रीखण्ड । कं वेद्रपवेगन्ध । तत्र सार्द्रविच्छेदं मलयाद्रिसमीपस्थवेद्गिरिजत्वाद्वेद्मित्युच्यते । “मलयाद्रिसमीपस्थाः पर्व्वता वेद्संज्ञिताः । तज्जातं चन्दनं यत्तद्वेद्वाच्यं क्वचित्र ।॥” गुणाः—अतिशीतं दाहपित्तघ्नं ज्वरच्छर्दितृषाकुष्ठतैमिरोत्कासहरं तिक्तञ्च । रा.नि. व.१२ । [न । रा.नि.व.१२ ।

**वेड़म्** । क्ली । सार्द्रविच्छिन्नचन्दने । শ্বেত চন্দ-

**वेढ़मिका** । स्त्री । रोटिकाविशेषे । यथा—“माषपिष्टिकया पूर्णगर्भा गोधूमचूर्णतः । रचिता रोटिका सैव प्रोक्ता वेढ़मिका बुधैः । भवेद्वेढ़मिका बल्या वृष्या रुच्याऽनिलापहा। उष्णा सन्तर्पणी गुर्व्वी बृंहणी शुक्रला परम् । भिन्नमूत्रमला स्तन्यमेदःपित्तकफप्रदा । गुदकीलार्द्दितश्वासयकृच्छूलानि नाशयेत् ॥” भा. ।

**वेणिः** । स्त्री । देवदाल्याम् । পীত ঘোষা । वा.कल्प.१अ. । [त्रिका. ।

**वेणिवेधनी** । स्त्री । जलौकायाम् । জোঁক ।

**वेणी** । स्त्री । पीतदेवदाल्याम् । भा. । देवदाल्याम् । प.मु. । “घराघरौ वा वेणी च देवदाली च जीमूतम् ।” अरुणः । मेथ्यां । ভেড়ী । हे.च. । [व.१२ ।

**वेणीग(मूलक)म्** । क्ली । उशीरे । रा.नि.

**वेणीफलम्** । क्ली । देवदालीफले । পীত ঘোষাফল । वै.निघ.२भ.कामलानस्य ।

**वेणीरः** । पुं । अरिष्टे । श.च. ।

**वेणुः** । पुं । वंशे । বাঁশ । रा.नि.व.७ ।

**वेणुकर्कीरः** । पुं । करीरवृत्ते । त्रिका. ।

**वेणुका** । स्त्री । तन्नामकफलविषभेदे । सु.कल्प. २अ. ।

**वेणुज(न)म्** । क्ली । मरिचे । र.मा. ।

**वेणुजः** (जन्मा(न्)) । पुं । वेणुयवे । বাঁশের চাউল । रा.नि.व.१६ । वा.चि.१५अ. ।

**वेणुनिःसृतः** । पुं । इक्षौ । वै.निघ. ।

**वेणुनिर्लेखनम्** । क्ली । वंशत्वचि । বাঁশের নীল । सु.चि.१अ. ।

**वेणुपत्रकः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प. ४अ. । [र.मा. ।

**वेणुपत्रिका** (त्री) । स्त्री । नाड़ीहिङ्गी ।

**वेणुयवः** । पुं । वंशजधान्ये । বাঁশের ধান । मं वेणजव । कं बिदरकी । तें वेदुरु बिरयमु । गुणाः—शीतः कषायः मधुरः रुक्षः मूत्रश्लेष्मविषघ्नः बलपुष्टिवीर्य्यदः पित्तघ्नश्च । रा.नि.व.१६ । “रुक्षः कषायानुरसो मधुरः कफपित्तहा । मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥” च.सू.२७ अ. । [रा.नि.व.१६ ।

**वेणुवीजम्** । क्ली । वेणुयवे । বাঁশের চাল ।

**वेतः** । पुं । वेतसलतायाम् । रा.नि.व.७ ।

**वेतनम्** । क्ली । रौप्ये । श.च. ।

**वेतसः** (सा) । पुं, स्त्री । (Calamus rotong.) Common cane. स्वनामख्यातपत्रशाकलतायाम् । বেত গাছ । मं वेड़सु । कं वेतसु । तें जौतपुरकुलौ । गुणाः—कटुः स्वादुः शीतलः भूतघ्नः पित्तकोपनः रुच्यः दीपनः रक्तपित्तघ्नः कुष्ठघ्नश्च । रा.नि.व.८ । तत्फलगुणाः—“फलं वेत्रस्य वातघ्नमम्लपित्तबलासकृत् ।” राज. ३प. । शाकगुणाः—“वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तकम् ।” च.सू.२७अ. ।

**वेतसपत्रकम्** । क्ली । व्यधनार्थके शस्त्रविशेषे । सु.सू.८अ. । तल्लक्षणं यथा—“तीक्ष्णमङ्गुलविस्तारं चतुरङ्गुलमायतम् । अङ्गुलानि तु चत्वारि वृन्तकार्य्यं विजानता ॥” सु.टी.ड.भोजः ।

**वेतसाम्लः** । पुं । अम्लवेतसे । रा.नि.व.६ । र.सा.सं.शूलचि.श्चिमुखरसे । “वेतसाम्लं त्रिवृत् स्यात् ।”

**वेतसी** । स्त्री । वेतसवृत्ते । श.र. ।

**वेतालग्रहः** । पुं । भूतग्रहविशेषे । लक्षणं—“गन्धमाल्यरतिं सत्यवादिनं परिवेपनम् । बहु-

च्छिद्रञ्च जानीयात् वेतालेन वशीकृतम् ॥" वा.उ. ४अ. ।

**वेतालरसः** । पुं । कुष्ठाधिकारे रसः । पाठः —"अभ्रकं मृतलौहञ्च शुद्धसूतं शिलाजतु । ताप्यं वाकुचिबीजानि त्रिफला मुषली समम् । सर्व्वाेषं चूर्णितं लिह्यं मधुना निष्कमात्रकम् । माषैकं नाशयेत् श्विन्नं वेतालोऽयं महारसः ॥" अन्यः सन्निपातज्वरे—"रसं गन्धं विषञ्चैव मरिचार्द्धं समांशिकम् । शिलायां मर्द्दयेत्तावत् यावज्जायेत कज्जलम् । गुञ्जामात्रमयोक्तव्यं हरिद्रादशसंज्ञकं । साध्यासाध्यं निहन्त्याशु सन्निपातं सुदारुणम् ॥" र.सा सं. ।

**वेत्रः** । पुं । वेतसवृक्षे । रा.नि.व.८ । वंशविशेषे । বেউড় বাঁশ । मं वेत । कं वेत । गुणाः—शीतकषायः भूतपित्तघ्नः । रा.नि.व.७ । च.चि. ३अ. ।

**वेत्रकः** । पुं । रामशरे । वै.निघ. ।

**वेत्रमूला** । स्त्री । शङ्खिन्याम् । वै.निघ. ।

**वेत्रविषम्** । क्ली । तन्नामकपुष्पविषभेदे । বেতের ফুল । सु.कल्प.२अ. ।

**वेत्राग्रम्** । क्ली । नाडीशाकविशेषे । বেতের ডগি, বেতাগ্ । गुणाः—"वेत्राग्रं दीपनं रुच्यं तिक्तं पित्तकफापहम् ।" राज.३प.। [व्यथायाम् ।

**वेदना** । स्त्री । चिकित्सायाम् । रा.नि.व.२० ।

**वेदनाधिष्ठानम्** । क्ली । मनोदेहेन्द्रियादौ । "वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः । केशरोमनखाग्रान्नमलद्रवगुणैर्विना ॥" च.शा.१अ. ।

**वेदयिता** । त्रि। मनसः प्रवर्त्तके । सु.शा.१अ.।

**वेदारः** । पुं । कृकलासे । त्रिका. ।

**वेदिः** । स्त्री । परिष्कृतभूमौ । अम. । क्ली । अङ्गुष्ठायाम् । श.च. । [निघ. ।

**वेदिकः (का)** । पुं, स्त्री । श्वेतधुस्तूरके । वै.

**वेदिनी** । स्त्री । तन्नामिका पञ्चमी त्वक् या व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना च । सु. शा.४अ. ।

**वेधकम्** । क्ली । धान्यके । रा.नि.व.६ । पुं । कर्पूरे । त्रिका. । अम्लवेतसे । रा.नि.व.६ ।

**वेधनिका** । स्त्री । छिद्रकरणार्थास्त्रे । ভোমর । अम. ।

**वेधनी** । स्त्री । मेथिकायाम् । মেতি । रा.नि. व.६ । करिकर्णवेधनास्त्रे । त्रिका. ।

**वेधफलः** । पुं । करञ्जवृक्षे । रा.नि.व.९ ।

**वेधमुख्यः** । पुं । गन्धशट्याम् । गन्धशठी रा. नि.व.६ । स्त्री (ख्या) । कस्तूर्याम् । मृगनाभि । रा.नि.व.१२ ।

**वेधमुख्यकः** । पुं । गन्धशट्याम् । प.मु. । हरिद्रायाम् । কাঁচাহলুদ গাছ । अम.भ. ।

**वेधसम्** । क्ली । अङ्गुष्ठमूले । श.च. ।

**वेधाः** (स्) । पुं । श्वेतार्कवृक्षे । श.च. ।

**वेधिनी** । स्त्री । मेथिकायाम् । रा.नि.व.६ । जलौकायां । জোঁক । श.र. ।

**वेधी** (इन्) । पुं । अम्लवेतसे । रा.नि.व.६ ।

**वेध्यः** । त्रि । वेधनार्हे, शिरादौ । अल्पमुखैः शस्त्रैः व्यधनीये । सु.सू.५अ. ।

**वेपथुः** । पुं । कम्पने । रा.नि.व.२० । [२०।

**वेपनम्** । क्ली । वातव्याधौ । कम्पे । रा.नि.व.

**वेरम्** । क्ली । कुङ्कुमे । त्रिका. । वार्त्ताके । त्रिका. । शरीरे । मे. ।

**वेरकम्** । क्ली । कर्पूरे । हारा. ।

**वेलनम्** । क्ली । हिङ्गौ । [illegible].द. ।

**वेला** । स्त्री । रोगे । समयभोजने । समये । भोजने । त्रिका. । दन्तमांसे । हारा. ।

**वेलाजलपानम्** । क्ली । वेलायां वारिपाने । तच्चातीव स्वास्थ्यकरं । तथाहि—"उष्णं क्वापि क्वापि शीतं कवोष्णं क्वापि क्वापि क्वाथशीतञ्च पाथः । इत्थं नृणां पथ्यमेतत् प्रयुक्तं कालावस्थादेहसंस्थानुरोधात् ॥" तथा—"अपनयति पवनदोषं दलयति कफमाशु नाशयत्यरुचिम् । पाचयति चान्नमनलं पुष्णाति निशीथपीतमुष्णाम्भः ॥ रात्रौ पीतमजीर्णदोषशमनं संशन्ति सामान्यतः पीतं वा निशावसानसमये सर्व्वामयध्वंसनं । भुक्ता तूर्द्धमिदं च पुष्टिजननं प्राक्चेदपुष्टिप्रदं रुच्यं जाठरवह्निपाटवकरं पथ्यञ्च भुक्त्यन्तरे ॥" रा.नि.व.१४ ।

**वेलाज्वरः** । पुं । ज्वरविशेषे । लक्षणं —"शोकात् क्रोधात्तथाजीर्णात् सन्तापाबलहानितः । चलकाले च मर्त्यानां जायन्ते दारुणा: ज्वरा: ॥" ज्व.नि. ।

**वेलिभुक्प्रियः** । पुं । सुगन्धाम्रे । श.र. ।

**वेल्ल(क)म्** । क्ली । विडङ्गे । अम. । च.द.शिरोग्रहे । वा.सू.१५अ.मूर्द्धविरेके । "वेल्लापामार्गव्योष ।" वै.निघ.२भ.ग्रहणी.चि तालिशादौ । वा.व्या.अग्नमोदावटी । रस.र.बाल.चि.अष्टमङ्गलघृते । वा.उ.३९अ. ।

**वेल्लगिरिका** । स्त्री । प्रियङ्गौ । वै.निघ. ।

**वेल्लजम्** । क्ली । मरिचे । भा.पू.१भ. ।

**वेल्लनम्** । क्ली । मरिचे । प.मु. । लुण्ठने । चिका. । रोटीवेलनार्थं वर्तुलकाष्ठे । बेलुन । भा. ।

**वेल्लनी** । स्त्री । वल्लीदूर्व्वायाम् । रा.नि.व.८ ।

**वेल्लन्तरः** । पुं । विल्लान्तरवृक्षे ।

**वेल्लन्तरादिगणः** । पुं । तदादिद्रव्यवर्गे स वातरोगघ्नः अश्मरीशर्करामूत्रकृच्छ्रमूत्राघातहरश्च । वा.सू.१५अ. । [त्रिकटुचूर्णे ।

**वेल्लभवम्** । क्ली । मरिचे । वै.निघ.कास.चि.

**वेल्लरी** । स्त्री । कृष्णवृन्तदारके । काल वीजताड़क । वै.निघ.२भ.वा.व्या.चि.एरण्डपाके । वल्लीदूर्व्वायाम् । वै.निघ. ।

**वेल्लि:** । स्त्री । लतायाम् । श.र. ।

**वेल्लिका** । स्त्री । इन्दूपोदक्यां । पूँ इविशेष । रा.नि.व.२३ ।

**वेल्लिकाख्या** । स्त्री । विल्वशलाटौ । वेलशुँटा । श.च. । [४अ. ।

**वेल्लितकः** । पुं । वैकरञ्जसर्पविशेषे । सु.कल्प.

**वेशन्तः** । पुं । चुद्रसरोवरे । अम. ।

**वेशरः** । पुं । अश्वतरे । त्रिका. ।

**वेशवारः** । पुं । व्यञ्जनोपकरणविशेषे । वाटना, मसला । गुणा:—"वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ।" राज.३प. । वेशवारद्रव्यगणः यथा —अजाजीमरिचशुण्ठीग्रन्थिकधान्यहरिद्रादारुहरिद्रापिप्पलीदाड़िमेषु । "अजाजी मरिचं शुण्ठी ग्रन्थिधान्यनिशाद्वयम् । पिप्पली दाड़िमश्चेति वेशवारगणो मतः ॥" रा.नि.व.२२ । पक्कमांसभेदे । यथा —निरस्थिपिष्टं स्विन्नं गुड़घृतयुक्तं पिप्पलीमरिचयुक्तञ्च मांसं वेशवार इत्युच्यते । "निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितं । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥" प.प्र.३ख. ।

**वेशवारीकृतः** । त्रि । पिष्टे । वा.चि.५अ. ।

**वेश्मकलिङ्गः** । पुं । चटकपक्षिणि । तन्मांसं सन्निपातहरम् अतिशुक्रलञ्च । राज. ।

**वेश्मकूलः** । पुं । चवेश्वायाम् । चिचिङ्गा । मद. । रा.नि.व.७ । [त्रिका. ।

**वेश्मनकुलः** । पुं । कुकुन्दर्य्यां । छूँचो ।

**वेश्मरसः** । पुं । मोचरसे । वै.निघ. ।

**वेश्या** । स्त्री । पाठायाम् । आकनादि । श.च. ।

**वेषणः** । पुं । कासमर्दवृक्षे । हारा. ।

**वेषणा** । स्त्री । वितुन्नकवृक्षे । धने । र.मा. ।

**वेषवारः** । पुं । वेशवारे । वाटना । अ.टी.रा. ।

**वेषिका** । स्त्री । जातीपुष्पवृक्षे । वै.निघ. ।

**वेष्टः** । पुं । श्रीवेष्टनामकसुगन्धकाष्ठे । सरलकाष्ठे । रा.नि.व.१२ । निर्यासे । श.मा. ।

**वेष्टकम्** । क्ली । निर्यासे । आटा । श.मा. । उष्णीषे । श.र. । पुं । श्रीवेष्टनामकसुगन्धकाष्ठे । रा.नि.व.१२ । कुष्माण्डे । हारा. । वल्कले । र.मा. ।

**वेष्टनम्** । क्ली । गुग्गुलौ । श.च. । उष्णीषे । कर्णशष्कुल्यां । मे. । स्त्री (नी) । खर्परपालिकायाम् । वै.निघ. । [वेउड़ बाँश । श.च. ।

**वेष्टवंशः** । पुं । कण्टकविशिष्टत्यपरनामवंशे ।

**वेष्टसारः** । पुं । श्रीवेष्टनामकसुगन्धकाष्ठे । सरलकाष्ठे । रा.नि.व.१२ ।

**वेष्टा** । स्त्री । हरीतक्याम् । वै.निघ । .

**वेसनम्** । क्ली । द्विदलचूर्णे । बेसन । यथा —"दालयश्चणकानान्तु निस्तुषा यन्त्रपेषिताः । तच्चूर्णं वेसनं प्रोक्तम् ..... ॥" तद्वटिका रूक्षा विष्टम्भिनी बलपुष्टिकरी च । भा. ।

**वेसवारः** । पुं । वेशवारे । वाटना । अम. ।

**वैकङ्कतः** । पुं । स्रुवावृत्ते । बँइचि गाछ । अ. र. ।

**वैकतिकः** । पुं । मणिकारे । हे.च. ।

**वैकरञ्जः** । पुं । दर्व्वीकरादीनां सर्पाणां व्यतिकरेण जाते सर्पजातिविशेषे । स माकुलिः पोटगलः स्निग्धराजिश्चेति त्रिविधः। सु.कल्प.४अ. ।

**वैकुण्ठः** । पुं । अर्ज्जके । क्षुद्रतुलसी । "वैकुण्ठमर्ज्जके प्राहुः ।" रा.नि.व.२३ । सितार्ज्जके । श्वेतपत्र क्षुद्रतुलसी । रा.नि.व.१० । See अर्ज्जकः ।

**वैकुण्ठाश्रमी** (इन्) । पुं । वैद्यवल्लभनामग्रन्थकारे । [नि. ।

**वैकृतः** । त्रि । विकृतिसम्पन्ने । दुःसाध्ये । मा.

**वैकृतज्वरः** । पुं । अप्रकृतकालजाते वातज्वरे । "प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः । हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः ॥" च. चि.३अ. । वर्षादिषु वाताद्यैः क्रमाद् यो ज्वरः स प्राकृतः, वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते च श्लैष्मिकः, अतोऽन्यो वैकृतः तथा वर्षासु पैत्तिक इत्यादि । मा.नि. ।

**वैक्रान्तम्** । क्ली । स्वनामख्यातमणिविशेषे । चुनीविशेष । तत्र श्वेतनीलरक्तभेदेन त्रिधा । निरुक्तिः—"वज्राकारतयैव प्रसह्य हरणाय सर्व्वरोगाणाम् । यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥" गुणाः—रसवीर्य्यविपाकेषु वज्रसमं क्षयकुष्ठविषघ्नं पुष्टिकरं रसायनञ्च । अपिच—"वैक्रान्तं वज्रसदृशं वज्रवद्रसवीर्य्यकम् । तथाप्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम् ॥" रा.नि.व. १३ । तच्छोधनमपि हीरकवत् । See हीरकम् । "वैक्रान्तं वज्रवत् शोध्यं नीलं श्वेतञ्च लोहितम् । वज्रलक्षणसंयुक्तं दाहघातासहिष्णु तत् । हयमूत्रेण तत् सिञ्चेत् तप्तं तप्तं त्रिसप्तधा । पञ्चाङ्गोत्तरवारुण्या लिप्तं मूषागतं पुटैः । कुञ्जराख्यैर्मृतिं याति वैक्रान्तं सप्तभिस्तथा । भस्मीभूतन्तु वैक्रान्तं वज्रस्थाने नियोजयेत् ॥" भचि.७अ. ।

**वैगन्धिकः** । पुं । गन्धके । वा.उ.३९अ. ।

**वैजननः** । पुं । प्रसवमासे । अम. ।

**वैजपाणिः** । पुं । वर्णपाविशेषे । च. ।

**वैजयन्तिका** । स्त्री । जयन्तीवृक्षे । जयन्तीगाछ । अम. । अग्निमन्थवृक्षे । गणिरि । रा.नि.व.९ ।

**वैजयन्ती** । स्त्री । जयन्तीवृक्षे । र.मा. । सु. चि.११अ. । अग्निमन्थवृक्षे । गणिरि । हे.च. । सु. चि.१८अ. । [illegible]अ. ।

**वैजिकम्** । क्ली । शिग्रुतैले । सजिनार तैल । मे. । पुं । सद्योजाताङ्कुरे । मे. । आत्मनि । श.मा. ।

**वैडालशकृत्** । क्ली । विडालविष्ठायाम् । "वैडालं वा शकृद् योज्यं वेपमानस्य धूपने ।" च.द. ज्व.चि.धूपे ।

**वैणवम्** । क्ली । वेणुयवे । वंशधान्य । अम. । पुं । उपनयने वेणुदण्डे । अम. । स्त्री (वी) । वंशलोचनायाम् । रा.नि.व.६ । [अम. ।

**वैतंसिकः** । पुं । मांसविक्रेतरि । कसाई ।

**वैतरणवस्तिः** । पुं । निरूहवस्तिभेदे । यथा —"पलप्रमितिकर्षकुडवैरम्लीकासगुडसिन्धुगोमूत्रैः । ईषत्तैलयुतो वस्तिः शूलानाहामवातहृत् । वैतरणः क्षारवस्तिः भुक्ते चापि प्रदीयते ॥" च.द.निरूहवस्तौ । गोमूत्रं ८ प. पक्वतैलं १ प. मदनफलस्यैकं व्यवहारात् । एकपुटकस्येयं मात्रा ।

**वैतसः** । पुं । अम्लवेतसे । जटा. ।

**वैदर्भः** । पुं । दन्तमूलगतमुखरोगे । "घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् । भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥" सु.नि.१६अ. ।

**वैदलः** । पुं । दालिनिर्म्मितपिष्टकभेदे । दाल पुरि । श.च. । गुणाः – गुरुः भक्ष्यः विष्टम्भी स्पष्टमारुतश्च । राज. ।

**वैदलान्नम्** । क्ली । वैदलयुक्तभक्ते । डालिश्व गुणाः—"वैदलान्नं रुचिकरं गुरु द्रव्यगुणैः स्म ।" वै.निघ. ।

**वैदलिकशिम्बः** । पुं । वैदलिकशिम्बाः गुणाः—'रुचिप्रदाश्चैव सुदुर्जराश्च सर्वे स्मृ वैदलिकास्तु शिम्बाः ।"

**वैदारिकः** । पुं । हीनमध्यप्रवृद्धवातादिजातसन्निपातज्वरे । लक्षणं—श्वासमूलकटीतोदाकं भवति । एतस्मिन् निहन्ते कर्णमूले पिडादि जायते । भा.म.१भ. ।

**वैदिका** । स्त्री । भूमिजम्बूवृक्षे । वनजाम । वै. निघ. ।

**वैदुलम्** । क्ली । वेतसमूले । सु.चि.१अ. ।

**वैदूर्य्य(रत्न)म्** । क्ली । विदूरभूमिजमणौ । প্রবালবিশেষ । रा.नि.व.१३। गुणाः—उष्णमम्लं कफवातघ्नं गुल्मघ्नं शुभावहं केतुग्रहबलप्रदञ्च । भा.। See माणिक्यम् ।

**वैदूर्य्यवर्णः** । त्रि । कृष्णवर्णे । भा. ।

**वैदेहिका (ही)** । स्त्री । पिप्पल्याम् । भा.पू. १भ । रा.नि.व.६ । भैष.ने.रो.चि. । "वैदेहीं श्वेतमरिचम् ।" रोचनायाम् । मे. । भूजम्बूवृक्षे । वै.निघ. ।

**वैद्यः** । पुं । चिकित्सकजातौ । चिकित्सके । "विप्रो वैद्यकपारगः शुचिरनूचानः कुलीनः कृती धीरः कालकलाविदास्तिकमतिर्दक्षः सुधीर्धार्म्मिकः । स्वाचारः समदृग्दयालुरखलो यः सिद्धमन्त्रक्षमः शान्तः काममलोलुपः कृतयशा वैद्यः स विद्योतते ॥" इति सद्वैद्यलक्षणम् । "अधीरः कर्कशस्तब्धः सरोगी न्यूनशिक्षितः । पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि ॥" इति कुवैद्यलक्षणम् । रा.नि.व.२० । अपिच—"व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥" इति वैद्यकर्म्म । भैष. । वैद्याः त्रिधा—छद्मचराः सिद्धसाधिताः गुणयुक्ताश्चेति । लक्षणानि यथा—"वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः । लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः । श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः । वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः । प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः । जीविताभिसरा ये स्युर्वैद्यत्वं तेष्ववस्थितम् ॥" च.सू.११ अ. । वासावृक्षे । श.च. ।

**वैद्यकम्** । क्ली । वैद्यस्य कर्म्मणि । अष्टाङ्गचिकित्साशास्त्रे, दशाङ्गवैद्यशास्त्रे च । यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यागदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रञ्च । सु. । द्रव्याभिधानं रुग्विनिश्चयः कायसौख्यसम्पादनं शल्यविद्यापञ्चाक्षरीप्रभावेण भूतनिग्रहः विषप्रतीकारः बालोपचारः रसायनं शालाक्यं वृष्यञ्चेति । वै.निघ. ।

**वैद्यचिन्तामणिः** । पुं । वल्लभेन्द्रकृतवैद्यकग्रन्थे । [न्थे । रुद्रटकृते च ।

**वैद्यजीवनम्** । पुं । लोलिम्बराजकृतवैद्यकग्र-

**वैद्यतोषसंग्रहः** । पुं । भीमसेनकृतचिकित्सासंग्रहे । [कीटीकायां ।

**वैद्यत्रिंशट्टीका** । स्त्री । चन्द्रटकृतत्रिंशच्छ्लो-

**वैद्यदर्पणम्** । क्ली । वैद्यकसंग्रहे ।

**वैद्यनाथवटी** । स्त्री । ज्वरातिसारे औषधम् । पाठः—"रसस्य शाणं संगृह्य काञ्जिकेन तु शोधयेत् । चित्रकस्य रसे चापि त्रिफलायाश्च बुद्धिमान् । रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वै । द्वाभ्यां संमूर्च्छनं कृत्वा स्वरसैः शाणसम्मितैः । खल्लग्रेस्र शिलाखल्ले क्रमशो वक्ष्यमाणजैः । निर्गुण्डीमण्डूकीश्वेताकुचेलाशोषसुन्दरैः । भृङ्गाह्वकेशराजैश्च जयन्तीन्द्राशनोत्कटैः । सर्षपाभां वटीं कृत्वा दद्यात्तां ग्रहणीगदे ..... ॥" रस.र. । [छ । श.च. ।

**वैद्यबन्धुः** । पुं । आरग्वधवृक्षे । সোন্দাল গা-

**वैद्यमनोरमा** । स्त्री । वैद्यकग्रन्थभेदे ।

**वैद्यमाता** । स्त्री । वासायाम् । বাসক গাছ । अम. ।

**वैद्यरसायनम्** । क्ली । रसायनग्रन्थविशेषे ।

**वैद्यवल्लभः** । पुं । उदयकविकृतवैद्यकग्रन्थे ।

**वैद्यविनोदः** । पुं । शङ्करकृतवैद्यकग्रन्थे ।

**वैद्यविलासः** । पुं । रघुनाथकृतवैद्यकशास्त्रे ।

**वैद्यवृन्दः** । पुं । नारायणकृतवैद्यशास्त्रे ।

**वैद्यसारः** । पुं । हर्षकीर्त्तिरचितवैद्यके ।

**वैद्यसिंही** । स्त्री । वासायाम् । বাসক গাছ । श.र. ।

**वैद्यहितोपदेशः** । पुं । श्रीकण्ठकृते तथा शिवपण्डितकृते च चिकित्साशास्त्रे ।

**वैद्या** । स्त्री । काकोल्याम् । কাঁকলা । श.च. ।

**वैद्यामृतम्** । क्ली । नारायणदासकृते रामेश्वरकृते च वैद्यशास्त्रे । [कग्रन्थे ।

**वैद्यामृतलहरी** । स्त्री । मथुरानाथकृतवैद्य-

**वैद्यावतंसः** । पुं । लोलिम्बराजकृतवैद्यके ।

**वैधात्री** । स्त्री । ब्राह्मीक्षुपे । रा.नि.व.५ ।

**वैपरीत्यलज्जालुः** । पुं, स्त्री । लघुलज्जालुकायाम् । "लज्जालुर्वैपरीत्यान्या स्वल्पक्षुपबहुदला ।" गुणाः—कटुरुष्णः कफघ्नः रसनियामकः नानाविज्ञानकारकश्च । रा.नि.व.५ ।

**वैरस्यम्** । क्ली । मुखविरसतायाम् । "वैरस्यं नयनस्रवः ।" मा.नि. ।

**वैराटः** । पुं । इन्द्रगोपकीटे । हे.च. ।

**वैराटकः** । पुं । तन्नामककन्दविषभेदे । गुणाः—"वैराटकेनातिदुःखं शिरोरोगश्च जायते ।" सु.कल्प.२अ. । See कन्दविषम् ।

**वैरातङ्कः** । पुं । अर्जुनवृक्षे । रा.नि.व.९ ।

**वैरोचनरसः** । पुं । अजीर्णादौ रसः । पाठः—"मृतसूतं चतुर्भागं भागैकं मृतहेमकं । अष्टभागं शुद्धगन्धं दिनैकं चित्रकद्रवैः । मर्दितं शोधितं चूर्णं वराटोऽस्मिन पूरयेत् । टङ्कणेन मुखं रुद्ध्वा भाण्डमध्ये निरोधयेत् । शुष्कं गजपुटे पच्यात् साङ्गशीतं विचूर्णयेत् । चतुर्गुञ्जा कणा चौद्रं लौहम ग्निप्रदीपनम्······॥" रस.र. ।

**वैल्वम्** । क्ली । बिल्वफले । भ.टी. । त्रि । बिलभवे । बिलाश्रये । वा.चि.१अ. ।

**वैवर्ण्यम्** । क्ली । विवर्णतायाम् । मा.नि. ।

**वैवस्वतद्रुमः** । पुं । कुष्ठवैरिवृक्षे । चालमुगरा । अचि. ।

**वैशाखः** । पुं । मन्थनदण्डे । वर्षस्य प्रथमे मासि । अम. । रक्तपुनर्नवायाम् । वै.निघ. । अश्वस्य तन्नामकग्रहे । लक्षणं—"स्कन्धेन गुरुणा चैव वेपमानेन पण्डितः । गात्रेण विद्याद्वाहन्तु वैशाखग्रहसेवितम् ॥" ज.द.५७अ. । स्त्री (खी) । रक्तपुनर्नवायाम् । गादापूणा । रा.नि.व.५ ।

**वैशिकी** । स्त्री । वमनविरेचनयोः चतुर्विधशोधनान्यतमे । च.द.शमनाधिकारे । [नि.व.३ ।

**वैशिजाता** । स्त्री । पुत्रदात्रीलतायाम् । रा.

**वैश्या** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**वैश्रवणालयः** । पुं । वटवृक्षे । हे.च. ।

**वैश्रवणावासः** । पुं । वटवृक्षे । जटा. ।

**वैश्रवणोदयः** । पुं । वटवृक्षे । र.मा. ।

**वैश्वानरः** । पुं । चित्रकवृक्षे । अम. । पित्ते । अग्नौ । अम. ।

**वैश्वानरचूर्णम्** । स्त्री । अजरसाभे चूर्णम् । पाठः—"माणिमन्थस्य भागौ द्वौ यमान्यास्तद्वदेव तु । भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकं । दश द्वौ च हरीतक्याः स्नाणचूर्णीकृताः शुभाः । मस्तु. मस्तुकाञ्जिकं तक्रमुष्णोदकं वा··· ।" रस.र. ।

**वैश्वानररसः** । पुं । उदराधिकारे रसः । पाठः—"रसकं गन्धकं चाभ्रं शिलाजित्कान्तलौहकं । त्रिकटुस्त्रिचकं कुष्ठं निर्गुण्डी मुषली विषम् । अजमोदा च सर्व्वेषां द्वौ द्वौ भागौ प्रकल्पयेत् । चूर्णीकृत्य ततः सर्व्वं निम्बक्वाथेन भावयेत् । भावयेदेकविंशञ्च भृङ्गराजेन सप्तधा । मधुना गुडिकां शुष्कां रजन्यां तां प्रदापयेत् । वैश्वानराभिधो योगो जलोदरविशोषणः ।" रस.चि. ।

**वैष्किरः** । त्रि । विकीर्य्य भक्षणशीले, कुक्कुटादौ । वा.चि.६अ. ।

**वैष्णवी** । स्त्री । लघुशतावर्य्याम् । रा.नि.व.४ । तुलसीवृक्षे । श.मा. ।

**वैसारिणः** । पुं । मत्स्ये । अम. ।

**वोड़ः** । पुं । गुवाकवृक्षे । श.र. । [विशेषे । मे.

**वोड्रः** । पुं । गोनसम [illegible] बोड़ासाप । मत्स्य

**वोढ़ः** । पुं । कदम्ब [illegible] । वै.निघ. ।

**वोढ़ा** (ढृ) । पुं । ऋषभके । रा.नि.व.५ ।

**वोण्टः** । पुं । वृन्ते । वोँटा । श.र. ।

**वोदालः** । पुं । मत्स्यविशेषे । बोयाल माछ । श.र. । [क्षीप्रणेतरि

**वोपदेवः** । पुं । हृदयदीपकसिद्धमन्त्रशतश्लो

**वोरटः** । पुं । कुन्दवृक्षे । कुन्द गाछ । त्रिक

**वोरवः** । पुं । तन्नामकव्रीहिधान्यभेदे । बोरधान । गुणाः—"वोरवस्तु बुधैः प्रोक्तः त्रिदोषप्रकोपनः । मधुरश्चाम्लपाकेन व्रीहिः पित्तकृद्गुरुः ॥" राज.३प. ।

**वोलम्** । क्ली । (Balsamodendron Myrrh.) Myrrh. तन्नामकसारद्रव्यं

गम्भरसे। शकुरम, बोल, हिराबोल, खून-थाराधी। हिं दा. बोल। मं कं बोल। तें वा-लिम्चीपोलम्। ता. वेल्लइपपोलम्। वम्. रक्ता बोल। वै.निघ.२भ.र.पि.चि.बोलपर्पटीरसे। च. द.कुष्ठचि.। गुणाः—कटुतिक्तोष्णं कषायं रक्त-दोषघ्नं कफपित्तरोगघ्नं प्रदरघ्नञ्च। रा.नि.व.६।

**बोलपत्रम्**। क्ली। तेजपत्रसदृशसुगन्धिपत्रे। च.द.वा.व्या.चि.महाराजप्रसारणीतैले। "देवपु-ष्पी बोलपत्रम्।"

**व्यक्तगन्धा**। स्त्री। नीलापराजितायाम्। रा. नि.व.३। स्वर्णयूथिकायाम्। रा.नि.व.१०। पि-प्पल्याम्। वै.निघ.।

**व्यङ्गः**। पुं, क्ली। तन्नामकगण्डरोगभेदे। तस्य लक्षणम्—"क्रोधायासप्रकुपितो वायुः पित्तेन सं-युतः। मुखमागत्य सहसा मण्डलं विसृजत्यतः। नीरुजं तनुकं श्यावं मुखव्यङ्गं तमादिशेत्॥" मा. नि.। "परुषं परुषस्पर्शं व्यङ्गं श्यावञ्च मारुतात्। पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्। र-क्तात्रक्तान्तमाताम्रं शोषचिमचिमान्वितम्॥" वा. उ.३१अ.।

**व्यजनम्**। क्ली। तालवृन्ते। पाखा। तद्वायु-गुणाः—"मूर्च्छास्वेदतृषादाहश्रमघ्नो व्यजनानि-लः।" तालव्यजनगुणाः—त्रिदोषघ्नं लघु च। वं-शव्यजनगुणाः—रूक्षमुष्णं वातपित्तकरञ्च। मयूर-पुच्छवस्त्रव्यजनगुणाः—त्रिदोषघ्नम्। बालव्यजनं तेजस्करं मक्षिकादिनिवारणञ्च। राज.३प.।

**व्यञ्जनम्**। क्ली। सूपशाकादिमिष्टान्नेषु। व्य-ञ्जन, तरकारि। "व्यञ्जनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम्।" रा.नि.व.२०। शाकमत्स्यगुणाः —"व्यञ्जनं शाकमत्स्याख्यं हृद्यं तृप्यञ्च पुष्टिदं। द्रव्येण येन येनेह व्यञ्जनं मत्स्यमांसयोः। तस्य तस्य तयोश्चैतद्गुणदोषैर्विभावयेत्॥" राज.३प.। श्मश्रुणि। दाड़ि। वै.निघ.। लक्षणे। चिह्ने। व्यक्तीभूतपूर्व्वरूपे। "संस्थानं व्यञ्जनं लिङ्गम्।" मा.पञ्चनिदाने।

**व्यञ्जनकेशी**। स्त्री। नील्याम्। रा.नि.व.४।

**व्यड्म्बकः (नः)**। पुं। एरण्डवृक्षे। अम.। सं.कनकतैली। [नः। वै.निघ.।

**व्यण्डा**। स्त्री। भूम्यामलक्याम्। भूँई आ-

**व्यतिक्रमः**। पुं। क्रमविपर्य्यये।

**व्यत्यासः**। पुं। परस्परक्षेपणे। वा.चि.१७अ.। "व्यत्यासेन प्रकृद्रक्रम्।"

**व्यथा**। स्त्री। वेदनायाम्। अम.।

**व्यन्तरः**। पुं। सर्पसङ्करजातौ। वा.उ.३६अ.।

**व्यवसायः**। पुं। निश्चयबुद्धौ। यथा—वातिक एवायं व्याधिरिदमेवास्य भेषजमिति। च.वि.८अ.।

**व्यवहारिकः (का)**। पुं. स्त्री। इङ्गुदीवृक्षे। सम्मार्जन्यां। मे.। [तिजसि। मे.।

**व्यवायः**। पुं। स्त्रीसेवायाम्। अम.। क्ली।

**व्यवायशोषः**। पुं। स्त्रीसेवाजन्यशोषरोगे। लक्षणं यथा—"व्यवायशोषः शुक्रस्य क्षयलिङ्गैरु-पद्रुतः। पाण्डुदेहो यथा पूर्व्वं क्षीयन्ते चास्य धात-वः॥" सु.उ.४१अ.। [६५अ.।

**व्याख्यानम्**। क्ली। अतिशयोपवर्णने। सु.उ.

**व्याघ्रः**। पुं। स्वनामख्यातप्रसहजातीयपशौ। बाघ। मांसगुणाः सिंहवत्। रा.नि.व.१९। क-रञ्जवृक्षे। मे.। रक्तैरण्डे। रा.नि.व.८।

**व्याघ्रकरः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रखड्गः**। पुं। व्याघ्रनखे। नखीविशेष। वै.निघ.।

**व्याघ्रघण्टा (ण्टी)**। स्त्री। कोङ्कणे प्रसिद्ध-लताविशेषे। वम्. लघु वाघाण्टी। मं गोविन्दी। गुणाः—"व्याघ्रघण्टा पित्तलोष्णा कृष्या विषक-फापहा। फलं चास्यास्तु तिक्तोष्णं विसूचीकफवा-तनुत्। त्रिदोषहारिणी प्रोक्ता वैद्यशास्त्रविशार-दैः।" वै.निघ.।

**व्याघ्रतरुः**। पुं। रक्तैरण्डे। वै.निघ.।

**व्याघ्रतलः (ला)**। पुं। व्याघ्रनखे। नखी। वै.निघ.। रक्तैरण्डे। श.द.।

**व्याघ्रदलः (ला)**। पुं। रक्तैरण्डे। व्याघ्रन-खे। नखी। रा.नि.व.८।

**व्याघ्रनखम्**। क्ली, पुं। नखीनामगन्धद्रव्ये। नखीविशेष। मं उत्. वाघनखा। गुणाः—ति-क्तोष्णः कषायः वातकफघ्नः कण्डूकुष्ठव्रणघ्नः वर्ण्यः सुगन्धश्च। रा.नि.व.१२। सु.सू.३८अ.एलादिः। समुद्रजः—वा.सू.१५अ.एलादिः। 'शुक्तिव्याघ्रन-

स्व: ।" कुटीवृक्षे । मनसा गाछ । रा.नि.व.८ ।

**व्याघ्रनखी** । स्त्री । व्याघ्रनखे । भा.४भ.मद.चि. । "शुचिस्थाने व्याघ्रनख्या: ।"

**व्याघ्रनायक: (सेवक:)** । पुं । शृगालवृक्षे । फेउ, शृगाल । रा.नि.व.१९ ।

**व्याघ्रपात् (द:)** । पुं । विकङ्कतवृक्षे । बँइची गाछ । भा. । रा.नि.व.९ । भैष.शिरोरो.चि. तमराजतैले । विकण्टकवृक्षे । रा.नि.व.११ ।

**व्याघ्रपुच्छ:** । पुं । एरण्डवृक्षे । अम. ।

**व्याघ्रपुष्प:** । पुं । व्याघ्रनखे । वै.निघ. ।

**व्याघ्ररूपा** । स्त्री । बन्ध्याकर्कोट्याम् । वै.निघ. ।

**व्याघ्रहस्त:** । पुं । रक्तैरण्डे । रा.नि.व.८ ।

**व्याघ्राङ्घ्रिज:** । पुं । व्याघ्रनखे । नखीविशेष । वै.निघ. ।

**व्याघ्राट:** । पुं । भरद्वाजपक्षिणि । अम. ।

**व्याघ्रादनी** । स्त्री । त्रिवृतायाम् । प.मु. ।

**व्याघ्रायुधम्** । क्ली । व्याघ्रनखे । नखीविशेष । वै.निघ. ।

**व्याघ्रास्य:** । पुं । विड़ाले । श.च. ।

**व्याघ्री** । स्त्री । कण्टकार्य्याम् । प.मु. । रा.नि.व.४ । च.द.यक्ष्म.चि.जीवन्त्याद्यघृते । "व्याघ्रीगोक्षुरसाधितं ।" च.द.ज्व.चि."व्याघ्रीदुस्पर्शगोक्षुरै: ।" वराटिकामर्दे । काड़िविशेष । रा.नि.व.१३ । व्याघ्रपत्न्याम् । बाघिनी । व्याघ्रनख्यां । नखीविशेष । च.द.वा.व्या.चि. ।

**व्याघ्रीयुक् (युगम्)** । स्त्री, क्ली । वृहत्यां, कण्टकार्य्याञ्च । चि.क्र.क. ।

**व्याड़:** । पुं । सर्पे । हिंस्रे । अम. ।

**व्याड़म्ब:** । पुं । रक्तैरण्डे । वै.निघ. । अम. ।

**व्याड़ायुधम्** । क्ली । नखीनामगन्धद्रव्ये । नखी ।

**व्याधि:** । पुं । रोगे । रोग । हिं बेमारी । पुरुषदु:खसंयोगा व्याधय: । ते चतुर्विधा: शारीरागन्तुमानसस्वाभाविकभेदेन । तत्रागन्तवोऽभिघातजन्या:, शारीरास्त्वन्नपानमूला: वातादिवैषम्यमूलाश्च । मानसा: क्रोधादिका इच्छाद्वेषभेदैर्भवन्ति । स्वाभाविका: क्षुत्पिपासादिकाश्च । सु.सू.१ष. । तत्र दु:खं त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति । तत्तु दु:खं सप्तविधे व्याधावुपनिपतति । ते पुन: सप्त व्याधय: यथा – आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ता: संघातबलप्रवृत्ता: कालबलप्रवृत्ता: दैवबलप्रवृत्ता: स्वभावबलप्रवृत्ताश्चेति । तत्रादिबलप्रवृत्ता: शुक्रशोणितदोषान्वया: कुष्ठार्श:प्रभृतय: । शेषाणां विशेषा: तत्तत्पर्य्याये मृग्या: । सु.सू.२४ष. । रोग: दोषवैषम्यरूप: । "रोगस्तु दोषवैषम्यम् । रोगा दु:खस्य दातारो ज्वरप्रभृतयो हि ते ॥" ते च रोगा: केचित् स्वाभाविका: केचिदागन्तव: केचिन्मानसा: केचित् कायिका: केचित् कर्म्मजा: केचिद्दोषजा: केचित् साध्या: केचिद्याप्या: केचिदसाध्याश्च । तस्य च रोगस्य विज्ञानं पञ्चधा "हेतुर्मदन संप्राप्ति: पूर्व्वरूपञ्च लक्षणं । तथैवोपशय: पञ्च… …।" भा. । कुष्ठौषधौ । कुड़ । अम. । रस.र. स्मरो.चि. । See रोग: । [कालि । मा.नि. ।

**व्याधिकाल:** । पुं । रोगवृद्धिहानिहेतुभूते

**व्याधिघात: (क:)** । पुं । स्थूल आरग्वधवृक्षे । बड़ शोन्दाल गाछ । रा.नि.व.९ । च.द.ज्व.चि. । "गजाह्वा व्याधिघातक: ।" [द. ।

**व्याधिघ्न: (जित्)** । पुं । आरग्वधवृक्षे । अ.

**व्याधित:** । पुं । रोगिणि । रा.नि.व.२० ।

**व्याधिनाशन:** । पुं । द्वीपान्तरवचायाम् । चोपचिनि । वै.निघ. । [द ।

**व्याधिरिपु:** । पुं । क[illegible]रवृक्षे । रा.नि.व.

**व्याधिविपरीत:** । पुं । रोगविपरीतौषधादौ । यथा —अतिसारे मलरोधके पाठादौ ; मसूरादिपथ्ये । उदावर्त्ते अधोवायुनि:सारके देवगुरुसंवादौ । मा.नि. ।

**व्याधिहन्ता (र्त्ता)** । पुं । वाराहीनामकन्दशाके । शूयार आलु । रा.नि.व.७ ।

**व्याध्यर्गल:** । पुं । दामोदरकृतवैद्यकग्रन्थे ।

**व्यान: (वायु:)** । पुं । देहस्थवायुविशेषे । ব্যানবায়ু । "कृत्स्नदेहचरो व्यान: रससंवहनोद्यत: । स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि । क्रुद्धश्च कुरुते रोगान् प्रायश: सर्व्वदेहगान् ।" सु.नि.१ष. ।

**व्यापत्** । पुं । मृत्यौ । अधिकलवणादिभक्षण-अभ्यरोगसङ्कटे । वैद्यकम् ।

**व्याप्यम्** । क्लो । कुष्ठौषधौ । कुड़ । अम. ।

**व्यामः** । पुं । तिर्य्यग्विस्तृतबाह्वोर्यदन्तरं स व्यामः । एक बाँओ । "व्यामः सहस्तस्तु तयोस्तिर्य्यग्बाह्वोर्यदन्तरम् ।" रा.नि.व.१८ ।

**व्यायामः** । पुं । वेगकृद्व्यापारे । च.सू.१५अ. । चक्रादिचालने । कुस्ति, मल्लश्रम । शरीरायासजननकर्म्मणि । भा.म.४भ.शिरोरो.चि. । "शरीरायासजननं कर्म्म व्यायामसंज्ञितम् ।" गुणादि—तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः । शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता । दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥" इत्यादि । सु.चि.२४अ. । "व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनां । स च शीते वसन्ते च तेषां पथ्यतमो मतः । सर्व्वेष्वृतुषु सर्व्वैर्हि मर्त्त्यैरात्महितार्थिभिः । शक्त्यर्द्धेन च कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा । कक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते । शक्त्यर्द्धं तं विजानीयाद् यावदुच्छ्वासमेव च । लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते । व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् । विदग्धमविदग्धं वा निर्दोषं परिपच्यते । वयो बलं शरीरञ्च देशकालमथापि च । समीक्ष्य कुर्य्याद्व्यायामं युक्त्या शक्त्या च बुद्धिमान् । रक्तपित्ती क्षयी शोषी कासी श्वासी क्षतातुरः । भुक्तवान् स्त्रीषु च क्षीणो व्यायामं परिवर्ज्जयेत् । वातपित्तामयी बालो वृद्धो जीर्णश्च तं त्यजेत् । अतिव्यायामतः कासो रक्तपित्तप्रतानकौ । श्रमः क्लमः क्षयस्तृष्णा ज्वरश्छर्द्दिश्च जायते ॥" राज.२प. ।

**व्यायामशोषः** । पुं । अतिव्यायामजन्यशोषरोगे । लक्षणं—"व्यायामशोषी भूयिष्ठमेभिरेव समुपद्रुतः । लिङ्गैरुरःक्षतसमैः संयुक्तश्च क्षतं विना ॥"

**व्यायोजिमः** । पुं । स्थूलाणुसमविषमपाली । सु.सू.१६अ. ।

**व्यालः** । पुं । व्याघ्रे । दुर्दान्तगजे । रा.नि.व.१९। रक्तचित्रके । रा.नि.व.६ । चित्रकवृक्षे । भा.पू.१भ. । सर्पे । श्वापदे । अम. । [वै.निघ. ।

**व्यालकरजः** । पुं । व्याघ्रनखे । नखीविशेषे ।

**व्यालखड्गः** । पुं । व्याघ्रनखे । नखीविशेषे । रा.नि.व.१२ ।

**व्यालगन्धा** । स्त्री । लाङ्गलीनाममहाकन्दशाके । विषलाङ्गुलियां । रा.नि.व.७ । [नि.व.४ ।

**व्यालजिह्वा** । स्त्री । महासमङ्गायाम् । रा.

**व्यालदंष्ट्रः** । पुं । गोक्षुरक्षुपे । रा.नि.व.४ ।

**व्यालनखः** । पुं । व्याघ्रनखे । नखीविशेषे । रा.नि.व.१२ । क्षुद्रौषधे । रा.नि.व.८ ।

**व्यालपत्रः** । पुं । ऐर्व्वारुकलतायाम् । फेट् काँकुड़ । कश्चित् ।

**व्यालपत्रा (त्रिका, त्री)** । स्त्री । कर्कटीभेदे । काँकुड़विशेष । रा.नि.व.७ ।

**व्यालपाणिजः** । पुं । व्याघ्रनखाख्यगन्धद्रव्ये । नखी । रा.नि.व.१२ । [वै.निघ. ।

**व्यालप्रहरणम्** । क्लो । व्याघ्रनखे । नखी ।

**व्यालबलः** । पुं । व्याघ्रनखे । नखी । रा.नि.व.१२ । [भारतम् ।

**व्यालमृगः** । पुं । चित्रकव्याघ्रे । चिता बाघ ।

**व्यालम्बः** । पुं । रक्तैरण्डे । वैद्यकम् ।

**व्यालवल्लरी** । स्त्री । नागवल्लयाम् । पाण गाछ । वै.निघ. । [श्रा । वै.निघ. ।

**व्यालवेणी** । स्त्री । देवदाल्याम् । पीत घोषा

**व्यालायुधम्** । क्लो । नखीनामगन्धद्रव्ये । अ.टी.मथुरा. । पुं । व्याघ्रनखे । नखी । रा.नि.व.१२।

**व्यालीढ़(दष्टक)म्** । क्लो । सर्पदंशनभेदे । लक्षणं यथा—"एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।" वा.उ.३६अ. ।

**व्यालुप्त(दष्टक)म्** । क्लो । सर्पदंशनभेदे । लक्षणं—'दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं··· ।" वा.उ.३६अ. ।

**व्यावर्त्तः (कः)** । पुं । चक्रमर्द्दे । चाकन्दा गाछ । रा.नि.व.४ । नाभिकण्टके । श.च. ।

**व्यासः** । पुं । परिमाणभेदे । বেধ । श.र. ।

**व्यासद्वीपप्रजा** । स्त्री । बन्ध्याकर्कोट्याम् । वै.निघ. । [च. । चि । ऊषिते । दग्धे । मे. ।

**व्युष्टम्** । क्लो । प्रभाते । पर्य्युषिते । फले । हे.

**व्यूहः** । पुं । देहे । त्रिका. ।

**व्योम** । क्ली । जले । मे. । आकाशे । अम. । अभ्रधातौ । रा.नि.व.१३ । शूल.चि.पीड़ामञ्जिरसे । वै.निघ.वा.व्या.चि.वातविध्वंसरसे । भैष.स्त्रीरो.चि.प्रदरारिरसे ।

**व्योमचारी** (इन्) । पुं । पक्षिणि । मे. ।

**व्योमनासिका** । स्त्री । भारतीपक्षिणि । त्रिका. ।

**व्योमपूरम्** । क्ली । सुगन्धतृणे । वै.निघ. ।

**व्योमवल्लिका (ल्ली)** । स्त्री । आकाशवल्ल्याम् । আলোকলতা । रा.नि.व.३ । [व.१४ ।

**व्योमोदकम्** । क्ली । आकाशसलिले । रा.नि.

**व्योषम्** । क्ली । त्रिकटुनि । শুঁট, পিপুল, মরিচ । भा. । एतच्च शिरोविरेचने शस्तम् । वा.सू.१५अ. ।

**व्योषाद्यगुग्गुलुः** । पुं । स्थौल्ये गुग्गुलुः । पाठः—"व्योषाग्नित्रिफलामस्तुविडङ्गं गुग्गुलुं समम् । खादेत्...... ॥" रस.र. ।

**व्योषाद्यघृतम्** । क्ली । अर्शसि घृतम् । पाठः—"व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि । साधितं पिबतः सर्पिः पतन्त्यर्शांसि निश्चितम् ॥" पलाशक्षारात् षड्गुणपरिस्रावितक्षारवारि ग्राह्यम् ।

**व्योषाद्यचूर्णम्** । क्ली । अर्शसि हितम् । "व्योषाऽग्न्यरुष्करविडङ्गतिलाभयानां चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम् ।" सर्व्वं समभागम् । अन्यत् ज्वरातीसारे—ত্রিকটু, ইন্দ্রযব, নিমছাল, চিরেতা, ভীমরাজ, চিতে, কটুকী, আকনাদি, দারুহরিদ্রা, আতইচ প্রত্যেকে সমভাগ সর্ব্বসমান কুড়চিছাল চূর্ণ । মাত্রা ৪ মাষা । च.द. ।

**व्योषाद्यलौहम्** । क्ली । विद्रध्यधिकारे लौहम् । लक्षणं—"व्योषं त्रिवृत्तिक्तकरोहिणी च सार्द्धरजस्तु त्रिफलारसेन । पीतं कफोत्थं शमयेत्तु शोथं गव्येन मूत्रेण हरीतकी च ॥" रस.चि. ।

**व्रजभूः** । पुं । कैलिकदम्बवृक्षे । श.च. ।

**व्रणः** । पुं, क्ली । तन्नामकरोगे, क्षतादौ । ব্রণরোগ, ঘা । स द्विविधः शारीर आगन्तुश्चेति । तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः । आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीड़नप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः । तस्य लक्षणं द्विविधं सामान्यं वैशेषिकञ्च । तत्र सामान्यं रुग्व्रणगात्रविचूर्णने व्रणतीति व्रणः । विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः ।" सु.चि.१अ. । स पुनः पञ्चदशविधः । पृथग्दोषैस्त्रयः संसर्गजास्त्रयः सन्निपातेनैकः एवम्भूता रक्तसहितैः सप्त, एवं चतुर्दश, रक्तेन केवलेनैक इति पञ्चदश । "स पञ्चदशधा दोषैः सरक्तैस्तत्र मारुतात् । श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि च । मस्तुमांसपुलाकाम्बु.......... । निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते । पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः । मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुतिः । क्षारोक्षितक्षतसमव्यथारागोष्मपाकवान् । कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः । स्थूलौष्ठः कठिनः स्नायुशिराजालततोऽल्परुक् । प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत् । वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पैत्तिकैः । द्वाभ्यां त्रिभिश्च सर्व्वैश्च विद्याल्लक्षणसङ्करात् ।" इति । जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावोष्ठपिटिकः समः । किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः । इति । त्वगामिषशिरास्नायुसन्ध्यस्थीनि व्रणाश्रयाः । कोष्ठो मर्म्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम् । सुसाध्यो नवमांसः शिवश्चोत्तिष्ठति व्रणः । वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः । तथा स्फिक्पायुमेढ्रोष्ठपृष्ठान्तर्वक्त्रगण्डगः । कृच्छ्रसाध्योऽक्षिदशननासिकापाङ्गनाभिषु । सेवनीजठरग्रीवपार्श्वकक्षास्तनेषु च ।" इति । वा.उ.२५अ. । तथा—त्वङ्मांसशिरास्नायुस्थिसन्धिकोष्ठमर्म्माणीति । तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचारः शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः । तत्रायतश्चतुरस्रः वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः शेषा विकृताकृतयो दुरुपक्रमा भवन्ति । इति । व्रणवेदना तु बहुधा तद्यथा—तोदनभेदनताड़नच्छेदनायमनमन्थनविक्षेपणचुमचुमायननिर्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नाकुञ्चनाङ्कुशिका भवन्ति । इति । सु.सू.२१अ. । व्रणबन्धनं चतुर्दशविधं तानि च ..........

…कगिकाव्रमकखट्टाचीनविबन्धवितानगोफणा: पञ्चाङ्गुलीति चतुर्दश। व्रणायतनविशेषेण तद्बन्धनानि विधा गाढ़समशिथिलानीति। सु.सू.१८अ. वाभटस्तु उत्सङ्गं पञ्चाङ्गुलीस्थाने पञ्चाङ्गीति स्वीकरोति। विशेषा: स्वस्वपर्य्यायेषु सम्या:।

**व्रणकृत्** । पुं। भल्लातकवृक्षे। ভেলা গাছ। र.मा.। [रा.नि.व.५।

**व्रणकेतु: (घ्नी)** । पुं, स्त्री। दुग्धफेन्याम्।

**व्रणग्रन्थि:** । पुं। रोगभेदे। ব্রণের ঘেটা। लक्षणं—"अरूढ़े रूढ़मात्रे वा व्रणे सर्व्वरसाशिन:। सान्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथवा। वातास्रमसृतं दुष्टं संशोष्य ग्रथितं व्रणम्। कुर्य्यात्सदाह: कण्डूमान् व्रणग्रन्थिरयं स्मृत:॥" वा.उ. २९अ.। [वै.निघ.।

**व्रणघ्नी** । स्त्री। लघुकारवेल्लके। ছোট উচ্ছে।

**व्रणजिता** । स्त्री। मुण्ड्याम्। মুণ্ডীরী। वै.निघ.। [शटी। श.च.।

**व्रणद्विट्** । पुं। ब्राह्मणयष्टिकायाम्। বামন-

**व्रणधूपन:** । पुं। तन्नामकधूपदानविधौ। यथा—"शरावसम्पुटे छिद्रं कृत्वाङ्गारदीपितम्। छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत्॥" अत्र व्रणनाड़िका दशाङ्गुलमिता कार्य्या। भा.।

**व्रणरोपणरस:** । पुं। क्षुद्ररोगाधिकारे औषधम्। पाठ:—"मन्शिलाहिफलातुल्यं चाहं अम्लीरमर्दितं। कुमार्य्या नरमूत्रेण चित्रकेण च सिन्धुना। सौवर्च्चलेन च पृथक् युक्ता च विभुधै: क्रमात्॥" मात्रा ६ र.। अनु. मधु। रस.चि.।

**व्रणशोथ:** । पुं। व्रणनिमित्तश्वयथौ। तस्य पूर्व्वरूपं शोथस्यैकदेशोत्थानम्। स षट् वातपित्तकफसन्निपातरक्तागन्तुभेदेन। यथा—"पृथक्समस्तदोषोत्था रक्तजागन्तुजौ तथा। व्रणशोथा: षड़ेते स्यु: संयुक्ता: शोथलक्षणै:॥" मा.नि.। [वै.निघ.।

**व्रणशोधन:** । पुं। कम्पिल्लके। কমলাগুঁড়ি।

**व्रणशोष:** । पुं। क्षतजन्यशोषरोगे। निदानं—"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात्। व्रणिनश्च भवेच्छोषो स चासाध्यतमो मत:॥" मा.नि.।

**व्रणस्थानम्** । क्ली। व्रणवस्तुनि। ব্রণ স্থান। तानि च त्वङ्मांससिरास्नायुसन्धिकोष्ठमर्म्माणीत्यष्ट भवन्ति। सु.सू.२२अ.।

**व्रणहः** । पुं। एरण्डवृक्षे। श.च.। स्त्री (हा)। गुडूच्याम्। श.र.। [शूलिया। वै.निघ.।

**व्रणहरी** । स्त्री। लाङ्गलिकौषधौ। विषला-

**व्रणहृत्** । पुं। भल्लातकवृक्षे। ভেলা গাছ। कलिकारीवृक्षे। विषलाङ्गुलिया। रा.नि.व.४।

**व्रणायाम:** । पुं। वातव्याधिविशेषे। लक्षणं—"मर्म्माश्रितं व्रणं प्राप्य वायुर्य: सर्व्वदेहग:। वेगैरानामयेद्देहं व्रणायामस्तु तं त्यजेत्॥" मा.नि.।

**व्रणारि:** । पुं। बोलनामगन्धद्रव्ये। গন্ধবোল। रा.नि.व.६। अगस्तिवृक्षे। বামনা গাছ। रा.नि.व.१०।

**व्रणोपक्रम:** । पुं। व्रणचिकित्सायाम्। व्रणोपक्रम: षष्टिविधोऽपतर्पणादिभेदेन। यथा—अपतर्पणमालेप: परिषेकोऽभ्यङ्ग: स्वेदो विम्लापनमुपनाह: पाचनं विस्रावनं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावनं सीवनं सन्धानं पीड़नं शोणितास्थापनं निर्व्वापणमुत्कारिका कषायो वर्त्ति: कल्क: सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवगाहनं मृदुकर्म्म दारणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म प्रतिसारणं रोमसंजननं लोमापहरणं वस्तिकर्म्मोत्तरवस्तिकर्म्म बन्ध: पत्रदानं क्रमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधुसर्पिर्यन्त्रमाहारो रक्षाविधानञ्चेति। सु.चि.१अ.।

**व्रतम्** । क्ली। ईप्सिताकामनियमे। च.सू.१अ.।

**व्रतति: (ती)** । स्त्री। लतायाम्। अम.।

**व्रतादेश:** । पुं। उपनयने। स्मृति:।

**व्रश्चनम्** । क्ली। छेदने। पुं। स्वर्णादिच्छेदके अस्त्रे। ছেনী। अम.।

**व्रह्मा (न्)** । पुं। विधातरि। तत्प्रादुर्भाव: यथा—"विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन्। स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्॥" इत्यादि। भा.।

**व्रीड़ा** । स्त्री। वनकुलत्थिकायाम्। प मु.।

**व्रीहि:** । पुं। प्रावृट्कालजातधान्ये। आशु

धान्ये। हैमन्तिकशूकधान्यमात्रे च। मे.। तस्य लक्षणम्—"वार्षिकाः कथिताः शुक्ला व्रीहयश्चिरपाकिनः।" तद्भेदाः—"कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि। शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः॥" गुणाः—"व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः। अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः। कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे॥" भा.पू.१भ.धा.व.। "मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः।" च.सू.२७अ.। गौरः मधुरः शीतलः पित्तघ्नः कषायः स्निग्धो हृद्यः क्रमिकफहरः तापरक्तहरश्च। तथा पुष्टिकरः श्रमघ्नः वीर्य्यवृद्धिकरो रुच्य आनन्दजनको वातजनकश्च। रा.नि.व.१६।

**व्रीहिकाञ्चनः** । पुं । मसूरवृक्षे । त्रिका. ।

**व्रीहितुण्डिका** । स्त्री । देवधान्ये । দেধান। वै.निघ. ।

**व्रीहिधान्यम्** । क्ली । षष्टिकादिधान्ये । वै.निघ. ।

**व्रीहिपर्णिका (र्णी)** । स्त्री । शालपर्ण्याम्। शालपाणि। रा.नि.व.४। [र.मा.।

**व्रीहिभेदः** । पुं । चीनाकधान्ये । কাংনীধান।

**व्रीहिमुखम्** । क्ली । व्यधनार्थं व्रीहिमुखाकारमुखशस्त्रे । सु.सू.८अ. । तत् षडङ्गुलायतं सार्द्धाङ्गुलवृन्तं चतुरङ्गुलफलञ्च कार्य्यम्, तन्मुखञ्च व्रीहिविस्तारं समूढकुण्डञ्च कार्य्यम्। इति सु.टी.ड.भोजः। [धान्ये। কাংনী ধান। मे.।

**व्रीहिराजिकः** । पुं । चीनाकधान्ये, बहु-

**व्रीहिश्रेष्ठः** । पुं । शालिधान्ये । হেমন্তধান। रा.नि.व.१६ ।

**व्रीह्यास्यम्** । क्ली । व्रीहिमुखास्त्रभेदे । च.द.।

---

# श

**शंवः** । पुं । मुषलाग्रस्थलौहमण्डले । লোহার গুলো। धरणिः ।

**शंवरम्** । क्ली । जले । अम. । रा.नि.व.१४ ।

**शकटः** । पुं, स्त्री । धववृक्षे । धाওয়া গাছ। प.मु. । शरीरे । वै.निघ. । तिनिशवृक्षे । रा.नि.व.९ । [গাছ। र.मा. ।

**शकटाख्यः (कः)** । पुं । धववृक्षे । धाওয়া

**शकलम्** । क्ली । त्वचि । গুড়ত্বক্। रा.नि.व.६ । आमलके । पद्मदण्डे । পদ্মের ডাঁটা। वै.निघ. । वल्कले । ছাল । त्रिका. । शल्के । আঁইশ । पुं, क्ली । खण्डे । अंशे । अम. ।

**शक(कु)ली (न)** । स्त्री, पुं । द्विजालमत्स्ये । মিরগাল মাছ । अम.भ. । गुणाः—वातकफकरत्वम्। चचि.२३अ. । महाशकुलमत्स्य । বড় শউল, পিপ্‌লেশোউল । गुणाः—"शकुली रोहिताकारा भूमौ प्रायश्चरत्यसौ । गुर्वी पाके च मधुरा मेदिनी दोषकोपनी॥" राज.३प. ।

**शकुनः** । पुं । पक्षिणि । गृध्रे । শকুনি । मे. । कृष्णचटके । শ্যামা পাখী । वै.निघ. । क्ली । शुभसूचकनिमित्ते । সগুন্ । मे. ।

**शकुनत्रा** । स्त्री । क्षुद्रगृहगोधिकायाम् । क्षुद्र টিক্‌টিকি । त्रिका. ।

**शकुनाहृतः (त)** । पुं । बालरोगविशेषे । शकुनिग्रह । मत्स्यविशेषे । वै.निघ. । शालिधान्यभेदे । भा.पू.१भ.धा.व. । गुणाः—शालिवत् ।

**शकुनिः** । पुं । पक्षिणि । পা[illegible] । अम. । कृष्णचटके । শ্যামা পাখী । [illegible] । रा.नि.व.१९ । चिल्लपक्षिणि । চীল পাখী । हे.च. । [त्रिका. ।

**शकुनिप्रपा** । स्त्री । पक्षिपानीयशालायां ।

**शकुनी** । स्त्री । तन्नामकबालग्रहविशेषे । लक्षणं—"सस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीडितः समन्तात् । स्फोटैश्च प्रततनुः सदाहपाकै विज्ञेयो भवति शिशुः क्षतः शकुन्या॥" सु.उ.२७अ. । श्यामाकपक्षिणि । শ্যামা পাখী । रा.नि.व.१९ ।

**शकुन्तः (न्तिः)** । पुं । पक्षिणि । अम. । काकभेदे । कुक्कुटभेदे । वै.निघ. । भासपक्षिणि । उणा. । कीटविशेषे । मे. ।

**शकुन्दः** । पुं । श्वेतकरवीरे । रा.नि.व.१० ।

**अकुलः** । पुं । मत्स्यविशेषे । शल माछ । गुणाः "अकुली मधुरो ग्राही रुचः पित्तास्त्रजिद्गुरुः ।" राज.३प. । [चिका. ।

**अकुलगण्डः** । पुं । मत्स्यविशेषे । शाल माछ ।

**अकुला** । स्त्री । कटुकायाम् । कट्की । रा.नि. व.६ ।

**अकुलादनी** । स्त्री । कटुकायां । कट्की । रा.नि.व.६ । च.सू.४अ.भेदनीये । जलपिप्पल्यां, कच्छटशाके । काचड़ादाम । र.मा. । गजपिप्पल्याम् । रा.नि.व.६ । गण्डदूर्व्वादाम् । जटामांस्यां । गण्डूपदे । केँचो । कट्फले । विश्वः ।

**अकुलार्भकः** । पुं । गडकमत्स्ये । गरुइ माछ। अम. ।

**अकुलाञ्चकः (का)** । पुं, स्त्री । श्वेतदूर्व्वायाम् । गण्डदूर्व्वायाम् । अम. । [व.८ ।

**अकुलाक्षी** । स्त्री । गण्डदूर्व्वायाम् । रा.नि.

**अक्तत्** । क्ली । विष्ठायाम् । अम. ।

**अक्तत्करिः (री)** । पुं, स्त्री गोवत्से । चिका.।

**अक्तत्कारः** । पुं । मलत्यागकारके । व्याक. ।

**अक्तद्द्वारम्** । क्ली । मलद्वारे । है.च. ।

**अक्तद्भवः** । त्रि । द्रवरूपे । भा.म.४भ.तालुकण्टकचि. । [सु.सू.३६अ. ।

**अक्तद्रसः** । पुं । गोमयरसे । गोवरेर रस ।

**अक्करः (रिः)** । पुं । ऋषि । है.च. । चिका. ।

**अक्तवः** । पुं । भृष्टयवादिचूर्णे । छातु ।

**अक्तिकः** । पुं । गन्धके । रस.र. रस.कौ. भैष. वादशायसे । [जटा. ।

**अक्तिपर्णः** । पुं । सप्तपर्णवृक्षे । छातिम गाछ ।

**अक्तुः** । पुं, क्ली । भर्जितयवादिचूर्णे । छातु । "धान्यानि भाष्ट्रभृष्टानि यवे .... ।" रा.नि.व. १६ । "यन्त्रपिष्टानि अक्तवः ।" भा. । "धाना भृष्टयवे भूम्नि स्त्रियां पुंभूम्नि अक्तवः ।" जटा. ।

**अक्तुकः** । पुं । तन्नामकविषभेदे । लक्षणं यथा —"यदग्रन्थिः अक्तुकेनैव पूर्णमध्यः स अक्तुकः ।" भा.पू.१भ.विष.व. । क्ली । अक्तौ छातु । सा. कौ. ।

**अक्तुपिण्डी** । स्त्री । अक्तुकृतपिण्डाकारभोज्यद्रव्ये । छातुर लाड़ु । गुणाः—"गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।" राज.३प. ।

**अक्तुफला (ली)** । स्त्री । शमीवृक्षे । शाँई गाछ । अम. । श.र. ।

**अक्तावलेहिका** । स्त्री । अक्तुकृतावलेहिकायाम् । छातुर अवलेह । गुणाः—"अक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ।" राज.३प. ।

**अक्रः (कः)** । पुं । कुटजवृक्षे । कुड़चि गाछ । प.मु. । च.द.मेह.चि.न्यग्रोधाद्यचूर्णे । रस.र.कच्छटावलेहे । अर्ज्जुनवृक्षे । मे. । इन्द्रयवे । भैष.च. द.बालरो.चि. । [पोका । जटा. ।

**अक्रगोपः** । पुं । इन्द्रगोपकीटे । आषाढ़े

**अक्रचापसमुद्भवा** । स्त्री । अलाव्वाम् । वै. निघ. । [श.र. ।

**अक्रजः (जातः)** । पुं । काके । चिका. ।

**अक्रजा** । स्त्री । इन्द्रवारुण्याम् । राखालशशा । सु.चि.३८अ. । [वै.निघ. ।

**अक्रदारुः** । पुं । शालवृक्षे । तैलदेवदारुवृक्षे ।

**अक्रद्रुमः** । पुं । वकुलवृक्षे । भा.म.१भ.ज्वरे पद्रयचि.द्वात्रिंशत्क्वाथे । "श्योणाकशक्रद्रुमै. ।" तैलदेवदारौ । भा. ।

**अक्रनेमी** । स्त्री । कुम्भनिषुण्ड्याम् । शक्रकुटजवृक्षे । देवदारुवृक्षे । वै.निघ. । [प.मु. ।

**अक्रपर्य्यायः** । पुं । कुटजवृक्षे । कुड़चिगाछ ।

**अक्रपादपः** । पुं । कुटजवृक्षे । कुड़चि गाछ । रा.नि.व.९ । देवदारुवृक्षे । अम. ।

**अक्रपुष्पम्** । क्ली । इन्द्रयवे । वै.निघ.जीर्णज्व. चि.लवङ्गादिकषाये ।

**अक्रपुष्पा (ष्पी)** । स्त्री । नागदमन्यां । नागदना । र.मा. । लाङ्गलीवृक्षे । विषलाङ्गलिया । अम. । [लाङ्गुलिया । र.मा. ।

**अक्रपुष्पिका** । स्त्री । अग्निशिखावृक्षे । विष-

**अक्रबीजम्** । क्ली । इन्द्रयवे । रा.नि.व.९ ।

**अक्रभूभवा** । स्त्री । इन्द्रवारुण्याम् । राखालशशा । श.च. ।

**अक्षभूरुहः** । पुं । कुटजवृक्षे । কুড়চি গাছ । वै.निघ. । [रा.नि.व.९ ।

**अक्षमाता** । स्त्री । भार्ग्याम् । বামনহাটী ।

**अक्षमूर्द्धा** (न्) । पुं । वल्मीके । त्रिका. ।

**अक्षयवः** । पुं । इन्द्रयवे । वै.निघ.२भ.अ.सा. चि. । भैष.बालरो.चि. ।

**अक्षवल्ली** । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ ।

**अक्षशाखी** (इन्) । पुं । कुटजवृक्षे । भा. ।

**अक्षशिराः** । पुं । वल्मीके । रा.नि.व.१३ ।

**अक्षसुधा** । स्त्री । कुन्दुरुखोटी । সরলের আঠা । अ.च. ।

**अक्षस्पष्टा** । स्त्री । हरीतक्याम् । त्रिका. ।

**अक्षाख्यः** । पुं । उलूके, पेचके । त्रिका. ।

**अक्षाशनम्** । क्ली । भङ्गायाम् । ভাঙ,সিদ্ধি । गुणाः—"अक्षाशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् । बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥" राज. । पुं । विजयावृक्षे । সিদ্ধি গাছ । प.मु. । कुटजवृक्षे । কুড়চি গাছ । श.च. । इन्द्रयवे । वै.निघ.२भ.दुर्जलज्व.चि.ज्ञानोदयरसे ।

**अक्षाह्वः** । पुं । इन्द्रयवे । रा.नि.व.९ । भा.म. १भ.सन्ततादिज्व.चि. । "अक्षाह्वत्रिफलाभ्रतम् ।" स्त्री (ह्वा) । इन्द्रयवे । वा.उ.५अ भूतरावघृते ।

**अक्षेन्द्रः** । पुं । इन्द्रगोपकीटे । আষাঢ়ে পোকা । वै.निघ.२भ.अर्शःचि.त्रिफलागुग्गुलौ ।

**अक्षरी** । स्त्री । अङ्कुल्यां । আঙ্গুল । उणा. ।

**अक्षा** (न्) । पुं । गजे । उणा. ।

**अङ्करः** । पुं । श्वेतार्के । শ্বেত আকন্দ । भीमसेनीकर्पूरे । कर्पोते । वै.निघ. । वैद्यविनोदग्रन्थकारे । नाडीपरीक्षाकारे ।

**अङ्करप्रियः** । पुं । द्रोणपुष्प्याम् । ঘলঘসা । प.मु. । तित्तिरिपक्षिणि । शब्दकल्पद्रुमः ।

**अङ्करमत(लौह)म्** । क्ली । अर्शसि लौहम् । भा. । रस.चि.८अ. । [तरौ ।

**अङ्करशुक्रम्** । क्ली । पारदे । भा.ज्व.चि.कल्प-

**अङ्करस्वेदः** । पुं । आमवाते स्वेदविशेषे । "कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमूलातसीवर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् स्वेदः स्यात्……… ॥" भैष. । "अङ्कता महिषाश्वानां गोमयेन तथैव च । अग्नितप्तेन यः स्वेदः शङ्करस्वेद उच्यते ॥" च.द.१८अ. ।

**अङ्करा (री)** । स्त्री । शमीवृक्षे । শাঁই গাছ । रा.नि.व.८ । मञ्जिष्ठायाम् । श.र. ।

**अङ्कराद्रिः** । पुं । शुक्लार्कवृक्षे । শ্বেত আকন্দ । रा.नि.व.१० । [व.१२ ।

**अङ्करावासः** । पुं । भीमसेनीकर्पूरे । रा.नि.

**अङ्कराह्वया** । स्त्री । ह्रस्वशमीवृक्षे । वै.निघ.

**अङ्कितः** । पुं । चौरकनामगन्धद्रव्ये । हिं चौरा । গেটেলা । रा.नि.व.१२ ।

**अङ्कुः** । पुं । मत्स्यविशेषे जलजन्तुविशेषे । शाँकोच इति भाषा । अर्क.चि.४र्थ शतके । अस्त्रे । कीलके । मे. । पञ्चशिराजाले । পাতাল শিরা । मेद्रे । हे.च. । नखीनामगन्धद्रव्ये । নখী । जटा. ।

**अङ्कुकर्णः** । पुं । गर्दभे । त्रिका. ।

**अङ्कुचिः** । पुं । मत्स्यविशेषे । শঙ্কু মাছ । श.र. ।

**अङ्कुतरुः (वृक्षः)** । पुं । शालवृक्षे । श.र. । र.मा. ।

**अङ्कुफलिका (फली)** । स्त्री । ह्रस्वशमीवृक्षे । ছোট শাঁই গাছ । रा.नि.व.८ ।

**अङ्कुमुखी** । स्त्री । निर्विषजलौकायाम् । निर्विষ জোঁক । सु.सू.१३अ. See जलायुका ।

**अङ्कुला** । स्त्री । यन्त्रिकायाम् । জাঁতি । अन्दकल्पः । उत्पलपत्रायाम् । उणा. ।

**अङ्कोचः (चिः)** । पुं । मत्स्यविशेषे । শাঁকোচ মাছ । जटा. । श.र. ।

**अङ्खः** । पुं, क्ली । तन्नामकस्थावरविषभेदे । स अतिविषासदृशः । अङ्कोविषे, दारुमोचभेदे वा । সেঁকো, দামুজ । अचि.३स्थान.५९अ. । सामुद्रकोषस्थजन्तुविशेषे । শাঁক । गुणाः—"शङ्कशुक्त्यादयः स्वादुरसपाका मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः ॥" सु.सू.४६ अ. । कटुः शीतः पुष्टिवीर्य्यबलदः गुल्मशूलकफश्वासविषघ्नश्च । रा.नि.व.१९ । "कतुष्टं गैरिकं

तत्र काशीसं टङ्कणमथा। नीलाञ्जनं शुक्तिभेदाः शुष्काः सवराटिकाः। जम्बीरवारिणा खिन्नाः क्षालिताः कोष्णवारिणा। शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये।" इति शङ्खादिशुद्धिः। भा. कौ.। शङ्खनाभौ। শঙ্খনাভি। र.सा.सं.पदरा लकरसे। नखीनामगन्धद्रव्ये। नखी। रा.नि.व. १२। च.द.ज्वरातिसा.चि.कलिङ्गाद्यगुडिकायाम्। कर्णसमीपदेशे। रा.नि.व.१८। भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये मर्म्मद्वये। तच्च सद्यो-मारकम्। सु.शा.६अ.।

**शङ्खकः** । पुं। शङ्खे। শাঁক। मे.। नीलकाशीषे। নীল হিরাকস। वै.निघ.। शिरोरोगभेदे। तस्य लक्षणं—"रक्तपित्तानिलाः दुष्टाः शङ्खदेशे विमूर्च्छिताः। तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणम्। स शिरो विषवद्वेगी निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति......॥" मा.नि.। च.इन्द्रिय.८अ.। [सु.।

**शङ्खकन्दः** । पुं। शङ्खालौ। শাঁক আলু। प.

**शङ्खकुसुमा** । स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিতা। रा.नि.व.३। [चिका.। श.र.।

**शङ्खचरी (चर्च्चौ)** । स्त्री। ललाटिकायां।

**शङ्खचूर्णम्** । क्ली। शङ्खभस्मकृतचूर्णे। শাঁকের চূণ। गुणाः—पटु क्षारम् उष्णं परं क्रमिघ्नञ्च। राज.३प.। See चूर्णम्।

**शङ्खजः** । पुं। पारावताण्डाकारस्थूलमौक्तिके। বড় শঙ্খমুক্তা। शब्दकल्प:।

**शङ्खद्रावकः** । पुं। लौहयकृदधिकारे। শঙ্খদ্রাবক। शङ्खादिद्रव्यसद्यज्जातद्रावकौषधे। पाठः —शङ्खचूर्णं यवक्षारं सर्जिक्षारं टङ्कणं विट् सैन्धवं सौवर्च्चलं शाम्भरि कर्कचं फटिकारीं नृसारदं समभागं काचकूप्यां निधाय वारुणीयन्त्रेण साधयेत्। भैष.। [रा.नि.व.६।

**शङ्खद्रावी (न्)** । पुं। अम्लवेतसे। অম্ল বেতস।

**शङ्खधरा** । स्त्री। हिलमोचिकायाम्। হিঞ্চে। भा.पू.१भ.शा.व.। [জুই। वै.निघ.।

**शङ्खधवला** । स्त्री। शुक्लयूथिकायाम्। শ্বেত

**शङ्खनखः** । पुं। क्षुद्रशङ्खे। জোড়ঙ্গা। अम. भ.। नखीभेदे। श.र.। हट्टविलासिन्यां। र.मा.।

**शङ्खनखा (खी)** । स्त्री। हट्टविलास्याम्। र.मा.।

**शङ्खनाभिः** । स्त्री। सुगन्धद्रव्यविशेषे। শঙ্খনাভি। इयं जम्बीररसेन भाविता शुद्धिमायाति। सा.कौ.। भा.उपदं.।

**शङ्खनाम्नी** । स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিতা। वै.निघ.।

**शङ्खपालः** । पुं। स्वनामप्रसिद्धे दर्व्वीकरमहासर्पे। सु.कल्प.४अ.।

**शङ्खपुष्पिका** । स्त्री। श्वेतयूथिकायाम्। श्वेतापराजितायाम्। শ্বেত জুই, শ্বেত অপরাজিতা। सि.यो.कृ.टी.उन्मा.चि.।

**शङ्खपुष्पी** । स्त्री। (Andropogon aciculartum, or Canscora decussata.) लताद्रव्यविशेषे। শঙ্খাহুলুই, ডানকুনী। प.मु. इति केचित् स्वर्णमारणे। श्वेतापराजितायाम्। শ্বেত অপরাজিতা। बम्. शंखोनी। गुणाः— हिमा तिक्ता मेधास्वरकरी ग्रहभूतादिदोषघ्नी च॥ रा.नि.व.३। "शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत्। रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा। दोषापस्मारभूताश्रकुष्ठक्रिमिविषप्रणुत्॥" भा.गु.व.। [रा.नि.व.३।

**शङ्खमालिनी** । स्त्री। शङ्खपुष्पीलतायाम्।

**शङ्खमुखः** । पुं। कुम्भीरे। हे.च.।

**शङ्खमूलम्** । क्ली। श्वेतमूलके। হাঁসা মূলা। रा.नि.व.७। [वै.निघ.।

**शङ्खयूथिका** । स्त्री। शुक्लयूथ्यां। শ্বেত জুই।

**शङ्खवटी** । स्त्री। अग्निमान्द्ये शूलाधिकारे च हिता वटी। पाठः—"चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसे कल्कितं तस्मिन् शङ्खपलं सुतप्तमसकृन्निर्वाप्य शीर्णावधि। हिङ्गुर्व्योषपलं रसामृतबलीन्निक्षिप्य निष्कांशिकान् बद्धा शङ्खवटी क्षयग्रहणिकारुकपङ्क्तिशूलादिषु।" যাবৎ চূর্ণ হইয়া না যায়, তাবৎ শঙ্খকে বারংবার পোড়াইয়া লেবুর রসে ফেলিবে, চূর্ণবৎ হইলে তুলিবে। তেঁতুলক্ষার ৮ তো. পঞ্চলবণ মিলিত ৮ তো. উক্ত শঙ্খচূর্ণ ৮ তো. হিঙ্গু, শুট, পিপুল ও মরিচ মিলিত ৮ তো. পারা, বিষ ও গন্ধক প্রত্যেকে অর্দ্ধ তোলা একত্র লেবুর রসে

ঝাড়িয়া ঝাড়িয়া অম্ল রস হইলে বটি করি-বে। রস.চি.। মৈষ.।

**शङ्खविषम्** । क्ली। (Arsenicum album.) White arsenic. विषभेदे। সেঁকো। हिं दा. शाम्बलखार सम्बुलखार, संखियासुख। तें तेल्लपाषाणम्। ता.वेल्लइपाषाणम्। [वै.निघ.।

**शङ्खसह्वय:** । पुं। शङ्खालौ। শাঁক আলু।

**शङ्खास्य:** । पुं। शङ्खनखे। বড়নখী। र.मा.।

**शङ्खालु: (क:)** । पुं। श्वेतालौ। শাঁক আলু। वै.निघ.।

**शङ्खावर्त्त:** । पुं। शम्बूकावर्त्तनामभगन्दररोगे। See शम्बूकावर्त्त:। श्रोत्रशृङ्गाटकेषु तन्नामका-स्थिसन्धिभेदे। सु.शा.५अ.।

**शङ्खास्थि** । क्ली। मस्तकस्यास्थिद्वये। মাথার খুলি। च.शा.७अ.। पृष्ठास्थनि। रा.नि.व.१८।

**शङ्खाहुली** । स्त्री। शङ्खपुष्प्याम्। শ্বেত অপরাজিতা। रा.नि.व.२।

**शङ्खाह्वया (ह्वा)** । स्त्री। शङ्खपुष्पीलतायाम्। শ্বেত অপরাজিতা। रा.नि.व.२। वै.निघ.२भ. छर्दि.चि.धान्यकयूषे। [श.च.।

**शङ्खिका** । स्त्री। चोरपुष्प्यां। চোরহুলী।

**शङ्खिन:** । पुं। शिरीषवृक्षे। वै.निघ.।

**शङ्खिनिका** । स्त्री। ग्रन्थिपर्णवृक्षे। গেঁঠেলা। वै.निघ.।

**शङ्खिनी** । स्त्री। चोरपुष्प्यां। চোরহুলী, ভাঁটুই इति पूर्व्ववङ्गे। प्रयोगोविन्दष्टते। "कमु-ककुटकथाशङ्खिनीचर्म्मधाम्ना।" यवतिक्तायां। श्वे-तबुह्नायां। रा.नि.व.३। प.मु.। सु.सू.३८अ.। च.सू.४अ.। वा.सू.१५अ.। चर्म्मकषायां। চামরক-ষা। च.द.परिणामशूले। "समला शङ्खिनी श्वे-ता।" श्वेतापराजितायां। वै.निघ.। शुक्लपुन्नाग वृक्षे। विश्व:। श्वेतचुक्रायां। শ্বেত চুকা। श.र.।

**शङ्खिनीफल:** । पुं। शिरीषवृक्षे। रा.नि.व.९।

**शङ्खिनीवास:** । पुं। शाखोटवृक्षे। শ্যাওড়া গাছ। श.च.।

**शङ्खोदधिमल:** । पुं। समुद्रफेने। वै.निघ.।

**शङ्खोदरी** । स्त्री। तृणविशेषे। वम् गुल-गुरा। गुणा:—उष्णा कफवातघ्नी शूलामवातघ्नी च। वै.निघ.।

**शची** । स्त्री। स्पृक्कायाम्। পিড়িং। वै.निघ.। शतावर्य्यां। শতমূলী। मे:।

**शट:** । त्रि। अम्लरसे। व्याक.।

**शटि: (टी)** । स्त्री। शठ्याम्। শঠী, বন আদা। श.र.। च.सू.४अ.।

**शट्टकम्** । क्ली। सघृतजलमिश्रितशालिचूर्णे। সঘেদার শটা। "शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं भवेत्।" [illegible]।

**शठम्** । [illegible] तीक्ष्णलौहे। रा.नि.व.१३। तग-रपुष्पे, तगरपादिके। তগরপাদিকা। रा.नि.व.१०। कुङ्कुमे। रा.नि.व.१२। पुं। धुस्तूरवृक्षे। रा.नि.व.२३। चित्रकवृक्षे। तालवृक्षे। स्त्री। आम्रातकवृक्षे। वै.निघ.। [नि.व.४।

**शठाङ्गा (ह्वा)** । स्त्री। अम्बष्ठायाम्। रा.

**शठिका (ठी)** । स्त्री। (Curcuma gedoaria. Syn. Curcuma gerumbet.) Long and round gedoary. स्वनाम-ख्यातमूले। गन्धशटीति च लोके। শটী। हिं कचूर। बम्. कचोरा, कापुरकाचरी। तें किचलिएगड्डल। गुणा:—वातकफश्वासकासज्वरवि-नाशिनी। राज.। "सुगन्धि: कटुपाका च कुष्ठार्शोव्रणनाशनम्। उष्णा लघुश्च..........भा.। "शठी तिक्ता च कटुका कोष्णा तीक्ष्णा ग्निदीपनी। सुगन्धी रुचिरा लघ्वी मुखवैशद्य-मता। कोपनी रक्तपित्तस्य गलगण्डादिगण्ड कुष्ठार्शोव्रणकासघ्नी श्वासगुल्मकफापहा। त्रिदोष क्रमिवातानां ज्वरलीहादिनाशकृत्।" वै.निघ. See कर्चूर:। आरण्यकार्द्रके। [illegible] च.द.कफज्व.चि.निम्बादि.। "शठीभूनिम्बपौष्करम्।" च.द.ज्व.चि.किराततिक्तादौ। भा.म.१म काष्ठकूजज्व.चि.। "शठीकलिङ्गुकलिमाभया:।

**शठीरूपा** । स्त्री। कान्दगुडूच्याम्। वै.निघ.

**शठ्यादि:** । पुं। त्रिदोषज्वरे कषायविशेष: "शठीपुष्करमूलञ्च भार्गी शृङ्गी दुरालभा। गुडूची नागरं पाठा किरातं कटुरोहिणी।" च.द.ज्व.चि.

**शण:** । पुं। (Crotalaria juncea.) In

dian hemp. स्वनामख्यातक्षुपे। শণ গাছ। हिं शण। तें शणमनुवेल, जेनपनर, रैम्नचेट्। ता. जेनप्पनर्। दा. जनवकनर। प.मु.। गुणाः—अम्लः कषायो मलगर्भास्रपातनः वान्तिकृत् वातकफघ्नश्च। रा.नि.व.४। तत्पुष्पं रक्तपित्ते हितं मलरोधकञ्च। वीजं शोषितशुद्धिकरम्। राज.२प। क्ली। शणे। हे.च.।

**शणकन्दः**। पुं। चर्म्मकषायां। চামর কষা। रस.र.ग्रह.चि.वह्निभल्लातकरसे।

**शणघण्टा (घण्टिका)**। स्त्री। शणपुष्प्याम्। বন শণই। रा.नि.व.४।

**शणपर्णी**। स्त्री। असनपर्ण्याम्। ঝুনঝুনি। श.र.।

**शणपुष्पिका**। स्त्री। शणपुष्प्यां। आढ़क्याम्। ঝুনঝুনি। भा.पू.१भ.धा.व.।

**शणपुष्पी**। स्त्री। शणसदृशविटपे क्षुपे, मला-शये। ঝনঝনিয়া, বন শণ। हिं घागरी, शणई, वनशणई। शणहुली। सु.सू.३८अ संशोधने। च.सू.१।४अ.। गुणाः—कषाया कफवातघ्नी अजीर्ण-ज्वरघ्नी वामनी रक्तदोषघ्नी च। रा.नि.व.४। ज-पाहक्षे। र.मा.। [अ.।

**शणमूलम्**। क्ली। शणशिफायाम्। सु.सू.२६

**शणालः (लुकः)**। पुं। आरग्वधवृक्षे। সোঁ-দালু গাছ। श.र.। [रा.नि.व.४।

**शणिका**। स्त्री। शणपुष्प्याम्। বন শণ,

**शण्डम्**। क्ली। पद्मिन्याम्। श.र.। पुं। नपुं-सके। अम.।

**शण्ढः**। पुं। क्लीवे। হিজড়ে। अ.टी.भ.। व-न्ध्यपुरुषे। वाटा.। चलमेंढ्रलिङ्गे। থোজা। अम.।

**शतकुन्दः**। पुं। करवीरे। "शतकुन्दः करवी-रे।" रा.नि.व.२३।

**शतकुलीरकः**। पुं। वायव्यकीटविशेषे। सु.कल्प.८अ.। See कीटः। [च.सिद्धिः।

**शतकुसुमा**। स्त्री। शतपुष्पायाम्। শুল্‌ফা।

**शतकोटि**। क्ली। हीरके। रा.नि.व.१३। See वज्रम्।

**शतकौम्भ(क)म्**। क्ली। स्वर्णे। वै.निघ।

**शतक्रतुद्रुमः**। पुं। कृष्णकुटजवृक्षे। वै.निघ.।

**शतक्रतुयवः**। पुं। इन्द्रयवे। वै.निघ.।

**शतखण्डम्**। क्ली। सुवर्णे। श.च.।

**शतग्रन्थिः**। स्त्री। दूर्व्वायाम्। नीलदूर्व्वा-याम्। रा.नि.व.८।

**शतघ्नी**। स्त्री। वृश्चिकाल्याम्। বিছাতী। करञ्जवृक्षे। मे। गलरोगविशेषे। लक्षणं यथा—"वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पि-शितप्ररोहैः। नानारुजोच्छ्रायकरी त्रिदोषाज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या॥" सु.नि.१६अ.।

**शतच्छदः**। पुं। काष्ठकुट्टपक्षिणि। কাঠঠো-করা পাখী। त्रिका.।

**शतजटा**। स्त्री। शतमूल्याम्। चि.क्र.क.।

**शतदन्तिका**। स्त्री। नागदन्त्याम्। হাতি-শুঁড়ে। रा.नि.व.५।

**शतदलमल्लिका**। स्त्री। स्वनामख्यातपुष्प-क्षुपे। শতদলমল্লিকা। प.मु.।

**शतदला**। स्त्री। शतपत्रीपुष्पवृक्षे। সেউতি, গোলাপ। रा.नि.व.१०।

**शतद्रुः**। स्त्री। नदीविशेषे। तज्जलं शीतलं ल-घु स्वादु सर्व्वरोगहरं निर्म्मलं दीपनं पाचनं बुद्धि-मेधाबलकरञ्च। रा.नि.व.१४।

**शतधा**। स्त्री। दूर्व्वायाम्। श.च.।

**शतधौतघृतम्**। क्ली। यत् पुनः पुनः सन्ता-प्य शीताम्भसा निर्वाप्यते तथाविधसर्पिषि। শত-ধোত ঘি। ईशानदेवः। "शतं वारान् शीततोये-न धौतं फेणितं घृतम्।" डल्वणः। सि-यो.दाह-चि.। [रा.नि.व.४।

**शतनेत्रिका**। स्त्री। शतावर्य्याम्। শতমূলী।

**शतपत्रम्**। क्ली। कमले। पुष्पभेदे। रा.नि.व. २३। वा.उ.११अ.। शतदलकमले। रक्तपद्मे। वा च.सू.४अ.।

**शतपत्रः (कः)**। पुं। मयूरे। मे.। राजशु-के। সুরো পাখী। अयं प्रतुदजातीयः। रा.नि. व.२३। हे.च.। सु.सू.४६अ.। (कः) काष्ठकुट्टक-पक्षिणि। अम.। च.सू.२७अ.। सारसपक्षिणि। मे.।

**शतपत्रा (त्रिका, त्री)** । स्त्री । शतदलक-
लिकायाम् । খেত বা পাটলবর্ণ গোলাপ । হিং
सेवती, गुलाब । मं सेवती । कं सेवतिगे । तें
सेवन्तिचेट्टु । गुणाः—शीतला तिक्ता कषाया कुं-
ष्ठघ्नी मुखस्फोटहरा लघ्वी दाहपित्तघ्नी च । रा.
नि.व.१० । "शतपत्री हिमा हृद्या ग्राहिणी शुक्र-
ला लघुः । दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च
पाचनी ॥" भा. । नीलदूर्व्वायाम् । रा.नि.व.८ ।

**शतपदी** । स्त्री । शतमूल्याम् । শতমূলী ।
रा.नि.व.४ । कर्णजलौकायाम् । কাণবিছা,
কাণকোটারি । हिं खान् खीजारा । है.च. ।
सा चाष्टधा—परुषा कृष्णा चित्रा कपिलिका पि-
त्तिका रक्ता श्वेता अग्निप्रभा चेति । ताभिः दष्टे
शोथो वेदना दाहश्च हृदये भवति। सु.कल्प.८अ.।

**शतपद्मम्** । क्ली । श्वेतकमले । र.मा. ।

**शतपर्व्वा(र्व्विका)** । पुं,स्त्री। वंशे । বাঁশ।
रा.नि.व.७। च.द.अम्ल.चि.वरुणाद्यघृते । (र्व्विका)
यवे । श.र. । शतपोरनाम्नि इक्षुभेदे । हिं शत-
पोरक । गुणाः—"शतपर्व्वा भवेत्किञ्चित्कोशका-
रगुणान्वितः । विशेषात्किञ्चिदुष्णश्च सक्षारः पव-
नापहः ॥" भा. । स्त्री (र्व्वा, र्व्विका) । दूर्व्वा-
याम् । वचायाम् । বচ । मे. । क्षीरकटुतैले । प्रयो-
ग. । श्वेतदूर्व्वायाम् । प.मु. । च.चि.३अ. । कटु-
कायाम् । কট্‌কী । रा.नि.व.६। नीलदूर्व्वायाम् ।
रा.नि.व.८ । कलम्बीशाके । भा.पू.१भ.शा.व. ।

**शतपात् (द्)** । स्त्री । शतपद्याम् । কাণকো-
টারী । जटा. । [सु.कल्प.८अ. ।

**शतपादकः** । पुं । अग्निप्रकृतिकीटविशेषे ।

**शतपादिका** । स्त्री । काकोल्याम् । কাঁক্‌-
লা जटा.। कर्णजलौकायाम् । কাণকোটারী।
श.र. ।

**शतपादी** । स्त्री । श्वेतकटभीवृक्षे । रा.नि.व.
६ । See कटभी । नीलापराजितायां । वै.निघ.।

**शतपुत्री** । स्त्री । क्षुद्रशतमूल्याम् । শতমূলী ।
र.सा.सं. । लघुघोषायाम् । ক্ষুদ্র ঘোষা । वै.
निघ. ।

**शतपुष्पः** । पुं । षष्टिकशालिधान्ये । ষেটে ধা-
ন । वै.निघ. । स्त्री (ष्पा, ष्पिका) । (Peuce-
danum Sowa. P. Graveslons.) Drill
seeds. शताह्वायाम् । শুল্‌ফা । श.र. । रा.नि.
व.४ । हिं सोंया । तें पेद्दसदापचेट्टु । गुणाः—
"शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा ।"
अत्रि.१६अ. । "शतपुष्पा तु मधुरा वातपित्तहरा
गुरुः ।" राज.३प.। च.द.वा.ज्व.चि.पिप्पल्यादिः।
मिश्रिभेदे । মৌরী । गवेधुकायाम् । रा.नि.व.४ ।
सु.सू.३६अ. । च.सू.४अ. ।

**शतपुष्पादल(शाक)म्** । क्ली । शताह्वापत्रे ।
শুল্‌ফা শাক । मं सोउप। कं सब्बसिगे । गुणाः
— मधुरमुष्णं गुल्मशूलघ्नं वातघ्नं दीपनं पित्तहृत्
रुच्यञ्च । रा.नि.व.७ ।

**शतपोदः (कः)** । पुं । शतपोनकनामभगन्द-
रविशेषे । शूकरोगे । कश्चित् ।

**शतपोनकः** । पुं, क्ली । शूकरोगविशेषे । तत्र
मेढ्रसमन्तादणुमुखैश्छिद्रैर्व्याप्तं वातशोणितजं भव-
ति । सु.नि.१४अ. । वातजन्यभगन्दररोगे । नि-
दानम् —"कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे
पिड़कां करोति यां । उपेक्षणात् पाकमुपैति दा-
रुणां रुजा च भिन्नारुणफेनवाहिनी । तत्रागमो
मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥"
मा.नि. । "दीर्य्यतेऽणुमुखैश्छिद्रैः शतपोनकवत्
क्रमात् । अच्छं स्रवत्यजस्रं तत्स्रावमजस्रं फेनसंयुतम् ।
शतपोनकसंज्ञोऽयम्...... ॥" वा.उ.२८अ. ।

**शतपोरकः (पोरः)** । पुं । इक्षुविशेषे । गु-
णाः—वंशकेक्षुवत् ईषत् वातशान्तिकरश्च । सु.
सू.४५अ. ।

**शतप्रसूनः** । स्त्री । शताह्वायाम् । শুল্‌ফা ।
रा.नि.व.४ ।

**शतप्रासः** । पुं । करवीरवृक्षे । अम. । [८अ. ।

**शतबाहुः** । पुं । वायव्यकीटविशेषे । सु.कल्प.

**शतभीरुः** । स्त्री । मल्लिकापुष्पवृक्षे । अम. ।

**शतभेदकः (नः)** । पुं । अम्लवेतसे । मद.व.
६ । [आढ़कमाने । अम.भ. ।

**शतमानः** । पुं । रूप्यपले । রূপার থাল ।

**शतमूला** । स्त्री । नीलदूर्व्वायाम् । रा.नि.व.
८ । महाशतमूल्याम् । শতমূলী । रा.नि.व.४ ।
वचायाम् । रा.नि.व.६ ।

**शुक्तिमणिः ।** पुं । मुक्तायाम् । वै.निघ. ।

**शुक्तिबीजम् ।** क्ली । मुक्तायाम् । चिका. ।

**शुक्तिसम्भवम् ।** क्ली । मौक्तिके । मुक्ता । वै. निघ. । [शिम्बा । वै.निघ. ।

**शुक्तयङ्घ्री ।** स्त्री । श्वेतनिर्गुण्ड्याम् । श्वेतनि-

**शुक्रः ।** पुं । श्वेतैरण्डे । रा.नि.व.८ । नेत्रान्तर्ब-लभागे । वै.निघ. । ज्येष्ठे मासि । चित्रकवृक्षे । भम. ।

**शुक्रम् ।** क्ली । मज्जसारभूतधातौ । शुक्र । "अस्थ्नोर्मज्जा ततः शुक्रम्, इति ।" रा.नि.व.१८ । "पाचिताः पित्ततापेन रसाद्या धातवः क्रमात् । शुक्रत्वं यान्ति मासेन ।" शार्ङ्ग.पू.६ अ. । तस्य कर्म्म गर्भोत्पादः । तदुक्तं "रसाद्रक्तं ततो मांसं मांसा-न्मेदः प्रजायते । मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः । यात्यामाशयमाहारः पूर्व्वं प्राणा-निलेरितः । माधुर्य्यं फेनभावञ्च षड्रसोऽपि लभेत सः ।" भा. । "योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे । तत्र गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते । स्त्रीणां गर्भोपयोगि स्यादार्त्तवं सर्व्वस-म्मतम् । तासामपि बलं वर्णं शुक्रं पुष्टं करोति च ।" शुक्रस्वरूपं—"शुक्रं सौम्यं सितं स्निग्धं बल-पुष्टिकरं स्मृतम् । गर्भबीजं वपुःसारो जीवस्याश्र-य उत्तमः ।" गर्भजननशुक्रस्य लक्षणम् । "स्फ-टिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च । शुक्रमि-च्छन्ति केचित्तु तैलक्षौद्रनिभञ्च तत् ॥" इति । "यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा । एवं हि सकले काये शुक्रं तिष्ठति देहिनाम् ॥" इति शुक्र-स्थानम् । "द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चा-प्यधः । मूत्रस्रोतःपथे शुक्रं पुरुषस्य प्रवर्त्तते ।" इति शुक्रक्षरणमार्गः । "कृत्स्नदेहाश्रितं शुक्रं प्र-सन्नमनसस्तथा । स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् संप्रवर्त्तते ॥" इति क्षरणकारणम् । "विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते । सर्व्वदेहाश्रितत्वाच्च शु-क्रलक्षणमुच्यते । तदेव चेष्टयुवतेर्दर्शनात् स्मरणा-दपि । शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्त्तते । सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ।" सु.नि.१० अ. । "यथा पयसि सर्पिस्तु गुड़श्चेक्षौ रसो यथा । शरीरेषु तथा शुक्रम् ।" सु.शा.४ अ. । नेत्ररोग-विशेषे । चिका. ।

**शुक्रकरः ।** त्रि । शुक्रजनने । पुं । मज्जायां । वै.श. ।

**शुक्रकृच्छ्रम् ।** क्ली । मूत्रकृच्छ्ररोगे । निदा. ।

**शुक्रगतज्वरः ।** पुं । तदाश्रितज्वरे—"शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः । मरणं प्राप्नु-यात्तत्र शुक्रस्थानगतज्वरे ।" मा.नि. ।

**शुक्रदः ।** पुं । गोधूमे । वै.निघ. ।

**शुक्रदोषः ।** पुं । षण्ढतारोगे । च.सि.२ अ. ।

**शुक्रधरा ।** स्त्री । सप्तम्यां कलायाम् । या स-र्व्वप्राणिनां सर्व्वशरीरव्यापिनी । सु.शा.४ अ. ।

**शुक्रपुष्पः ।** पुं । कुरुवकशाके । झांटी । प.मु. । स्त्री । श्वेतापराजितायाम् । वै.निघ. ।

**शुक्रभुक् ।** पुं । मयूरे । श.च. ।

**शुक्रभूः ।** स्त्री । मज्जायाम् । श.च. । अस्थि-सारे । [वै.निघ. ।

**शुक्रमाता ।** स्त्री । भार्ग्याम् । ब्राह्मणयष्टी ।

**शुक्रमातृका(वटिका)** । स्त्री । प्रमेहे औ-षधम् । पाठः—"गोक्षुरबीजं त्रिफला पत्रमेला रसाञ्जनं । धान्यकञ्चविका जीरं तालीशं टङ्क-दाडिमौ । प्रत्येकार्द्धपलं दत्त्वा गुग्गुलुः कार्षि-कस्तथा । रसाभ्रलौहगन्धानां प्रत्येकञ्च पलं क्षि-पेत् । सर्व्वमेकीकृतं वैद्यो दृढ़खल्वे विमर्दयेत् । घृतभाण्डे तु संस्थाप्य [illegible] खादयेत् । दा-ड़िमस्वरसेनैव कागद [illegible] वाम्भसा ।" रस.र. ।

**शुक्रमेहः ।** पुं । मेहविशेषे । यत्र रोगी शुक्र-तुल्यं मेहति । मा.नि.६ अ. ।

**शुक्रला ।** स्त्री । उच्चटायाम् । चोकड़ा इति प्रसिद्धक्षुपे । प.मु. । आमलकवृक्षे । आमला गाछ । वै.निघ. ।

**शुक्रवहस्रोतः(स्)** । क्ली । शुक्रवहनाड्यां । तस्य मूलं वृषणौ शेफश्च । च.वि.७ अ. ।

**शुक्रसङ्गः ।** पुं । शुक्ररोधे । भा. ।

**शुक्रा ।** स्त्री । वंशलोचनायाम् । रा.नि.व.६ ।

**शुक्राङ्गः ।** पुं । मयूरे । जटा. ।

**शुक्राधिक्यम् ।** क्ली । श्लेष्मजरोगे । भा. ।

**शुक्राल्पता ।** स्त्री । पित्तजरोगे । भा. ।

**शुक्राश्मरी ।** स्त्री । शुक्रजन्याश्मर्य्यां । শুক্রজ-নাপাথরী । सा शुक्रनिमित्ता भवति । मैथुनाभिघातादतिमैथुनाद्वा शुक्रस्खलितमनिर्गच्छद्विमार्गगमनादनिलोऽभित: संगृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते तां शुक्राश्मरीमिति विद्यात् । सु.नि.३य. ।

**शुक्लम् ।** क्ली । रजते । রূপা । मे. । नवनीते । ননি । श.च. । नेत्ररोगभेदे । लक्षणं —"सुश्वेतं मृदु शुक्लाख्यं शुक्लं तद्वर्द्धते चिरात् ।" निदानम् । पुं । धववृक्षे । ধাওয়া গাছ । रा.नि.व.६ । सवररोध्रे । শ্বেত লোধ । प.मु. । कुन्दवृक्षे । वै.निघ. । श्वेतैरण्डे । वै.निघ.२य. ग्रानोदयरसे ।

**शुक्लकः ।** पुं । चोरिणीवृक्षे । থীর্নী গাছ । वै.निघ. । [डाक् पाखी । श.मा. ।

**शुक्लकण्ठः (का:) ।** पुं । दात्यूहपक्षिणि ।

**शुक्लकन्दः ।** पुं । महिषकन्दे । रा.नि.व.७ । श्वेतालुके । শাঁখ আলু । वै.निघ. । स्त्री (न्दा) । अक्षातिविषायाम् । শ্বেত আতইচ । रा.नि.व.६ । भूमिकुष्माण्डे । वै.निघ. ।

**शुक्लकर्कटः ।** पुं । शुक्लवर्णकर्कटे । ধলা কাঁকড়া । सु.सू.४६अ. । See कृष्णकर्कटकः ।

**शुक्लकुष्ठम् ।** क्ली । श्वित्रे । ধবল । तदौषधं — सोमराजस्य बीजानि नवनीतयुतानि च । मधुना स्वादितानि स्युः शुक्लकुष्ठहराणि वै ॥ गारुडे ।

**शुक्लतुलसी ।** स्त्री । श्वेततुलस्यां । শ্বেততুলসী । तं नक्तटितुलसी । संग्रह: ।

**शुक्लदुग्धः ।** पुं । (Trapa bispaniosa.) जलवृक्षभेदे, शृङ्गाटके । শিঙ্গাড়া । श.च. । [च. ।

**शुक्लधातुः ।** पुं । कठिन्याम् । খড়িমাটী । हि.

**शुक्लपुष्पः (ष्पा, ष्पी) ।** पुं,स्त्री । कुन्दवृक्षे । কুঁদ গাছ । छत्रवृक्षे । श्वेतकोकिलाक्षे । শ্বেত কুলেখাড়া । मरुवकवृक्षे । र.मा. । कृष्णपिण्डारी । পিঠানি বা পেয়ারা । प.मु. । शुभ्रपुष्पमदनवृक्षे । र.सा.सं. । स्त्री । हस्तिशुण्डीवृक्षे । হাতিশুঁড়ে । प.मु. । क्ली । कुन्दपुष्पे । राव.कुमारतन्त्रम् ।

**शुक्लपृष्ठकः ।** पुं । सिन्धुवारवृक्षे । श.च. ।

**शुक्लफला ।** स्त्री । शमीवृक्षे । वै.निघ. ।

**शुक्लफेनः ।** पुं । समुद्रफेने । वै.निघ. ।

**शुक्लभण्डी ।** स्त्री । शुक्लत्रिवृति । শ্বেত তেউড়ী । वै.निघ. । [निर्गुण्डी । वै.निघ. ।

**शुक्लमञ्जरी ।** स्त्री । श्वेतनिर्गुण्ड्याम् । শ্বেত-

**शुक्लमण्डलम् ।** क्ली । नेत्रस्य शुक्लभागे । निदा. । [tas.) शुभ्रमुद्गे । শাদামুগ । Walts.

**शुक्लमुद्गः ।** पुं । (Phaseolus subloba-

**शुक्लमूलम् ।** क्ली । श्वेतलशुने । वै.निघ. ।

**शुक्लरोहितः ।** पुं । श्वेतरोहितकवृक्षे । শ্বেত রোড়া, রয়না । रा.नि.व.८ ।

**शुक्लला ।** स्त्री । उत्कटायाम् । ওকড়া । र.मा. । आमलके । वै.निघ. ।

**शुक्लवंशः ।** पुं । श्वेतवंशे । শ্বেতবাঁশ । रा.नि.व.८ । राव.कार्म्मणशतके ।

**शुक्लवर्गः ।** पुं । खटिन्यादिवर्गे । यथा—"खटिनी श्वेतसंयुक्ता शङ्खशुक्तिवराटिका: । भष्टाश्मशर्कराश्चेति शुक्लवर्ग उदाहृत: ॥" रा.नि.व.१२ ।

**शुक्लवायसः ।** पुं । बकपक्षिणि । বকপাখী । त्रिका. ।

**शुक्लबृहती ।** स्त्री । श्वेतबृहत्याम् । भैष.ग्र. पि.चि.पानीयभक्तवट्यां । प्रयोगा.ग्रहणी.चि.पानीयभक्ती । [वै.निघ. ।

**शुक्लवृक्षः ।** पुं । धववृक्षे । ধাওয়া গাছ ।

**शुक्लशालः ।** पुं । गिरिनिम्बे । रा.नि.व.६ । श्वेतशालि । शब्दकल्प: ।

**शुक्लसारङ्गः ।** पुं । शुक्लचातके । च.मू.२७अ. ।

**शुक्लक्षीरा ।** स्त्री । काकोल्याम् । কাঁকুলা । रा.नि.व ३ ।

**शुक्ला ।** स्त्री । शर्करायाम् । চিনি । र.मा. । श्वेतवचायां । শ্বেতবচ । क्षीरकाकोल्यां । वै.निघ. । काकोल्याम । কাঁকুলা । रा.नि.व.३ । विदार्य्याम् । ভূকুষ্মাণ্ড । रा.नि.व.७ । शेफालिकायाम् । নিশিন্দা । रा.नि.व.४ । स्नुह्याम् । মনসা গাছ । रा.नि.व.८ ।

**शुक्लाङ्गः** । पुं । द्वीपान्तरवचायाम् । তোপচিনি । वै.निघ. । [निशिन्दा । रा.नि.व.४ ।

**शुक्लाङ्गी** । क्ली । शेफालिकायाम् । शिउली,

**शुक्लाजाजी** । स्त्री । श्वेतजीरके । वै.निघ. ।

**शुक्लापाङ्गः** । पुं । मयूरे । हे.च. ।

**शुक्लाम्लम्** । क्ली । चक्राम्लके । रा.नि.व.७ ।

**शुक्लार्कः** । पुं । श्वेतार्कवृक्षे । শ্বেত আকন্দ । दे. विलिय अर्के । मं पांढरीरुई । गुणाः—कटुतिक्तोष्णः मलशोधनः मूत्रकृच्छ्रकशोफव्रणघ्नश्च । रा.नि.व.१० । सारकः वातकुष्ठकण्डूविषव्रणप्लीहगुल्मार्शोनलकर्णोदरकृमिघ्नश्च । तत् पुष्पं शुक्रजनकं लघु दीपनं पाचकम् अरोचकार्शःकासश्वासहरं च । भा.पू.१भ. ।

**शुक्लार्म** (न्) । क्ली । शुक्लगतनेत्ररोगविशेषे । लक्षणं यथा—"शुक्लाख्यं मृदु तु कथयन्ति शुक्लभागे श्वेतं सममिह वर्द्धते चिरेण ।" सु.उ.४अ. । "श्वेतं मृदु शुक्लार्म शुक्ले तद्वर्द्धते चिरात् ।" मा.नि. ।

**शुक्लाहिफेनः** । पुं । (Popaver somniferum.) White poppy, opium. शुक्लपुष्पाहिफेनवृक्षे । শ্বেত পুস্তদানার গাছ । हिं पोस्त, खसखस्‌का पेड़ । तें पुस्तकायचेट्टु । बम्. खसखसीचें भाड़ । Watts.

**शुक्लाश्वः** । पुं । अश्वजातीयश्वेतवर्णपक्षिणि । सु.सू.४६अ. । See अश्वः ।

**शुक्लोपला** । स्त्री । शर्करायाम् । চিনি । र.मा. ।

**शुक्लोदनम्** । क्ली । आतपान्ने । আতপ চাউল । रा.नि.व.१६ । (रावणकृतकुमारतन्त्रम् ।)

**शुङ्गः** । पुं । वटवृक्षे । आम्रातकवृक्षे । আমড়া গাছ । शूके । শুঙ । पर्कटीवृक्षे । পাকুড়গাছ । मे. । नवपल्लवे । हे.च. । [वटवृक्षे । जटा. ।

**शुङ्गी** (ङ्गिन्) । पुं । प्लक्षवृक्षे । পাকুড় গাছ ।

**शुचिः** । पुं । चित्रकवृक्षे । চিতা গাছ । आषाढमासे । अम. । ज्येष्ठे मासि । ग्रीष्मकाले । मे. । यवे । पलाशवृक्षे । वै.निघ. ।

**शुचिद्रुमः** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**शुचिमल्लिका** । स्त्री । नवमल्लिकायाम् । रा.नि.व.१० ।

**शुचिव्रतः** । पुं । प्रपौण्डरीके । পুণ্ডরিয়া । वै.निघ. । [त्रिका. । श.र. ।

**शुटीरता (टीर्य्यम्)** । स्त्री, क्ली । वीर्य्ये ।

**शुण्टः (ण्टी)** । पुं,स्त्री । शुष्कार्द्रके । শুঁঠ । अम. । चौड़ाशुष्ठीति च ख्याता । प.मु. ।

**शुण्ठम्** । क्ली । गुच्छामिनीतृणे । वै.निघ. ।

**शुण्ठः (ण्ठी)** । पुं, स्त्री । (Gingiber officinale.) स्वनामख्यातौषधौ । शुण्ठीति सुब्येव भाषा । শুঁঠ । गुणाः—कटूष्णा स्निग्धा कफशोफवातघ्नी शूलविबन्धोदराध्मानश्वासश्लीपदघ्नी च । रा.नि.व.६ । लघुः पाचनी रुच्या आमवातहरी मधुरपाका कीटवद्धताशान्तिकरी बलकरी स्वर्य्या अर्शोवाधुरोगहरी च । अग्निगुणभूयिष्ठत्वादाभ्यन्तरद्रवभागं शोषयित्वा मलसंग्रहं करोति । भा.म.१भ. । "नागरं (शुण्ठी) कफवातघ्नं विपाके मधुरं कटु । वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥" सु.सू.४६अ. ।

**शुण्ठीघृतम्** । क्ली । ग्रहण्याम आमवाते च घृतम् । "विश्वौषधस्य गर्भेण दशमूलजले शृतम् । घृतं निहन्यात् श्वयथुं [illegible] आमतामयम् ॥" च.द. । भा. ।

**शुण्ठाम्** । क्ली [illegible]याम् । শুঁঠ । श.च. ।

**शुण्डरोहः** । पुं । मूर्वायां । [illegible]तृण । रा.नि.व.८ ।

**शुण्डा** । स्त्री । गलशुण्डीनामरोगे । रा.नि.व.२० । सुरालये । सुरायां । करिहस्ते । मे. ।

**शुण्डारः** । पुं । करिशुण्डाकारे दकयन्त्रभेदे दकयन्त्र, চোয়াইবার যন্ত্র ।

**शुण्डालः** । पुं । गजे । (धनञ्जयः) ।

**शुण्डिका** । स्त्री । स्फोटके । ফোড়া । रा.नि.व.२० । उपजिह्विकायां । আলজিভ । शब्दकल

**शुण्डिनी** । स्त्री । कुकुन्दर्य्यां । ছুঁচা । वै.निघ

**शुण्डिमूषिका** । स्त्री । कुकुन्दर्य्याम् । ছুঁচা । रा.नि.व.१९ ।

**शुण्डी** । स्त्री । कौसुम्भीशाकी । रा.नि.व.१६ । हस्तिशुण्डीवृक्षे । হাতিশুঁড়ে গাছ । रा.नि.व.

**शुद्धम्** । क्ली । सैन्धवे । रा.नि.व.६ । मरिचे । रा.नि.व.६ । रौप्ये । गुग्गुलुगन्धे । वै.निघ. ।

**शुद्धजङ्घ:** । पुं । गर्दभे । त्रिका. ।

**शुद्धमांसम्** । क्ली । मांसव्यञ्जने, पक्वमांसे । মাংসের তরকারি । यथा—"पाकपात्रे घृतं दद्यात्तैलं वा तदभावत: । तत्र हिङ्गु हरिद्राञ्च भर्ज्जयेत्तदनन्तरं । छागादेरस्थिरहितं मांसं तत्खण्डखण्डितम् । धौतनिर्गालितं तस्मिन् घृते तद्भर्जयेच्छनै: । सिद्धयोग्यं जलं दत्त्वा लवणञ्च पचेतत: । सिद्धे जलेन सम्पिष्य वेशवारं परिक्षिपेत् । वेशवारस्य द्रव्याणि नागवल्लीदलानि हि । तण्डुलाश्च लवङ्गानि मरिचानि समासत:......।" गुणा:—"शुद्धमांसं परं वृष्यं बल्यं रुच्यञ्च वृंहणं । त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम् ।" भा. ।

**शुद्धवल्लिका** । स्त्री । गुडूच्याम् । গুলঞ্চ । श.च. ।

**शुद्धा** । स्त्री । कुटजवीजे । ইন্দ্রযব । वै.निघ. ।

**शुद्धान्तपालक:** । पुं । नपुंसके । হিজড়ে । श.च. ।

**शुद्धि:** । स्त्री । वमनादिभि: शोधने । सा चतुर्विधा लैङ्गिकी वैशिकी मानिकी आन्तिकी चेति । च. ।

**शुद्धिकन्द:** । पुं । लशुने । वै.निघ. ।

**शुन: (क:)** । पुं । कुक्कुरे । अ.टी.भ. । रा.नि.व.१९ । [कौ । रा.नि.व.४ ।

**शुनकचञ्चुका** । स्त्री । क्षुद्रचञ्चुक्षुपे । চেঁচ্

**शुनकचिल्ली** । स्त्री । चिल्लीशाके । চিলিশাক । मुर्गीचिल्ली, नायचिल्लिके, कुतवचील इति महाराष्ट्रादौ ख्याता गुणा:—कटुस्तीक्ष्णा कण्डूव्रणहरी च । रा.नि.व.७ ।

**शुनि:** । पुं । कुक्कुरे । श.च. । स्त्री (नी) । कुष्माण्डाम् रा.नि.व.७ ।

**शुभम्** । क्ली । पद्मकाष्ठे । रा.नि.व.१२ । रौप्ये । पुं । छागे । अ.टी. । [८ ।

**शुभक(ङ्क)री** । स्त्री । शमीवृक्षे । रा.नि.व.

**शुभग:** । पुं । टङ्कणक्षारे । সোহাগা । र.सा.सं. । रस.र.ज्व.चि. । "शुभगविटमिलानाम् ।"

**शुभगन्धकम्** । क्ली । बोले । रा.नि.व.१२ ।

**शुभद:** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ । [४ ।

**शुभपत्रिका** । स्त्री । शालपर्ण्याम् । रा.नि.व.

**शुभा** । स्त्री । वंशरोचनायाम् । रा.नि.व.६ । र.सा.सं. पुष्करलेहे, कुशावलेहे, वासाखण्डकुष्माण्डे च । सूक्ष्मायाम् । পিড়িং । शुक्लवचायाम् । শ্বেত বচ । वै.निघ. । गोरोचनायाम् । रा.नि.व.१२ । तवक्षीरे । पाठायाम् । আকনাদি । वै.निघ. । शमीविशेषे । रा.नि.व.८ । प्रियङ्गौ । रा.नि.व.१२ । श्वेतदूर्व्वायाम् । रा.नि.व.८ । शताह्वायाम् । শুলফা । सा.कौ. शङ्खक्षीरकादिमोदके ।

**शुभाकिनी** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**शुभाञ्जन:** । पुं । रक्तशिग्रुवृक्षे । লাল সজিনা । र.मा. ।

**शुभेक्षण:** । पुं । मञ्जीरे । वै.निघ. ।

**शुभ्रम्** । क्ली । पद्मकाष्ठे । वै.निघ. । उशीरे । বেণা । रा.नि.व.१२ । अभ्रधातौ । जटा. । रौप्यधातौ । मेदोधातौ । वै.निघ. । कासीसे । হিরেকস্ । रा.नि.व.१३ । रौप्यमाक्षिके । वै.निघ. । गड़लवणे । रा.नि.व.६ । सैन्धवलवणे । वै.निघ. । त्रि. । शुभ्रवर्णे । पुं । चन्दनवृक्षे । श.च. । स्त्री । वंशरोचनायाम् । रा.नि.व.६ । स्फटिकार्य्याम् । ফটকিরি । भा. । शर्करायाम् । वै.निघ.२भ.सर्व्वज्वरे भार्ग्यादिचूर्णम् । श्वेतकण्टकारके । वै.निघ. ।

**शुभ्रतरु:** । पुं । शिरीषवृक्षे । प.मु. । [व.४ ।

**शुभ्रपुष्पा** । स्त्री । श्वेतशरपुङ्खायाम् । रा.नि.

**शुभ्रपुष्पम्** । क्ली । वीरणतृणे । বেণা । वै.निघ. ।

**शुभ्रवेष्ट:** । पुं । श्वेतशाल्मल्यां । वै.निघ. ।

**शुभ्रसर्षप:** । पुं । श्वेतसर्षपे । वै.निघ. ।

**शुभ्रांशु:** । पुं । कर्पूरे । रा.नि.व.१२ ।

**शुभ्रालु:** । पुं । महिषकन्दे । श्वेतालौ । শাঁক আলু । रा.नि.व.७ ।

**शुभ्रिका** । स्त्री । मधुशर्करायाम् । वै.निघ. ।

**शुल्कवायस:** । पुं । बकपक्षिणि । त्रिका. ।

**शुल्या** । स्त्री । सुनिषस्नकशाके । वै.निघ. ।

**शुल्ल(ल्व)म्** । क्ली । ताम्रे । তামা । प.मु. । रस.र.एकादशायसे । रा.नि.व.१३ । वै निघ.मूत्रादिगुल्माम् । [रस.चि. ।

**शुल्वपत्रम्** । क्ली । ताम्रपत्रे । তামার পাত ।

**शुल्वरिपुः** । पुं । गन्धके । हे.च. । र.सा.सं. ।

**शुल्वशत्रुः** । पुं । गन्धके । वै.निघ. ।

**शुल्वारिः** । पुं । गन्धके । हे.च. ।

**शुश्रूषा** । स्त्री । सेवायाम् । त्रिका. ।

**शुषणी** । स्त्री । स्वनामख्यातशाके । শুশুনি শাক । गुणाः—"शुषणी कफवातघ्नी महाराष्ट्री च तादृशी ।" राज.३प. ।

**शुषिरम्** । क्ली । लवङ्गे । प.मु. । पुं । मूषिके । मे. । स्त्री । नलीनामगन्धद्रव्ये । अम. ।

**शुष्कम्** । क्ली । कृष्णागुरुणि । र.मा. ।

**शुष्कगोमयः** । पुं । वनकरीषे । বিলঘুঁটে । त्रिका. ।

**शुष्कपत्रम्** । क्ली । शुष्कपत्रशाके । নালিতা পাতা, শুক্‌পাতা । गुणाः—"शुष्कपत्रं पर्योमिश्रं पित्तश्लेष्मज्वरापहं ॥ तत्शुष्कपत्रं जलदोषनाशनं विशेषतः पित्तकफज्वरापहं । जलञ्च तस्यापि च पित्तहारकं सुरोचनं व्यञ्जनयोगकारकम् ।" राज.३प. ।

**शुष्कमत्स्यः** । पुं । सलवणे रौद्रशोषितमत्स्ये । শুটকী মাছ । शब्दकल्प. । See मत्स्यः ।

**शुष्कमांसम्** । क्ली । नीरसमांसे । শুকান মাংস । गुणाः—"वृद्धानां दोषलं मांसं बालानां बलदं लघु । त्रिदोषकृद्व्यालजुष्टं शुष्कं शूलकरं गुरु ॥" भा. ।

**शुष्कमुखः** । त्रि । मुखशोषयुक्ते । वा.चि.८अ. ।

**शुष्कमूलम्** । क्ली । रौद्रशोषितमूलके । শুক্‌নামূলা । वा.चि.७अ. ।

**शुष्कमूलकाद्यतैलम्** । क्ली । शोथाधिकारे तैलम् । पाठः—"शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः । पक्वमभ्यञ्जनात्तैलं सशूलं श्वयथुं जयेत् । इति स्वल्पं । वृहद्‌यथा—কাথার্থ—শুকমূল, দশমূল, পিপ্পলামূল, পুনর্নবামূল প্রত্যেকে ১৬ প. জল ৫১২ প. শে. ৬৪ প. । তিল তৈল ৬৪ প. গোমূত্র ৬৪ প. । কল্কার্থ—শুষ্কমূলা, গুলঞ্চ, শুঁট, পলতা, পিপুলমূল, বেলেড়া, আকনাদি, পুনর্নবা, রাস্না, বেণারমূল, সজিনাবীজ, নিশিন্দা, অনন্তমূল, করঞ্জবীজ, বাসাছাল, পিপুল, হরীতকী, বচ, কুড়, রাস্না, বিড়ঙ্গ, চই, হরিদ্রা, দারুহরিদ্রা, ধনে, যবক্ষার, সাচিক্ষার, সৈন্ধব, দেবদারু, পদ্মবীজ, শটী, গজপিপুল, বেলশুঁটা, মঞ্জিষ্ঠা প্র. ৪ তো. । रस.र. ।

**शुष्कमूलाद्यघृतम्** । क्ली । उदावर्त्ताधिकारे घृतम् । पाठः—"मूलकं शुष्कमार्द्रञ्च वर्षाभूर्मूलपञ्चकम् । आरेवतफलञ्चापि पिष्ट्वा तेन पचेद्घृतम् ॥" रस.र. । भा. ।

**शुष्करेवती** । स्त्री । बालग्रहविशेषे । लक्षणं—"जायते शुष्करेवत्यां क्रमात् सर्व्वाङ्गसंक्षयः ।" वा.उ.२अ. ।

**शुष्कली** । स्त्री । शुष्कमांसे । मांसे । शब्दकल्प. ।

**शुष्कवृक्षः** । पुं । धववृक्षे । ধাওয়া গাছ । रा.नि.व.९ ।

**शुष्कव्रणः** । पुं । योनिकन्दरोगे । त्रिका. । See कन्दः । কিণ । ঘ্যাঁটা । त्रिका. ।

**शुष्का** । स्त्री । योनिरोगे । लक्षणं यथा—"वेगरोधादृतौ वायुः दुष्टो विण्मूत्रसंग्रहम् । करोति योनेः शोषञ्च शुष्काख्या सातिवेदना ॥" वा.उ.३३अ. । [दाकम् ।

**शुष्काङ्गः** । पुं । धववृक्षे । ধাওয়া গাছ । वै-

**शुष्काङ्गी** । स्त्री । बलाकायाम् । वै.निघ. । गोधिकायाम् । গোশাপ । श.च. ।

**शुष्कार्द्रम्** । क्ली । शुण्ठ्याम् । श.च. ।

**शुष्कार्शः** । क्ली । नेत्रवर्त्मगतरोगे । लक्षणं—"दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः । व्याधिरेष समाख्यातः शुष्कार्श इति सञ्ज्ञितः ॥" सु.उ.२अ. ।

**शुष्काशुष्कः** । पुं । समुद्रफेने । वै.निघ. ।

**शुष्काक्षिपाकः** । पुं । सर्व्वगताक्षिरोगे । लक्षणं यथा—"यत् कूणितं दारुणरूक्षवर्त्म संदह्यते चाविलदर्शनं यत् । सुदारुणं यत् प्रतिबोधने च

शुष्काचिपाकोपहतं तदचि ॥" मा.नि. । "वात-पित्तोत्तरं घर्षतोदभेदोपदेहवत् । कषदाकाव-मच्चिन्नर्क्ष्णोन्मीलनमीलनम । विकूणनं विशुष्कत्वं शीतेच्छा शूलपाकवत् । उक्तः शुष्काचिपाकोऽय म ।" वा.उ.१५ऋ. ।

**शुष्मम्** । क्ली । तेजसि । मे. ।

**शुष्मा (न्)** । पुं । चित्रकवृक्षे । अम. ।

**शूकम्** । क्ली । स्वनामख्याततृणे । शुग्रांधास । गुणः—अतिदुर्जरम् । रा.नि.व.८। ग्रन्थिपर्णभेदे । वै.निघ. । शुङ्गायां । शुङा । अम. । मा.ज्व.नि. ।

**शूकः** । पुं । सविषजलमर्लोङ्कस्वल्पडुण्डुभादि-जन्तौ । शूकप्रधानलिङ्गवृद्धिकररोगे । शब्दकल्पे । वात्स्यायनः । ऊर्णादिभचककीटविशेषे । शुग्रा । कृमिशूके । च.सू.१८ऋ. । शूकरोगे । निदा. ।

**शूककः** । पुं । रसे । मे. ।

**शूककीटः (कः)** । पुं । ऊर्णादिभचकशूक युक्तकीटविशेषे । शुग्रांपोका । अम. ।

**शूकजः** । पुं । यवचारे । वै.निघ. ।

**शूकतृणम्** । क्ली । तृणविशेषे । ट्रोंश्कलौ । हिं शूकड़ो । गुणाः—"दुर्जरश्च पशूनाञ्च शूका-भावे हितश्च तत् ।" रा.नि.व.८ ।

**शूकदोषः (रोगः)** । पुं । लिङ्गवर्द्धनौषधले-पजनितव्याधिविशेषे । "लिङ्गवृद्धिमिच्छतामक्रम-प्रवृत्तानां शूकदोषनिमित्ता अष्टादश रोगा जायन्ते सर्षपिकादयः । यथा—सर्षपिका । अष्ठीलिका । ग्रथितम् । कुम्भीका । अलजी । मृदितम् । सं-मूढ़पिड़का । अवमन्थः । पुष्करिका । स्पर्शहानिः । उत्तमा । शतपोनकः । त्वक्पाकः । शोणितार्बुदम् । मांसार्बुदम् । मांसपाकः । विद्रधिः । तिलकाल-कश्चेति ।" सु.नि.१४ ऋ. । विशेषाः स्वस्वपर्य्याये द्रष्टव्याः ।

**शूकधान्यम्** । क्ली । शूकसमन्वितव्रीह्यादि-धान्ये, तृणधान्ये । तदुक्तं "व्रीह्यादिकं यदिह शू-कसमन्वितं स्यात्तत् शूकधान्यमथ मुद्गमकुष्ठका-दि । शिम्बीनिगूढ़मिति तत् प्रवदन्ति शिम्बीधान्यं तृणोद्भवमथो तृणधान्यमन्यत् ॥" देशे देशे शूक-धान्यानां वैचित्र्यात् संख्यातुमशक्यतया भोगोप-योग्यान्येव निघण्टुकारेण उक्तानि । तत्र त्रिभेदं प्रतियवनिःशूकतोक्भेदेन । गुणाः—दोषशमनं लघु तेजोबलवीर्य्यवृद्धिकरम् । रा.नि.व.१६ । अ-पिच । "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । परतीवातकृद्रुक्षं प्रायेणाभिनवं गुरु ॥" राज. ।

**शूकपत्रः** । पुं । निर्विषसर्पे । सु.कल्प ४ऋ. ।

**शूकपाक्यः** । पुं । यवचारे । संग्रहः ।

**शूकपिण्डिः (ण्डी)** । स्त्री । शूकशिम्ब्याम् । आलाकुशी । श.मा. ।

**शूकरः** । पुं । पशुविशेषे । शुयार । सा.गुणाः —"तथैव गण्डगवयमहिषोष्ट्रतुरङ्गकाः । विवस्नि-गुरवः स्निग्धा वातालास्ते प्रकीर्त्तिताः । मांसगुणाः —"वातघ्नं रोचनं वृष्यं दुर्जरं श्रमनाशनम् । वा-तलं पित्तशमनं रुचिदं धातुवर्द्धनम् ॥" अचि: २०ऋ. । "स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहं । वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ।" च. । स ग्राम्यवन्यभेदाद्द्विविधः । तयोरारण्यस्य मांसं —गुरु वातहरं वृष्यं बलकरं स्वेदकरञ्च । तथा ग्राम्यवराहमांसं—तस्मादगुरु मेदोबलवीर्य्यवृद्धिञ्च करोति । रा.नि.व.१७ ।

**शूकरकन्दः** । पुं । वाराहीकन्दे । रा.नि.व.७।

**शूकरदंष्ट्रः (कः)** । पुं । तन्नामकक्षुद्ररोगभेदे, गुदभ्रंशस्यैव प्रकारभेदे । लक्षणं—"सदाहो रक्त-पर्य्यन्तस्त्वक्पाकी तीव्रवेदनः । कण्डूमान् ज्वरका-री च स स्याच्छूकरदंष्ट्रकः ॥" भा. ।

**शूकरपादिका** । स्त्री । कोलशिम्ब्याम् । रा.नि.व.३ ।

**शूकरशिम्बी** । स्त्री । कोलशिम्ब्यां । सूयरा-सेवोति पाश्चात्ये । भा.म.४भ. । "शूकरशिम्बीमू लम् ।" [वराक्रान्ता । श.र. ।

**शूकराक्रान्ता** । स्त्री । वराहक्रान्तायाम् ।

**शूकरी** । स्त्री । वाराहीकन्दे । शिशुमारस्त्रि-याम् । रा.नि.व.२३ । वराहक्रान्तायाम् । वरा-क्रान्ता । श.र. । ह्रद्दारके । वीजताड़क । अभावे चर्मकारालुकम् । वा.उ.६ऋ. । "कायस्था शूकरी छत्रा ।" च.द.सि.यो.उन्मा.चि.महापैशा-चघृते । [८६

**शूकरेष्टः** । पुं । कशेरौ । केशुर । रा.नि.व.

**शूकला ।** स्त्री । शालिधान्यविशेषे । सा पित्त-वातघ्नी । चक्रि.१५च. । [श.च. ।

**शूकवती ।** स्त्री । कपिकच्छाम् । आलकुशी ।

**शूकदन्तः ।** पुं । कीटविशेषे । तया दष्टे कण्डू-शोठाः प्रवर्द्धन्ते शूकघातं लस्यते । सु.कल्प.८च. ।

**शूकशिम्बा(म्बिः,म्बिका)(म्बी) ।** स्त्री । (Macuna pruriens) Cowhege plant. कपिकच्छाम् । आलकुशी । शूयाम्बु इति पूर्व-बङ्गे । हिं गोंचा, किवाच । ता. पूनाइक्, का-लि । तें पिल्लि अडुगु । मं कवच् । बम्. कुहि-सा । रा.नि.व.३ । [श.च. ।

**शूका ।** स्त्री । कपिकच्छुलतायाम् । आलकुशी ।

**शूकापूटः ।** पुं । तृणमणौ । कापुरदाना, का-हाह् बा इति च पारस्यभाषा । हारा. ।

**शूकाभपुष्पः ।** पुं । शिरीषवृक्षे । वै.निघ. ।

**शूकावृः ।** पुं । शिरीषवृक्षे । आयुर्वेदसारे सा.ज्वरे ।

**शूकावृबीजम् ।** क्ली । शिरीषबीजे । शिरी-षबीज । "शूकावृबीजगोमूत्रम्" आयुर्वेदसारे ।

**शूतिपर्णः ।** पुं । आरग्वधवृक्षे । शोन्दाल-गाछ । श.र. ।

**शूद्रप्रियः ।** पुं । पलाण्डौ । रा.नि.व.७ ।

**शूद्रार्त्ता ।** स्त्री । प्रियङ्गुलतायाम् । श.च. ।

**शूनकः ।** त्रि । शोथयुक्ते । "शूनकस्तेन सीद-ति ।" मा.नि. ।

**शूनकचञ्चुकः ।** पुं । चुद्रचञ्चुरूपे । वै.निघ. ।

**शूना ।** स्त्री । फणिमनसा इति ख्याते वृक्षे । श. च. । अधोजिह्विकायां । आलजिभ । हारा. ।

**शून्यम् ।** क्ली । स्वर्णे । वै.निघ. । [८ ।

**शून्यमध्यः ।** पुं । नले । नलगाछ । रा.नि.व.

**शून्या ।** स्त्री । बन्ध्यायां स्त्रियि । रा.नि.व.१८ । नलीनामगन्धद्रव्ये । मे. । महाकण्टकिनीवृक्षे । फणिमनसा । श.च. ।

**शूपकारः ।** पुं । शूद्रपाचके । पुराणम् ।

**शूरः ।** पुं । सिंहे । वनशूकरे । रा.नि.व.१९ । चित्रकवृक्षे । सर्जतरौ । लकुचवृक्षे । रा.नि.व. १९ । मसूरे । रा.नि.व १६ ।

**शूरणः ।** पुं । (Amorphophallus companulatus, Syn. Arum companulatum.) ওলাইতি [illegible] ওল । हिं [illegible] कन्द, ओल । तें मुचकन्द । बम्. जंगि[illegible] । ता. करणा । सुरण, सूरणा इति महाराष्ट्रकर्णाटयो ख्यात: । स त्रिविध: श्वेतरक्ता-रण्यभेदेन । गुणा: —कटु: रुच्य: दीपन: पाचन: क्रिमिकफवातघ्न: श्वासकासवमनघ्न: विशेषतोऽर्शो-घ्न: शूलगुल्मघ्नश्च । रा.नि.व.७ । "दीपन: शूरणो रुच्य: कफघ्नो विशदो लघु: । विशेषात् सर्वपथ्य: स्यात् प्लीहगुल्मविनाशन: ।" सम्मानयोगसंग्रह: "अर्शिकायां: स्मृत: कन्दो ग्रहण्यर्शोहितो लघु:" अपि च —"सर्व्वेषां कन्दशाकानां शूरण: श्रेष्ठ उच्यते । दीपनोऽर्शकृद्यागुल्मक्रिमिप्लीहविनाशन: । दद्रूणां रक्तपित्तानां कुष्ठानां न प्रशस्यते ।" भा. अनि.२६च. । "शूरणो दीपनो रुच्य: कफघ्नो विशदो लघु: । विशेषादर्शसां पथ्यो ग्राम्यकन्दस्तु दोषल: ।" राज. तस्य रक्तस्य गुणा: —विष्टम्भी लघु: तीक्ष्ण: कटुरुष्ण: रुच्य: दीपन: पाचन: पित्तल: क्रिमिकफगुल्मगुल्मघ्नश्च । वै.निघ. । श्वेतोरु-कन्दे । श.मा. ।

**शूरणपिण्डिका ।** स्त्री । अर्शसि औषधम् ओलचूर्णं १६ तो. चित्रकमूलं ८ तो. शुण्ठीचू-२ तो. मरिचचूर्णं १ तो. गुड़: २० तो. । च.द.

**शूरणमोदकः ।** पुं । स्वल्पाख्योऽर्शौषधि पाठ: —"मरिचमहौषधचित्रकशूरणभागा यथोत्त-रं द्विगुणा: । सर्व्वसमो गुड़भाग: सेव्योऽयं मोद-क: प्रसिद्धफल: ।" मरिच १ भ. शुंठि २ भ. चिताार मूल ४ भ. ओलचूर्ण ८ भ. गुड़ सर्व्व-मान । वृहत् यथा —ओल ३२ तो. चिताार ১৬ তো. শুঁট ৮ তো. ত্রিফলা প্রত্যেকে তো. পিপুল, পিপুলমূল, তালিশপত্র, ভেলার মুটি, বিড়ঙ্গ প্রত্যেকে ৮ তো. তালমূ ১৬ তো. বৃদ্ধদারকবীজচূর্ণ ৩২ তো. গুড় ৪ তো. এলা ৪ তো. সর্বচূর্ণ দ্বিগুণ গুড় [পাথী । श.र. मा. ।

**शूरणोद्भुजः ।** पुं । पक्षिविशेषे । [illegible]

**[श]ूरा** । स्त्री । चीरकाकोल्याम् । वै.निघ. ।

**[शू]रिमृग:** । पुं । वराहादौ । "शूकरादयश्च [शू]रिण:" इति । अग्नि.२८अ. ।

**[शू]र्प:** । पुं । द्रोणद्वयपरिमाणे । श.मा. ।

**[शू]र्पपर्णी** । स्त्री । मुद्गपर्ण्याम् । मुगानी । रा. नि.व.३ । माषपर्ण्याम् । माषाणी । "ब्रह्मीरदेवा [द्व]यशूर्पपर्ण्यः ।" वा.सू.१५अ.विदार्यादौ ।

**[शू]र्पश्रुति:** । पुं । गजे । हाति । हारा. ।

**[शू]लम्** । क्ली । स्वनामख्यातरोगे । शूल रोग । "दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् । सर्व्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥" निदा नादि —"व्यायामयानादतिमैथुनाच्च प्रजागराच्छी तजलातिपानात् । कलायमुद्गाढ़किकोरदूषादत्य- र्थरूक्षाध्यशनाभिघातात् । कषायतिक्तातिविरूढ़ जान्नविरुद्धवल्लूरकशुष्कशाकात् । विट्शुक्रमूत्रानि- लवेगरोधात् शोकोपवासादतिहास्यभाष्यात् । वायुः प्रवृद्धो जनयेद्धि शूलं तत्पार्श्वपृष्ठत्रिकवस्तिदेशे । जीर्णे प्रदोषे च घनागमे च शीते च कोपं समु- पैति गाढ़ं । मुहुर्मुहुश्चोपशमप्रकोपौ विड्वात- संस्तम्भनतोदभेदैः । संस्वेदनाभ्यञ्जनमर्द्दनाद्यैः स्नि- ग्धोष्णभोज्यैश्च शमं प्रयाति ..... ॥" इत्यादि । मा.नि. । "वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः। क्षारचूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये ॥" च.द. । अश्वशूलरोगे । तच्च पञ्चधा । ज.द. ।

**[शू]लघातनम्** । क्ली । मण्डूरलौहे । मण्डूर । श.च. । [घर्जिकाचारे । साजिमाटी । र.सा.सं.।

**[शू]लघ्न:** । पुं । तुम्बुरुक्षुपे । र.मा.। स्त्री (घ्नी) ।

**[शू]लद्विट्** । क्ली । हिङ्गुनि । हिং । र.मा. ।

**[शू]लनाशनम्** । क्ली । सौवर्च्चललवणे । সচল লবণ । हे.च. । हिङ्गुनि । पुष्करमूले । वै.निघ. ।

**[शू]लपत्री** । स्त्री । शलीतृणे । रा.नि.व.८ ।

**[शू]लवज्रिणी (वटिका)** । स्त्री । शूलाधि- कारे औषधम् । पाठ:—"रसगन्धकलौहानां प- लार्द्धेन समन्वितं । टङ्कणं रामठं शुण्ठी त्रिकटु त्रिफला शटी । लवंगैलापत्रतालीशं जातीफलल- वङ्गकम् । यमानी जीरकं धान्यं प्रत्येकं तोलकं शुभम् । माषैका वटिका कार्य्या छागीदुग्धप्रपे षिता ॥" अनु. शीतजलं छागीदुग्धञ्च । रस.र. ।

**शूलशत्रु:** । पुं । एरण्डवृक्षे । श.र. । [दा.।

**शूलशब्द:** । पुं । उदरमध्ये गुड़गुड़ाशब्दे । नि-

**शूलहन्त्री** । स्त्री । यमानीक्षुपे । रा.नि.व.६ ।

**शूलहरम्** । क्ली । पुष्करमूले । वै.निघ. ।

**शूलहृत्** । पुं । हिङ्गौ । रा.नि.व.६ । त्रिका. ।

**शूलाकृतम्** । क्ली । शूलविद्धदग्धे पक्वमांसे । কাবাব । अम. । त्रि । शूलदग्धे । [नि.व.८।

**शूलारि:** । पुं । इङ्गुदीवृक्षे । জিয়াপুতা । रा.

**शूलिक:** । पुं । शशके । খড়গোস । हे.च. । क्ली । शूलविद्धपक्वमांसे । কাবাব । श.च. ।

**शूलिन:** । पुं । भाण्डीरपुष्पवृक्षे । ভাণ্ডীর গাছ । श.मा. । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । स्त्री (नी)। नागवल्लीलतायां । पुत्रदात्रीलतायाम् । वै.निघ. ।

**शूली** (इन्) । त्रि । शूलरोगवति । पुं । शशके । भा. । स्त्री । स्वनामख्यातलतायां । শোলা । वम्. शूली, कं सोगली । गुणा:— पिच्छिला कवोष्णा गुरु: शैल्या बलदा पित्तदाहहरा रुच्या दुग्धवृ- द्धिकरी च । रा.नि.व.८ ।

**शूलोत्था** । स्त्री । सोमराज्याम् । श.र. ।

**शूल्यम्** । क्ली । शूलपक्वमांसे । কাবাব । अम.। त्रि । शूलदग्धे । च.द. ।

**शूल्यपाक:** । पुं । शूलविद्धं कलाङ्गारपक्व- मांसादौ । কাবাব । पाकराज: ।

**शूल्यमांस(क)म्** । क्ली । शूलिकाशोतपक्वे मांसे । শূলবিদ্ধ মাংসের কাবাব । गुणा:— "मांसन्तु शूलिकाशोतमङ्गारैर्विपाचितं । ज्ञेयं गुरुतरं वृष्यं दीप्ताग्नीनां सदा हितम् ॥" राज. ३प. ।

**शृका(गा)ल:** । पुं । स्वनामख्यातपसहजा- तीयपशौ । বুড়ো শেয়াল । श.च. । रा.नि.व. १९ । गुणा:—"मधुरा मधुरा: पाके त्रिदोषश- मना: शिवा: । लघवो बद्धविण्मूत्रा: शीतावीर्या: प्रकीर्त्तिता: ॥" च.सू.२७अ. । [কাটা । श.च. ।

**शृगालकण्टक:** । पुं । वृक्षविशेषे । শেয়াল

**शृगालकोलि:** । पुं । कर्कन्धूवृक्षे । শেয়াকুল। च । কাঁটাঝাড় । प.मु. । चुद्रबदरे । र.मा. ।

भम् । एलाजातीफलं चैव चितितत्वविधिना शुद्ध-गन्धाग्नकौलः कौलाड॑ पारदस्य प्रतिपदनिहितं पिष्टमेकत्र मिश्रम् । पानीयेनैव कार्य्याः परिमितचणककिन्नतुल्याश्च वस्यः प्रातः खाद्याश्चतस्त-स्तन च हि कियत् शृङ्गवेरं सपर्णम्……॥" अभं १६ तो. कर्पूरं जातिकोषः (जयित्री) वालकं (बाला) गजपिप्पली तेजपत्रं लवङ्गं जटामांसी तालीशपत्रं त्वक् (दारुचिनि) नागकेसरं कुष्ठं (कुड़) धातकीपुष्पं प्र. ॥० तो. । त्रिफलात्रिकटुकयोः द्रव्यं प्रति तोलकांशः । एला १ तो. जातीफलं १ तो. गन्धकं १ तो. पारदः ॥० तो. एकत्र जलेन मर्द्दयेत् । रस.र. । रस.चि. । सा.कौ. । [पुंसि । गुपारि । मजे । मे. ।

**शृङ्गारी** (इन्) । पुं । माणिक्ये । रा.नि.व.१३।

**शृङ्गारुहा** । स्त्री । शृङ्गाटके । शिङाड़ा । वै. निघ. । [पु । शृङ्गाटके । शिङाड़ा । वै.निघ. ।

**शृङ्गाह्वः (ह्वा)** । पुं,स्त्री । जीवके । रा.नि.व.

**शृङ्गिः (ङ्गी)** । स्त्री । तन्नामप्रसिद्धमत्स्ये । शिङि माछ । गुणाः—"शृङ्गी वातविनाशनी रुचिकरी वृष्या कफघ्नी मता ।" अत्रि.२२अ.। "शृङ्गिः स्वादुरसा स्निग्धा बृंहणी कफकोपनी । शोथपाण्डुमरुत्पित्तनाशिनी…… ॥" राज.३प. ।

**शृङ्गिकः** । पुं । स्थावरविषभेदे । शृङ्गीविष, सेँको । डल्ल. । स्वरूपं यथा—"यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितं । स शृङ्गिक इति प्रोक्तो द्रव्यतत्त्वविशारदैः ॥" भा.पू.१भ.विषव. । "शृङ्गिकः कृष्णवर्णः ।" अत्रि.५६अ. ।

**शृङ्गिका** । स्त्री । कर्कटशृङ्ग्याम् । काँकड़ाशृङ्गी । रा.नि.व.६ । मेषशृङ्ग्याम् । भेड़ाशिङे । पिप्पल्याम् । वै.निघ. । अतिविषायाम् । आतइच । श.र. । [ऋष्भगवर्गे । अत्रि.२०अ. ।

**शृङ्गिणः** । पुं । मेषे । भेड़ा । हे.च. । सम्र-

**शृङ्गिणी** । स्त्री । मल्लिकापुष्पवृक्षे । ज्योतिष्मतीलतायाम् । लताफट्‌की । मे. । अतिविषायां । आतइच । रा.नि.व.६ । मदीवटे । वै.निघ. । गवि । गरु । अम. ।

**शृङ्गी** (इन्) । पुं । वटवृक्षे । प्रक्षवृक्षे । पाकुड़ गाछ । आम्रातकवृक्षे । आम्ड़ा गाछ । रा.नि. व.११ । ऋषभके । ऋषभक । मत्स्ये । वृषे । जीवके । वै निघ. । हस्तिनि । मे. । विषभेदे । सेँको । र.मा. । कन्दविषभेदे । सु.कल्प.२अ. । कीटभेदे । सु.कल्प.८अ. । स्त्री (ङ्गी) । कर्कटशृङ्ग्याम् । काँकड़ाशृङ्गी । अतस्याम् । मसिना । प.मु. । "दशमूली शठी शृङ्गी ।" च.द.ज्व.चि. । च.सू.४अ. । आमलक्याम् । वा.चि.३अ. । मञ्जिष्ठायाम् । पूतिकायाम् । वै.निघ. । श्वेतातिविषायाम् । अतिविषायाम् । अम. । वा.उ.५अ. । ऋषभके । रा.नि.व.५ ।

**शृङ्गीकम्** । क्लौ । कर्कटशृङ्गे । वा.चि.३अ. ।

**शृङ्ग्यादिः** । पुं । बालरोगे लेहः । "शृङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् । कासज्वरच्छर्द्दिभिरर्द्दितानाम् ।" च.द. ।

**शृतः** । पुं । तोयचिप्रद्रव्यादग्निपाचितात् निःसृतकषाये । त्रि । वह्नौ क्वथिते । "वह्नौ तु क्वथितं द्रव्यं शृतमाहुः ।" प.प्र.१ख. ।

**शृतशीतजलम्** । क्लौ । पक्वशीतलजले । गुणाः—जीर्णज्वरनाशित्वं सन्निपातहरत्वञ्च । एतत् धातुक्षये रक्तविकारे वान्तौ रक्तमेहे विषविभ्रमे च पथ्यम् । भा. । पार्श्वशूले प्रतिश्याये वाते नवज्वरे हिक्काध्माने च पथ्यम् । रा.नि.व.१४ ।

**शृधुः (धूः)** । स्त्री । पायौ । मलद्वार । विश्व. ।

**शेखरम्** । क्लौ । लवङ्गे । रा.नि.व.१२ । शिग्रुमूले । सजिनार शिकड़ । श.च. । [पु ।

**शेखरी** । स्त्री । वन्दाके । परगाछ । रा.नि.व.

**शेटः** । पुं । कुरङ्गे । त्रिका. ।

**शेपालः** । पुं । शैवाले । शेयाला । श.र. ।

**शेफः** । पुं,क्लौ । लिङ्गे । अम. । रा.नि.व.१८ ।

**शेफालिः (लिका, ली)** । स्त्री । (Nyctanthes arbortristis.) स्वनामख्यातपुष्पवृक्षे । शिउलि गाछ । हिं सिहरु, सिर्गोलि । मं पांढरी निर्गुण्डी । कं विलियलीके । बम्. हरसिंगर । ता. मन्जप । पञ्जा. लहरि । गुणाः—कटुतिक्तोष्णा रूक्षा वातक्षयापहा अङ्गसन्धिगुदवातघ्नी । रा.नि.व.४ । "मधुना सर्व्वज्वरनुत् शेफालीदलजो रसः ।" च.द.वि.ज्व.चि. । (लिका) श्वनिर्गुण्ड्यां । काल निशिन्दा । भा. ।

**शैलकः** । पुं । बहुवारवृक्षे । চাল্তা গাছ । वै.निघ. ।

**शैलुः (कः)** । पुं । बहुवारवृक्षे । চাল্তাগাছ, বোহরী, বুহুন । हिं लसोरा, भोंकर । ता. विड़ि । रा.नि.व.११ । वनमेथिकायाम् । (कः) पीतलोध्रे । वै.निघ. ।

**शैलुत्वक्** । पुं । बहुवारवृक्षत्वचि । চাল্তা গাছের ছাল । भैष.शोथचि.वृहच्छुष्कमूलाद्यतैले ।

**शैलुषः** । पुं । क्षुद्रशैलौ । वै.निघ. ।

**शैवः** । पुं । पुंस्त्वे, उपस्थे । उणा. ।

**शैव(वा)लम्** । क्ली । शैवाले । श.र. ।

**शैवाली** । स्त्री । आकाशमांस्याम् । কৃষ্ণ জটামাংসী । रा.नि.व.१२ ।

**शैषः** । पुं । गजे । नागे । সর্প । अजयपालः ।

**शैषचिन्तामणिः** । पुं । रसमञ्जरीटीकाकारे ।

**शैक्यायसम्** । क्ली । तीक्ष्णलौहे । सु.सू.८अ. ।

**शैखरिकः (का)** । पुं, स्त्री । अपामार्गे । আপাং । रा.नि.व.४ । मद.व.१ ।

**शैखरेयः** । पुं । अपामार्गे । शब्दकल्पः ।

**शैग्रवम्** । क्ली । शिग्रुवीजे । সজিনাবীজ । "वार्हतं शैग्रवञ्च ।" वा.सू.१५अ.शिरोविरेचने ।

**शैत्यम्** । क्ली । शीतलतायाम् । मा.नि. ।

**शैथिल्यम्** । क्ली । शिथिलतायाम् । विरामे । व्याक. ।

**शैम्बम्** । क्ली । शिम्बीधान्ये । वै.निघ. ।

**शैरीयकः** । पुं । नीलझिण्टाम् । र.मा. ।

**शैलम्** । क्ली । शिलाजतुनि । रा.नि.व.१३ । भा.म.३भ.मू.घा.चि. । रसाञ्जने । प.मु. । बहुवारफले । চাল্তা । वै.निघ. । शैलजे । मे. । च.द.वा.व्या.चि.नख्यादिशोधने । तच्छुद्धिः— "काञ्जिके क्वथितं शैलं भृष्टा पथ्या गुडाम्बुना । सिञ्चेदेवं ततः पुष्पैर्विविधैरधिवासयेत् ॥" भैष. ।

**शैलकम्** । क्ली । शैलजनामगन्धद्रव्ये । শৈলজ । रा.नि.व.१२ । [চন্দন । रा.नि.व.१२ ।

**शैलगन्धम्** । क्ली । शावरचन्दने । ঈষৎ পীত

**शैलगर्भजा** । स्त्री । करज्योड़िपाषाणभेदविशेषे । হাড়জোড়া । वै.निघ. ।

**शैलगर्भा (र्भ्रा)** । स्त्री । शिलावल्के । শৈলজ । रा.नि.व.५ । सिंहपिप्पल्याम् । श्वेतपाषाणभेदे । শাদা পাথরকুচা । वै.निघ. ।

**शैलजम्** । क्ली । स्वनामख्यातगन्धद्रव्ये । শৈলজ, কলহু । हिं भूरछरिला छरा । तें शैलेयमवेद्रव्यम् । गुणाः—सुगन्धि शीतलं तिक्तं कफपित्तघ्नं दाहतृष्णावमिश्वासव्रणघ्नम् । रा.नि.व.१२ । वै.सं. सुदर्शनचूर्णे ।

**शैलजा** । स्त्री । गजपिप्पल्याम् । रा.नि.व.२३ । सैंहलीपिप्पल्यां । रा.नि.व.६ । श्वेतपाषाणभेदे । वै.निघ. । [मदनमोदके ।

**शैलजातम्** । क्ली । शैलजे । শৈলজ । च.द.

**शैलधातुजम्** । क्ली । शिलाजतुनि । भा. ।

**शैलनिर्यासः** । पुं । शिलाजतुनि । भा. ।

**शैलपत्रः** । पुं । विल्ववृक्षे । रा.नि.व.११ ।

**शैलमल्ली** । स्त्री । কাঁঠিআ इति प्रसिद्धे वृक्षे । "शाकं शश्याः शैलमल्ल्याश्च वीजम् ।" भा.म.१भ. ज्व.चि. । श्वास.चि.दशाङ्गे । [মুগরা । अचिं. ।

**शैलरोही (इन्)** । पुं । कृष्णवैरिवृक्षे । চাল-

**शैलवल्कला** । स्त्री । शिलावल्कायाम् । শৈলজ । श्वेतपाषाणभेदे । रा.नि.व.५ ।

**शैलवीजः** । पुं । भल्लातवृक्षे । रा.नि.व.११ ।

**शैलसुता** । स्त्री । महाज्योतिष्मतीलतायाम् । লতাফট্কী । रा.नि.व.३ ।

**शैलाख्यम्** । क्ली । शैलजे । र.मा. ।

**शैलाटः** । पुं । सिंहे । त्रिका. ।

**शैलाश्मजतु** । क्ली । शिलाजतुनि । र.मा. ।

**शैलाश्मम्** । क्ली । शिलाजतुनि । শিলাজতু । रा.नि.व.१३ । [গাছ । वै.निघ. ।

**शैलूः (कः)** । पुं, स्त्री । बहुवारवृक्षे । চাল্তা

**शैलूषः** । पुं । विल्ववृक्षे । रा.नि.व.११ ।

**शैलूषभूषणम्** । क्ली । हरितालि । र.सा.सं. रसप्रकरणे ।

**शैलूषमण्डनम्** । क्ली । हरिताले । "शैलूषमण्डनरजः पुरुषानुरूपम् ।" भैष.ज्व.चि. ।

**शैलेन्द्रस्थः** । पुं । भूर्जवृक्षे । रा.नि.व.९ ।

**शैलेयम्** । क्ली, पुं । शैलजनामगन्धद्रव्ये । शैलज । हिं भूरछरिला । "शैलेयं भद्रमुस्तकम् ।" वै.निघ.वा.व्या.चि.लघुनारायणतैले । शिलाजतुनि । वै.निघ.२भ.जीर्णज्व.चि.चन्दनाद्यतैले । गुणाः—"शैलेयं शीतलं हृद्यं कफपित्तहरं लघु । कण्डूकुष्ठाश्मरीदाहविषहृद्रुदरक्तहृत् ॥" "शैलेयः पिप्पली शिवा ।" भा.म.१भ.ज्व.चि. ।

**शैलोत्थगरलम्** । क्ली । पाषाणघातजन्यविषे । र.सा.सं.रसाध्याये । [र । रा.नि.व.५ ।

**शैलोद्भवा** । स्त्री । क्षुद्रपाषाणभेदे । पाथरचू-

**शैल्यमेथिका** । स्त्री । वनमेथिकायाम् । वै. निघ. ।

**शैवम्** । क्ली । शैवाले । शेयाला । श.च. ।

**शैवः** । पुं । धुस्तूरवृक्षे । रा.नि.व.१० । श्वेतरक्तवसुके । रा.नि.व.५ । अगस्तिवृक्षे । बकवृक्ष । रा. नि.व.१० ।

**शैवपत्रः** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**शैवमल्लिका** । स्त्री । लिङ्गिनीलतायाम् । शिवलिङ्गिनी । रा.नि.व.३ ।

**शैवलम्** । क्ली । पद्मकाष्ठे । पुं । शैवाले । रा. नि.व.८ । मे. । सु.सू.३८अ.पित्तशमने ।

**शैवालम्** । क्ली । जलनील्याम् । शेयाला । गुणाः—शीतलं स्निग्धं सन्तापव्रणघ्नञ्च । रा.नि. व.८ । [रा.नि.व.१९ । बदरवृक्षे । वै.निघ. ।

**शैशिरः** । पुं । श्यामचटके । श्यामा पाखी ।

**शोकः** । पुं । बन्धादिवियोगजन्यमनोवेदनायाम् । भा.म.अ.सा.चि. । अशोकवृक्षे । वै.निघ. । [१० ।

**शोक(दोष)घ्नः** । पुं । अशोकवृक्षे । रा.नि.व.

**शोकजातिसारः** । पुं । पुत्रादिनाशजन्यातिसारे । See अतीसारः ।

**शोकज्वरः** । पुं । शोकजन्यज्वरे । तस्य लक्षणं वेपथुः । मा.नि. । [नि.व.१० ।

**शोकनाशः (नः)** । पुं । अशोकवृक्षे । रा.

**शोकशोषः** । पुं । शोकजन्यशोषरोगे । लक्षणम्—"प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः । विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥"

**शोकारिः** । पुं । कदम्बवृक्षे । श.च. ।

**शोचिष्केशः** । पुं । चित्रकवृक्षे । अम. ।

**शौटीर्य्यम्** । क्ली । वीर्य्ये । श.र. ।

**शोठः** । पुं । पारावते । श.र. ।

**शोणम्** । क्ली । सिन्दूरे । रा.नि.व.१३ । रक्तधातौ । रा.नि.व.१८ । पुं (णः, कः) । स्वनामख्यातभारतवर्षीयनदविशेषे । शोण नद । तज्जलगुणाः—रुच्यं सन्तापहरं शोषघ्नं वह्निदीपनं बलकरं पुष्टिकरं पथ्यञ्च । रा.नि.व.१४ । रक्तोचौ । श्योणाके । मे. । रक्तपुनर्नवायाम् । रा.नि.व.५ । (कः) पृथुशिम्बश्योणाकवृक्षे । शोणापाठा । रा. नि.व.९ । "कामदूती च शोणकः ।" भा.म.१भ. ज्व.चि. ।

**शोणझिण्टिका (ण्टी)** । स्त्री । रक्तझिण्टीक्षुपे । लाल झाँटी । रा.नि.व.१० । See रक्ताम्लानः । [५ ।

**शोणपत्रः** । पुं । रक्तपुनर्नवायाम् । रा.नि.व.

**शोणपद्म(क)म्** । क्ली । रक्तकमले । रा.नि.व. १० । See कोकनदं ।

**शोणपुष्पः (कः)** । पुं । कोविदारवृक्षे । रक्त काञ्चन । रा.नि.व.१० ।

**शोणपुष्पी** । स्त्री । सिन्दूरपुष्प्यां रा.नि.व.१० ।

**शोणफलिनी** । स्त्री । पीतपुष्पकाञ्चनवृक्षे । वै.निघ. । [पद्मरागमणौ । अम. ।

**शोणरत्नम्** । क्ली । माणिक्ये । रा.नि.व.१३ ।

**शोणशालिः** । पुं । रक्तशालौ । दादखानि, मशनट । रा.नि.व.१६ । [व.६ ।

**शोणसम्भवम्** । क्ली । पिप्पलीमूले । रा.नि.

**शोणा** । स्त्री । रक्तझिण्ट्याम् । वै.निघ. ।

**शोणाकः** । पुं । श्योणाकवृक्षे । शोणा गाछ । अम. ।

**शोणितम्** । क्ली । रक्तधातौ । रक्त । रा.नि. व.१८ । कुङ्कुमे । तृणकुङ्कुमे । रा.नि.व.१२ । सि-

र्णांसि । आर्टा । रस.र.नै.री.चि. । तात्रे । प्रयो गा.त्र्योदशायसि । रस.र.त्रणगजाङ्कुशे । हिङ्गुलि । रस.कौ.ज्वरान्तकरसे । [व.१२ ।

**शोणितचन्दनम्** । क्ली । रक्तचन्दने । रा.नि.

**शोणितमेहः** । पुं । पित्तजन्यप्रमेहभेदे । र-क्तमेह । तत्र रोगी शोणिततुल्यं मेहति । सु. नि.६अ. ।

**शोणितवहस्रोतः** (स्) । क्ली । रक्तवहना-ड्याम् । तस्य मूलं यकृत् प्लीहा च । च.वि.५अ. ।

**शोणितसम्भवम्** । क्ली । मांसधातौ । वैद्य-कम् ।

**शोणिताभिधम्** । क्ली । कुङ्कुमे । वै.निघ. ।

**शोणितार्व्वुदम्** । क्ली । शूकरोगभेदे । लच णं यथा—"कृष्णस्फोटैः सरक्तैश्च पिड़काभिश्च पी ड़ितं । यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्व्वु-दम् ॥" सु.नि.१४अ.। रक्तजन्यार्व्वुदरोगे । रक्तज आव । लक्षणं—"शिरास्थं शोणितं दोषः सङ्को-च्यान्तः प्रपीड्य च । पाचयेत तदानद्धं सास्रावं मांसपिण्डितं । मांसाङ्कुरैश्चितं याति वृद्धिञ्चाशु स्रवेत्ततः । अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्व्वु दम् ॥" वा.उ.२९अ. ।

**शोणितार्शः** (स्) । क्ली । नेत्रवर्त्मगतरोगवि-शेषे । लक्षणं यथा—"छिन्नाश्छिन्ना विवर्द्धन्ते व-र्त्मस्था मृदवोऽङ्कुराः । दाहकण्डूरुजोपेतास्तेऽर्शः-शोणितसम्भवाः ॥" सु.उ.३अ. ।

**शोणिताह्वयम्** । क्ली । कुङ्कुमे । र.मा. ।

**शोणितोत्पलम्** । क्ली । रक्तोत्पले । वै.निघ.।

**शोणोपलः** । पुं । माणिक्ये । रा.नि.व.१३ ।

**शोथः (कः)** । पुं । तन्नामकरोगे । फुलो-रोग । रा.नि.व.२० । तस्य विप्रकृष्टनिदानं य था—"शुद्ध्यामयाऽभक्तकृशाबलानां क्षाराम्लती-क्ष्णोष्णगुरूपसेवा । दध्याममृच्छाकविरोधिपिष्टग-रोपसृष्टान्ननिषेवणञ्च । अर्शांस्यचेष्टा वपुषो ह्यशु द्धिर्मर्माभिघातो विषमा प्रसूतिः । मिथ्योपचारः प्रतिकर्म्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥" सन्निकृष्टनिदानमाह—"दोषैः पृथग्द्वयैः सर्व्वैर-भिघाताद्विषादपि । सर्व्वं हेतुविशेषैस्तु रूपभेदान्न-वात्मकः ॥" सम्प्राप्तिपूर्व्वं सामान्यलक्षणमाह—

"रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् वहिः शिराः । नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम् । उत्से-धं संहतं शोथं तमाहुर्निचयादतः ॥ सगौरवं स्यादनवस्थितत्वं सोत्सेधमुष्माथ शिरातनुत्वं । स-लोमहर्षं च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥" असाध्यलक्षणमाह—"श्वासम्पिपासा छर्द्दिश्च दौर्ब्बल्यं ज्वर एव च । यस्य चान्ने रुचि-र्नास्ति शोथिनं तं विवर्ज्जयेत् ॥" मा.नि. । स षड्विधः—अवयवसमुत्थः शोफोऽभिहितः लक्ष-णतः प्रतीकारतश्च । सर्व्वसरस्तु पञ्चविधः यथा—वातपित्तकफशोणितसन्निपातविषनिमित्तः । तत्र वातजोऽरुणः कृष्णो वा, पित्तजः पीतः, कफजः पाण्डुवर्णः, सन्निपातजः सर्व्ववर्णः, शोणितजः पी-तः, आगन्तुजः विषजो वा लोहितावभासश्च । प-थ्यं पिष्टान्नाम्ललवणमद्यमृत्तिकादिवानिद्रास्त्रीसे-वनघृततैलादि त्याज्यम् । सु.चि.२३अ. । अपरञ्च शोथरोगलक्षणं—"वेदनास्थौल्यसंयुक्तं मृदुस्पर्शन्तु शीतलं । शोथं वातात्मकं विद्याद्राजिदेहसमुद्भवं । रक्तपित्तेन शोथः स्यात् क्षणपाकेन संयुतः । वेद-नोष्मसमायुक्तः नाभ्यण्डोच्छूनकस्तथा । कठिनत्वा-सहत्वाभ्यां युक्तं रुग्दाहवर्ज्जितं । श्लेष्मशोथं विजा-नीयाद्रक्तजम्पित्तलक्षणम् । सर्व्वलिङ्गं विदुर्वैद्याः सन्निपातसमुद्भवम् ॥" ज.द.४९अ. ।

**शोथकम्** । क्ली । कङ्कुष्ठे । गैरिक धातु । रा.नि.व.१३ ।

**शोथघ्नी** । स्त्री । रक्तपुनर्नवायाम् । अम. । "शोथघ्नीन्द्रयवा पाठा ।" भ.१भ.शोथातीसा. चि. । शालपर्ण्याम् । रा.नि.व.४ । [टा. ।

**शोथजनेत्रपाकः** । पुं । सर्व्वाक्षिरोगे । नि-

**शोथजित्** । पुं । भल्लातकवृक्षे । ভেলা গাছ । प.मु. । पुनर्नवायां । শ্বেতপুনর্নবা । चिका. ।

**शोथजिह्वः** । पुं । पुनर्नवायाम् । चिका. ।

**शोथारिः** । पुं । पुनर्नवायां । रस.र.वह्निभ स्मातरसे ।

**शोथोदरारिलौहः** । पुं । उदराधिकारो औषधम् । क्वाथार्थे—पुनर्नवा गुडूची चित्रकमूलं गोरक्षतण्डुलामूलं (গোরক্ষচাকুলিয়ার মূল) माणमूलं कण्टकारीमूलं (তেকাঁটা সিজুর মূল) ह अपामार्गमूलं (হুড়হুড়ের মূল) अर्कमूलं प्र. ८८

वारि ६४ श. शे. १६ श.। क्वाथे पुटितलौहं ८ प घृतं ८ प. अर्कचीरं २ प. स्नुहीचीरं ४ प. शुद्धगुग्गुलु: २ प. गन्धकपारदयो: यथाक्रमं प लाईपलयो: कज्जलि:। अथ एकत्र सम्मिश्य प- चेत्। श्रासन्नपाके जयपालवीजं मृततामं मृताभ्रं कटुकं चित्रकमूलचूर्णं वनशूरणचूर्णं शरपुङ्खाचूर्णं घण्टाकर्ण(घेँटु)चूर्णं पलाशवीजचूर्णं चीरिकाचू- र्णं(थिराइँचूर्ण) तालमूलीचूर्णं त्रिफलाचूर्णं वि- डङ्गचूर्णं त्रिवृच्चूर्णं दन्तीमूलचूर्णं सूर्य्यावर्त्तमूल चूर्णं गीरक्षतण्डुलामूलचूर्णं पुनर्नवाचूर्णं हाड़च- चूर्णञ्च मिलित्वा ८ प. प्रक्षिप्य समालोड्य च घृ तभाण्डे स्थाप्य:। भैष.। रस.र.।

**शोधकम्** क्ली। कङ्कुष्ठे। रा.नि.व.१३।

**शोधन:**। त्रि। शोधनद्रव्ये निम्बादौ। भा.म. ४भ.योनिरो.चि.। शुद्धिकारके प्रलेपादौ। भा.। क्ली। कासीसे। शिरेकम्। कङ्कुष्ठे। रा.नि.व. १३। धातुशुद्धिकरणे। तच्च वमनविरेचनास्थाप- नशिरोविरेचनभेदेन चतुर्द्धा भवति। वा.सू.१५ श्र.। विष्ठायां। श.च.। पुं। हादशांशावशि- ष्टकषाये। "शोधनी हादशांशक:।" रा.नि.व. २०। निम्बवृक्षे। रा.नि.व.११। स्त्री (नी)। स- म्मार्जन्याम्। अम.। नील्याम्। रा.नि.व.४। चित्रकूटख्याततामवल्लीलतायाम्। रा.नि.व.३। ऋद्धौ। वै.निघ.।

**शोधनीवीजम्**। क्ली। जैपालवीजे। रा.नि. व.६।

**शोफ:**। पुं। शोथरोगे। फुला। रा.नि.व.२०। सर्व्वाचिरोगे। त्रिका.।

**शोफकर:**। पुं। भल्लातके। वै.निघ.।

**शोफकृत्**। पुं। भल्लातकवृक्षे। भा.।

**शोफघ्नी**। स्त्री। शालपर्ण्याम्। रा.नि.व.४। रक्तपुनर्नवायाम्। रा.नि.व.५।

**शोफनाशन:**। पुं। नीलवृक्षे। रा.नि.व.६। त्रि। शोथनाशके।

**शोफहारी** (इन्)। पुं। वनवर्व्वरिकायाम्। वावुई तुलसी। रा.नि.व.१०।

**शोफारि:**। पुं। हस्तिकन्दे। वै.निघ.।

**शोभनम्**। क्ली। पद्मे। श.च.। कङ्कुष्ठे। वै. निघ.। त्रि। सुन्दरे। [गाछ। श.च.।

**शोभनक:**। पुं। शोभाञ्जनवृक्षे। सजिना

**शोभना**। स्त्री। हरिद्रायाम्। रा.नि.व.६। गोरोचनायाम्। रा.नि.व.१२।

**शोभनानन:**। पुं। सुगन्धार्ज्जके। वै.निघ.।

**शोभनीया**। स्त्री। गौरचसुण्ड्याम्। महामु- ण्ड्यां। मुण्डी। वै.निघ.।

**शोभा**। स्त्री। हरिद्रायाम्। रा.नि.व.६। गो- रोचनायां। रा.नि.व.१२। शुक्लजात्यां। চামেলি। वै.निघ.।

**शोभाञ्जन:**। पुं। (Moringa pterygosperma. Syn. Hyperanthira moringa.) Horse radish tree. नीलशिग्रुवृ- क्षे। নীল সজিনা গাছ, সেগণ, সজনা। हिं सोहिञ्जन, सञ्जन। मं कालासेगुवा। कं करिय- नुगिग। तें मुनगा। ता. मोरुङ्क। वम्. शेगव, सेगत। गुणा:—तीक्ष्ण: कटु: स्वादुष्ण: पिच्छिल: क्रमिवातशूलघ्न: चक्षुष्य: रोचनश्च। रा.नि.व.७। तत्पुष्पं—कटुतीक्ष्णोष्णं स्नायुशोथकरं क्रमिघ्नं वा- तकफघ्नं विद्रधिप्लीहगुल्महरं। मधुशिग्रुपुष्पं नेत्र- हितं रक्तपित्तप्रसाधनञ्च। शोभाञ्जनफलं (तें मु- नगपंडु) स्वादु कषायं कफपित्तघ्नं शूलकुष्ठक्षयश्वा- सगुल्मघ्नं दीपनञ्च। भा.पू.१भ.शा.व.।

**शोलिका (ली)**। स्त्री। वनहरिद्रायाम्। वन হলুদ। सालि, अडिविषका, अरिसिनि, इति कोङ्कणे प्रसिद्धा। गुणा:—कटु: गौल्या रु- च्या तिक्ता दीपनी च। रा.नि.व.७।

**शोष:**। पुं। राजयक्ष्मणि। सन्तापे। रा.नि.व. २०। धातुक्षये। मा.नि.। यक्ष्मरोगविशेषे। त- न्निरुक्ति: यथा—"अतिव्यवायिनो वापि चीणे रे- तस्यनन्तरा:। क्षीयन्ते धातव: सर्व्वे तत: शुष्यति मानव:॥" इति। शोषे उत्पन्ने प्रतिलोमक्षयो भवति तद्यथा—शुक्रे क्षीणे मज्जा, मज्जनि क्षीणे अस्थि च क्षीयते पूर्व्वं पूर्व्वं क्षीयते। स द्विधा रणोर:चतभेदेन। See राजयक्ष्म।

**शोषणम्**। क्ली। शुण्ठ्याम्। रा.नि.व.६। पि- प्पल्यां। रस.र.चन्द्रोदयरसे। "जातीफलं शोष-

ममिन्द्रपुष्पम् ॥" पुं। षोडशांशावशिष्टकषाये। "विशेष: षोडशांशश ।" रा.नि.व.२०। शोणा-कवचे। শোণা গাছ। भा.।

**शोषसम्भवम्**। क्ली। पिप्पलीमूले। रा.नि.व.६।

**शोषहा** (न्)। पुं। जलापामार्गे। वै.निघ.।

**शोषापहा**। स्त्री। वल्लीयष्टिमधुके। रा.नि.व.६।

**शौकरी**। स्त्री। वाराहीकन्दे। वै.निघ.।

**शौक्तिकम्**। क्ली। मौक्तिके। मुक्ता। भा.। स्त्री (का)। मुक्ताशुक्तौ। ঝিনুক। वै.निघ.।

**शौक्तिकेयम्**
**शौक्तेयम्** } क्ली। मुक्तायाम्। प.मु.।

**शौक्तिकेय:**। पुं। विषे। प.मु.। सोमलतायाम्। वै.निघ.। विषभेदे। अम.। शुक्तिकोद्भव-विशेषस्तत्र भव: शौक्तिकेय:। भ.।

**शौक्तम्**। क्ली। शुक्ततायाम्। अम.।

**शौग्रम्**। क्ली। शोभाञ्जनबीजे। সজিনাবীজ। वै.निघ.। [च.द.दिनचर्य्या।

**शौचविधि:**। पुं। मूत्रपुरीषोत्सर्गादिकार्य्ये।

**शौचाधानम्**। क्ली। पवित्रतानुष्ठाने। गुणा: —"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनं। पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णश:॥" राज.१ प.।

**शौटीर्य्यम्**। क्ली। शौण्डीरे। वीर्य्ये। श.र.।

**शौण्ठी**। स्त्री। पिप्पल्याम्। रा.नि.व.२३।६। कृष्णकटभीवृक्षे। रा.नि.व.९। See कटभी। चव्ये। চই। विश्व.।

**शौण्ड:** (ण्डी)। पुं,स्त्री। देवधान्ये। कुक्कुटे। वै.निघ.। स्त्री (ण्डी)। पिप्पल्याम्। वै.निघ.।

**शौण्डिकम्**। क्ली। पिप्पलीमूले। वै.निघ.।

**शौण्डिकप्रिय:**। पुं। आम्रवृक्षे। वै.निघ.।

**शौधिका**। स्त्री। रक्तकाञ्ची। লাল কাংনী। इ.च.।

**शौभ:**। पुं। गुवाकवृक्षे। श.मा.।

**शौभाञ्जन:**। पुं। शोभाञ्जनवृक्षे। भ.दि.।

**शौरिप्रियम्**। नीलहीरके। प.मु.। See इन्द्रोपलम्।

**शौरिरत्नम्**। क्ली। नीलमणौ। रा.नि.व.१३

**शौल्फम्**। क्ली। शुलुफाशाके। शब्दकल्प:।

**शौल्यशीत:**। पुं। चेर्वेवो। अनार। प.मु.।

**शौषिर:**। पुं। दन्तवेष्टगतरोगविशेषे। लक्षणं यथा—"श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तज:। लालास्रावी स विज्ञेय: कण्डूमान् शौषिरो गद:॥" सु.नि.१६अ.।

**शौष्कल:**। त्रि। मत्स्यमांसभक्षके। अम.।

**श्मन्**। क्ली। मुखे। भ.।

**श्मश्रु**। क्ली। पुंमुखे दीर्घलोमराजिषु। দাড়ি। दाड़िकर्त्तनगुणा:—"पौष्टिकं बल्यमायुष्यं शौचरूपविराजनं। केशश्मश्रुनखादीनां कल्पनं सम्प्रसादनम्॥" राज.३प.।

**श्मश्रुमुखी**। स्त्री। श्मश्रुयुक्तनार्य्यां। श.र.।

**श्मश्रुशेखर:**। पुं। नारिकेलवृक्षे। वै.निघ.।

**श्यामम्**। क्ली। मरिचे। সিন্দুলবণে। मे.। पुं। श्यामाके। শ্যামা ঘাস। रा.नि.व.१६। वृद्धदारके। বীজতাড়ক। कोकिले। मे.। धुस्तूरवृक्षे। रा.नि.व.१०। पीलुवृक्षे। रा.नि.व.११। दमनकवृक्षे। गन्धतृणे। विश्व.। त्रि। कृष्णवर्णे।

**श्यामक:**। पुं। स्वनामख्यात धान्यविशेषे। শ্যামাধান। वम्.सांवा। ... तें चामधान्यम्। गुणा:—मधुर: स्निग्ध: कषाय: लघु: शीतल: वातकर: कफपित्तघ्न: संग्राही विषदोषघ्न। रा.नि.व.१६। क्ली। रोहिषतृणे। गन्धतृण वा रामकर्पूर। रा.नि.व.८।

**श्यामकण्ठ:**। पुं। मयूरे। हला.। श्यामकण्ठपक्षिणि। নীলকণ্ঠ পাখী। शब्दकल्प:।

**श्यामकन्दा**। स्त्री। अतिविषायाम्। रा.नि.व.६। [नि.व.८।

**श्यामकाण्डा**। स्त्री। गण्डदूर्व्वायाम्। रा.

**श्यामग्रन्थि:**। स्त्री। गण्डदूर्व्वायाम्। रा.नि.व.८। [पाशी। वै.निघ.।

**श्यामचूड़ा**। स्त्री। कृष्णचटकायाम्। শ্যামা

**श्यामपत्रः** । पुं । तमालवृक्षे । श.च. । स्त्री (त्रा) । जम्बूवृक्षे । জাম গাছ । वै.निघ. ।

**श्यामपर्णः** । पुं । शिरीषवृक्षे । वै.निघ. ।

**श्यामभूषणम्** । क्ली । मरिचे ।

**श्याममृगः** । पुं । कृष्णवर्णहरिणे । च. ।

**श्यामलः** । पुं । पिप्पलवृक्षे । অশ্বথ গাছ । रा.नि.व.११ । मद.व.५ । नीलभृङ्गराजे । নীল-পুষ্প ভীমরাজ । रा.नि.व.४ । शिरीषवृक्षे । रा.नि.व.९। महाविषकृष्णवृश्चिकभेदे । सु.कल्प.८अ. । See वृश्चिकः । [व.३ ।

**श्यामलचूड़ा** । स्त्री । रक्तगुञ्जायाम् । रा.नि.

**श्यामलता** । स्त्री । श्यामानामलतायाम् । শ্যামা লতা । प.मु. ।

**श्यामला (ली)** । स्त्री । गन्धमूलीमाकन्द्यां । रा.नि.व.७ । अश्वगन्धायाम् । रा.नि.व.४ । कृष्णकटभ्याम् । रा.नि.व.९ । कस्तूर्य्याम् । মৃগনাভি । रा.नि.व.१२ । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ ।

**श्यामलालः** । पुं । सङ्केपरवावलीकारे ।

**श्यामलालुः** । पुं । नीलालुके । নীল আলু । रा.नि.व.७ । [रा.नि.व.४ ।

**श्यामलिका** । स्त्री । नील्याम् । নীলগাছ ।

**श्यामलेक्षुः** } पुं । कृष्णेक्षौ । কাজলি ইক্ষু ।
**श्यामवंशः** } रा.नि.व.१४ ।

**श्यामशालिः** । पुं । कृष्णशालिधान्ये । কাল ধান । रा.नि.व.१६ ।

**श्यामसर्पः** । पुं । कृष्णसर्पे । चि.क्र.क.१स. ।

**श्यामा** । स्त्री । दृष्टार्त्तवायां मध्यमस्त्रियि । रा.नि.व.१८ । प्रियङ्गौ । रा.नि.व.१२ । च.द.वा.व्या.चि.एकादशशतीमहाप्रसारणीतैले । छिन्नायाम् । গুলঞ্চ । रा.नि.व.३ । कृष्णमूलत्रिवृतायाम् । কাল তেউড়ী । मे. । रा.नि.व.६ । सु.सू.३८अ. । पिप्पल्याम् । वै.निघ.ज्व.चि.कल्याणघृते । वा.व्या.चिकमूलघि. । हरिद्रायाम् । रा.नि.व.६ । वन्दायां । মান্দড়া । नीलपुनर्नवायां । रा.नि.व.५ । नीलदूर्व्वायां । रा.नि.व.८ । तुलसीवृक्षे । पद्मबीजे । रा.नि.व.१० । नालिक्याम् । নীল । रा.नि.व.४ । पक्षिविशेषे । শ্যামা পাখী । रा.नि.व.१९ । कस्तूर्य्यां । মৃগনাভি । गोरोचनायाम् । रा.नि.व.१२ । कृष्णसारिवायां । रा.नि.व.२३ । सोमलतायां । गुन्द्रायां । গড়গড়ে । विश्व. । लताकस्तूर्य्यां । अजशृङ्ग्यां । তিৎপুঙ্গী । प.मु. । वृद्धदारके । भा. । "काकजङ्घा बला श्यामा ।" च.द.ज्व.चि.आ.वा.चि.अलम्बुषाद्यचूर्णे । सु.सू.४४अ. । शिंशपावृक्षे । শিশু গাছ । रा.नि.व.९ । वाकुच्यां । সোমরাজ । गुग्गुलौ । मे. । श्वेतसारिवायाम् । भा.पू.१भ. । अनन्तमूले । भैष.खदिरवल्यां.वृहच्छुष्कमूलाद्यतैले । हरीतक्यां । वै.निघ २भ.अप.चि.चन्दनादि, अवलेहे । वा.व्या.चि.एरण्डपाके । कोकिलायां । चिका. ।

**श्यामाकः** । पुं । स्वनामख्याततृणधान्ये, कुधान्ये वा । শ্যামাধান । क्षुद्रधान्ये । अत्रि. । गुणाः—शोषणो रूक्षः वातलः कफपित्तजित् । भा.पू.१भ.धा.व. । "श्यामाकः शोषणो रूक्षो वातलः कफवारणः ।" अत्रि.१५अ. । तदन्नगुणाः—"श्यामाकभक्तो रुचिदो लघुरुक्षश्च दीपनः । बलवातकरो मेहगलबद्धमूत्रकृच्छ्रहा ॥" वै.निघ. । "सकोरदूषः श्यामाकः कषायमधुरो लघुः । वातलः कफपित्तघ्नः शीतसंग्राहिशोषणः ॥" च.सू.२७अ. ।

**श्यामाङ्गी** । स्त्री । नीलदूर्व्वायाम् । वै.निघ. ।

**श्यामाढ़की** । स्त्री । कृष्णपुष्पाढक्याम् । কালরহর । गुणाः—दीपनी पित्तदाहघ्नी च । रा.नि.व.१६ ।

**श्यामादिवर्गः** । पुं । तदादिद्रव्यगणे । गणोऽयं गुल्मविषहरः आनाहोदरोदावर्त्तादिघ्नश्च । यथा—श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति । শাদা তেউড়ী, বীজতাড়ক, লাল তেউড়ী, দন্তী, যবতিক্তা, লোধ, কমলাগুঁড়ি, পটোল, গুপারি, ইন্দুরকাণী, গোডুম্বা, সোন্দাল, করঞ্জ, নাটাকরঞ্জ, গুলঞ্চ, ছাতিম, ছাগলবেঁটে, সিজু, থিরুই । सु.सू.३८अ. ।

**श्यामाम्ली** । स्त्री । नीलाम्ला । रा.नि.व.४ ।

**श्यामालता ।** स्त्री। (Ichnocarpus frutescens.) कृष्णसारिवायाम् । শ্যামালতা । हिं दुधि । तें नीललिग । कश्चित् । [सं.महेश्वरदत्ते ।

**श्यामाबीजम् ।** क्ली। वृद्धदारकबीजे । र.सा.

**श्यामाह्वा ।** स्त्री । पिप्पल्याम् । वै.निघ. ।

**श्यामेक्षुः ।** पुं । कृष्णेक्षौ । रा.नि.व.१४ ।

**श्यावः ।** पुं । शुक्लानुविद्धकृष्णवर्णे श्याववर्णे वा । भा.म.१भ.आगन्तुज्वरे । "श्यावास्यता विष कृते ।" कर्णपालीगतरोगे । सु.सू.१६अ. । मन्द विषदर्षिकामेदे । सु.कल्प.८अ. ।

**श्यावदन्त (कः)** । पुं । दन्तगतमुखरोगे । लक्षणं—"योऽसृग्विमिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः । श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥" सु.नि.१६अ. ।

**श्याववर्त्म (न्)** । क्ली । नेत्रवर्त्मगतरोगे । लक्षणम्—"यद्वर्त्म बाह्यतोऽन्तश्च श्यावशूनं सवेदनम् । दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम् ॥" सु.उ. ३अ. ।

**श्यावास्यता ।** स्त्री । मुखकृष्णतायाम् । निदा. ।

**श्येतकोलकः ।** पुं। (Yprinus saphore.) मत्स्यविशेषे । পুঁটীমাছ । हारा. ।

**श्येनः ।** पुं । प्रसहजातीयपक्षिविशेषे । সঞ্চাল, শ্যেন, শিক্রে বা বাজ । काकसमगुणः । सु.सू. ४६अ. ।

**श्येनघण्टा ।** स्त्री । दन्तीवृक्षे । रा.नि.व.६ ।

**श्येनाहृतः ।** पुं । सोमलतायाम् । वै.निघ. ।

**श्येनी ।** स्त्री । श्येनस्त्रियाम् । মাদি বাজ । शब्दकल्पः ।

**श्योणा(ना)कः ।** पुं। (Calosanthes Indica, or Oroxylum Indicum. Syn. Bignonia Indica.) स्वनामख्यातवृक्षे । শোণা গাছ । हिं सोनापाठा, अर्लु । मं टेंटु: । उत्. फणफणा । पञ्जा. मुलिन् । नेपा. करमकन्द । ता. पन । गुणाः—शीतलः त्रिदोषघ्नः पित्तश्लेष्मातिसारघ्नः सन्निपातज्वरघ्नश्च । एतत्फलगुणाः—कटूष्णं कफवातहरं लघु दीपनं पाचनं हृद्यं रुचिकृत् लवणसारञ्च । रा.नि.व.६ ।

"टुण्टुकस्य फलं बालं रूक्षं वातकफापहं । कषायं मधुरं रोचनं लघु दीपनम् । गुल्मार्शः क्रिमिघ्नम् प्रौढ़ं गुरु वातप्रकोपनम् ॥" भा. । च. ४अ.अनुवासने । लोध्रे । वै.निघ. ।

**श्रपितम् ।** त्रि । पक्के । पाचिते । घृतदुग्धाभिन्नपक्कद्रव्ये । यथा—"अन्यत्तु श्रपितं श्राणं सुदक्षीकृते समे ।" जटा. ।

**श्रपिता ।** स्त्री । काञ्जिके । शब्दकल्पः ।

**श्रमः ।** पुं । चिकित्सायाम् । रा.नि.व.२० । खेदे । सु.शा.३अ. । क्लान्तौ । "श्रमोऽरतिः... र्बलम्" । मा.नि. ।

**श्रमणा ।** स्त्री । सुदर्शनायाम् । উরতিপুরা পদ্মগুলঞ্চ । मुण्डीर्याम् । মুণ্ডীরী । मांसी जटामांसी । मे. । [ताम्बूली । वै.नि.

**श्रमभञ्जिनी ।** स्त्री । नागवल्लीलताय...

**श्रवः (स्)** । पुं । श्रवणेन्द्रिये । কাণ । रा. व.१८ । अम. ।

**श्रवणम् ।** क्ली । श्रवणेन्द्रिये । रा.नि.व.१८

**श्रवणविभ्रमः ।** पुं । अन्यथाश्रवणे । ... कम् । [नाममहाक्षुपे । मुण्डीरी । रा.नि.व.

**श्रवणशीर्षिकः (का)** । पुं, स्त्री । श्राव...

**श्रवणा (णी)** । स्त्री । प्रपौण्डरीकनामगन्धे । পুণ্ডরিয়া । र. व.१२ । श्रावणा मुण्डीरी । रा.नि. । मुण्डीरीभेदे । प.
See कदम्बपुष्पी ।

**श्रवणाह्वया (ह्वा)** । स्त्री । निर्विषीतृण घासविशेष । कसटे । কাঁচড়া । सु.सू.३६अ.

**श्राणम् ।** क्ली । पक्के । मे. । घृतजलदुग्धाभिन्नपक्कद्रव्ये । जटा. । स्त्री (णा) । यवाग्वां । ... प.सु. ।

**श्राद्धशाकम् ।** क्ली । कालशाके । कालशम्बा । नाड़ीचशाके । वै.निघ. । भा.पू.१भ.शा.

**श्रान्तोपचारः ।** पुं । श्रमस्य श्रान्तौ उपचारविधाने । डलाई मलाई । ज.द. । [भा.

**श्रावः ।** पुं । श्रीवासे । সরল বৃক্ষের আটা

**श्रावकः ।** पुं । काके । त्रिका. ।

ावणा । स्त्री । दग्धालीवृक्षे । मे. । भूकद- ।। ८कोकृशिमा । व.गुडूचीतैले ।

ावणी । स्त्री । मुण्डीर्य्याम् । चुद्रमुण्डाम् । ओती । मं कोटीमुण्डी । गुणाः—कषाया कटु- णा कफपित्तघ्नी आमातीसारकासघ्नी विषच्छर्दि- । च । रा.नि.व.५ । महामुण्डीचुद्रमुण्डीतुल्यगु- ा । भा. । See अलम्बुषा । रक्तमुण्डीर्य्याम् । .चि.३अ. । महौषधी । See औषधिवर्गः । सु. व.३०अ. । हड़ी । वा.सू.१५अ. । भूकदम्बे । .वि.८अ. । कड़ी । वै.निघ. । [च.वि.३अ ।

ावणीद्वयम् । क्ली । श्रावणी महाश्रावणी: ।

ावा । स्त्री । अन्नमण्डे । प.मु. । [अ. ।

ावी (इन्) । पुं । सर्ज्जिकाचारे । सु.चि.२०

ीः । स्त्री । लक्ष्म्यां । बिल्ववृक्षे । वेल गाछ । रा.नि.व.२३ । वै.निघ.अ सा.चि.कुटजचूर्णे । ल- वङ्गलतायाम् । नकुल.१२अ. । कमले । पद्म । रा.नि.व.१० । सरलवृक्षे । मे. । कड़ी । रा.नि. .१ । नवनीतखोटी । सु.चि.२२अ. । च.द.वा. व्या.चि.एलादितैले । उपकरणे । मे. ।

श्रीकण्ठः । पुं । वैद्यहितोपदेशकारे । कुसुमा वलीटीकाकारे च । [व.१ ।

श्रीकन्दा । स्त्री । बन्ध्याकर्कोटिक्याम् । रा.नि.

श्रीकरम् । क्ली । रक्तोत्पले । त्रिका. । पुं । शालवृक्षे । वै.निघ. ।

श्रीकारी (इन्) । पुं । मृगविशेषे । तन्मांसगु- णाः—लघु हृद्यं बलकरञ्च । रा.नि.व.१९ ।

श्रीकुक्कुटः । पुं । तिलसर्षपपिण्याकजे मालव- देशप्रसिद्धे अम्लखड़कविशेषे । स च प्रमेहे हितः । वा.चि.१२अ. ।

श्रीखण्डः । पुं । हरिचन्दने । प.मु. । वेदसु- कड़िभेदेन तद्द्विविधम् । तयोः वेद्रं सार्द्रविच्छेदं, अन्यत् स्वयंशुष्कमिति । तदुक्तं—"चन्दनं द्विविधं प्रोक्तं वेदसुकड़िसंज्ञितम् । वेद्रन्तु सार्द्रविच्छेदं स्वयंशुष्कन्तु सुकड़ि ॥" गुणाः—कटुतिक्तशीतलं कषायं पित्तभ्रान्तिवमिज्वरक्रमितृष्णासन्तापहरं वृ- ष्यं मुखरोगघ्नं कान्तिकरं गात्रे लिप्तं निद्रादिज- नकञ्च । रा.नि.व.१२ । See चन्दनम् ।

श्रीगन्धम् । क्ली । श्वेतचन्दने । वै.निघ.१भ.दा- रु.चि.पुनर्नवातैले ।

श्रीग्रहः । पुं । पक्षिपानीयशालायां । हारा. ।

श्रीघनम् । क्ली । दधनि । जटा. ।

श्रीचन्दनम् । क्ली । श्वेतचन्दने । वै.निघ.१भ. अप.चि.द्राक्षावलेहे ।

श्रीचमरी । स्त्री । चमरीमृगे । वै.निघ. ।

श्रीतरुः । पुं । शालवृक्षे । वै.निघ. ।

श्रीतालः (ली) । पुं, स्त्री । मलियादेशप्रसि- द्धे तालसदृशवृक्षे । श्रीताल इति लोके । गुणाः —मधुरः शीतः ईषत्कषायः पित्तघ्नः कफकरः ईषद्वातप्रकोपनश्च । रा.नि.व.११ । नकुल.१६अ. ।

श्रीधात्री । स्त्री । शिरामलके । शिरामला । "अपुष्पवत्याः श्रीधात्र्याः ।" रस.कौ.महामृत्युञ्ज- यरसे ।

श्रीनिकेतः (नम्) । पुं, क्ली । नवनीतधूपे, सरलनिर्यासे । तार्पिन् । सु.चि.६अ. । रक्तपद्मे । सुवर्णे । वै.निघ. ।

श्रीनिवासकः । पुं । कुरुण्टकवृक्षे । झाँटी गाछ । वै.निघ.वा.व्या.चि. ।

श्रीपदी । स्त्री । वार्षिकीमल्लिकायां । वेल- फूल । भा. ।

श्रीपर्णम् । क्ली । पद्मे । रा.नि.व.१० । पुं । गणिकारिकायाम् । गणिरी । अम. । च.वि.८अ. ।

श्रीपर्णिका (र्णी) । स्त्री । कटफलवृक्षे । रा. नि.व.९ । गाम्भारीवृक्षे । प.मु. । अम. । च.चि.१ अ. । वा.चि.६अ. । "श्रीपर्णीफलशीतकषायः ।" भा.म.१भ.रक्तष्ठीवीज्व.चि. । भैष.छर्द्दी.चि. । ग- णिकारिकायाम् । गणिरी । रा.नि.व.९ । शाल्म- लीवृक्षे । हे.च. । पृश्निपर्ण्याम् । र.मा. । शालप- र्ण्यां । पृश्निपर्ण्याम् । र.मा. । वै.निघ.२भ.संग्रह- णीचि.नागरादिकषाये ।

श्रीपर्णीतैलम् । क्ली । स्तनरोगाधिकारे तै- लम् । पाठः—"श्रीपर्णीरसकल्काभ्यां तैलं स्निग्धं स्तनोपरि । तूलकेन हृतं कुर्यात् पतिताबुत्थितौ स्तनौ ॥" श्रीपर्णी गाम्भारी तस्याः त्वचो रसः । अभावे अर्थाग्रशिष्टः क्वाथः । रस.र. ।

**श्रीपिष्टः** । पुं । सरलद्रवनिर्यासे । तार्पिन् । भ.टी.रा.मा. । लवणखोव्याम् । कश्चित् ।

**श्रीपुत्रः** । पुं । घोटके । त्रिका. ।

**श्रीपुष्पम्** । क्ली । लवङ्गे । रा.नि.व.२३ । प्र-पौण्डरीके । पुण्डरिया । ज.द. । पद्मकाष्ठे र. मा. । श्वेतपद्मे । च.द.मुखरो.चि.वृहत्खदिरवट्यां ।

**श्रीपुष्पमञ्जरी** । स्त्री । प्रपौण्डरीके । पुण्डरिया । रा.नि.व.१२ ।

**श्रीप्रसूनकम्** । क्ली । लवङ्गे । वै.निघ. ।

**श्रीफलः** । पुं । बिल्ववृक्षे । राजादनीवृक्षे । क्षीरी गाछ । रा.नि.व.११ । भा.म.१भ. । "श्रीफलः सर्वतोभद्रा ।" क्ली । बिल्वफले । र.मा. । वा.चि.१श्र. । "श्रीफलैः क्वतम् ।" आमलके । वै.निघ. । आर्द्रचिक्कणपूगे । कॉंचा चिकि । रा.नि.व.२३ । स्त्री (ला) । नीलीवृक्षे । नील गाछ । रा.नि.व.४ । चन्द्रकारवेल्लाम् । उच्छे । रा.नि.व.३ । आमलक्याम् । रा.नि.व.११ ।

**श्रीफलशलाटुः** । पु । बिल्वशलाटौ । बेलशुँठ । सा.कौ.ग्रहणी.चि. ।

**श्रीफलिका** । स्त्री । क्षुद्रकारवेल्ले । क्षुद्र करला । रा.नि.व.३ । महानीलीवृक्षे । रा.नि.व.४ ।

**श्रीफली** । स्त्री । आमलक्याम् । आमला गाछ । रा.नि.व.११ । नील्याम् । नील गाछ । मे. । महाज्योतिष्मतीलतायाम् । बड़ लताफट्की । रा.नि.व.३ ।

**श्रीबाहुशालगुड़ः** । पुं । अर्शोऽधिकारे पक्व-गुड़ः । क्वाथार्थं—त्रिवृत् चवी दन्ती गोक्षुरं चित्रकं शटी इन्द्रवारुणी शुण्ठी मुस्तकं विडङ्गं हरीतकी एषां प्र. ८ तो. भल्लातकं ६४ तो. वृद्धदारकबीजं ४८ तो. ओलं १२८ तो. जलं १२८ श. शे. ३२ श । गुड़ः ६८४ तो. १२३ पलं वा । प्रक्षेपद्रव्यं—त्रिवृच्चूर्णं चविचूर्णम् ओलचूर्णं चित्रकमूलचूर्णम् एषां प्र. १६ तो. एला गुडत्वक् मरिचं नागकेशरम् एषां चूर्णं प्र. ४८ तो. । তেউড়ী, চই, দন্তী, গোক্ষুর, চিত্রক, শটী, রাখালশশা, শুঁট, মুতা, বিড়ঙ্গ, হরীতকী প্রত্যেকে ৮ তো. ভল্লাতক ৬৪ তো. বৃদ্ধদারকবীজ ৪৮ তো. ওল ১২৮ তো. জল ১২৮ শ. শে. ৩২ শ. । গুড় ৯৮৪ তো. ১২৩ প.। প্রক্ষেপদ্রব্য—তেউড়ীচূর্ণ, চইচূর্ণ, ওলচূর্ণ, চিতামূলচূর্ণ প্রত্যেকে ১৬ তো. এলাইচ, গুড়ত্বক্, মরিচ ও নাগেশ্বরচূর্ণ প্রত্যেকে ৪৮ তো. । च.द. । भा. ।

**श्रीबीजः** । पुं । तालवृक्षे । वै.निघ. ।

**श्रीभद्रः** । पुं । मुस्तायाम् । श.र. ।

**श्रीभ्राता** । पुं । घोटके । रा.नि.व.१९ ।

**श्रीमञ्जरी** । स्त्री । तुलसीवृक्षे । वै.निघ. ।

**श्रीमत्** । क्ली । तिलपुष्पे । वै.निघ. । स्त्री (ती) मुण्डीर्याम् । मुण्डीरी । वै.निघ. ।

**श्रीमदनानन्दमोदकः** । पुं । ध्वजभङ्गे औषधम् । यथा—पारदस्य १ भ. गन्धकस्य १ भ. लौहस्य १ भ. अभ्रस्य ३ भ. कर्पूरस्य जटामांसी सैन्धवस्य आमलक्याः एलायाः शुण्ठ्याः मरिच पिप्पल्याः जैत्र्याः जातीफलस्य तेजपत्रस्य लवङ्ग जीरकस्य कृष्णजीरकस्य यष्टिमधुनः वचायाः हरिद्रायाः कुष्ठस्य देवदार्वोः हिज्जलबीजस्य टङ्कण भार्ग्याः शुण्ठ्याः नागकेशरस्य कर्कटशृङ्ग्याः तालीशपत्रस्य चित्रकस्य द्राक्षायाः दन्तीबीजस्य बाला लकस्य गौरजतण्डुलायस्य त्वचः धान्यकस्य गजकणायाः शट्याः बालकस्य मुस्तकस्य गोक्षुरबीजस्य क्षीरस्य प्रसारण्या भृङ्गाष गडस्य शतमूल्या अश्वमूलस्य वानरीबीजस्य [illegible]रकबीजस्य शक्राशनबीजस्य च चूर्णं प्रत्ये[illegible] तो. एकत्र शतावर्या रसेन मर्दयित्वा संशोष्य पुनश्चूर्णयेत् । अथ सर्वचूर्णचतुर्थांशं आमलकीचूर्णं मिश्रयेत् । एतत् सर्वाशक्राशनचूर्णं मिश्रयित्वा छागीदुग्धेन मर्दयेत् अथ सर्व्वचूर्णद्विगुणाः शर्करा गृहीत्वा छागीदुग्धे पाच्यः । पाकसिद्धौ त्वगेलापत्रकेशरकर्पूरमैत्रत्रिकटुचूर्णं यथासम्भवं प्रक्षिप्य घृतं मधु च यथावश्यकं मिश्रयेत् । भैष.ध्वजभङ्गे । [वि.५

**श्रीमलापहा** । स्त्री । धूम्रपत्रायाम् । रा.नि.

**श्रीमस्तकः** । पुं । रक्तालुके । राङ्गा आलु । रसोने । त्रिका. ।

**श्रीमान्** । पुं । तिलकवृक्षे । तिल गाछ । अम. । अश्वत्थवृक्षे । रा.नि.व.११ । ऋषभके । ऋषभक । हरिद्रावृक्षे । वै.निघ. ।

**श्रीमुखः** । पुं । शारीरकग्रन्थकारे ।

**श्रीरसः** । पुं । श्रीवेष्टे । সরলনির্য্যাস, তার্পিন্ । रा.नि.व.१२ ।

**श्रीलता** । स्त्री । महाज्योतिष्मतीलतायाम् । रा.नि.व.३ ।

**श्रीवल्ली** । स्त्री । स्वनामख्यातकण्टकवृक्षे । मं सीगेयवल्ली । कं श्रीवल्ली । गुणाः—कटुरम्ला वातशोफकफघ्नी । तत्फलं तैललेपघ्नं रुचिकरञ्च । रा.नि.व.८ । वार्षिकीमल्लिकाभेदे । रा.नि.व.१० ।

**श्रीवाटा (टी)** । स्त्री । नागवल्लीविशेषे । পান গাছবিশেষ । मं सिरिवाड़ीपान । कं सिरिवाड़ियेलि । रा.नि.व.११ । See नागवल्ली ।

**श्रीवार(स)कः** । पुं । शितावरशाकरूपे । শুশুনা শাক । रा.नि.व.४ । भा.पू.१भ. ।

**श्रीवासः (कः)** । पुं । सरलनिर्यासे, सरलद्रवरसे । तार्पिन् इति भाषा । गन्धविरजा । रा.नि.व.१२ । लवणखोटीति । च.द.वा.व्या चि. एकादशशतीकमहाप्रसारणीतैले । वा.सू.१५अ. एलादिः । गुणाः—"श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः । पित्तलो वातमूर्द्धाक्षिस्वररोगरक्षोफापहः । रक्षोघ्नः स्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ॥" भा. । "श्रीवासः सरलं पूतिः कुन्दुरुर्ग्रन्थिपर्णकं । शिल्हकः परमा मांसी देवदारु सुरा नख । सर्व्वेऽमी परमा लक्ष्मीः··· ॥" राज. । गुग्गुलौ । भा.उ.वाजी. । "श्रीवासो गुग्गुलुस्तथा ।" देवदारौ । দেবদারু গাছ । भैष.ने.रो.चि. । "श्रीवासो भद्रकः प्रोक्तोऽमलकाष्ठविवर्जितः ।" भैष. । धूपे । त्रिका. ।

**श्रीवासा: (स)** । पुं । सरलद्रवे । अ.टी. ।

**श्रीवृक्षः (कः)** । पुं । अश्वत्थवृक्षे । हे.च. । विल्ववृक्षे । शब्दकल्पः ।

**श्रीवेष्टः (कः)** । पुं । सौराष्ट्रदेशे प्रसिद्धः स्वनामख्यातसुगन्धवृक्षे । সরল বৃক্ষ । सु.सू.३८अ. एलादौ । सरलनिर्यासे । তার্পিন্ । गुणाः—कटुः तिक्तः कषायः पित्तश्लेष्महरः योनिदोषाक्षीर्णव्रणाध्मानहरश्च । रा.नि.व.१२ । सु चि.२२अ । नवनीतखोट्याम् । च.सू.४।५अ. । च.द.वा.र.चि. कुष्ठाद्यतैले । गुग्गुलौ । सु.सू.३१अ. ।

**श्रीवेष्टफलम्** । क्ली । सरलवृक्षफले । वै.निघ. २भ शीताङ्गसन्निपातज्व.चि. ।

**श्रीसंज्ञम्** । क्ली । लवङ्गे । अम. । भा.उ.वाजी. । "श्रीसंज्ञपुष्पैः सम् ।"

**श्रीसम्पदा** । स्त्री । ऋद्धौ । रा नि.व.५ ।

**श्रीहर्षसूरिः** । पुं । योगचिन्तामणिकारे ।

**श्रीहस्तिनी** । स्त्री । हस्तिशुण्ड्यां । হাতিশুঁড়ে । जटा. । [च.सू.५अ । च.द.कुष्ठ.चि. ।

**श्राह्वः** । पुं । नवनीतखोटी । সরল-আটা ।

**श्रुग्वारुः** । पुं । विकङ्कतवृक्षे । বঁইচী গাছ । र.मा. ।

**श्रुघ्निः (घ्नी)** । स्त्री । सर्जिकाक्षारे । সাজিমাটী । "क्षारः श्रुघ्नी यवक्षारः ।" र.मा. । सु. चि २०अ.अजगल्लि.चि. ।

**श्रुतश्रेणी** । स्त्री । द्रवन्तीवृक्षे । ইন্দুরকাণী । भा. । गुणाः—चक्षुष्या कटुः आखुविषापहा व्रणनेत्रामयहिता । रा.नि.व.४ ।

**श्रुतिः** । स्त्री । श्रवणेन्द्रिये । কাণ । रा.नि.व. १८ । स गर्भस्य पञ्चमे मासि भवति । सुखबोधः ।

**श्रुतिकटः** । पुं । सर्पे । मे. ।

**श्रुतिमूलम्** । क्ली । कर्णमूले । संग्रहः ।

**श्रुतिवर्जितः** । त्रि । वधिरे । जटा. ।

**श्रुतिवेधः** । पुं । कर्णवेधे । शब्दकल्पः ।

**श्रुतिसारः** । पुं । वैद्यकग्रन्थभेदे ।

**श्रुतिस्फोटा** । स्त्री । कर्णस्फोटालतायाम् । কানছিড়া । रा.नि.व.३ ।

**श्रुवः** । पुं । अश्वस्य शिरोऽधः केशान्तभागे । ज.द.२अ. । स्त्री (वा) । मूर्व्वायाम् । रा.नि.व.३।

**श्रुवावृक्षः** । पुं । विकङ्कतवृक्षे । বঁইচী গাছ । रा.नि.व.११ ।

**श्रेणिका** । स्त्री। निःश्रेणिकातृणे । रा.नि.व.८।

**श्रेणिः (णी)** । स्त्री । लाजमण्डे । শ্রেণীর মণ্ড । प.मु.। समानशिल्पसंहतौ । কোম্পানি । मे. । सेकपात्रे । विश्व. ।

**श्रेयः** । पुं । जीवके । वै.निघ. ।

**श्रेयसी** । स्त्री । हरीतक्याम् । भा.पू.१भ. । रा.नि.व.११ । वै.निघ.कास.चि.चित्रकादिलिहे । गजपिप्पल्याम् । भा.पू.१भ.बृहन्मैन्धवाद्यतैले । च-ग्निमुखचूर्णे च । सि.यो.बृहत्पञ्चगव्यघृते । सर्व्व-ज्वरहरलौहे । भैष.ग्रीथचि.ग्रीथकालानलरसे । रास्नापाठायाम् । आकनादि । रा.नि.व.६ । रास्नायाम् । विश्वः । च.सू.४अ. । भा.वातश्लेष्मज्व.चि. बृहत्पिप्पल्यादौ । "श्रेयसी सदुरालभा ।" प्रियङ्गौ । रा.नि.व.१२ । [दिरि । प.मु. ।

**श्रेष्ठम्** । क्ली । गोदुग्धे । विका. । पुं । श्वेतख-

**श्रेष्ठकाष्ठः** । पुं । शाकवृक्षे । शेगुन गाछ । रा.नि.व.६ । [प.मु ।

**श्रेष्ठमल्लिका** । स्त्री । शतदलमल्लिकायाम् ।

**श्रेष्ठलवणम्** । क्ली । सैन्धवलवणे । वै.निघ. ।

**श्रेष्ठवृच्चः** । पुं । वरुणवृक्षे । रा.नि.व.६ । कृष्णागुरुवृक्षे । वै.निघ. । [वै.निघ ।

**श्रेष्ठवेधिका** । स्त्री । कस्तूर्य्याम् । मृगनाभि ।

**श्रेष्ठव्रीहिः** । पुं । षष्टिकशालौ । येटे धान । वै.निघ. ।

**श्रेष्ठा** । स्त्री । स्थलपद्मिन्याम् । स्थलपद्म । रा.नि.व.५ । मेदायाम् । वै.निघ.२भ.अर्शःचि.सूरणमोदके । त्रिफलायाम् । वा.चि.१२अ. ।

**श्रेष्ठाम्बु** । क्ली । तण्डुलोदके । चेलूनि जल । वा.उ.३७अ. ।

**श्रेष्ठाम्लम्** । क्ली । वृचाम्ले । रा.नि.व.६ ।

**श्रोणः** । त्रि । खञ्जे । अम. । स्त्री (णा) । काञ्जिके । शब्दकल्पः ।

**श्रोणिः (णी)** । स्त्री । नितम्बे । रा.नि.व.१८ । सा गर्भस्य मासद्वयेन भवति । सुखबोधः । (णी) अग्निमन्थक्षुपे । गणिरी । वै.निघ. ।

**श्रोणिफल(क)म्** । क्ली । वरस्त्रीणां प्रशस्तनितम्बे । नितम्बभोग । रा.नि.व.१८ । अम. ।

**श्रोणिफलकास्थि** । क्ली । नितम्बाभोगास्थिनि । तानि चत्वारि । च.शा.७अ. ।

**श्रोतः (स्)** । क्ली । कर्णे । विका. । इन्द्रिये । हे.च. । शिरायाम । म ।

**श्रोतोजम्** । क्ली । सौवीराञ्जने । रा.नि.व.१३।

**श्रोतोद्भवम्** । क्ली । श्रोतोऽञ्जने । रा.नि.व.१३।

**श्रोत्रम्** । क्ली । श्रवणेन्द्रिये । रा.नि.व.१८ ।

**श्रौत्रम्** । क्ली । श्रवणेन्द्रिये, कर्णे । अम. ।

**श्याह्वः** । पुं । नवनीतखोट्याम् । च.सू.१अ. प्रदेहे । क्ली । कमले । शब्दकल्पः ।

**श्लक्ष्णकम् (का)** । क्ली, स्त्री । पूगफले । रा.नि.व.११ । (का) कृष्णापराजितायां । वै.निघ. ।

**श्लक्ष्णत्वक्** । पुं । अश्मन्तकवृक्षे । आपटा । रा.नि.व.६ ।

**श्लीपदम्** । क्ली । पादरोगविशेषे । गोद । निदानं यथा —"कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना ... कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति तत् श्लीपदमित्याचक्षते ।" सु.नि.१२अ. । तस्य कारणं —"पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥" लक्षणं यथा—"यः सज्वरो वङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः ... भेण । तच्छ्लीपदं स्यात् ... केचिदाहुः ॥" "वातजं ... कृष्णरूक्षं ह स्फुटितं ... दनम् । अनिमित्तरुजास्य बहुशो ज्वरः ... । पित्तजम्पीतसङ्काशं दाहज्वरयुतं भृशम् ... कन्तु भवेत् स्निग्धं तत् ... पाण्डुरमस्थिरम् । चीण्यप्येतानि जानीयात् श्लीपदानि कफात् चयात् । गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफं ... ना ॥" मा.नि. । "पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत् । श्लीपदं जायते ... देहेऽनूपे भृशं भृशम् ॥" वा.उ.२६अ. ।

**श्लीपदप्रभवः** । पुं । आम्रवृक्षे । श.मा. ।

**श्लीपदापहः** । पुं । पुत्रजीववृक्षे । विका ।

**श्लीष्टः** । पुं । आम्रवृक्षे । वै.निघ. ।

**श्लेष्मकः** । पुं । कफे । श.च. ।

**श्लेष्मकोष्ठः** । पुं । अश्वरोगभेदे । स चामन्दाहारिणामुभयः । ज.द.४६अ. ।

**श्लेष्मघ्नः** । त्रि । श्लेष्महरे, तच्च लघुपाकद्रव्यम् । तीक्ष्णरूक्षविशदगुणभूयिष्ठत्वात् कटुतिक्तकषायात्मकम् । स.म.४१अ. ।

**श्लेष्मघ्ना (घ्नी)** । स्त्री । त्रिपुरमल्लिकायां । त्रि-का. । केतक्याम् । विश्व. । ज्योतिष्मतीलतायाम् । जटा. । त्रिकटौ । त्रिकटु । श.र. ।

**श्लेष्मज्वरः** । पुं । कफजन्यज्वरे । लक्षणं यथा —"स्तैमित्यं स्तिमितो वेगः आलस्यं मधुरास्यता । शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च । गौरवं शी तमुत्क्लेशः...... ॥" इत्यादि । निदा. ।

**श्लेष्मगः** । पुं । कफे । तस्य च स्थानं सन्धयः । "तस्य स्थानं सन्धयः, तत्कर्म च सन्धीनां संश्लेषणम् ।" भा. ।

**श्लेष्मधरा** । स्त्री । चतुर्थकलायाम् । या सर्व्व-सन्धिषु प्राणभृतां भवति सेत्युच्यते । सु.शा.४अ. ।

**श्लेष्मनाड़ी** । स्त्री । दन्तमूलगतरोगे । दन्तना-ली । "ज्ञेया कफाद्वहुघनार्ज्जुनपिच्छिलास्रास्रावा सकण्डुरुजा रजनीप्रवृद्धा ।" [पाण्डुः ।

**श्लेष्मपाण्डुः** । पुं । श्लेष्मजन्यपाण्डुरोगे । ८०७

**श्लेष्मप्रकृतिः** । त्रि । कफप्रकृतौ मनुष्ये । तल्ल-क्षणं —"सुस्निग्धवर्णः सितनेत्रदन्तः श्यामः सुकेशो नखदीर्घरोमा । गम्भीरशब्दः सुतशास्त्रनिद्रातन्द्रा-प्रियः तिक्तकटूष्णभोजी । समांसलः स्निग्धरसप्रि-यश्च सगीतवाद्योऽतिसहिष्णुशीतः । व्यायामशीलो रतलालसोऽसौ भवेत् कफस्य प्रकृतिर्मनुष्यः ॥" अत्रि.५अ. ।

**श्लेष्मलः** । त्रि । श्लेष्मप्रकृतौ । अम. ।

**श्लेष्मलफलः** । पुं । बहुवारवृक्षे । वै.निघ. ।

**श्लेष्मविसर्पः** । पुं । कफजन्यविसर्पे । निदा. ।

**श्लेष्मसम्भूतः** । त्रि । श्लेष्मजे । रा.नि.व.२० ।

**श्लेष्मस्रावः** । पुं । नेत्रसन्धिगतरोगविशेषे । लक्षणं—"श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च श्लेष्म-स्रावी नीरुजः स प्रदिष्टः ।" सु.उ.२अ. ।

**श्लेष्महः** । पुं । पनसवृक्षे । কাঁটাল গাছ । वै. निघ. । कट्फलवृक्षे । श.च. ।

**श्लेष्महन्त्री** । स्त्री । देवदालीलतायां । দেয়া-তাড়া । वै.निघ. ।

**श्लेष्मा (न्)** । पुं । शरीरस्थकफे । स च माधुर्य्य-स्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः । तस्य स्थान-योनिः मधुरो रसः स माधुर्य्यादिभिः माधुर्य्यादी-नि वर्द्धयति । सु.सू.४२अ. । तस्य स्थानमामाश-यः । गुणाः—श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छि-लः शीत एव च । मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः ॥ तत्रामाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्द्ध्वगतित्वात्तेजस ऊर्द्ध्व इवादित्यस्य स चतुर्विधस्याहारस्याधारः । स च तत्रोदकैर्गुणैराहा-रः प्रक्लिन्नो भिन्नसङ्घातः सुखजरश्च भवति । मा-धुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च । आमा-शये सम्भवति श्लेष्मा मधुरशीतलः । स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदक-कर्म्मणानुग्रहं करोति । उरस्थः त्रिकसन्धीनामा-त्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति । जिह्वामूलकण्ठस्थः जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्-रसज्ञाने वर्त्तते । शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वात् इन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति । सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्वसन्ध्यनुग्रहं करोती-ति ॥ सु.सू.२१अ. । चतुर्थी श्लेष्मधरा नाम सर्व्व-सन्धिषु प्राणभृतां भवति । "स्नेहाभ्यक्ते यथैवाक्षे चक्रं साधु प्रवर्त्तते । सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥" सु.शा.४अ. । "प्राकृतस्तु बलं श्लेष्मा वैकृतो मल उच्यते । स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते ॥" च.सू.२७अ. ।

**श्लेष्माटः (तः, कः, की)** । पुं, स्त्री । शे-लुवृक्षे । চালতা গাছ । हिं लसौरा । र.मा. । रा.नि.व.११ । भा. । च.सू.४अ. । गुणाः—"गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमं ।" सु.सू.४६अ. । च.सू.२७अ. ।

**श्लेष्माणा** । स्त्री । वृक्षविशेषे । श.मा. ।

**श्लेष्मातकसदृशपत्रः** । पुं । पनसवृक्षे । কাঁটাল গাছ । वै.निघ. ।

**श्लेष्मान्तकः** । पुं । शेलुवृक्षे । रा.नि.व.११ ।

**श्लेष्माभिष्यन्दः** । पुं । सर्व्वगताक्षिरोगभेदे । लक्षणं —"...स्यन्दे तु कफसम्भवे । जाड्यं शोफो महान् कण्डूर्निद्रान्नानभिनन्दनम् । सान्द्रस्निग्धबहु-श्वेतपिच्छावद्दूषिकाश्रुता ॥" वा.उ.१५अ. ।

**श्लेष्मोल्वणः** । त्रि । श्लेष्माधिके । वा.चि.७अ. ।

**श्लैष्मिकः** । त्रि । श्लेष्मसम्भूते । रा.नि.व.२० ।

**श्लैष्मिकरक्तपित्तम्** । क्ली । कफजन्यरक्तपित्ते । मा.नि. । See रक्तपित्तम् ।

**श्लैष्मिकी** । स्त्री । श्लेष्मजन्ययोनिव्यापदि । लक्षणम्—"कफोऽभिष्यन्दिभिः क्रुद्धः कुर्य्याद्योनिमवेदनाम् । शीतलां कण्डुलां पाण्डुपिच्छिलां तद्विधस्रुतिम् । सा व्यापत् श्लैष्मिकी...... ॥" वा.उ. ३३अ. ।

**श्वग्रहः** । पुं । बालग्रहविशेषे । लक्षणं—"कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनं । बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनं । धावनं विट्सगन्धत्वं क्रोशनं श्वानवच्छुनि ॥" वा.उ.३अ. ।

**श्वचिल्ली** । स्त्री । कुक्कुरचिल्लीक्षुपे । कुकुरशोंका । वै.निघ. । [नि.व.४ ।

**श्वदंष्ट्रकः** । पुं । गोक्षुरक्षुपे । গোখুরী । रा.

**श्वदंष्ट्रा** । स्त्री । गोक्षुरे । গোখুরী । र.मा. । सु.सू.३८अ. । च.द.ज्व.चि.ज्वरातिसारे । "श्वदंष्ट्राकण्टकारीभ्यां ।" च.सू.४अ. ।

**श्वधूर्त्तः** । पुं । शृगाले । श.र. ।

**श्वनकः** । पुं । कुक्कुरे । प.मु. । [यां । जटा. ।

**श्वनिशम् (शा)** । क्ली,स्त्री । मत्तकुक्कुरनिशा

**श्वपुच्छः** । पुं । वृश्चिके । বিছা । स्त्री (च्छा) । पृश्निपर्ण्यां । চাকুলিয়া । वै.निघ. ।

**श्वफलः** । पुं । चूर्णे । চূণ । बीजपूरे । লেবু গাছ । र.मा. ।

**श्वभीरुः** । पुं । शृगाले । श.मा. ।

**श्वभ्रम्** । क्ली । छिद्रे । अम. ।

**श्वयथुः** । पुं । शोथरोगे । रा.नि.व.२० ।

**श्वयीचिः (ची)** । स्त्री । रोगे । पीड़ायाम् । व्याक. । [चि । प.मु. । वायौ । अम. ।

**श्वसनम्** । क्ली । निःश्वासे । मे. । पुं । मदनवृ-

**श्वसनाशनः** । पुं । सर्पे । हारा. ।

**श्वसनेश्वरः** । पुं । अर्जुनवृक्षे । श.च. ।

**श्वसनोत्सुकः** । पुं । सर्पे । श.र. ।

**श्वसितम्** । क्ली । निःश्वासे । हे.च. ।

**श्वसुनः** । पुं । कासाल्वौ । रा.नि.व.७ । चतष्रवृक्षे । কুকুর শোঁকা । श.च. ।

**श्वा (न्)** । पुं । (स्त्री शुनी) । कुक्कुरे । श.र. ।

**श्वादन्तः** पुं । कुक्कुरदन्ते । व्याक. । [श.र. ।

**श्वानः** । पुं । कुक्कुरे । स्त्री (नी) । सारमेयायां ।

**श्वानचिल्लिका (ल्ली)** । स्त्री । शुनकचिल्लीशाके । वै.निघ. ।

**श्वावल्लिका** । स्त्री [illegible] शाके । रा.नि.व.६ ।

**श्वावित्** । पुं । [illegible] शल्लकीमृगे । সজারু । भा. । अयं विलेशय[illegible] सु.सू.४६अ. । शल्लकीवृक्षे । त्रिका. ।

**श्वासः** । पुं । [illegible]ख्यातरोगविशेषे । हाँपानि । तस्य निदा[illegible]रेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते । तैरेव [illegible]: श्वासो घोरो भवति देहिनां । विहाय प्र[illegible]ायुः प्राणोऽथ कफसंज्ञितः । श्वासयत्यूर्द्ध्वगो [illegible] तं श्वासं परिचक्षते ॥" स पञ्चविधः यथा [illegible]र्द्धश्छिन्नतमकक्षुद्रभेदैश्च पञ्चधा । भिद्यते स [illegible]ाधिः श्वास एको विशेषतः ॥" पूर्व्वरूपं य[illegible] "प्राग्रूपं तस्य हृत्पीड़ा शूलमाध्मानमेव च । [illegible]ो वक्त्रवैरस्यं शङ्खनिस्तोद एव च । यदा [illegible]स संरुध्य मारुतः कफपूर्व्वकः । विष्वग्व्र[illegible]ेत्कुरुस्तदा श्वासं करोति च ॥" चिकित[illegible]फवातघ्नमुष्णं वातानुलोमनं भेषजं देयम् [illegible] । असाध्य यथा—"मुखेन नासया चैव यः [illegible]ाणं विमुञ्चति । वातिकः शिशिरे काले तस्य श्व[illegible]ं विनिर्दिशेत् । शरन्निदाघयोश्चैव श्वासः पित्तेन जायते । तृष्णादाहपरीतस्य भिन्नगात्रस्य वाजिनः । मुखेन नासया चैव कफो [illegible] प्रवर्त्तते । प्रावृट्काले वसन्ते वा श्वासस्तस्य कफात्मकः ॥" ज.द.२५अ ।

**श्वासकासः** । पुं । प्रसिद्धरोगद्वये । হাঁপানি কাশি । निदा. । [रा.नि.व.८ ।

**श्वासभक्षः** । पुं । वर्व्वूरकवृक्षे । বাবলাগাছ ।

**श्वासहेतिः** । स्त्री । निद्रायां । हे.च. ।

**श्वासारिः** । पुं । पुष्करमूले, कुष्ठे । কুড় । रा.नि.व.६ ।

**श्वित्रम्** । क्ली । किलासे । श्वेतकुष्ठे । ধবল রোগ । अम. । लक्षणं—"कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत् । निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् । वाताद्रुक्षारुणं पित्तात्ताम्रं कमलपत्र-

वत्। सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु। सकण्डुरं क्रमाद्रक्तमांसमेदःसु चादिशेत्। वर्णेनै-वेद्दग्भयं कृच्छ्रं तद्यौत्तरोत्तरं। अशुक्लरोमबहुल-मसंश्लिष्टं मिथो नवम्। अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा। गुह्यपाणितलौष्ठेषु जातमप्यचि-रत्नं। वर्ज्जनीयं विशेषेण किलासं सिद्धिमिच्छ-ता॥'' भा.नि। [श.च.।

**श्वित्रघ्नी**। स्त्री। वृश्चिकाल्याम्। विछाती।

**श्वित्री** (इन्)। त्रि। श्वित्ररोगिणि।

**श्वेत(क)म्**। क्ली। रौप्ये। चिका.। श्वेतकां-स्ये। ভাল পিতল। वै.निघ.। पुं। कपर्दके। কড়ি। रा.नि.व.१३।

**श्वेतः**। पुं। शुक्लार्के। শ্বেত আকন্দ। रा.नि.व.१०। महाविषशुभ्रवृश्चिके, मन्दविषे च। सु.कल्प.८अ.। See वृश्चिकः। श्वेतशिग्रौ। श्वेतैचौ। श्वेतैरण्डे। कर्पूरे। चन्दनवृक्षे। मे.। श्वेतसर्षपे। श्वेतकाञ्चने। हंसे। वै.निघ.। शङ्खे। শাঁক। रा.नि.व.१। कपर्दके। কড়ি। हं.च.। श्वेताभ्रे। श.र.। जीवके। जटा.।

**श्वेतकटभी**। स्त्री। शुक्लकटभीवृक्षे। वा.उ.३८अ.। श्वेतगुञ्जायाम्। वा.उ.५अ.। [निघ.।

**श्वेतकण्टकः**। पुं। श्वेतलज्जालुकायाम्। वै.

**श्वेतकण्टकारिका (री)**। स्त्री। शुभ्रपुष्प-कण्टकार्य्याम्। শ্বেত কণ্টিকারী। रा.नि.व.४।

**श्वेतकण्टारिका**। स्त्री। शुक्लपुष्पकण्टका-र्य्याम्। शाद। কণ্টিকারী। हिं श्वेतरिंगिनी, श्वेतभटकटैया। तें विलियनेलगुलु। गुणाः— कटूष्णा कफवातघ्नी चक्षुष्या दीपनी रसघ्नी च। रा.नि.व.४। [व.६।

**श्वेतकन्दा**। स्त्री। शुक्लातिविषायां। रा.नि.

**श्वेतकपोतः**। पुं। दर्व्वीकरसर्पविशेषे। सु.कल्प.४अ.।

**श्वेतकमलम्**। क्ली। श्वेतपद्मे। रा.नि.व.१०।

**श्वेतकाकः**। पुं। शुक्लकाके। शाद। কাক। रावणकृतकार्म्मणशतके।

**श्वेतकाञ्चनः**। पुं। शुक्लपुष्पकाञ्चनवृक्षे। শ্বেত কাঞ্চন। प.मु.।

**श्वेतकाण्डा**। स्त्री। श्वेतदूर्व्वायाम्। रा.नि.व.८। [सु.चि.३०अ.।

**श्वेतकापोती**। स्त्री। स्वनामख्यातमहौषधौ।

**श्वेतकाम्भोजी**। स्त्री। श्वेतगुञ्जायाम्। शाद। কুঁচ। रा.नि.व.३। [कुल। वै.निघ.।

**श्वेतकाष्ठा**। स्त्री। श्वेतपाटलायां। शाद। पा-

**श्वेतकिणिही**। स्त्री। शुक्लकटभीवृक्षे। रा.नि.व.९।

**श्वेतकुम्भिका (म्भी)**। स्त्री। शुक्लपाटलवृ-क्षे। वै.निघ.।

**श्वेतकुरण्टकः**। पुं। शुक्लझिण्ट्याम्। शाद। ঝাঁটি। गुणाः—तिक्तः केश्यः स्निग्धः मधुर उ-ष्णः तीक्ष्णः दन्तहितः वलीपलितकुष्ठवातरक्तदो-षकफकण्डुविषघ्नश्च। वै.निघ.।

**श्वेतकुशः**। पुं। शुक्लदर्भे। मूलगुणाः—हिमं रुच्यं मधुरं पित्तरक्तज्वरघ्नं तृष्णाश्वासकामलानाश-नञ्च। रा.नि.व.८।

**श्वेतकुष्ठम्**। क्ली। श्वित्रे। धवल। निदा.।

**श्वेतकुसुमा**। स्त्री। श्वेतनिर्गुण्ड्यां। শ্বেত নিশিন্দা। वै.निघ.। [भ.।

**श्वेतकृष्णा**। स्त्री। कीटजातिभेदे। सु.कल्प.८

**श्वेतकेशः**। पुं। रक्तशिग्रौ। লাল সজিনা। जटा.। [त्रिका.।

**श्वेतकोलः**। पुं। शफरमत्स्ये। পুঁটী মাছ।

**श्वेतखदिरः**। पुं। शुक्लखदिरवृक्षे। পাপরী খয়ের গাছ। प.मु.। मं पाढरा खैर। कं वि-लियतर्त्ति, पपरीखयेर। तें तेल्लचंड। गुणाः— तिक्तः कषायः कटुः उष्णः कण्डूघ्नः कफवातव्रण-घ्नश्च। रा.नि.व.८। "........वर्ण्यो मुखरोग-कफास्रजिच्च।" भा.।

**श्वेतगण्डा**। स्त्री। श्वेतदूर्व्वायाम्। वै.निघ.।

**श्वेतगरुत्**। पुं। राजहंसे। अम.।

**श्वेतगुञ्जा**। स्त्री। शुक्लगुञ्जालतायाम्। शाद। কুঁচ গাছ। गुणाः— तीक्ष्णा उष्णा च। बीजं वा-न्तिजनकम्। तन्मूलं शूलविषघ्नम्। तत्पत्रं वश्यक-र्म्मणि शस्तम्। रा.नि.व.३।

**श्वेतघण्टा** । स्त्री। नागदन्त्याम्। हातिशुँड़े। दन्त्याम्। रा.नि.व.५।१६। [घोषा। वै.निघ.।

**श्वेतघोषा** । स्त्री। श्वेतकोषातक्यां। शादा

**श्वेतचणकः** । पुं। शुक्लचणके। शादा छोला। वै.निघ.।

**श्वेतचन्दनम्** । क्ली, पुं। (Santalum album.) स्वनामख्यातचन्दनवृक्षे। सादाचन्दनेर गाछ। प.मु.। [मु.४६अ.।

**श्वेतचरणः** । पुं। श्वेतचरजलपक्षिविशेषे। सु.

**श्वेतचामरः (पुष्पः)** । पुं। कासतृणे। केसे घास। वै.निघ.।

**श्वेतचिल्लिः (ल्लिका) (ल्ली)** । स्त्री। शुक्लवास्तुकशाके। श्वेतचिल्लीति भागीरथीतीरे प्रसिद्धा। शादा बेतो। मं वास्तुवा। कं बिलियचिल्लिके। वम्. लघुचाकवत। गुणाः--मधुरा चारा शिशिरा त्रिदोषघ्नी पथ्या ज्वरघ्नी च। रा.नि.व.७। [शु.च.। हंसे। हला.।

**श्वेतच्छदः** । पुं। गन्धपत्रे। बाबुई तुलसी।

**श्वेतजयन्ती** । स्त्री। शुक्लजयन्तीवृक्षे। श्वेत जयन्ती। भैष.कुष्ठ.चि.। [वै.निघ.।

**श्वेतजरणः** । पुं। शुक्लजीरके। शादा जीरा।

**श्वेतजलजम्** । क्ली। कुमुदे। हेलाफुल। वै.निघ.।

**श्वेतजीरकः** । पुं। गौरजीरके। शादा जीरा। मं पांढरे जीरे। कं बिलियजिरिगे। गुणाः--हिमो रूक्षः कटुः मधुरो दीपनः क्रमिघ्नः विषघ्नः चक्षुष्यः उदराध्मानहरश्च। रा.नि.व.६।

**श्वेतटङ्क(ण)म्** । क्ली। फटिकारिकायाम्। फट्किरि। प.मु.। टङ्कणक्षारभेदे। सोहागा, शादा सोहागा। गुणाः—स्निग्धं कटु उष्णं कफवातघ्नम् आमचयश्वासविषकासमलघ्नञ्च। रा.नि.व.६।

**श्वेततण्डुलमण्डम्** । क्ली,पुं। आतपतण्डुलसिद्धमण्डे। आलो चेलेर मण्ड। गुणाः --"मधुरं शीतलं किञ्चित् स्निग्धं शोषनाशनम्। अश्मरीमेहसंकर्दिवातलं श्वेततण्डुलम् ॥" अत्रि.१२अ.।

**श्वेततुलसी** । स्त्री। शुभ्रपत्रतुलसीवृक्षे। प.मु.।

**श्वेतत्रिवृत्** । स्त्री। शुक्लमूलत्रिवृति। शादा तेउड़ी। हिं श्वेतानिसोथ। गुणाः—"श्वेता त्रिवृद्रेचनी स्यात् स्वादुरुष्णा समीरहृत्। रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा ॥" भा.।

**श्वेतदण्डा (ण्डी)** । स्त्री। श्वेतदूर्व्वायाम्। वै.निघ.।

**श्वेतदन्ता** । स्त्री। नागदन्त्यां। वै.निघ.।

**श्वेतदर्भः** । पुं। शुक्लदर्भे। वै.निघ.।

**श्वेतदूर्व्वा** । स्त्री। शुक्लदूर्व्वायाम्। प.मु.। वम्. पाड़रीहरियाली। कं बिलियकरके। तें शुक्लदूर्व्वालु। गुणाः--शीतला मधुरा वान्तिपित्तघ्नी आमातीसारकासघ्नी रुच्या दाहतृष्णाघ्नी च। रा.नि.व.८। "श्वेता दूर्व्वा कषाया स्यात् स्वाद्वी व्रण्या च जीवनी। तिक्ता हिमा विसर्पासतृट्पित्तकफदाहहृत् ॥" भा.। [निघ.।

**श्वेतद्रुमः** । पुं। वरुणवृक्षे। वरुण गाछ। वै.

**श्वेतधातुः** । पुं। दुग्धपाषाणे। फुलखड़ि। रा.नि.व.१३। [मे.।

**श्वेतधामा (न्)** । पुं। कर्पूरे। समुद्रफेने।

**श्वेतधूनकम्** । क्ली। शुक्लधूनके। रस.र.ज्वराति.चि.ग्रहणीकपाटरसे।

**श्वेतनाड़ी** । स्त्री। खटिकायां। फुलखड़ि। वै.निघ.। श्वेतापराजितायां। श्वेत अपराजिता। च.सू.२अ.। [निघ.।

**श्वेतनामा** । स्त्री। श्वेतापराजितायां। वै.

**श्वेतनिष्पावा** । स्त्री। श्वेतपुष्पनिष्पावे। श्वेत शिम। गुणाः—सुरूच्या मधुरा अल्पकषाया शीतला वातला बल्याध्मानकरी पुष्टिकरी च। रा.नि.व.१६। [म। वै.निघ.।

**श्वेतपटलम्** । क्ली। यशदधातौ। दन्ताविशेवा.उ.५अ.। [षे।

**श्वेतपत्रम्** । क्ली। श्वेतकमले। रा.नि.व.१०। पुं। श्वेततुलस्याम्। प.मु.। राजहंसे। क्षुद्रदर्भे। क्षुद्र शादा कुश। वै.निघ.। स्त्री (त्रा)। श्वेतशिंशपायाम्। शादा शिशु गाछ। रा.नि.व.६।

तपद्मम् । क्ली । शुक्लकमले । रा.नि.व.१० ।
ে पुण्डरीकम् ।

तपर्णः । पुं । श्वेतार्जके । प.मु.। स्त्री(र्णा) ।
रपर्णी । পানা । र.मा. ।

तपर्णासः । पुं । श्वेततुलस्याम् । प.मु. ।

तपाटला । स्त्री । शुक्लपुष्पपाटलवृक्षे । ज
. । [পারুরা । वै.निघ. ।

तपारावतः । पुं । शुभ्रकपोते । শাদা

तपाषाणः । पुं । शुभ्रप्रस्तरे । শাদা পা-
। । र.सा.सं.रसप्रकरणे । स्फटिके । वै.निघ. ।

तपिङ्गः (लः) । पुं । सिंहे । त्रिका. ।

तपिण्डीतकः । पुं । महापिण्डीतरौ,
क्लमदने । শ্বেত ময়না গাছ । रा.नि.व.८ ।

तपुङ्गा । स्त्री । शुक्लशरपुङ्खायाम् । रा.नि.
.४ ।

तपुनर्नवा । स्त्री । शुभ्रपुनर्नवायां । শ্বে-
মূলপুনর্নবা । गुणाः—"कटुः कषायाणुरसा
ाण्डुघ्नी दीपनी परा । शोफानिलगरश्लेष्महरी व्र-
ोदरप्रणुत् ॥" भा.गु.र. ।

तपुष्पः । पुं । श्वेतसिन्धुवारवृक्षे । শাদা
রশিন্দা । जटा. । महाशणक्षुपे । শণ । रा.नि.
.४ । सेवन्तीपुष्पवृक्षे । শেউতী । वै.निघ.२भ.
र्णज्व.चि.सेवन्तीपाके । वरुणवृक्षे । अर्कवृक्षे ।
निघ. । क्ली । शुक्लपुष्पे ।

ेतपुष्पकः । पुं । करवीरवृक्षे । रा.नि.व.
० । श्वेतकासे । वै.निघ. ।

ेतपुष्पा । स्त्री । कोषातकीलतायाम् । শাদা
ঘোষা । र.मा. । श्वेतशणे । শাদা শণ । श्वेतनि-
र्गुण्ड्यां । শাদা নিশিন্দা । श्वेतगोकर्णिकायां ।
াদা অপরাজিতা । वै.निघ. । नागदन्त्याम् ।
াকড়ী । रा.नि.व.५ । मृगेर्व्वारौ । रा.नि.व.७ ।

ेतपुष्पिका (ष्पी) । स्त्री । पुत्रदात्रीलता-
याम् । रा.नि.व.२३ । महाशणपुष्पिकायाम् । বড়
শাদা শণ । रा.नि.व.४ ।

ेतपूरिका । स्त्री । खाद्यद्रव्यभेदे । यथा —
'गोधूमसक्तुं च घृतं यावत् पिण्डत्वमाप्नुयात् ।
तावद्दत्त्वा जलेनाथ मर्दनीयं प्रयत्नतः । तस्यैव पू-
रिकाः कार्य्याः घृते पाच्याश्च ताः स्मृताः । शर्करा-
सहिता जाड्या दुर्ज्जरा धातुवर्द्धकाः । स्निग्धाश्च
गुरवः पित्तवातनाशकरा मताः ॥" वै.निघ. ।

श्वेतप्रसूनकः । पुं । शाकवृक्षे । শেগুন গা-
ছ । श.मा. । [কুড় । रा.नि.व.४ ।

श्वेतफला । स्त्री । शुक्लवृहत्याम् । শাদা ব্যা-

श्वेतभृङ्गराजः । पुं । (Heliotropium brevipolium.) शुक्लपुष्पभृङ्गराजे । শাদা ভী-
মরাজ । हिं शफेद भांरा ।

श्वेतभण्टिका । स्त्री। शुक्लवार्त्ताकौ । वै.निघ.।

श्वेतभण्डा । स्त्री। श्वेतापराजितायाम् । শাদা
অপরাজিতা । र.मा. ।

श्वेतमञ्जरी । स्त्री । चुच्चुक्षुपे । वै.निघ. ।

श्वेतमण्डलः । पुं । मण्डलिसर्पविशेषे । सु.
कल्प.४अ. ।

श्वेतमन्दारः (कः) । पुं । श्वेतार्कवृक्षे । শ্বে-
ত আকন্দ গাছ । वम्. श्वेतमंदार । कं विलि-
यमन्दारण । गुणाः—अत्युष्णः तिक्तः मलशोधनः
मूत्रकृच्छ्रकृमिघ्नश्च । रा.नि.व.१० ।

श्वेतमरिचम् । क्ली । Seeds of Hyperanthira moringa. शोभाञ्जनबीजे । স-
জিনার বীজ । र.मा. । मं पांढरे मिरिये । कं
विलियमेणसु । तें तेल्लमिरियालु । गुणाः—कटू-
ष्णं विषघ्नं भूतघ्नं दृष्टिरोगघ्नं युक्त्या रसायनमपि
भवति । रा.नि.व.६ । "सैन्धवं श्वेतमरिचम् ।"
च.द.ज्व.चि.नस्ये । पुं । श्वेतशिग्रौ । रा.नि.व.७ ।

श्वेतमूलः (ला) । पुं, स्त्री । श्वेतपुनर्नवा-
याम् । वै.निघ. । [দা বৃহতী । रा.नि.व.४ ।

श्वेतमहोटिका । स्त्री । श्वेतवृहत्याम् । শা-

श्वेतमृगः । पुं । भूशयमृगविशेषे । च. ।

श्वेतयूथिका । स्त्री । शुक्लयूथिकायां । শাদা
যূঁই । वै.निघ. ।

श्वेतरञ्जनम् । क्ली । शीषके । शब्दकल्प: ।

श्वेतरत्नम् । क्ली । स्फटिके । प.मु. ।

श्वेतराजिः (जी) । स्त्री । चिचिण्डे । চি-
চিঙ্গা । भा.पू.१भ.शा.व. ।

**श्वेतराजिका ।** स्त्री । श्वेतपीतसर्षपे, राजिकायां । রাই । रा.नि.व.१६ । [रिम्र. ।

**श्वेतरास्ना ।** स्त्री । श्वेतपुष्परास्नाविशेषे । भू

**श्वेतरो(लो)ध्रः ।** पुं । पट्टिकारोध्रे । शुक्ल লোধ । वै.निघ.१भ.ज्व.चि. । रा.नि.व.६ ।

**श्वेतरोहितः ।** पुं । शुक्लपुष्परोहितकवृक्षे । শাদা রোহিড়া, রয়না । गुणाः—कटुः स्निग्धः कषायः शीतलः कृमिदोषघ्नः व्रणघ्नः सौदृक्कर्णनेत्ररोगघ्नश्च । रा.नि.व.८ ।

**श्वेतलक्ष्मणा ।** स्त्री । श्वेतकण्टकार्य्यां । শাদা কণ্টিকারী । वै.निघ. ।

**श्वेतवचा ।** स्त्री । शुक्लवचायाम् । শাদা বচ । प.मु. । मं पांढ़री वेखंडा । कं विलियवजे । गुणाः—कृष्णा मतिमेधायुःकफघ्नी भूतवातकृमिघ्नी दीपनी च । अतिविषायाम् । আতইচ । रा.नि. व.६ ।

**श्वेतवर्णकम् ।** क्ली । श्वेतरक्तचन्दने । वै.निघ. ।

**श्वेतवर्णा ।** स्त्री । वराटकभेदे । শাদাবর্ণ কড়িবিশেষ । रा.नि.व.१३ । श्वेतपुष्पपाटलवृक्षे । শ্বেত পারুল গাছ । वै.निघ. । [१२ ।

**श्वेतवर्व्वरकम् ।** क्ली । वर्व्वरचन्दने । रा.नि.व.

**श्वेतवर्व्वरिका ।** स्त्री । शुभ्रतुलस्याम् । শ্বেত তুলসী । रा.नि.व.१० । रावणकृतसप्तमशतके ।

**श्वेतवल्कलः ।** पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । जटा. ।

**श्वेतवल्ली ।** स्त्री । शुक्लवालुके । वै.निघ. ।

**श्वेतवारिजम् ।** क्ली । श्वेतपद्मे । रा.नि.व. १० । [रा.नि.व.४ ।

**श्वेतवार्त्ताकिनी (की) ।** स्त्री । श्वेतबृहत्यां ।

**श्वेतवाहः (नः) ।** पुं । अर्ज्जुनवृक्षे । অর্জ্জুন গাছ । "श्वेतवाहः प्रकीर्त्यः ।" वा.सू.१५अ.असनादिः । " [रोषतायां । वै.निघ. ।

**श्वेतविट्कता ।** स्त्री । कफाधिक्यजन्यशुक्लपु-

**श्वेतवीजः ।** पुं । श्वेतकुलत्थे । শ্বেত কুরতি-কলায় । रा.नि.व.१६ । [শাদা বোণা । प.मु. ।

**श्वेतवुक्का ।** स्त्री । स्वनामख्यातलताविशेषे ।

**श्वेतबृन्ताकः ।** पुं । शुक्लवार्त्ताकौ । वै.निघ. ।

**श्वेतबृहती ।** स्त्री । शुक्लवर्णक्षुद्रबृहत्यां । শাদা বৃহতী । कं विलियगुल्लु । बम्. पांढ़री डोरली । गुणाः—वातश्लेष्मघ्नी रुच्या अञ्जनयोगेन नानानेत्ररुजापहा । रा.नि.व.४ । [मु. ।

**श्वेतबृक्षः ।** पुं । ...वृक्षे । বরুণ গাছ । प.

**श्वेतवेतसः ।** पुं । जलवेतसे । वै.निघ. ।

**श्वेतशरपुङ्खा ।** स्त्री । शुक्लपुष्पशरपुङ्खायां । শরপুঙ্খা । हिं श्वेतशरफोंका । गुणाः—कटूष्णा वातरोगकृमिघ्नी च । रा.नि.व.४ ।

**श्वेतशा(सा)रिवा ।** स्त्री । शारिवाभेदे । অনন্তমূল । सा च दुग्धगर्भा व्रततिः । भा.पू.१ भ. । गणैः कृष्णशारिवासदृशी । गुणाः—"श्वेता तु शारिवा शीता मधुरा शुक्रला गुरुः । स्निग्धतिक्ता सुगन्धिश्च कुष्ठकण्डूज्वरापहा । देहदौर्गन्ध्याग्निमान्द्यश्वासकासारुचीहरा । आमत्रिदोषविषहृद्रक्तरुक्प्रदरापहा । कफातिसारतृड्दाहरक्तपित्तहरा परा ॥" वै.निघ. । See अनन्ता ।

**श्वेतशाल्मलिः ।** पुं । (Eriodendron anfractuosum.) White cotton tree शुक्लपुष्पकिंशुकवृक्षे । শ্বেত শিমুল গাছ । हिं सेमिवल्ल हतियान । ता. इलवम् । Watts.

**श्वेतशिंशपा ।** स्त्री । श्वेतपत्रशिंशपावृक्षे শাদা শিশু গাছ । मं बम्. पांढ़रा शिंशपा, शिसव । कं विलिय इवीडु । गुणाः—तिक्ता शीतला पित्तदाहहरी च । रा.नि.व.९ ।

**श्वेतशिग्रुः** पुं । श्वेतपत्रपुष्पशिग्रुवृक्षे । শ্বেত শজিনা গাছ । मं बम्. पांढ़रा सेगवा । विलियनुग्गि । गुणाः—कटुः तीक्ष्णः शोफानिलघ्नः अङ्गव्यथाहरः रुच्यः दीपनः मुखजाड्यहरश्च रा.नि.व.७ ।

**श्वेतशिम्बा(म्बिः,म्बी)कः ।** स्त्री, पुं राजशिम्ब्याम् । শ্বেত শিম্ । र.मा. । भा.पू. भ.धा.व. । See निष्पावः ।

**श्वेतशिला ।** स्त्री । श्वेतपाषाणभेदे । শ্বেত পাথরকুচা । गुणाः—हिमा स्वादुः मेहकृच्छ्रमूत्ररोधाश्मरीशूलक्षयपित्तघ्नी च । रा.नि.व.८

शूकः । पुं । यवे । जटाः ।

शूकः । पुं । यवे । रा.नि.व.२३ ।

शूरणः । पुं । वनशूरणनामकन्दशाके । ओल । मं वम्. पांढरा शूरण । कं विलिय ण । गुणाः—रुच्यः कटूष्णः क्रमिघ्नः गुल्मशूल- अरोचकघ्नश्च । रा.नि.व.७ । [चि । संग्रहः ।

शेफालिका । स्त्री । शुक्लशेफालिकावृ

श्रेष्ठः । पुं । चन्दनवृक्षे । वै.निघ. ।

सर्जः । पुं । श्वेतधूनके । श्वेत धूना । सं ः । [प.सु. ।

तसर्षपः । पुं । शुक्लसर्षपे । श्वेत शरिषा ।

तसारः । पुं । खदिरे । रा.नि.व.८ ।

तसिंही । स्त्री । श्वेतवृहत्याम् । रा.नि.व.४।

तसुरसा । स्त्री । श्वेतनिर्गुण्ड्याम् । अम. । पुष्पतुलसीवृक्षे । श्वेत तुलसी गाछ । सु.सू. सादिः । "सुरसा श्वेतसुरसा ।" श्वेतशेफालि याम् । च.सू.शिरोविरेचने । [ज. ।

तसुरा । स्त्री । सुराभेदे । श्वेतो मद । रा

त(ता)स्यन्दा । स्त्री । श्वेतापराजितायां । .नि.व.३ । [४अ ।

तहनुः । पुं । राजिमत्सर्पविशेषे । सु.कल्प.

तहरः । पुं । महाशालवृक्षे । वै.निघ. ।

ता । स्त्री । शरीरे तन्नामकतृतीयत्वचि । सा हेर्द्वादशभागप्रमाणा चर्मदलाजगल्लीमशकाधि ाना । सु.शा.४अ. । शर्करायाम् । चिनि । .नि.व.१४ । स्फटिकारिकायां । फट्किरि । । दर्व्वी । आथ् । मत्स्यण्ड्याम् । मिछ्रि । .नि.व.२१ । श्वेतवचायाम् । श्वेत बच । सु.सू. ६अ. । श्वेतकाञ्चने इति वृद्धाः, वै.निघ.उन्मा. व. । श्वेतदूर्व्वायाम् । रा.नि.व.८ । लताशिरीषे । तिविषायां ; आतइच । प.सु. । काष्ठपाटला- ाम् । काँटाशिरीष । र.मा. । वराटिकायां । कड़ि । मे. । गाम्भारीवृक्षे । गामार गाछ । रा. न.व.६ । अपराजितायाम् । भा.म.४अ.मु.रो. ष. । श्वेतवृहत्यां । श्वेतकण्टकार्य्यां । पाषाणभे- । रा.नि.व.४।५ । श्वेतापराजितायां । श्वेता- राजिता । रा.नि.व.३ । च.द.उन्मा.चि. । लू

तामेदे । माकड़शाविशेष । शर्कराजातसुरायां । सा श्वेतपुनर्नवादिशालिपिष्टकमभवा । भा. । गु- णाः—"कासार्शोग्रहणीश्वासप्रतिश्यायविनाशिनी । श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥" सु.सू.४६ अ. । वंशरोचनायां । रा.नि.व.६ । शुक्लचिरता- यां । श्वेत तेउड़ी । शुक्लगुञ्जायां । शादा कुँ- च । श्वेतसारिवायां । अनन्तमूल । वै.निघ. ।

श्वेताञ्जनम् । क्ली । शुक्लाञ्जने । शादा आँ- जन, शादा सुर्मा । इदं सौवीरगुणम् । वै.निघ.।

श्वेताढ़की । स्त्री । श्वेतपुष्पाढ़क्याम् । शादा अड़हर । गुणः—दीपदा । रा.नि.व.१६ ।

श्वेताचिवृत् । स्त्री । शुक्लमूलत्रिवृति । श्वेत तेउड़ी । भा. । [यां । वा.उ.५अ. ।

श्वेताद्रिकर्णिका । स्त्री । शुक्लगिरिकर्णिका-

श्वेतापराजिता । स्त्री । शुक्लपुष्पापराजिता- याम् । शादा अपराजिता । मं वम्. पांढरी सु- पली । कं विलिय गिरिकर्णिके । गुणाः—हिमा तिक्ता पित्तोपद्रवहरी चक्षुष्या विषघ्नी च । रा. नि.व.३ । [पराजिता । वै.निघ.. ।

श्वेताभद्रा । स्त्री । श्वेतगोकर्ण्यां । शादा अ-

श्वेताभ्रम् । क्ली । श्वेतवर्णाभ्रे । शादा अभ्र । रा.नि.व.१३ । See अभ्रम् ।

श्वेताम्लिः (का) । स्त्री । पीठोंड़ीति प्रसिद्ध- वृक्षविशेषे, अम्लिकायां । मं पीठोंड़ी । कं विलिय हुलि । गुणाः—वृष्या मधुरा पित्तघ्नी बलदा च । रा.नि.व.४ ।

श्वेतायुग्मम् । क्ली । अपराजिताद्वये । एका किणिहिसंज्ञा, अन्या महाश्वेता गालिन्दीसंज्ञा च । "श्वेतायुग्मं तापसानाञ्च वृक्षः ।" वा.सू.१५ अ.अरुणः ।

श्वेतारिरसः । पुं । श्वित्रकुष्ठे रसः । पाठः— "शुद्धसूतं समं गन्धं त्रिफला भृङ्गवाकुची । भल्ला- तकी तिलः कृष्णो निम्बबीजं समं समं । मर्दयेद्भृ- ङ्गजद्रावैः शोष्यं पेष्यं पुनः पुनः । इत्थं कुर्य्यात्त्रि- सप्ताहं रसः श्वेतारिको भवेत् ॥" अनु. घृतमधु- नी । रस.चि. । [न्द । See शुक्लार्कः ।

श्वेतार्कः । पुं । शुभ्रपुष्पार्कवृक्षे । श्वेत आक-

श्वेतालुः । पुं । शुक्लवर्णालुके, महिषकन्दे । गु-

णा: — कटु: उष्णा: कफवातघ्न: मुखजाड्यहर: रु च्यश्च । रा.नि.व.७ । [नि.व.४ ।

**श्वेताम्ब(व)र:** । पुं । सुनिषण्णकशाके । रा.

**श्वेतावलोकन:** । पुं । कफजरोगविशेषे । निदा. ।

**श्वेताश्व:** । पुं । कैटर्य्ये । घोड़ाघुटी । प.मु. ।

**श्वेताह्वा** । स्त्री । शुक्लगोकर्णाम् । वै.निघ. । सितपाटलायां । श्वेत पारुल । रा.नि.व.१० ।

**श्वेताक्ष:** । पुं । सोमलताभेदे । सु.चि.२९अ. । See सोम: ।

**श्वेताक्षुद्रा** । स्त्री । श्वेतकण्टकार्य्याम् । वै.निघ. ।

**श्वेतेक्षु:** । पुं । श्वेतवर्णेक्षौ । शादा आख । वम्. पांड़रा उंस । कं बिलिय कबु । गुणा: — कठिन: वृष्य: गुरु: कफमूत्रकृत् दीपन: पित्तदाहघ्न: वि पाके च कोष्ण: । रा.नि.व.१४ । वातपित्तशमन: वृष्य: अन्तर्विदाही कफकृत् सितेक्षु: । भवि.१० अ. ।

**श्वेतैरण्ड:** । पुं । शुक्लैरण्डवृक्षे । शादा रेड़ि । हिं शफेद एरण्ड । म [illegible] एरडु । गुणा:— "कटुक: श्वेतएरण्ड [illegible] गुरु: स्मृत: । म धुरस्तिक्तको वृष्यो गुरु: स्वादु: सर: स्मृत: । वा तोदावर्त्तकफहृज्ज्वरकासोदरापह: । शोथशूलक टीवस्तिशिरोरुजाशन: स्मृत: । श्वासानाहकुष्ठवर्ध्म गुल्मशोफामपित्तहा । प्रमेहोष्मवातरक्तमेदोऽन्नवर्द्धन प्रणुत् ॥" वै.निघ. । [४अ. ।

**श्वेतोदर:** । पुं । दर्वीकरसर्पविशेषे । सु.कल्प.

**श्वेत्रम्** । क्ली । श्वित्ररोगे । धवल । भ.टी. ।

# ष

**षटि:** । स्त्री । शय्याम् । शटी । वा.चि.६अ. ।

**षट्कम् (कटु)** । क्ली । त्रिकटुचव्यचित्रकपि प्पलीमूलेषु । वै.निघ.२भ.वा.व्या.प्रत्यष्ठीला.चि. ।

**षट्कनिघण्टु:** । पुं । वैद्यकनिघण्टुभेदे ।

**षट्कोणम्** । क्ली । हीरके । वै.निघ. ।

**षट्चरण: (पद:)** । पुं । भ्रमरे । हला. । यू कायां । रा.नि.व.१९ । [यो.वा.व्या.चि. ।

**षट्चरणयोग:** । पुं । षड्धरणयोगे । सि.

**षट्पदघाती (इन्)** । पुं । स्वर्णचम्पके । वै. निघ. ।

**षट्पददल: (प्रिय:)** । पुं । सुरपुन्नागे । पुनाङ् गाछ । वै.निघ. । नागकेसरपुष्पवृक्षे । श्र. मा. । स्त्री (या) । वनमल्लिकायां । वै.निघ. ।

**षट्पदमोदिनी** । स्त्री । वर्व्वूलवृक्षे । बाबला गाछ । वै.निघ. ।

**षट्प(पा)दा (दी)** । स्त्री । कीटभेदे । ग ङ्गा फड़िं । हे.च. । "आपाण्डुवर्णा कपिला ह रिता च प्रजायते । महोदरा च षट्पादी सूक्ष्मव क्त्रोत्तमाङ्गिका । षट्पदी नाम......... ॥" अ. द. ।

**षट्पदातिथि:** । पुं । आम्रवृक्षे । त्रिका. । स्वर्णचम्पके । वै.निघ. । [छ । वै.निघ. ।

**षट्पदाधार:** । पुं । कदम्बवृक्षे । कदम् गा

**षट्पदानन्दवर्द्धन:** । पुं । देववर्व्वूरके । वै. निघ. । किङ्किरातवृक्षे । अशोक गाछ । रा. नि.व.१० । [वेलमल्लिका । भा. ।

**षट्पदानन्दा** । स्त्री । वार्षिकीमल्लिकायाम् ।

**षट्पदालय:** । पुं । सुरपुन्नागवृक्षे । वै.निघ. ।

**षट्पदीभक्ष:** । पुं । गङ्गापतङ्गभक्षणजन्याम रोगे । लक्षणं यथा — "ग्रासमध्यगतं वाद्या ये भ क्षन्ति सुदारुणम् । तेषां शोथश्च मूर्च्छा च भ्रम श्वासश्च जायते ॥" अ.द. ।

**षट्भद्रिका** । स्त्री । बालरोगे औषधम् । पा रसोयमानिकाघनकणाम्रशौविड़ङ्गारुणानां च र्णे । वा. ।

**षट्लवणम्** । क्ली । षड्लवणोपेते पञ्चलवणे "काचसैन्धवसामुद्रविड़सौवर्चलै: समै: । स्यात् ष ड्लवणं तच्च रुक्षोपेतं षडाह्वयम् ॥" रा.नि.व. २२ । [निघ.

**षट्लौहसम्भवम्** । क्ली । शिलाजतुनि । वै

**ड्गः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प ४ ।

**ड्ङ्गः** । पुं । गोक्षुरक्षुपे । গোখুরী । वै.निघ.।

**ड्ङ्गघृतम्** । क्ली । अतिसारे घृतम् । पाठ: —"वत्सकस्य च वीजानि दार्व्व्याश्च त्वच उत्तमा:। प्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी। षड्भि भिर्घृतं सिद्धं पेयं मण्डावतारितम् ॥" च.द.। दं चतुर्गुणजलै: पाच्यम् ।

**ड्ङ्गयूषः** । पुं । षड्ङ्गपानीये । तच्च मुस्तप- टकोशीरचन्दनोदीच्यनागरै: समभागै: प्र. २तो. ारि ४ श. शे. २ श.। মুতা, ক্ষেৎপাবড়া, বণার মূল, রক্তচন্দন, বালা, শুঁট বা হরী- ঃকী । भैष. ।

**ड्षणम्** । क्ली । समरिचपञ्चकोले । "पञ्च- ोलं समरिचं षड्षणमुदाहृतम् ।" च.द. । गु- ा: - पञ्चकोलसमं रूक्षमुष्णं विषघ्नञ्च । भा.पू. ःम. ।

**ड्ग्रन्थः** । पुं । करञ्जवृक्षे । কাঁটাকরঞ্জ । अम.। न्था (न्था) । महाकरञ्जवृक्षे । ডহরকরঞ্জ । रा. न.व.९। शुक्लवचायां । शठ्यां । शठी। रा.नि.व. । वचायाम् । বচ । भा.। "ब्राह्मीकुष्माण्डषड्ग्र- था: ।" भा.म.१भ.। वै.निघ.२भ.ग्रहणीचि.चन्द- ाद्यघृते । पिप्पलीमूले । वै.निघ.२भ.ज्व.चि.दश- मूलकषाये ।

**ड्ग्रन्थिः** । पुं, स्त्री । पिप्पलीमूले । चि.क्र क.। वै.निघ.२भ.जीर्णज्व.चि. । (न्थी) वचायां । श र. । [अम. ।

**ड्ग्रन्थिका** । स्त्री । आम्रहरिद्रायाम् । शटी ।

**षड्धरणः** । पुं । वातव्याधौ योगविशेषे । "चित्रकेन्द्रयवापाठाकटुकातिविषाभया: । वात- व्याधिप्रशमनो योग: षड्धरण: स्मृत: ॥" सु.चि. ४अ.। पलदशमांशोऽयं योग: पञ्चगुञ्जामाषेण प्र- त्यादेय: ।

**षड्भुजा (रेखा)** । स्त्री । खर्मूज इति ख्या- ते फलशाके । থর্মুজা । फलगुणा:—तिक्तं बाल्ये तदनु मधुरं किञ्चिदम्लञ्च पाके निष्पक्वं चेत् तदमृतसमं तर्पणं पुष्टिदायि । हृद्यं दाहश्रमवि- शमनं मूत्रशुद्धिं विधत्ते पित्तोन्मादापहरकफदं षड्भुजं वीर्य्यकारि ॥" रा.नि.व.७ ।

**षड्रसः** । पुं । मधुराम्ललवणतिक्तकटुकषायेषु । रा.नि.व.२० । गुणा: स्वस्वपर्य्याये मृग्या: ।

**षड्रसनिघण्टुः** । पुं । वैद्यकग्रन्थविशेषे ।

**षड्बिन्दुतैलम** । क्ली । शिर:पीडायां तैलम् । तिलतैलं ४ श. छागदुग्धं ४ श. भृङ्गराजरस: १६ श. । कल्कार्थं – एरण्डमूलं तगरपादुका शुलुफा जीवन्ती रास्ना सैन्धवं गुड़त्वक् विड़ङ्गं यष्टिमधु शुण्ठी प्र. ६ तो. ३ मा. २ र. । भैष. ।

**षण्डः (कः)** । पुं । योनिरोगविशेषे । लक्षणम् —"योनौ वातोपतप्तायां स्त्री गर्भे बीजदोषत: । नृद्वेषिण्यस्तनी च स्यात् षण्डसंज्ञानुपक्रमा ॥" वा.उ.३३अ. । नपुंसके । षण्डो द्विविध:— सरेता अरेताश्च । तयो: सरेतोलक्षणं— "यो भार्य्यायां मृतौ मोहादङ्गनेव प्रवर्त्तते । तत: स्त्रीचेष्टिताकारो जायते षण्डसंज्ञित: ॥"

**षण्डालः (ला, ली)** । पुं, स्त्री । तैलमान- भेदे । ছটাক্ । स्त्री । आरस्यां । कामुक्यां । त्रि- का. ।

**षण्ढः** । पुं । नपुंसके । हे.च. ।

**षण्मुखा** । स्त्री । खर्मूज इति ख्याते फलशाके । থর্মুজা । वै.निघ. ।

**षष्टिः (कः)** । पुं, स्त्री । षष्टिदिनपक्वशालि- धान्यविशेषे । যেটে ধান । तस्य लक्षणं— "गर्भ- स्था एव ये पाकं यान्ति ते षष्टिका मता: ।" स द्विधा गौरनीलभेदात् । गुणा:—"गौरो नील: षष्टिकोऽयं द्विधा स्यादाद्यो रूक्ष: शीतलो दोष- हारो । बल्य: पथ्यो दीपनो वीर्य्यवृद्धिं दत्ते पा- श्चात् किञ्चिदूनो द्वितीय: ॥" षष्टिशालिर्मागधदेशे प्रसिद्ध: । रा.नि.व.१६ । च.सू.४अ. । पुन: तद्भे- दा:—"षष्टिक: शतपुष्पश्च प्रमोदकमुकुन्दकौ । महाषष्टिक इत्याद्या: षष्टिका: समुदाहृता: ॥" भा. । षष्टिककङ्गुकमुकुन्दकपीतकप्रमोदककाक- लकासनपुष्पमहाषष्टिकचूर्णककुरवककेदारकप्रभृ- तय: षष्टिका: । सु.सू.४६अ. । गुणा:—"षष्टिका मधुरा: शीता लघवो बद्धवर्च्चस: । वातपित्तप्रशम- ना: शालिभि: सदृशा गुणै: ॥" भा.पू.१भ.धा. व. । शीतो गुरुस्त्रिदोषघ्न: मधुरश्च । अत्रि.१५ अ. । ग्रैष्मिकषाष्टिक: पित्तलश्च । राज.३प. । वि- शेषा: पर्य्याये मृग्या: ।

**षष्टिकान्नम्** । क्ली । षष्टिकभक्ते । गुणाः— "षष्टिकान्नस्य शालीनामोदनं दीपनं मतं । बल्यं मेध्यं पाचनञ्च त्रिदोषशमनं क्षमम् । चयरोगं विषञ्चैव नाशयेदिति कीर्त्तितम् ॥" वै.निघ. ।

**षष्टिजः** । पुं । षष्टिकशालौ । रा.नि.व.१६ ।

**षष्टिवासरजः** । पुं । षष्टिकशालिधान्ये । रा.नि.व.१६ ।

**षष्टिशालिः (ष्टायनः)** । पुं । षष्टिकशालौ । ষেটে ধান । रा.नि.व.१६ ।

**षष्ठालुकालकम्** । क्ली । दारुहरिद्रारसघने । त्रिका. ।

**षाड़वः** । पुं । रसे । रागे । त्रिका. । मधुराम्ल-संयोगविशेषे । च.द.छर्दि.चि. । See खाड़वः ।

**षाण्डम्** । क्ली । षण्डतायां । लिङ्गातुल्याके । च.द.ध्व.चि. ।

**षोड़शिका (शी)** । स्त्री । पलपरिमाणे । ८ तो. । च.कल्प.१२अ. । तोलकद्वयमाने । प्र.१ख. । [illegible]कला । मा.नि. ।

**ष्ठी(ष्ठे)वनम्** । क्ली । [illegible]मुखेनोद्गिरणे । ছেব

---

# स

**संग्नम्** । क्ली । पीतकाष्ठे, वालुकाद्विसमपीत-काष्ठे । श.च. । त्रि । सङ्कुचितकाष्ठे । च.टी.भ. । स्त्री (ज्ञा) । चैतन्ये । नाम्नि । च.टी.भ. ।

**संयः** । पुं । अस्थिकङ्काले । অস্থিপঞ্জর । श.च. ।

**संयमः** । पुं । भये । भा.म.४भ.मे.रो.चि. ।

**संयमनम्** । क्ली । निरोधे । मे. ।

**संय(या)वः** । पुं । घृतक्षीरादिपक्वगोधूमे । पिराकीति लोके । स च मधुमलकः मधुनोपलिप्तः । भा.म.४भ.शि.रो.चि. । "मधुमस्तकसंयाव-घृतपूपो विशेषतः । समितामम्बुदुग्धेन खण्डैलाम-रिचार्द्रकैः । घृतपक्वां चिपेत् खण्डे संयावो बृंहणो गुरुः ॥" राज.२प. । करञ्जिकायां । লতাকরঞ্জ । वै.निघ. ।

**संयुता** । स्त्री । आवर्त्तकीलतायां । रा.नि.व.३ ।

**संयोगः** । पुं । द्वयोर्बहूनां वा द्रव्याणां संहतौ । च.वि.१अ. ।

**संयोगविरुद्धः** । त्रि । संयोगेन विपरीतफल-कारके पयोमांसादौ । तच्च नानारोगहेतुः यथा —"रोचाग्न्यवीसर्पदकोदराणां विस्फोटकोन्मादभ-गन्दराणां । मूर्च्छामदाध्मानगलग्रहाणां पाण्डाम-यस्यामविषस्य चैव । किलासकुष्ठग्रहणीगदानां शोथातिसारज्वरपीनसानां । सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥"

**संरब्धः** । त्रि । विशालमूले । सु.चि. १अ. ।

**संरम्भः** । पुं । शोके । भा.म.४भ.ने.रो.चि. । आयतौ । क्रोधे । आटोपे । त्रिका. ।

**संरम्भी (इन्)** । त्रि । आयते । सु.नि.४अ. ।

**संलपनम्** । क्ली । प्रलापे । सु.सू.२५अ. ।

**संलयः** । पुं । निद्रायाम् । हे.च. ।

**संवरः** । पुं । सञ्चये । मत्स्यभेदे । हरिणभेदे । শম্বর মৃগ । क्ली । जले । शब्दकल्पः ।

**संवरणः** । पुं । वपुषलतायां । শশা গাছ । वै निघ. । [व.११ । सुनके । च.चि.३अ. ।

**संवर्त्तः (कः)** । पुं । विभीतकवृक्षे । रा.नि.

**संवर्त्तिः (का)** । स्त्री । पद्मस्य केशरसमीप-स्थदले । পদ্মের কচি পাবড়া । "संवर्त्तिका नवदलम् ।" अम. । भा. । [हे च. । व्याक. ।

**संवर्द्धकः (नः)** त्रि । वृद्धिकारके । दीपके ।

**संवहनम्** । क्ली । शरीरमर्दने । वा.चि.७अ. ।

**संवाटिका** । स्त्री । शृङ्गाटके । পানিফল । [त्रिका. । जटा. ।

**संवाहः (कः)** । पुं । शरीरमार्जके । जटा. ।

**संवाहनम्** । क्ली । अङ्गमार्जने, अङ्गमर्द्दने । গা টেপা । मे. । वा.चि.६अ. । गुणाः—"संवाहनं मांसरक्तत्वकप्रसादकरं सुखम् । प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ॥" सु.चि.२४अ. भारादिवहने । मे. ।

**ाहिका** । स्त्री । पिपीलिकाविशेषे । सु.
अ.८अ. ।

**वितिकाफलम्** । क्ली । सेवफले । সেও
[फल । वै.निघ. ।

**वित्तिः** । स्त्री । चेतनायाम् । अ.र. ।

**विषा** । स्त्री । अतिविषायाम् । श च. ।

**शीतः** । पुं । श्वेतकिणिह्याम् । वै.निघ. ।

**श्रुतः** । पुं । जलवेतसे । वै.निघ. ।

**श्रुतकोष्ठः** । त्रि । क्रूरकोष्ठे । च.सि.२अ. ।

**वेदनः** । पुं । झिल्लिकायाम् । ঝিঁঝেতা ।
.निघ. ।

**वेशः** । पुं । निद्रायाम् । अम. ।
[अ. ।

**वेशकः** । त्रि । शयनादिकारके । च.सू.१५

**वेशनम्** । क्ली । अनियतशयनस्थाने । च.सू.
१५अ. । सुरते । हे.च. ।

**व्यूढः** । त्रि । स्पृष्टे । वा.उ.३३अ. ।

**व्यूहिमः** । त्रि । क्षारदन्त्यादिद्रव्यप्रक्षेपेण
उहृते । सु.सू.११अ. ।

**ंशमनम्** । क्ली । सम्यक् शमयतीति संशमनम् । आकाशगुणभूयिष्ठद्रव्ये । प्रवृद्धदुष्टदोषस्य सम्यग्निर्हरणपूर्व्वकं शान्तिकरणे, अदुष्टस्यानुदीरणे च । व्याधिसंशमनः प्रसूतव्याधेः शमनम् । अप्रसूतव्याधेरनुदीरणम् । तदुक्तं—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । शमीकरोति च क्रुद्धान् तत्संशमनमुच्यते ॥" ड. । तद्वर्गः यथा—भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकीकुबेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवशिरकाश्मन्तकभार्गीकार्पासीवृश्चिकालीपटूरबदरयवकोलकुलत्थप्रभृतीनि । सु.सू.३९अ. ।

**संशयः** । पुं । उभयहेतुदर्शने । यथा—तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनमप्राणहरमिति । सु.उ.६५अ. । सन्दिग्धेष्वर्थेषु अनिश्चये । यथा—किमकालमृत्युरस्ति नास्तीति । च.वि.८अ. ।

**संशयप्रशमहेतुः** । पुं । संशयच्छेदनहेतौ ।
च.वि.८अ. ।

**संशोधनम्** । क्ली । यत् शरीरे दोषं सम्यक् शोधयति संशोधनवर्गः—मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदार-कर्व्वुदारारिष्टाश्वगन्धाविदुल-बन्धुजीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्व्वारुचित्रा-सेत्यूर्ध्वभागहराणि । तत्र कोविदारपूर्व्वाणां फलानि कोविदारादीनाञ्च मूलानि ग्राह्याणि । सु.सू.३९अ. ।

**संशोषी** (इन्) । पुं । सन्निपातज्वरविशेषे । लक्षणं—"मेचकवपुरतिमेचकलोचनयुगलो मलोत्सर्गात् । संशोषिणि सितपिड़कामण्डलयुक्तो ज्वरे नरो भवति ॥" भा.म.१भ. ।

**संश्यानः** । त्रि । शीतेन सङ्कुचिते । व्याक. ।

**संसर्गः** । पुं । संश्लेषे । सन्निपाते । मा.नि. ।

**संसर्गजः** । त्रि । सान्निपातिके । मा.ज्व.नि. ।

**संसर्जनम्** । क्ली । संशोधने । বিরেকাদি দ্বারা শোধন। र.मा. । च.चि.१अ. । विरेकादनन्तरं पेयादिक्रमे । वा.चि.३अ. ।

**संसारः** । पुं । विट्खदिरे । रा.नि.व.८ ।

**संसारमार्गः** । पुं । भगे । त्रिका. ।

**संस्कारः** । पुं । गुणान्तराधाने । दत्तगुणाश्च तोयाग्निसन्निकर्षशौचमन्थनदेशकालादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते । च.वि.१अ. ।

**संस्कारवाहः** । पुं । गर्भवायुविकारजातविकारजन्यमुकषभेदे । यथा—"शुक्राशयद्वारविघट्टनेन संस्कारवाहं हि करोति वायुः ।" च.शा.२अ. ।

**संस्कालः** । पुं । मेषे । त्रिका. ।

**संस्था (नम्)** । स्त्री,क्ली । व्यक्तीभूतपूर्व्वरूपे । "संस्थानं व्यञ्जनं लिङ्गम् ।" मा.नि.पञ्चनिदाने । आकृतौ । च.इ.७अ. ।

**संस्पर्शः** । पुं । सम्यक्स्पर्शे । मा.नि. । स्त्री (र्शा) । जनीनामगन्धद्रव्ये । अम. ।

**संस्वेदः** । पुं । अतिघर्म्मे । [वै.निघ. ।

**संहतपत्रिका** । स्त्री । शतपुष्पायां । শুলফা ।

**संहननम्** । क्ली । शरीरे । रा.नि.व.१८ ।

**संहर्षा** । स्त्री । चित्रपर्ण्याम् । धन्वन्तरिकोषः ।
च.वि.८अ. ।

**संक्षिप्तपुष्पिका** । स्त्री । सिमेवाहपे । मउरि गाछ । रा.नि.व.४ । [शब्दकल्प: ।

**सकट:** । पुं । शाखोटवृचे । श्याओड़ा गाछ ।

**सकण्टक:** । पुं । शैवाले । श.च. । पूतिकरञ्जे । र.मा. । [१६च. ।

**सकण्डूक:** । पुं । कर्णपालीगतरोगे । सु.सू.

**सकलम्** । क्ली । रोहिषतृणे । गन्ध तृण । च-स्थिधातौ । त्रि । सम्पूर्णे । वै.निघ. ।

**सकलप्रिय:** । पुं । चणकवृचे । छोला गाछ ।

**सकललचणम्** । क्ली । शालनिर्यासे । धुनो, रजन । वै.निघ. ।

**सकुरुण्ड:** । पुं । गुर्जरदेशे तन्नाम्ना प्रसिद्धे वृचे । साकुरुण्ड वृक्ष । वम्. साखरंड । गुणा: —कषाय: रुचिकृद्दीपन: श्लेष्मवातघ्न: वस्त्ररञ्जन: लघुश्च । रा.नि.व.६ । [गाछ । श.र. । अ.म. ।

**सकुल:** (**ली**[इन]) । पुं । शौलमत्स्ये । शल

**सकुलादनी** । स्त्री । महाराष्ट्रीलतायाम् । पान शिउली । रा.नि.व.४ । कटुक्यां । कट्की । ज.द. । [टी. ।

**सकृत्** । पं । काके । वै.निघ. । विष्ठायां । च.

**सकृत्प्रज:** (**जा**) । पुं, स्त्री । काके । च.म. । वृश्चिके । स्त्री । काकवन्ध्यायाम् । सिंह्याम् । रा. नि.व २३ । [रा.नि.व.११ ।

**सकृत्फला** । स्त्री । कदल्याम् । कला गाछ ।

**सकृद्गर्भ:** । पुं । अश्वतरे । खच्चोर । रा.नि. व.१८ । [वे.८ ।

**सकृद्वीर:** (**र्य्य:**) । पुं । एकवीरवृचे । रा.नि.

**सक्तु:** (**क्त:**) । पुं । यवतण्डुलादिचूर्णे । छातु इति लोके । "यवतण्डुललाजादिचूर्णं सक्तु: प्रकीर्त्तित: ।" प.मु. । तन्नामकविषे । छातारिविष । हे.च. ।

**सक्तुपिण्डी** । स्त्री । भक्तुकृतपिण्डाकारभक्ष्यद्रव्ये । छातुर लाड़ु । See सक्तुपिण्ड: । [श.र. ।

**सक्तुफला** (**ली**) । स्त्री । शमीवृचे । च.म. ।

**सक्थि** । क्ली । ऊरुदेशे । उरु९ रा.नि.व.१८ ।

**सक्थिमर्म्म** । क्ली । ऊरुमर्मणि तस्य स्था-नानि एकादश यथा—चिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रवस्तिजान्वाण्युर्वीलोहिताक्षाणि विटप-श्चेति । सु.शा.६ष. ।

**सख्यम्** । क्ली । पत्नौ । भैष.च.पि.चि. ।

**सगन्धा** । स्त्री । सुगन्धशाल्यौ । रा.नि.व.१६ ।

**सग्धि:** । स्त्री । सहभोजने । च.म. । [विश्व: ।

**सङ्कटाच:** । पुं । धववृचे । धाओया गाछ ।

**सङ्कटी** । स्त्री । उपोदिकायाम् । पूँइ । वै. निघ. ।

**सङ्कर:** । पुं । सन्निपाते । वै.निघ. ।

**सङ्काशिग्रह:** । पुं । अश्वस्य दुष्टग्रहभेदे । च-चाश्व: सहसा क्रुद्ध: खगात्रं खादति । ज.द.५७अ. ।

**सङ्कोचम्** । क्ली । कुङ्कुमे । पुं । चाकुचने । मुद्रणे । मत्स्यभेदे । शाँकोच माछ । मे. । [र.मा. ।

**सङ्कोच**(**चि**)**नी** । स्त्री । लज्जालुकायाम् ।

**सङ्कोचपिशुनम्** । क्ली । कुङ्कुमे । भा. ।

**सङ्क्रामकरोग:** । पुं । संसर्गजरोगे । छौंयाचे रोग । लचणं—"प्रसङ्गाद्गात्रसंस्पर्शान्नि:श्वासात् सहभोजनात् । सहशय्याशनाच्चापि वस्त्रमाल्यानुलेपनात् । कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥" मा.नि. ।

**सङ्क्लिन्न:** । त्रि । पूतिनि । प[illegible] सु.नि.६ष. ।

**सङ्क्लेद:** । पुं । आर्द्रतायां [illegible] सं. ।

**सङ्गपुष्पी** । स्त्री । धातकीवृचे । सं. ।

**सङ्गिनी** क्ली । चीरपुष्प्यां । च.सू.४अ. ।

**सङ्ख्या** । स्त्री । गणनायाम् । येन विशिषेण संप्राप्तिर्भेदवती क्रियते । यथा—अष्टौ ज्वरा इति । मा.पच.नि. । [तस्य टीकायाम् ।

**सङ्ख्यानिदानटीका** । स्त्री । संख्यानिदा-

**सङ्ग:** । पुं । अप्रवृत्तौ । निरोधे । निदा. ।

**सङ्गर:** । पुं । विषे । मे. । क्ली । शमीवृचफले । मे. । [च. ।

**सङ्ग्रहण:** । त्रि । भिन्नमलसन्धारके । च.सू.४

**सङ्ग्रहणी** । स्त्री । संग्रहग्रहण्याम् । निदा. । See ग्रहणी ।

**सङ्ग्राहकः** । त्रि । अनिलगुणभूयिष्ठद्रव्ये । अनिलस्य शोषणात्मकत्वात् । सु.सू.४१अ. ।

**सङ्ग्राही** (इन्) । पुं । कुटजवृक्षे । কুড়চি গাছ । रा.नि.व.९ । त्रि । धारके । संग्राहके ।

**सङ्घचारी** (इन्) । पुं । मत्स्यमात्रे । है.च. ।

**सङ्घपुष्पी** । स्त्री । शतपुष्पायां । শুল্‌ফা । रा.नि.व.४ । धातकीवृक्षे । ধাইফুলের গাছ । रा.नि.व.६ ।

**सङ्घर्षा** । स्त्री । अलक्तके । रा.नि.व.६ ।

**सङ्घाटिका** । स्त्री । शृङ्गाटकवृक्षे । পানিফলের গাছ । मे. । घ्राणे । विश्वः ।

**सङ्घातः** । पुं । कफे । रा.नि.व.२१ ।

**सङ्घातपत्रिका** । स्त्री । शताह्वायाम् । শুল্‌ফা । रा.नि.व.४ ।

**सङ्घातबलप्रवृत्तः** । पुं । आधिभौतिकागन्तुकरोगविशेषेषु । दुर्बलस्य बलवद्विग्रहात्तेऽपि द्विधा शस्त्रकृता व्यालादिकृताश्च । सु.सू.२४अ. ।

**सङ्घिमः** । पुं । तन्नामककर्णाकृतिविशेषे । अयं शष्कुशष्कुलिकत्वनपालिर्वितन्वाल्पपालिश्चेति त्रिधा चैसाध्यश्च । सु.सू.१६अ. । [भिधाने ।

**सङ्घिपरत्नावली** । स्त्री । श्यामलालकृतद्रव्या-

**सचरः** । पुं । श्वेतझिण्ट्याम् । वै.निघ. ।

**सचिल्लकः** । त्रि । कुदर्शने । क्लिन्नचक्षुषि । পেঁচুটা চক্ষু । श.र. ।

**सचिवः** । पुं । कृष्णधुस्तूरे । रा.नि.व.१० ।

**सचिवामयः** । पुं । पाण्डुरोगे । विसर्पे । रा.नि.व.२० । [ष्टान्विते ।

**सचेष्टः** । पुं । आम्रवृक्षे । श.मा. । त्रि । चे-

**सच्चरा** । स्त्री । हरिद्रायाम् । श.च. ।

**सच्चरः** । पुं । शरीरे । हे.च. । [वै.निघ. ।

**सच्चलम्** । क्ली । सौवर्चललवणे । সচল লবণ ।

**सञ्चलनम्** । क्ली । कम्पने । शब्दकल्पः ।

**सञ्चानः** । पुं । श्येनपक्षिणि । শিকরেপাখী । शब्दकल्पः ।

**सञ्चारिका** । स्त्री । घ्राणे । मे. ।

**सञ्चारिणी** । स्त्री । हंसपादीलतायाम् । গোয়ালিয়া লতা । रा.नि.व.५ । रक्तलज्जालुकायां । वै.निघ. । [नि.व.२० । धूपे । त्रिका. ।

**सञ्चारी** (इन्) । पुं । स्फोटके । ফোড়া । रा.

**सञ्चाली** । स्त्री । गुञ्जायाम् । शब्दकल्पः ।

**सञ्चित्रा** । स्त्री । मूषिककर्ण्याम् । मूषाकानी । श.र. ।

**सञ्ज्ञा** । स्त्री । छायायाम् । श.र. ।

**सञ्जीवनम्** । क्ली । दुग्धे । वै.निघ. ।

**सञ्जीवनागदः** । पुं । सर्पदष्टे अगदविशेषे । "लाक्षा हरेणुर्नलदं प्रियङ्गु शियुद्वयं यष्टिकपृथ्विकाश्च । चूर्णीकृतोऽयं रजनीविमिश्रो वर्गो निधेयो मधुसर्पिषाक्तः । शृङ्गे गवां पूर्ववदापिधानस्ततः प्रयोज्योऽञ्जननस्यपानैः । सञ्जीवनो नाम...... ॥" सु.कल्प.५अ. ।

**सञ्जीवनी** । स्त्री । उत्कलप्रसिद्धे रुदन्तीवृक्षे । रा.नि.व.५ ।

**सञ्ज्वरः** । पुं । सन्तापे । रा.नि.व.२० ।

**सटा** । स्त्री । जटायाम् । केशरे । मे. । क्ली । जटायां । श.र. ।

**सटिः** । स्त्री । शट्याम् । শঠী । श.र. ।

**सटि(ठि)का (टी, ठी)** । स्त्री । आरण्यार्द्रके । বন আদা । स्वनामख्यातपण्यद्रव्ये । शठी । ह आंबेहलद । कं कुलिञ्जरसित्र । तम्. कचोरा । कोङ्कणे प्रसिद्धा । गुणाः—तिक्ता अम्लरसा लघूष्णा रुच्या ज्वरघ्नी वातकासकण्डूव्रणघ्नी च । रा.नि.व.६ । गन्धपलाश्याम् । भा.म.१भ.ज्व.चि. । "कटूष्णा लिङ्गिका सटी ।"

**सट्टकम्** । क्ली । त्रिकटुदाड़िमजीरकादियुक्तसैंहदधनि । अन्यत्—"शालिचूर्णं घृतं तोयं मिश्रितं सट्टकं भवेत् ।" भा. ।

**सण्डः** । पुं । नपुंसके । श.टी. । [ल्पः ।

**सण्डिशः** । पुं । सन्दंशे । সাঁড়াশী । शब्दक-

**सततः** । पुं । कफे । वै.निघ. ।

**सतत(क)ज्वरः** । पुं । आमाशयस्थकफकृतज्वरे । स च प्रतिदिनं कालद्वयानुवर्तनात् किञ्चिन्न्यूना ।

सु.नि. । "अहोरात्रे सततक: द्वौ कालावनुवर्त्त-ते ।" मा.नि. ।

**सतसा** । स्त्री । नागवल्लीभेदे । পান গাছ বিশেষ । वम्. सातसीपर्ण । रा.नि.व.११ । See नागवल्ली । [श्र.व. ।

**सतिक्तका** । स्त्री । चुचुशाके । भा.पू.१भ.

**सती** । स्त्री । सौराष्ट्रमृदि । वै.च. । (अभावे पङ्कपर्पटी ।)

**सतीन: (क:)** । पुं । कलायभेदे । মটর । रा.नि.व.१६ । गुण:—मलवृद्धिकर: । सु.सू.४६ अ. । सु.चि.२अ. । च.द.तृष्णा.चि. । माषनीहो । মাষকলায় । हरेणौ । রহর । खण्डिके । ৻থেঁশারি । अ.टी भ. ।

**सतील: (क:)** । पुं । वंशे । हारा. । सतीनके । रा.नि.व.१६ स्त्री (ला) । विष्णुक्रान्तायां । অপরাজিতা । रा.नि.व.५ । कलायभेदे । ৻তেওড়া । "सतीला निष्खिका तिपुटी ।" श्र.च. ।

**सतुषम्** । क्ली । धान्ये । ধান । शब्दकल्प: ।

**सतेर:** । पुं । तुषे । उणा. ।

**सत्कदम्ब:** । पुं । केलिकदम्बवृक्षे । ৻কেলিকদম । श्र.च. । "केलिवृक्ष: सत्कदम्ब: ।"

**सत्काञ्चनार:** । पुं । रक्तकाञ्चने । "सत्काञ्चनार: कामालु: ।" श्र.च. । [श्र.च. ।

**सत्काण्ड:** । पुं । श्येनपक्षिणि । বাজপাখী ।

**सत्त्रि(त्रि)जातकम्** । क्ली । व्यञ्जनभेदे । यथा—"मांसं बहुघृते भृष्टं सिक्तं चोष्णाम्बुना मुहु: । जीरकाद्यै: समायुक्तं परिशुष्कं तदुच्यते । तदेव घृततक्राक्तं प्रदिग्धं सत्त्रिजातकम् ॥" श्र.च. ।

**सत्त्वम्** । क्ली । आयुषि । धरणि. । मनसि । "सत्त्वसंज्ञे मनसि ।" च.सू.१अ. । बले । स्वभावे । मे. । मनोविकारे । "सत्त्वं मनोविकारे स्यात्सदा यथा तथा स्थिति: ।" रा.नि.व.२१ । प्राणिमात्रे । अम. । जन्तौ । कृमि । सु.चि.६अ. । सारे । रस । धरणि. । "धातव निर्गत: सार: सत्त्वमित्यभिधीयते ।" गुणभेदे । तत् त्रिविधं शुद्धराजसतामसभेदेन । च.शा.४अ. ।

**सत्त्व:** । पुं, क्ली । जन्तौ । अम. ।

**सत्त्वशुद्धि:** । स्त्री । धातुसारस्य निर्मलीकरणे । रस.चि.६अ. ।

**सत्त्वावजय:** । त्रि । शरीरस्याहितकारकपादिभ्य: मनोवृत्तिव्यावर्त्तके औषधे । च.सू.११अ. ।

**सत्त्वादिस्थानम्** । क्ली । हृदये । च. ।

**सत्पत्रम्** । क्ली । पद्मस्य कोमलदले । श्र.च. ।

**सत्फल:** । पुं । दाडिमवृक्षे । श्र.च. ।

**सत्फलद:** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**सत्य:** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**सत्यकर्म्मा (न्)** । पुं । बिल्ववृक्षे । ৻বেল গাছ । वै.निघ. ।

**सत्यनामा (म्नी)** । स्त्री । ब्राह्म्याम् । ब्रह्मीशाक । वै.निघ. । आदित्यभक्तायाम् । हुड़्हुड़िया । वै.निघ. ।

**सत्यफल:** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**सत्यवती** । स्त्री । शमीवृक्षे । ब्राह्म्याम् । ब्रह्मीशाक । वै.निघ. ।

**सत्यवाक्** । पुं । काके । त्रिका. । [वै.निघ ।

**सत्याह्वा** । स्त्री । ब्राह्म्याम् ब्रह्मी शाक ।

**सत्वक्** । स्त्री । शिरायाम् [illegible] ।.व.१८ ।

**सत्सार:** । पुं । वृक्षविशे[illegible] [illegible]সার গাছ । शब्दकल्प: ।

**सत्सुकन्दक:** । पुं । अष्टविधस्थावरविषान्यतमे विषे । स च पौनर्नवः । अचि.२स्थान.५६अ. ।

**सथुत्कारम्** । क्ली । थुत्कारसहितवचने । वै.च. । [व.१८ ।

**सदंशक:** । पुं । कर्कटे । কাঁকড়া । रा.नि.

**सदंशवदन:** । पुं । कङ्कपक्षिणि । কাঁকপাখী । रा.नि.व.१९ ।

**सदञ्जनम्** । क्ली । पुष्पाञ्जने । श्र.च. ।

**सदनम्** । क्ली । अवसादे । मा.नि. । जले । मे. ।

**सदाकुसुमम्** । क्ली । धातकीपुष्पे । वै.निघ. चि.क्र.क.अ.सा.चि. ।

**सदागति:** । पुं । वायौ । अम. । सूर्य्ये । मे.

**सदागतिशत्रुः** । पुं । एरण्डवृत्ते । चि.क.क. स्त्री.रो.चि.अपरापातने । [আমরুলী । श.च.।

**सदातोया** । स्त्री । एलापर्ण्याम् । কাঁটা

**सदानर्त्तः** । पुं । खञ्जने । श.च. ।

**सदापुरः** । पुं । कैवर्त्तमुस्तायाम् । কেওট মুতা । वै.निघ. ।

**सदापुष्पः** । पुं । नारिकेलवृत्ते । श.मा. । श्वेतार्के । শ্বেত আকন্দ । मन्दारार्के । লাল আকন্দ । रा.नि.व.१० । See राजार्कः । अर्कवृत्ते । আকন্দ গাছ । कुन्दवृत्ते । কুঁদ গাছ । रा.नि.व.१० । कपिपिप्पल्याम् । লাল আপাঙ্ । वै.निघ. । स्त्री (ष्पी) । अर्कवृत्ते । আকন্দ গাছ । च.सू.४अ. । सु.सू.४३अ. । रक्तार्के । प.मु. । च.वि.८अ. । कार्पासवृत्ते । কাপাস গাছ । वै.निघ. ।

**सदाप्रसूनः** । पुं । रोहीतकवृत्ते । রোড়া । रा.नि.व.८ । रक्तरोहितके । वै.निघ. । कुन्दवृत्ते । अर्कवृत्ते । रा.नि.व.१० ।

**सदाफलः** । पुं । नारिकेलवृत्ते । भा.म.भा.व. । उदुम्बरवृत्ते । যজ্ঞডুমুর । मे. । रा.नि.व.११ । वा.सू.१५अ. । "न्यग्रोधपिप्पलसदाफलरोध्रयुग्मम् ।" बिल्ववृत्ते । रा.नि.व.११ । सपुष्पवार्त्ताकौ । কুশিবেগুন । सं. । स्त्री (ला) । चिसम्बिपुष्पवृत्ते । रा.नि.व.१० । वार्त्ताकुविशेषे । দকো বেগুন,পুলিবেগুন । गुणाः—त्रिदोषघ्नी रक्तपित्तप्रसादनी कण्डूकच्छूघ्नी च । राज. ।

**सदाभद्रा** । स्त्री । गाम्भारीवृत्ते । प.मु. । भा.म.३भ.सू.घा चि. । [वै.निघ. ।

**सदामण्डलपत्रकः** । पुं । श्वेतपुनर्नवायाम् ।

**सदामांसी** । स्त्री । मांसरोहिणीभेदे । रा.नि.व.१२ ।

**सदारुहः** । पुं । बिल्ववृत्ते । वै.निघ. ।

**सद्रसन्दनम्** । क्ली । निष्यन्दे । त्रिका. ।

**सद्म (न्)** । क्ली । जले । मे. । गृहे । अम. ।

**सद्यःप्राणकरः** । त्रि । सद्योहतमृगादिमांसनवान्नादौ । चाणक्यः । See सद्योमांसम् ।

**सद्यःप्राणहरः** । त्रि । आघातमात्रमेव जीवननाशके । यथाविधदेहमर्म्मस्थाने यत्राहते तत्क्षणं म्रियते । सु.शा.६अ. । सद्योमारकद्रव्ये, शुष्कमांसतरुणदध्यादौ । सु.सू.४६अ. । .

**सद्यःप्रीणनम्** । क्ली । आहारे । वैद्यकम् ।

**सद्यःशोथा** । स्त्री । शुकशिम्ब्याम् । আলকুশী । श.च. ।

**सद्योव्रणः** । पुं । सद्योजातचते । निदानं—"नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः । भवन्ति नानाकृतयो व्रणाः·· ··· ॥" ते च षड्विधाः छिन्नं भिन्नं विद्धं चतं पिच्छितं घृष्टञ्चेति । मा.नि. । अपिच—"सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः । अनन्तैरपि तैरङ्गमुच्यते जुष्टमष्टधा ॥ घृष्टावकृत्तविच्छिन्नप्रविलम्बितपातितं । विद्धं भिन्नं विदलितम्······ ॥ ·········तत्र घृष्टं लसीकया । रक्तलेशेन वा युक्तं सप्तोषं छेदनात् स्रवेत् । अवगाढ़ं ततः कृत्तं विच्छिन्नं स्यात्ततोऽपि च । प्रविलम्बि सशेषास्थि पातितं पतितं ततोः । सूक्ष्मास्यशल्यविद्धन्तु विद्धं कोष्ठविवर्जितं । भिन्नमन्यद्विदलितं मज्जरक्तपरिस्रुते । प्रहारपीड़नोत्क्षेपात् सहास्थ्ना पृथुतां गतम् ॥" वा.उ.२६अ. ।

**सद्योमण्डलपत्रकः** । पुं । श्वेतपुनर्नवायाम् । वै.निघ. ।

**सद्योमांसम्** । क्ली । अभिनवमांसे । টাট্কা মাংস । गुणाः—सद्योमांसं नवान्नञ्च बाला स्त्री चीरभोजनं घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट् ॥" चाणक्यः । [श.च. ।

**सनः** । पुं । घण्टापाटलवृत्ते । ঘণ্টাপারুল ।

**सनपर्णी** । स्त्री । अपराजितायाम् । श.र. ।

**सनाभा** । स्त्री । श्वेतपाटले । শ্বেত পারুল । वै.निघ. ।

**सनामकः** । पुं । शोभाञ्जनवृत्ते । श.च. ।

**सनिग्रहः** । पुं । द्विविधसन्दंशान्यतरसन्दंशे । स लौहकारसन्दंश इव कालबद्धः । अनिग्रहश्च अनिबन्धनः स्वर्णकारस्येव । सु.टी.उ.७अः ।

**सनिष्ठेवम्** । क्ली । अम्बुकृते । अम. ।

**सन्ततज्वरः** । पुं । निरन्तरज्वरे । लक्षणं—"सप्ताहं वा दशाहं वा द्वादशाहमथापि वा । सन्तत्या यो विसर्गी स्यात् सन्ततः स निगद्यते ॥" दोषधातुमलमूत्रकोपे सन्ततोऽपतिरिति चरकः ।

**सन्तर्पणम्** । क्ली । "द्राक्षादाडिमखर्जूरीकदलीघृतमधुशर्करायुक्ते लाजचूर्णे । "द्राक्षादाडिमखर्जूरकदलीशर्करान्वितं । लाजाचूर्णं समध्वाज्यं सन्तर्पणमुदाहृतम् ॥'' रा.नि.व.२२ । अतिभोजने । सु.सू.४४अ. । अतितृप्तौ, रसादिवर्द्धकनवान्नमद्याद्यतिसेवने । च.द.ज्व.चि. ।

**सन्तानः** । पुं । कल्पवृक्षे । अम. । स्त्री (ना) । नीलापराजितायां । वै.निघ. । [यां । वै.निघ.।

**सन्तानच्छेदिका** । स्त्री । नीलापराजिता-

**सन्तानिका** । स्त्री । मर्कटजालतन्तौ । माकड़जालि घास । रा.नि.व.८ । फेने । छुरिकाफले । हारा. । क्षीरसरे । मालाइ । गुणाः—गुरुः शीता वृष्या पित्तरक्तवातजित् । रा.नि.व.१५ । मिष्टान्नविशेषे । मलाइ.... । यथा—"दुग्धस्य शरावचतुष्टयं शर्करामर्द्धशरावपरिमितास् घृतं शरावपादिकञ्च गृहीत्वा तद्दुग्धे आवर्त्तनेन घनीभूते उष्णे स्थिते मन्थानदण्डेन मथनेन बहुतरफेनो भविष्यति, तत्फेनसहितदुग्धस्य तलाङ्गारोपरिरक्षणात् सरो जायते । तत्सरमखिलं चतुष्कोणाकारं निर्माय घृतेन भृष्टा एकतारयुक्तशर्करारसे मग्नं कुर्य्यात्, किन्तु तत्राधिककालं न तिष्ठेत् ।'' पाकराजः ।

**सन्तापः** । पुं । तापे । रा.नि.व.२० । दाहरोगे । "खेदावरोधः सन्तापः ।'' मा.नि. ।

**सन्दंशः** । पुं । सन्दंशिकायाम् । शाँड़াশী । हे.च. । नासारोमापहरणयन्त्रभेदे । नाकशोन्ना । सु.चि.१अ. । ... पोड़शाङ्गुलयन्त्रे । तस्य सनिग्रहानिग्रहौ द्वौ भेदौ भवतः । सु.सू.७अ. । [ताडि, चिमटा । मं. ।

**सन्दंशिका** । स्त्री । सन्दंशे । शाँड़াশী, का-

**सन्दानिका** । स्त्री । अरिमेदरि । विट्खदिर । रा.नि.व.८ । (नी) गोशालायां । गोयाल । हे.च. । [दे । रा.नि.व.२० ।

**सन्दाहः** । पुं । सम्यग्दाहे । तालोष्ठमुखदा-

**सन्दीप्यः** । पुं । मयूरशिखावृक्षे । श.च. ।

**सन्दुष्टभोजनम्** । क्ली । संयोगविरुद्धभोजने । मा.नि.ग्रहणी.चि. ।

**सन्धानम्** । क्ली । मद्ये । रा.नि.व.१४ । सौराष्ट्रमृत्तिकायाम् । पङ्कपर्पटी । सुरासवकृतमद्ये । वै.निघ. । सुरासज्जीकरणे । मद तैयारि करा । मद्यकल्पे नयनानन्दः । काञ्जिके । छला. । व्यञ्जने । रा.नि.व.२० ।

**सन्धानिका** । स्त्री । भोज्यद्रव्यविशेषे । आचार इति लोके । आम्रसन्धानिकायाम् । आमेर आचार । यथा—सर्षपाः १ श. मरिचं २ तो. लवणं ६ तो. मेथिका २ तो. जीरकं २ तो. हरिद्रा १ तो. नागरमुस्तकं १ तो. कृष्णजीरकं १ तो. एकत्र चूर्णयेत् । आम्रफलानि २० निरस्थीनि विखण्डानि चतुःखण्डानि वा कृत्वा तदभ्यन्तरे पूर्व्वोक्तचूर्णं पूरयित्वा शलाकया विद्धा च तैले क्षिपेत् । पाकराजः ।

**सन्धानी** । स्त्री । सन्धाने । श.र. ।

**सन्धानीयवर्गः** । पुं । पञ्चमदशकाख्यमहाकषायवर्गे, भग्नसंयोजने । यथा—मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गा... इत्येतानि दशेमानि सन्धानीयानि भवन्ति । यष्टिमधु, गुलञ्च, चाकुलिया, आकनादि, बराक्रान्ता, मोचरस, धाइफुल, लोध, प्रियङ्गु, कट्फल । च. । [सू.४अ. ।

**सन्धारणीयः** । त्रि । संग्रहणे । धारक । च.

**सन्धिः** । पुं । अस्थिसंयोगस्थाने । स द्विविधः चेष्टावान् स्थिरश्च । शाखाहनुकटिषु चेष्टावन्तः, शेषाः स्थिरा इति । ते च सन्धयः २१० । तेषां शाखास्वष्टषष्टिः, कोष्ठे एकोनषष्टिः, ग्रीवां प्रति ऊर्द्ध्वं त्र्यशीतिः इति । तेषाञ्च त्र्यशीतिः ग्रीवायां ८, कण्ठे ३, ...मनास्वङ्गुलाद्देषु १८, दन्तमूलेषु ३२, काकलके १, नासिकायां २, चक्षुषि २, गण्डस्थले २, शङ्खे १, कर्णयोः प्रत्येके १, हनुसन्ध्योः २, भ्रुवोः २, शङ्खोपरि २, मस्तके १, शिरःकपालेषु ५ । एते च सन्धयोऽष्टधा कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताभिधाः । तेषाम् अङ्गुल्यादिषु कोरा कक्षावङ्क्षणादौ उदूखलाः गुदभगादौ सामुद्गा ग्रीवादौ प्रतराः शिरःकट्यादौ तुन्नसेवनी हन्वोरुभयतः वायसतुण्डाः कण्ठहृदयादौ मण्डलाः श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ता इति । सु.शा.५अ. ।

**सन्धिकः (गः)** । पुं । स्वनामख्यातसन्निपातज्वरविशेषे । तस्य लक्षणम्—"पूर्व्वरूपकृतशूलस-

श्वं शोषवातबहुवेदनान्वितं । श्लेष्मतापबलहानि-जागरं सन्निपातमिति सन्धिकं वदेत् ॥" अत्र ७ दिनं जीवति । अपिच —"व्यथातिशयिता भवे-च्छ्वयथुसंयुता सन्धिषु प्रभूतकफता मुखे विगतनि-द्रता कासरुक् । समस्तमिति कीर्त्तितं भवति लक्ष्म यत्र ज्वरे ·····सन्धिग: ॥" भा.म.१भ. ।

**सन्धिका (जा)** । स्त्री । त्रिसन्धिपुष्पवृक्षे । रा.नि.व.१० । मद्यसन्धाने । श.र. । [निघ. ।

**सन्धिकुसुमा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । वै.

**सन्धिनाल:** । पुं । नखीनामगन्धद्रव्ये । रा. नि.व.१२ ।

**सन्धिनी** । स्त्री । वृषाकाङ्क्षिण्यां गवि । या वृ-षेणाक्रान्ता निष्पादितमैथुना । भ. । अकालदु ग्धायां । मे. । [श.च. ।

**सन्धिवन्ध:** । पुं । भूमिचम्पके । ভুঁইচাঁপা ।

**सन्धिबन्धनम्** । क्ली । स्नायुशिरायाम् । "ए-वमेव शरीरेऽस्मिन् यावन्त: सन्धय: स्मृता: । स्नायु भिर्बहुभिर्बद्धा:········॥" सु.शा.५अ. ।

**सन्धिभङ्ग:** । पुं । अस्थिभङ्गे । वैद्यकम् ।

**सन्धिमुक्तभग्नम्** । क्ली । द्विविधभग्नरोगान्य-तरे भग्ने । तच्च उत्पिष्टादि षड्विधम् । तत्र प्र-सारणाकुञ्चनविवर्त्तनाक्षेपणाशक्तिरुग्ररुजत्वं स्पर्शा-सहत्वञ्चेति सामान्यलक्षणम् । सु.नि.१५अ.। See भग्नम् ।

**सन्धिरुक्** । स्त्री । सन्धिवेदनायां । निदा. ।

**सन्धिला** । स्त्री । मदिरायां । मे. ।

**सन्धिवल्ली (वेला)** । स्त्री । त्रिसन्धिपुष्पक्षु-पे । रा.नि.व.१० ।

**सन्ध्या** । स्त्री । दण्डद्वयरूपे दिवारात्रिसन्धिस-मये । पुष्पवृक्षविशेषे । গোলাপ । हे.च. ।

**सन्ध्यापुष्पा (ष्पी)** । स्त्री । जातीपुष्पवृक्षे । रा.नि.व.१० । [१२ ।

**सन्ध्याभ्रम्** । क्ली । सुवर्णगैरिके । रा.नि.व.

**सन्ध्याराग:** । पुं । सिन्दूरे । रा.नि.व.१३।

**सन्न: (क:)** । पुं । पियालवृक्षे । পেয়াশাল । अम. । त्रि (क:) । खर्व्वे । अम. । [अम. ।

**सन्नकद्रु:** । पुं । पियालवृक्षे । পেয়াশাল ।

**सन्नाहमल्लिका** । स्त्री । विरेचकमल्लिका-विशेषे । अर्क.चि.रावणकृतनवमशतके ।

**सन्निकृष्ट:** । त्रि । सन्निकर्षविशिष्टे । मा.नि.।

**सन्निपात:** । पुं । सङ्घाते । वैकारिकवातादि-दोषसमुच्चये । स त्रयोदशविध: । च. । See स-न्निपातज्वर: ।

**सन्निपातकलिका** । स्त्री । अश्विनीकृतस-न्निपातचिकित्सायाम् । रुद्रटकृता चान्या ।

**सन्निपातज्वर:** । पुं । सामान्यत्रैदोषिकज्व-रविशेषे । तस्य लक्षणं —"क्षणे दाह: क्षणे शीत-मस्थिसन्धिशिरोरुजा । सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने । सस्वनौ सरुजौ कर्णौ कण्ठ: शूकै-रिवावृत: । तन्द्रा मोह: प्रलापश्च कास: श्वासोऽरु-चिर्भ्रम: । परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् । ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च । शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा । स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पश: । कृशत्वं ना-ति गात्राणां प्रततं कण्ठकूजनम् । कोठानां श्या-वरक्तानां मण्डलानाञ्च दर्शनम् । मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च । चिरात् पाकश्च दोषा-णां सन्निपातज्वराकृति: ॥" मा.नि. । स १३ वि-ध: सन्धिकादिभेदात् —सन्धिकान्तकरुग्दाहचित्त-विभ्रमशीताङ्गतन्द्रिककण्ठकुब्जककर्णकभुग्ननेत्ररक्त-ष्ठीविप्रलापकजिह्वकाभिन्यासा: । तेषाञ्च ज्वराणां मर्य्यादा यथाक्रमं ७।१०।२०।२४।१५।१५।१३। ९०।८।१०।१४।१६।१६ दिनानि भवन्ति । तेषां —एकोल्वणद्व्युल्वणत्र्युल्वणभेदेन सप्त । प्रवृद्धमध्य-हीनैर्वातपित्तकफैश्च षाड़िति । तद्यथा—वातो-ल्वण: पित्तोल्वण: कफोल्वण इति त्रिभेद:, वा-तपित्तोल्वण: वातश्लेष्मोल्वण: पित्तश्लेष्मोल्वण इति त्रिभेद इति षट् त्र्युल्वण एक इति सप्त । तथा प्रवृद्धवातो मध्यपित्तो हीनकफ: १ । मध्यवात: प्रवृद्धपित्तो हीनकफ: २ । हीनवात: प्रवृद्धपित्त: मध्यकफ: ३ । प्रवृद्धवात: हीनपित्त: मध्यकफ: ४ । मध्यवात: हीनपित्त: प्रवृद्धकफ: ५ । हीन-वातो मध्यपित्त: प्रवृद्धकफ इति षट्,—इति त्रयो-दश । तेषाञ्च वातोल्वणादीनां नामानि यथाक्रमं १ विस्फारक:, २ आशुकारी, ३ कम्पन:, ४ बभ्रु: (भ्रू:), ५ शीघ्रकारी, ६ भल्लु: (फल्गु:), ७ कूट-

पाकल, ८ संमोहक:, ९ पाकल:, १० याम्य: (संग्राम:), ११ क्रकच:, १२ कर्कटिक:, १३ (वैदारिक:) (शर्कराख्यो) विदाख्यश्चेति, १३ भेदा:। च.। भा.म.१भ.। तन्त्रान्तरोक्तनामानि यथा—शीताङ्ग:, तन्द्रिक:, चित्तविभ्रम:, कर्णिक:, जिह्वक:, कण्ठकुब्जक:, रुग्दाह:, रक्तष्ठीवी, भुग्ननेत्र:, प्रलापक:, अभिन्यास: कण्ठग्रह:, कर्णग्रहश्चेति। पुनस्तन्त्रान्तरोक्तनामानि—कुम्भीपाक:, प्रोर्णुनाव:, प्रलापी, अन्तर्दाह:, दण्डपात:, अन्तक:, एणीदाह:, हारिद्र:, अजघोष:, भूतहास:, यन्त्रपीड़:, सन्न्यास:, संशोषी चेति त्रयोदश। भा.म.१भ.। लक्षणादि स्वस्वपर्य्याये द्रष्टव्यम्।

**सन्निपातनाड़ी।** स्त्री। दन्तमूलगतरोगे। लक्षणं—"दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा: यस्यां भवन्ति विहितानि च लक्षणानि।" मा.नि.।

**सन्निपातनुत् (हर:)।** पुं। नेपालनिम्बे। চিরেতা। वै.निघ.।

**सन्निपातपट:।** पुं। वैद्यकग्रन्थभेदे।

**सन्निपातमृत्युञ्जयरस:।** पुं। सन्निपातज्वरे रस:। पाठ:—"विषं सूतकगन्धौ च पित्तं मत्स्यवराहयो:। आजमायूरपित्ते च माहिष्याश्चापि योजयेत्। हरितालञ्च सर्व्वांशं वानरीवीजसंयुतं। अपामार्गं चित्रमूलं जयपालञ्च कल्कयेत्। एतत् सर्व्वं समांशेन अजामूत्रेण मर्द्दयेत्। माषेण सदृशी कार्य्या वटिका सन्निपज्वरे:...... ॥" বিষ, পারা, গন্ধক, মাছের পিত্ত, শূকরপিত্ত, ছাগলপিত্ত, মায়ূরপিত্ত, মাহিষপিত্ত, হরিতাল, ত্রিকটু, আলাকুশীবীজ, আপাঙ্গমূল, চিতার মূল, জয়পালবীজ প্রত্যেকে সমভাগ। শিলাপাত্রে ছাগদুগ্ধ দ্বারা মর্দ্দন করিয়া কলায়-প্রমাণ বটী করিবে। भैष.।

**सन्निपातसूर्य्यरस:।** पुं। सन्निपातज्वरे रस:। पाठ:—"रसेन गन्धं द्विगुणं प्रगृह्य तत्पादभागं रवितारहेम। भस्मीकृतं योजय मर्द्दयेतु दिनत्रयं वह्निरसेन घर्म्मे। विषञ्च दत्वाच कलाप्रमाणमजादिपित्तै: परिभावयेच्च ॥" माना २—६ र.। রস ১ ভ. গন্ধক ২ ভ. তাম্রভস্ম, রূপাভস্ম, স্বর্ণভস্ম প্রত্যেকে রসের সিকি ভ. বিষ রসের অষ্টম ভাগ, একত্র চিতার রসে মাড়িয়া বটী করিবে। रस.चि.। अन्य:—"हिङ्गुलं गन्धकं ताम्रं मरिचं पिप्पली विषम्। शुण्ठी कनकबीजञ्च तुल्यचूर्णानि कारयेत्। विजयापत्रतोयेन त्रिदिनं भावयेत् सुधी:॥" माना ९ र.। अनु. पर्णखण्ड:, अर्कक्वाथ:। হিঙ্গুল, গন্ধক, তামা, মরিচ, পিপুল, বিষ, শুঁট, কনকধুতুরাবীজ, সমভাগ সিদ্ধিরসে ৩ দিন মর্দ্দন করিবে। भैष.।

**सन्निरुद्धगुद:।** पुं। निरुद्धगुदरोगे। See [निरुद्धगुद:।

**सन्नीन्द्रकम्।** क्ली। सिन्दूरे। प.मु.।

**सन्न्यास:।** पुं। मूर्च्छाविद्रोगविशेषे। लक्षणं यथा—"वाग्देहमनसां चेष्टा आक्षिप्यातिबला मला:। सन्नस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिता:। स ना सन्न्याससन्न्यस्त: काष्ठीभूतो मृतोपम:। प्राणैर्व्विमुच्यते शीघ्रं मुक्त्वा सद्य:फलां क्रियाम्॥" मा.नि.। सन्निपातज्वरविशेषे। लक्षणं—"अतिसरति वमति कूजति गात्रग्रहमपि चिरं नर: क्षिपति। सन्न्याससन्निपाते प्रलपत्यूर्द्ध्वाक्षिमण्डलो भवति॥" भा.म.१भ.। [श.च.।

**सपत्नारि:।** पुं। वंशभेदे। বেউড় বাঁশ।

**सपत्र(त्रा)कृत:।** त्रि। पीड़िते। दु:खापिते। पुं। शराहतमृगादौ। शब्दकल्प:।

**सपत्राकरणम्।** क्ली। अतिपीड़ने। अतिवेदनायाम्। हला.।

**सपत्राकृति:।** स्त्री। अतिपीड़ने। हे.च.।

**सपादमत्स्य:।** पुं। मत्स्यविशेषे। वै.निघ.।

**सपीतक: (तिका)।** पुं, स्त्री। राजकोशातक्याम्। धुन्दुल। रा.नि.व.७।

**सपूजका।** स्त्री। तिलवासिनीशालौ। शालिधान्यविशेष। रा.नि.व.१६।

**सप्तच्छद:।** पुं। सप्तपर्णवृक्षे। रा.नि.व.१२। सु.सू.३८अ.। लाक्षादि:। वा.सू.१५अ.। आरग्वधादि:। [श्चे। महासुगन्धतैले।

**सप्तदल:।** पुं। सप्तपर्णवृक्षे। सरथीनामगन्धद्र-

**सप्तदलपुष्पम्।** क्ली। मुद्गरपुष्पे। सप्तच्छदपुष्पे। रस.र.बाल.चि.।

**सप्तधातु:।** पुं। शरीरस्थरसादिधातुषु, रस-

रक्तमांसमेदोऽस्थिमज्जशुक्रेषु। "रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रसमाह्वयैः......।" रा.नि.व.२२।

**सप्तनाड़िका।** स्त्री। शृङ्गाटके। वै.निघ.।

**सप्तनामा।** स्त्री। आदित्यभक्तायां। हुड़हुड़िया। रा.नि.व.४। [ज.द.। रा.नि.व.१०।

**सप्तपत्रः।** पुं। मुद्गरपुष्पवृक्षे। सप्तपर्णवृक्षे।

**सप्तप(व)र्णः (र्णाख्यः)।** पुं। (Alstonia scholaris. Syn. Echites scholaris.) स्वनामख्यातवृक्षे। छातिमगाछ। हिं छातियान्। कं एलेलग। मं सातवणा। तें ऐड़ाकुल, अरिटाकु। वम्. छातविण्। "शाल्मलीसदृशपत्रः गजमदगन्धपुष्पः शरदि विकसनशील उच्चैश्च:।" सु.सू.३८अ.। गुणाः—तिक्तोष्णो दीपनः त्रिदोषघ्नः व्रणरक्तकृमिघ्नश्च। रा.नि.व.१२। श्वासगुल्महरः स्निग्धोष्णः तुवरः सरः कृमिघ्नश्च। भा.। क्ली। द्राक्षारसशर्कराघृतमध्वादिकृतमिष्टान्नभेदे। यथा—"द्राक्षादाड़िमखर्जूररसजितासं सशर्करं। लाजचूर्णं समध्वाज्यं सप्तपर्णमुदाहृतम्॥" श.च.। स्त्री (र्णा, र्णी)। लज्जालुकायाम्। लज्जावती। रा.नि.व.५। [माषतैलं वा। रस.र.।

**सप्तप्रस्थमाषतैलम्।** क्ली। वातव्याधौ तैलं

**सप्तभद्रः।** पुं। शिरीषवृक्षे। श.च.।

**सप्तमुष्टिकयूषः।** पुं। यूषविशेषे। स पञ्चमुष्टिकधान्यशुण्ठीनामेकैकमुष्टिं गृहीत्वाष्टगुणतोये पक्वः। "यवकोलकुलत्थैश्च मुद्गामलकशुण्ठकैः। धन्याकविश्वसंयुक्तैर्यूषः स्यात् सप्तमुष्टिकः॥" सं.।

**सप्तरक्तम्।** क्ली। शरीरस्य वहिस्थे रक्तवर्णे सप्तविधावयवे। यथा—अपाङ्गजिह्वौष्ठनखकरतलतालुपादतलेषु। सामुद्रकम्।

**सप्तला (लिका)।** स्त्री। (Acacia concinna.) आरण्यरीठाकरञ्जे। वन रीठा। तें चिकय, गोगु। वम्. सिकाकाइ। दा. चिकेकाइ। स्नुहीभेदे। मनसाविशेष। सु.सू.३८अ.। नवमल्लिकायाम्। वासन्त्यां। सेउति। रा.नि.व.१०। भा.। चर्मकषायाम्। চামরকষা, ঘেঁট্কোল। च.सू.२।४अ.। च.द.गुल्मचि.। (लिका)। सु चि.१८अ।

**सप्तविंशतिकगुग्गुलुः।** पुं। भगन्दरे पक्वगुग्गुलुविशेषे। "त्रिकटु त्रिफला मुस्तविड़ङ्गामृत-चित्रकम्। शठ्येला पिप्पलीमूलं हवुषा सुरदारु च। तुम्बुर्व्वरूष्करं चव्यं विशाला रजनीद्वयम्। विड़सौवर्च्चले चारौ सैन्धवं गजपिप्पली। यावन्त्येतानि चूर्णानि तावद्द्विगुणगुग्गुलु॥" ত্রিফলা, ত্রিকটু, মুতা, বিড়ঙ্গ, গুলঞ্চ, চিতামূল, শটী, এলাইচ, পিপুলমূল, হবুষফল, দেবদারু, ধনে, ভেলা, চৈ, রাখালশশার মূল, হরিদ্রা, দারুহরিদ্রা, বিট্লবণ, সচল লবণ, যবক্ষার, সাচিক্ষার, সৈন্ধব, গজপিপুল, প্রত্যেকে ১ তো. শুদ্ধগুগ্গুল ৫৪ তো.। ১ তোলা পরিমাণ বটী করিবে। অনুপান জল। सा.कौ.। भैष.। [गाछ। रा.नि.व.११।

**सप्तशिरा।** स्त्री। नागवल्लीलतायाम्। পাণ

**सप्ताङ्गगुग्गुलुः।** पुं। नाड़ीव्रणे औषधम्। त्रिफला शुण्ठी पिप्पली मरिचम् एषां प्रति ४ तो. शुद्धगुग्गुलुः २४ तो. घृतेन पिष्ट्वा यथासम्भवं भक्षणीयम्। सा.कौ.।

**सप्तामृतलौहम्।** क्ली। नेत्ररोगे औषधम्। त्रिफला यष्टिमधु प्र. समभागः सर्व्वचूर्णसमं लौहं माषमाना वटी घृतमधुभ्यां भोक्तव्या। सा.कौ.।

**सप्तार्चिः।** पुं। चित्रकवृक्षे। চিতা গাছ। अग्नौ। अम.।

**सप्ताश्वः।** पुं। अर्कवृक्षे। আকন্দ গাছ। अम.। श्वेतरोहीतकवृक्षे। শ্বেত রোঢ়া গাছ। रा.नि.व.८।

**सप्ताह्वः (ह्वा)।** पुं, स्त्री। सप्तपर्णवृक्षे। भैष. कुष्ठ.चि.महाभल्लातकगुड़े। वा.चि.१२अ.। वै. निघ.सर्व्वज्व.चि.कुलत्थाद्यघृते। सु.चि.९अ.।

**सप्तिः।** पुं। अश्वे। अम.।

**सफरः।** पुं। प्रोष्ठीमत्स्ये। अ.टी.भ.।

**सफरी।** स्त्री। प्रोष्ठीमत्स्ये। পুঁটী মাছ। भा.।

**सभम्।** क्ली। पुष्पे। वै.निघ.।

**सभकश्रवणः।** पुं। शालविशेषे। वै.निघ.।

**सभक्षत्।** पुं। कफे। वै.निघ.।

**सभकोलः।** पुं। सर्पे। त्रिका.।

**सभक्वाथः।** पुं। अष्टमांसावशिष्टक्वाथे। "सप्तमांशावशिष्टकः मतः।" रा.नि.व.२०।

**समगन्धिकम्** । क्ली। उशीरे। বেণার মূল। रा.नि.व.१२।२३।

**समङ्गा** । स्त्री। मञ्जिष्ठायां। रा.नि.व.६।२३। लज्जालुकायाम्। रा.नि.व.५।२३। भा.म.४भ. बालातिसारे। "समङ्गाधातकीलोध्रसारिवाभिः।" सु.सू.३८श.प्रियङ्ग्वादिः। सु.चि.२श.। च.सू.४श. सन्धानीये। वराहक्रान्तायां। বরাক্রান্তা। च.सू. ४श.। च.द.श.सा.चि.पृश्निपर्ण्यादिः। बालके। বালা। सा.कौ.ह्रीवेरादौ। बलायां। वै.निघ. २भ.संग्रहणी.चि.कुटजावलेहे।

**समङ्गिका** । स्त्री। लज्जालुकायाम्। चि.क्र. क.गर्भाधिकारे। [শশা, কাঁকুড়। प्र.। श.र.।

**समठः** । पुं। फलशाकविशेषे, चपुषादौ।

**समत्र(त्रित)यम् (त्रयी)** । क्ली, स्त्री। हरीतकीनागरगुडानां समभागे। रा.नि.व.२२।

**समदोषत्रयम्** । क्ली। वातपित्तकफसाम्यभावे। "वातपित्तकफा यत्र समतां यान्ति नित्यशः। त्रिदोषसममित्येतत्……… ॥" रा.नि.व.२२।

**समन्तपतिः** । पुं। शोभाञ्जनवृक्षे। रस.र.बाल.चि.नागार्ज्जुनचूर्णे।

**समन्तदुग्धा** । स्त्री। स्नुहीवृक्षे। তেকাঁটা-মনসা। प.मु.। रा.नि.व.८। [निघ.।

**समन्वितकारी** (रिन्) । पुं। आम्रवृक्षे। वै.

**समप्रकृतिः** । त्रि। समधातुप्रकृतौ। तल्लक्षणं यथा—"स्निग्धवर्णोऽतिसुदीर्घगात्रो गम्भीरधीरोऽतिविदीर्णरोमा। रामाप्रियो भारसहोऽतिनिद्रः भोगेन युक्तः समताप्रकृत्या ॥" अत्रि.पू.श.।

**समयोनिः** । पुं। कफे। वै.निघ.।

**समलम्** । क्ली। विष्ठायां। श.र.। त्रि। मलिने। पुं। रजततास्रपुलौहेषु। च.सू.१श.।

**समवर्णजा** । स्त्री। कुङ्कुमशालौ। रा.नि.व. १६।

**सम(मा)वायः** । पुं। अपृथग्भावे। "समवायोऽपृथग्भावः।" च.सू.१श.। मा.नि.। [श.।

**समशनम्** । क्ली। अपथ्यसम्भोजने। सु.नि.३

**समशर्करचूर्णम्** । क्ली। ग्रहण्यादौ, कासाधिकारे च चूर्णम्। লবঙ্গ, জায়ফল, পিপুল প্রত্যেকে ২ তো. মরিচ ৪ তো. শুঁট ৪ প. সর্ব্বচূর্ণসমান চিনি। सा.कौ.। "शुण्ठीकणामरिचनागदलात्वगेलं चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमलात्। खादेदिदं समसितं गुदजाग्निमान्द्यकासारुचिश्वसनकण्ठहृदामयेषु" ॥ रस.र.अर्शो.चि.। च.द.अर्शसि.।

**समष्ठिलः** । पुं। तन्नाम्ना पश्चिमदेशख्यातक्षुपविशेषे। हिं ककुँआ। गुणाः—कटुरूक्षः रुच्यः मुखशोधनः कफवातप्रशमनः दीपनः दाहकृच्च। रा.नि.व.४। अपामार्गे। वै.निघ.।

**समष्ठि(ष्ठी)ला** । स्त्री। कटुतुम्ब्यां। नद्यामे। वै.निघ.। गण्डीरे। अम.। शमठनामशाकविशेषे। ওছিয়াশাক। सर्व्वानन्दः। [ड़ा। वै.निघ.।

**समांशा** । स्त्री। ह्रस्वबलायाम्। ক্ষুদ্র বেলে-

**समानवायुः** । पुं। तन्नामकदेहस्थवायौ। সমান বায়ু। तस्य स्थानं पच्यमानाहाराशयः। तस्य गुणाः—"आमपक्वाशयचरः समानो वह्निसङ्गतः। सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि। गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान्।" सु.नि.१श.। [গন্ধতৃণ। रा.नि.व.८।

**समालम्बः (म्बी)** । पुं। सुगन्धरोहिषतृणे।

**समालम्भः** । पुं। कुङ्कुमादिलेपने। अम.।

**समालम्भनम्** । क्ली। कषाये। कुङ्कुमादिविलेपने। त्रिका.।

**समासवान्** । पुं। तुन्नवृक्षे। श.च.। [श.च.।

**समाह्वा** । स्त्री। गोजिह्वायां। গোজিয়া শাক।

**समितः (ता)** । पुं, स्त्री। गोधूमचूर्णे। ময়দা। यथा—"गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः। घर्षिता यन्त्रनिष्पिष्टाश्चालिताः समिताः स्मृताः ॥" भा.। ह.व.।

**समिदुत्तमः** } पुं। पलाशवृक्षे। वै.निघ.।
**समिद्वरः** }

**समीचकः** । पुं। मैथुने। शब्दकल्पः।

**समीदः** । पुं। गोधूमचूर्णे। ময়দা। शब्दकल्पः।

**समीनिका** । स्त्री। प्रतिवर्षप्रसवायां गवि। श.र.।

**समीरः** । पुं। शमीवृक्षे। रा.नि.व.८।

**समीरणः** । पुं । मरुवकवृक्षे । गन्ध तुलसी । रा.नि.व.१० ।

**समीरसारः** । पुं । विल्ववृक्षे । रा.नि.व.११ ।

**समुच्चयः** । पुं । इदञ्चेदञ्चेति समुच्चयः । यथा —मांसवर्गे एणहरिणलावतित्तिरिशारङ्गाः प्रधानमिति ।

**समुत्क्रोशः** । पुं । कुररीपक्षिणि । श.र. ।

**समुत्क्लिष्टः** । त्रि । स्वस्थानात् चलिते, वहिर्नीते । वा.चि,१अ.अरुणः ।

**समुत्थानम्** । क्ली । व्याधिनिर्णये । मे. ।

**समुद्गः** । पुं । सम्पुटे । हारा. ।

**समुद्गिरणम्** । क्ली । वमने । वै.निघ. ।

**समुद्रकफः** । पुं । समुद्रफेने । त्रिका. ।

**समुद्रकान्ता** । स्त्री । स्पृक्कायां । पिड़िং । रा.नि.व.१२ । [ब्रार घर । त्रिका. ।

**समुद्रगृहम्** । क्ली । जलयन्त्रगृहे । ফোয়া-

**समुद्रजम्** । क्ली । सामुद्रलवणे । रस.चि. ।

**समुद्रपुष्पम्** । क्ली । कपित्थपुष्पे । गुणाः—तुवरं मधुरं शीतलं रक्तदोषघ्नं कफघ्नं पित्तघ्नं कामलाहरं गर्भिणीकष्टहरञ्च । वै.निघ. ।

**समुद्रफल(क)म्** । क्ली । (Argyria speciosa.) स्वनामख्यातवृक्षफले, कपित्थफले । दाक्षिणात्ये समुद्रकापत्ता इति ज्ञातम् । हिं कड़यफल, समुन्दरकापत् । वम्. समुन्दरशोक । तें समुन्दरपाल । वै.निघ.२भ.वा.व्या.चि.लेपस्वेदे । तदुक्तं—"समुद्रनाम प्रथमं पश्चात् फलमुदाहरेत् । समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥" गुणाः—"फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि ॥" पत्रप्रदेहः चर्म्मरोगहरः । मूलं वातहरं स्नायुदौर्ब्बल्ये च हितम् । कश्चित् । कटूष्णं वातघ्नं लूतापसारकं त्रिदोषघ्नं कफरोगघ्नं भ्रान्तिनाशकञ्च । भा. । "समुद्रस्य फलश्चोष्णं तिक्तञ्चैव त्रिदोषनुत् । वातञ्च भूतबाधाञ्च कफं भ्रान्तिं शिरोरुजम् । दोषं दावानलाख्यञ्च नाशयेदिति कीर्त्तितम् । जलेन घृष्टपीतञ्च कृमिनाशकरं परम् ॥" वै.निघ. ।

**समुद्रफेणः (नः)** । पुं, क्ली । घनीभूतसागरोत्थफेनपुञ्जे । সমুদ্রের ফেনা । गुर्ज. समुद्रफिण । गुणाः—शीतलं कषायं नेत्ररोगघ्नं कफकण्ठरोगहरं रुच्यं कर्णरोगघ्नञ्च । रा.नि.व.६ । "अक्षिफेणो रुचिकरो लेखनस्तुवरो लघुः । चक्षुष्यः शीतलश्चैव पटलादिरुजाहरः । सरश्च विषदोषघ्नः कर्णशूलहरः परः । कफञ्च कण्ठरोगञ्च पित्तञ्चैव विनाशयेत् ॥" वै.निघ. । [सु.चि.१अ. ।

**समुद्रमण्डूकी** । स्त्री । जलशुक्तौ । ঝিনুক ।

**समुद्रलवणम्** । क्ली । सामुद्रलवणे । করকচ লবণ । भा. । See सामुद्रम् ।

**समुद्रशोषः** । पुं । हिज्जलवृक्षे । হিজলগাছ । भैष.वाजी. । योग.र.उ.केशरपाके । गुणाः—"समुद्रशोषः सम्प्रोक्तो वातलो ग्राहको मतः । अतिपित्तकरश्चैव कफकृच्च मतो बुधैः ॥" वै.निघ. ।

**समुद्रा** । स्त्री । शमीवृक्षे । শাঁই গাছ । शव्याम् । শটী । रा.नि.व.८।६ ।

**समुद्रान्तम्** । क्ली । जातीफले । জায়ফল । श.च. । पुं । दुरालभायाम् । रा.नि.व.४ । जातीफलवृक्षे । श.र. । स्त्री (न्ता) । दुरालभायाम् । अम. । स्पृक्कायाम् । পিড়িং । मे. । कार्पासे । কাপাস গাছ । रा.नि.व.४ । भैष.शिरोरो.चि. बृहल्लिङ्गिणीतैले । [छ । कुमारि । मे. ।

**समुद्रारुः** । पुं । तिमिङ्गिलमीने । তিমি মা-

**समुन्न(न)म्** । क्ली । आर्द्रतायां । अम. ।

**समूरः (रुः)** । पुं । मृगभेदे, सम्बरमृगे । हे. च. । अम. ।

**समूहः** । त्रि । सान्निपातिके । रा.नि.व.१० ।

**समूहगन्धम्** । क्ली । गन्धराजे । থাটাশী । रा.नि.व.१२ । [च. ।

**समूहनी** । स्त्री । सम्मार्जन्याम् । ঝাঁটা । हे.

**समूहक्षारः** । पुं । मलशोधकक्षारद्रव्ये । সাবান । वै.निघ. ।

**समोदकम्** । क्ली । अर्द्धजलघोले । अम. ।

**सम्पदाह्वा** । स्त्री । ऋद्धौ । प.मु. ।

**सम्पाकः** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । प.मु. । च.द.अप चि.बृहत्पञ्चगव्यघृते ।

**सम्पुटः** । पुं । कुरवकवृक्षे । रक्त झाँटी । भ-
व्दकल्पः । [सु. ।

**सम्पुटाङ्गम्** । क्ली । भव्यफले । চালতা । प.

**सम्प्रयोगः** । पुं । मैथुने । त्रिका. । भा.उ.
वाजी. । "वृष्यस्त्रीसम्प्रयोगाच ।"

**सम्प्रसक्तः** । त्रि । सक्तते । सु.नि.७अ. ।

**सम्प्राप्तिः** । स्त्री । रोगस्य सन्निकृष्टकारणे ।
मा.नि. । विशिष्टमेव व्याधिजन्मनि । वा. । दोषे
तिकर्त्तव्यतोपलचितव्याधिजन्मनि । রূপবিশিষ্ট
হইয়া রোগের উৎপত্তি । वि.र. । "यथा दु
ष्टेन दोषेण यथा चानुविसर्पता । उत्पत्तिरामय-
स्यासौ संप्राप्तिर्जातिरागतिः ॥" मा.प्रञ्चनि. ।

**सम्फालः** । पुं । मेषे । हे.च. ।

**सम्ब(र)म्** । क्ली । जले । জটা । अम. ।

**सम्बरः** । पुं । मृगभेदे । শম্বর । मत्स्यविशेषे ।
मे. । स्त्री (री) । शतावर्य्याम् । শতমূলী । श.
र. । मण्डूकपर्ण्याम् । থুলকুড়ি । अम. ।

**सम्बलम्** । क्ली । जले । श.र. ।

**सम्बाधः (धनम्)** । पुं, क्ली । भगे । मे. ।

**सम्भरोद्भवम्** । क्ली । गाढ़लवणे । শাম্ভর ল-
বণ । रा.नि.व.६ ।

**सम्भवः** । पुं । उत्पत्तिकारणे । सम्भवो नाम
यो यतः सम्भवति स तस्य सम्भवः । यथा—"ष-
ड़्धातवो गर्भस्य व्याधेरहितं हितमारोग्यस्ये-
ति ।" च.वि.८अ. । [श.च. ।

**सम्भव्यः** । पुं । कपित्थवृक्षे । কয়েৎ গাছ ।

**सम्भारम्** । क्ली । लवणविशेषे । শাম্ভরলবণ ।
वै.निघ. । पुं । तद्योग्याखिलद्रव्यसमुदाये । उ-
पादानसमष्टि । च.सू.१५अ. ।

**सम्भिन्नः** । त्रि । सम्यग्भेदविशिष्टे । भिदा. ।

**सम्मार्जकः (नी)** । पुं, स्त्री । मार्ज्जन्यां ।
ঝাড়ন, ঝাঁটা । श.र. । अम. ।

**सम्मार्जनम्** । त्रि । शोधने । र.मा. ।

**सम्मिलितद्रुमः** । पुं । रक्तपुनर्नवायाम् ।
रा.नि.व.५ ।

**सम्मूढ़पिटि(ड़)का** । स्त्री । शूकरोगभेदे ।
"पाणिभ्यां भृशसंमूढे संमूढ़पिड़का भवेत् ।" सु.
नि.१४अ. ।

**सम्मोहकः** । पुं । प्रवृद्धमध्यक्षीनवातादिज-
सन्निपातज्वरे । लक्षणं—"प्रलापायाससम्मोहक-
म्पमूर्च्छारतिभ्रमाः । एकपक्षाभिघातश्च तत्राप्येते
विशेषतः । एष सम्मोहको नाम्ना सन्निपातः सु-
दारुणः ॥" भा.म.१भ.ज्व.चि. । [म.३भ. ।

**सम्यकसंहितः** । त्रि । सम्यकयोजिते । भा.

**सम्यकक्षारः** । पुं । टङ्कणक्षारे । সোহাগা ।
र.सा.सं. ।

**सम्यग्दग्धम्** । क्ली । अग्निदाहविशेषे । दाह-
प्रयोजने यथायोग्यदाहे । सु.सू. ।

**सरम् (स)** । क्ली । मांसे । रा.नि.व.१७ ।
जले । त्रिका. । सरोवरे । लक्षणं—"नद्याः शैल-
वराद्वाम्भो यत्र संभृत्य तिष्ठति । तत्सरः......॥"
भा. । पुं । महापिण्डीतरौ । रा.नि.व.६ । त्रि ।
दध्यग्रभागे । দৈয়ের মাথা । र.मा. । र.सा.सं. ।
सारकद्रव्ये । यथा—"पिप्पली मधुरा वृष्या कटु-
का दीपनी सरा ।" राज. । [हंस्यां । श.र. ।

**सरःकाकः** । पुं । हंसे । त्रिका. । स्त्री (की) ।

**सरकः** । पुं,क्ली । मद्यसामान्ये । रा.नि.व.१४. ।
इक्षुसरोवरे । श.र. । शीधौ । शीधुपाने । मे. ।
जन्मनि । त्रिका. । [अम. ।

**सरघा** । स्त्री । मधुमक्षिकायां । মৌমাছি ।

**सरङ्गः** । पुं । पक्षिणि । उणा ।

**सरजम्** । क्ली । हैयङ्गवीने । नवनीते । न-
नि । हारा. । र.सा.सं. ।

**सरजाः (स)** । स्त्री । ऋतुमत्यां स्त्रियां । त्रिका. ।

**सरटः (ट)** । पुं । मधुमक्षिकायाम् । মৌমা-
ছি । कृकलासे । গিরগিটী । अम. । अ.टी. ।

**सरटुः** । पुं । कृकलासे । গিরগিটী । उणा. ।

**सरणम्** । क्ली । माधवीमद्ये । वै.निघ. । लौ-
हमले । मण्डूर । हे.च. । स्त्री(णा) । प्रसारण्यां ।
গন্ধভাদুলিয়া । रा.नि.व.५ । त्रिवृतायाम् । তে-
উড়ী । श.मा. । सु.सू.२६अ. । श्वेतत्रिवृति । ख-
र्जीवन्त्याम् । वै.निघ. ।

**सरणिः (णी)** । स्त्री । प्रसारण्याम् । गन्धभा-

ङुलिया। रा.नि.व.५। वा.व्या.चि.मध्यनारायण-तैले। च.द.माषतैले।

**सरट्टः** । पुं। कृकलासे। গিরগিটী। मे.। कामुके। पक्षिणि। श.र.।

**सरण्युः** । पुं। जले। वायौ। मेघे। श.र.। अग्नौ। वसन्ते। उणा.।

**सरत्निः** । पुं। बद्धमुष्टिहस्ते। रा.नि.व.१८।

**सरपत्रिका** । स्त्री। पद्मपत्रे। श.र.।

**सरमा** । स्त्री। कुक्कुर्य्याम्। मे.।

**सरयूः** । स्त्री। नदीविशेषे। साचायोध्यायां प्रसिद्धा। तज्जलगुणाः—स्वादु बलपुष्टिकरञ्च। रा.नि.व.१४।

**सरलः** । पुं। (Pinus longifolia.) तन्नामकद्रुमे। वा.सू.१५अ.। र.मा.। সরল গাছ, দেবদারুবিশেষ। हिं चिरका पेड़, सरल, धूपसरल। मं वम्. सुरुचेभाड़। तें सरलदेवदारु, गरिके, देवदारिचेट्टु। ता. सरलदेवदारी। दा. चिर्। गुणाः—कटुतिक्तोष्णः वातश्लेष्मत्वग्दोषकण्डूव्रणघ्नः कोष्ठशोधकश्च। रा.नि.व.१२। च.द. वा.ज्व.चि.रास्नादिः। “सरलं शैलबालुकम्।” चोरमीरटे। কাঁরকরাড়। प.मु.।

**सरलत्वग्णम्** । क्ली। सुगन्धत्वणे। वै.निघ.।

**सरलद्रवः** } पुं। धूपविशेषे। সরলধূপ।
**सरलनिर्यासः** } सरलवृक्षसारे। तार्पिन्। अम.।

**सरला** । स्त्री। त्रिपुटायाम्। अम.। त्रिवृतायाम्। তেউড়ী। ज.द.। सु.सू.३९अ.कफशमने। चि.१४।३७अ.। शुक्लत्रिवृति। শ্বেত তেউড়ী। सु.चि.२५अ.। कपिलद्राक्षायां। कृष्णतुलस्यां। वै. निघ.। [आटा। रा.नि.व.१२।

**सरलाङ्गः** । पुं। श्रीवेष्टे। तार्पिन्। সরল-

**सरसम्** । क्ली। मांसे। कालागुरुणि। वै.निघ.। सरोवरे। श.र.। स्त्री (सा)। शुक्लत्रिवृति। च. टी.रा.। [सिङ्कू। श.च.।

**सरसम्मतम्** । क्ली। वच्रीवृत्ते। তেকাঁটা।

**सरसिका** । स्त्री। हिङ्गुपत्र्याम्। श.च.।

**सारसिजम्** । क्ली। कमले। रा.नि.व.१०।

**सरसी** । स्त्री। तुम्बरपत्रिकायाम्। वा.सू.१५अ.सुरसादिः। “लवकासरसिभार्गीकासुकाकाकमाची।” सरोवरे। अम.। [थी। श.र.।

**सरसीकः** । पुं। सारसपक्षिणि। সারস পা-

**सरसीरुहम्** । क्ली। पद्मे। अम.।

**सरस्वती** । स्त्री। भारतीयनदीविशेषे। तज्जलगुणाः—स्वादु रुच्यं दीपनं लघु देहकान्तिजनकं सर्व्वरोगघ्नं पवित्रञ्च। रा.नि.व.१४। गवि। मेः। ज्योतिष्मतीलतायाम्। লতাফট্কী। रा. नि.व.३। ब्राह्मीक्षुपे। ব্রাহ্মী শাক। रा.नि.व.५। सोमलतायां। श.च.।

**सरा** । स्त्री। प्रसारण्याम्। গন্ধভাদুলিয়া। रा.नि व.५। मद.व.१। चिञ्चायां। তেঁতুল। मद्यविशेषे। वै.निघ.। निर्झरे। भ.द्विरूपको.।

**सरावः** । पुं। शरावमाने। এক সের। भ. द्विरूपको.।

**सरिका** । स्त्री। हिङ्गुपत्र्याम्। श.च.।

**सरित्पतिकफः** । पुं। समुद्रफेने। भा.म.४ भ.ने.रो.चि.नयनशोणाञ्जने। “सरित्पतिकफः सिता।”

**सरिलम्** । क्ली। जले। अ.टी.भ.।

**सरिषपः** । पुं। सर्षपवृक्षे। त्रिका.।

**सरीसृपः** । पुं। सर्पादौ। त्रिका.। कृष्णसर्पे। सु.चि.२४अ.।

**सरोजम्** । क्ली। पद्मे। हे.च.।

**सरोजन्म** (न्)। क्ली। पद्मे। हे.च.।

**सरोजिनी** । स्त्री। कमलिन्याम्। পদ্মের ঝাড়। पद्मे। मे.। [श.र.।

**सरोत्सवः** । पुं। बकपक्षिणि। सारसपक्षिणि।

**सरोऽमृतम्** । क्ली। सरोवरजले। वै.निघ.।

**सरोरुट्** । क्ली। पद्मे। हे.च.।

**सरोरुहम्** । क्ली। पद्मे। प.मु.। रक्तपद्मे। वै.निघ.। स्त्री (हा)। पद्मिन्याम्। वै.निघ.।

**सरोवरः** । पुं। सरसि। तज्जलगुणाः अल्लशब्दे द्रष्टव्याः।

**सर्कः** । पुं। मनसि। उणा.।

**सर्जः** । पुं । शालनिर्यासे । धुनो । भ.च.द.ज्व.चि.अपराजिताधूपे । "पुरध्यामवचासर्ज ।" शालवृक्षे । सर्ज्जरक इति भाषा । शल्लकीवृक्षे । वै.निघ. । पीतशाले । পেয়াশাল । श.र. ।

**सर्जकः** । पुं । सर्ज्जवृक्षे । শাল গাছ । जटा. । असनवृक्षे । वै.निघ. सर्ज्जरसे । धुनो । रस.र.बाल.चि. । पीतशाले । পেয়াশাল । अम. ।

**सर्जगन्धा** । स्त्री । रास्नायाम् । र.मा. ।

**सर्जनामा (न्)** । पुं । सर्ज्जतरौ । सु.चि.१अ. ।

**सर्जमणिः** । पुं । शाल्मलीविशेषे । মোচরস । त्रिका. ।

**सर्जरसः** । पुं । राले । धुनो । रा.नि.व.१२। सु.सू.३८अ.एलादिः । See रालः । सर्ज्जवृक्षे । धुनोर गाछ । रा.नि.व.९ । र.मा. । भा.४भ. रेवतीप्रतिषेधचि. । "कुष्ठं सर्ज्जरसं तथा ।"

**सर्जशालः** । पुं । शालवृक्षे । र.मा. ।

**सर्जाख्यः (ह्वः)** । पुं । सर्ज्जरसे । धुनो । भैष.क्षुद्ररो.चि. । भा.म.४भ. ।

**सर्जिः (क्षारः)** । स्त्री, पुं । स्वर्ज्जिकाक्षारे । সাজিমাটী । र.मा. । See स्वर्ज्जिक्षारः ।

**सर्जिका (क्षारः)** । स्त्री, पुं । सर्ज्जिक्षारे । সাজিমাটী । र.मा. ।

**सर्जी** । स्त्री । सर्ज्जिक्षारे । সাজিমাটী । प.मु. ।

**सर्ज्यः** । पुं । सर्ज्जरसे । धुनो । र.मा. ।

**सर्पः** । पुं । प्रसिद्धसरीसृपे । সাপ । सर्पो द्विविधः—दिव्यो भौमश्चेति । तत्र दिव्याः सर्पाः दृष्टिनिःश्वासविषा इति । भौमा दंष्ट्राविषाः । "ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् । तेषां संख्यां प्रवक्ष्यामि यथावदनुपूर्व्वशः । अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा । दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च । निर्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः । दर्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः । तेषु दर्वीकराः ज्ञेया विंशतिः षट् च पन्नगाः । द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश । निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा । वैकरञ्जोद्भवाः सप्त चित्रामण्डलिराजिलाः ॥" एषु महानेत्रजिह्वास्यशिरसः पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः, उभयलक्षणमन्दविषा अक्रोधा नपुंसका इति । सु.कल्प.४अ. । एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि । तद्गुणाः—अर्शोवातदोषहरः क्रमिदूषीविषहरः चक्षुष्यः पाके मधुरः मेधाग्निजननश्च । "दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः । मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥" सु.सू.४६अ. । तद्विषगुणाः—"विशेषाद्रुक्षकटुकमम्लोष्णं स्वादु शीतलम् । विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् । तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च । विषोल्वणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ॥" वा.उ.३६अ. ।

**सर्पकङ्कालिका (ली)** । स्त्री । स्वनामख्यातलतायाम् । সর্পকঙ্কালী, বরাক্রান্তাবিশেষ । र.मा. । गन्धरास्नायाम् । प.मु. । See रास्ना ।

**सर्पगन्धा (न्धिनी)** । स्त्री । गन्धरास्नायाम् । See रास्ना । नाकुलीनाममहाकन्दशाके । रा.नि.व.७ । वा.उ.५अ. । नागदमन्यां । वै.निघ. ।

**सर्पघाति** । स्त्री । तन्नामकफलविषभेदे । सु.कल्प.२अ. । See फलविषम् । ডিলি । प.मु. ।

**सर्पघातिनी** । स्त्री । सर्पाक्ष्याम् । পানশি-

**सर्पच्छत्रकः** । पुं । शाकविशेषे । সাপের ছাতা । गुणाः—मलभेदनः रुक्षः मधुरः शीतः विष्टम्भी च । च.सू.२७ अ. ।

**सर्पतृणः** । पुं । नकुले । নেউল । हे.च. ।

**सर्पदंष्ट्रः** । पुं । दन्तीवृक्षे । श.च. ।

**सर्पदंष्ट्रा (ष्ट्री)** । स्त्री । वृश्चि[...]ल्याम् । विछाति । प.मु. । सिंहपिप्पल्याम् । गुणाः—सारका उष्णा कटुः कफघ्नी वातघ्नी च । वै.निघ. ।

**सर्पदंष्ट्रिका** । स्त्री । मेषशृङ्ग्यां । अजशृङ्ग्यां । মেড়াশিঙে । रा.नि.व.९ । [रा.नि.व.६ ।

**सर्पदण्डा (न्ता)** । स्त्री । सिंहपिप्पल्याम् ।

**सर्पदण्डी** । स्त्री । गोरक्षतण्डुलायाम् । গোরক্ষচাকুলিয়া । रा.नि.व.५ । [रा.नि.व.५ ।

**सर्पदन्ती** । स्त्री । नागदन्त्यां । হাতিশুঁড়ে ।

**सर्पदमनी** । स्त्री । नागदन्त्याम् । হাতিশুঁড়ে । बन्ध्याकर्कोटिकायां । रा.नि.व.३ ।

**सर्पदष्टकम्** । क्ली । सर्पदंशने । तत्र त्रिविधं

सर्पितं रदितं निर्व्विषञ्चेति । केचित् चतुर्थं सर्पाङ्गाभिहतमिच्छन्ति । तेषां लक्षणानि यथा —"पदानि यत्र दन्तानामेकं द्वे वा बहूनि च । निमग्नान्यल्परक्तानि यान्युद्धृत्य करोति हि । चञ्चुमालकयुक्तानि वैकल्यकरणानि च । सङ्क्षिप्तानि सशोफानि विद्यात्तत् सर्पितं भिषक् ॥" इति । "राज्यः स लोहिता यत्र नीलाः पीताः सितास्तथा । विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत् ॥" इति । "अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः । पदं पदानि वा विद्यादविषं तच्चिकित्सकः ॥" इति । "सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः । कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत् ॥" सु. कल्प.४अ. । वाभटस्तु तुण्डाहतव्यालीढ़व्यालुप्तदष्टनिपीड़ितदष्टकभेदेन पञ्चधाह । एषु प्रथमं द्वयं निर्व्विषं, निपीड़ितदष्टकम् असाध्यं व्यालुप्तदष्टकञ्च कृच्छ्रसाध्यम् । एषां लक्षणानि स्वस्वपर्य्यायेऽग्याणि । वा.उ.१६अ. ।

**सर्पनामा** । स्त्री । सर्पाक्ष्याम् । সর্পকঙ্কালীবিশেষ, পানশিউলী । प.मु. ।

**सर्पनिर्मोकः** । पुं । सर्पत्वचि । সাপের খোলোষ । च.शा.८अ. ।

**सर्पनेत्रा** । स्त्री । सुगन्धरास्नायां । सर्पाक्ष्यां । পানশিউলী, সর্পকঙ্কালীবিশেষ । रा.नि.व.७।

**सर्पपुष्पी** । स्त्री । बन्ध्याकर्कोटक्याम् । नागदन्त्याम् । হাতিশুঁড়ে । रा.नि.व.५ ।

**सर्पप्रियः** । पुं । चन्दनवृक्षे । वै.निघ. ।

**सर्पफेण(न)म्** । क्ली । अहिफेने । वै.निघ.२ भ.अ.सा.चि.जातीफलादिपुटपाके । [च. ।

**सर्पभक्षकः** । पुं । नाकुलीकन्दे । मयूरे । हे.

**सर्पभुक्** । पुं । मयूरे । हे.च. । गृध्रे । হাড়গিলা । नाकुलीकन्दे । रा.नि.व.७ ।

**सर्पमाला** । स्त्री। सर्पकङ्कालिकाभेदे । र.मा.।

**सर्पलता** । स्त्री । नागवल्लीलतायाम् । পাণগাছ । रा.नि.व.३ ।

**सर्पलोचना** । स्त्री । सर्पाक्ष्याम् । পানশিউলী । वा.उ.३७अ. । गन्धरास्नायाम् । वै.निघ. ।

**सर्पविषम्** । क्ली । सर्पगरले । সাপের বিষ।

"विषमाद्येयमप्राप्य रक्तं दूषयते वपुः । रक्तमप्यति तु प्राप्तं वर्द्धते तैलमम्बुवत् ॥" वा.उ.३६अ. ।

**सर्पसहा** । स्त्री । सर्पाक्ष्यां । পানশিউলী । प.मु. । [वै.निघ. ।

**सर्पसुगन्धा (न्धिका)** । स्त्री । सर्पगन्धायां ।

**सर्पहा** (न्) । पुं । नकुले । বেজি । हे.च. ।

**सर्पा** । स्त्री । तन्नामकौषधौ । या च सर्पाकारा सर्पकङ्कालिका । च.चि.१अ. ।

**सर्पाख्यः** । पुं । नागकेशरवृक्षे । र.मा. । मण्डिषकन्दे । रा.नि.व.७। श्वेतालुके । শাঁক্ আলু। वै.निघ. ।

**सर्पाङ्गी** । स्त्री । सैंहलीपिप्पल्याम् । रा.नि.व. ६ । सर्पकङ्कालीभेदे । পানশিউলী । र.मा. ।

**सर्पादनी** । स्त्री । लाङ्गलिकानामकन्दशाके । नाकुल्यां । গন্ধরাস্না । रा.नि.व.७ ।

**सर्पारिः** । पुं । नकुले । मयूरे । रा.नि.व.१९।

**सर्पावासम्** । क्ली । श्रीखण्डचन्दने । रा.नि. व.१२ । श्वेतचन्दने । रा.नि.व.१२ ।

**सर्पाशनः** । पुं । मयूरे । हला. ।

**सर्पाक्षी** । स्त्री । सर्पसहायाम् । পানশিউলী। हिं सरहची गण्डिनी । प.मु. । र.सा.सं. । वै. निघ.२भ.एकाहिक,ज्व.चि.मृतसञ्जीवनीरसे । र.स.र.विष.चि. । गुणाः—"सर्पाक्षी कटुका तिक्ता सोष्णा कृमिनिकृन्तनी । वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपणी ॥" भा.गु.व. । श्वेतापराजितायां । रक्तशङ्खिन्याम् । वै.निघ. । गन्धनाकुल्याम् । रा. नि.व.७ ।

**सर्पिः** (स्) । क्ली । दुग्धसम्भूतस्नेहे । घृते । वि । रा.नि.व.१५। सृप गतौ संस्कारात् सर्पणात् सर्पिः । "नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते । यथा सर्पितरं सर्पिः सर्व्वस्नेहोत्तमं मतम् ॥" सि.यो.वा.व्या.चि.श्रीकण्ठः ।

**सर्पिका** । स्त्री । गोकर्णीलतायां । वै.निघ. ।

**सर्पिणी** । स्त्री । सर्पाकारवत्क्षुपविशेषे । সর্পকঙ্কালী । गुणाः—विषघ्नी कुचवर्द्धिनी च । रा. नि.व.५ । सर्पस्त्रियां । श.र. ।

**सर्पिर्गर्भम्** । क्ली । नवनीतके । वै.निघ. ।

**सर्पिर्मेहः** । पुं । बालजन्यप्रमेहरोगे । यत्र घृतसतुल्यं मेहति । सु.नि.६ष. ।

**सर्पिषम्** । क्ली । घृते । वै.निघ. ।

**सर्पी** । स्त्री । भुजग्याम् । श.र. । [अटा. ।

**सर्पी(पे)ष्टम्** । क्ली । श्रीखण्डचन्दने । र.मा.।

**सर्व्वः** । पुं । पारदे । र.सा.सं.प्रकाराल्तरविषमज्व.रसे । भैष.वा.र.चि. । सा.कौ.ज्वराल्तकरसे । रसाञ्जने । शिलाजतुके । वै.निघ. ।

**सर्व्वगः** । पुं । जीवे । आत्मनि । श.मा.। क्ली । जले । मे. ।

**सर्व्वगन्धम्** । क्ली । चातुर्जातकादिषु द्रव्येषु । "चातुर्जातककर्पूरकक्कोलागुरुसिह्लकम् । लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्दिशेत् ॥" प.प्र.१ख. । कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनेषु । भा.म.४भ.चक्ष.पू.चि. । "सर्व्वगन्धैः प्रदेहश्च ।" "चातुर्जातककर्पूरं कक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्दिशेत् ॥" इति च । भा. । श्रीगुते एलादिगणः ।

**सर्व्वगा** । स्त्री । प्रियङ्गुलतायाम् । श.च. ।

**सर्व्वग्रन्थिः (कम्)** । पुं, क्ली । पिप्पलीमूले । रा.नि.व.६ । हे.च. । [ना । वै.निघ. ।

**सर्व्वग्रहापहा** । स्त्री । नागदमन्यां । नागदन

**सर्व्वजगत्प्रिया** } स्त्री । ऋद्धौ । वृद्धौ । वै.निघ.।
**सर्व्वजनप्रिया** }

**सर्व्वज्वरहरलौहः** । पुं । विषमज्वरे रसविशेषः । पक्री—चित्रकमूलं त्रिकटु त्रिफला विडङ्गं मुस्तकं गजपिप्पली पिप्पलीमूलं वीरणमूलं देवदारु किराततिक्तं वालकं कटुकी कण्टकारी सिग्रुबीजं यष्टिमधु कुटजत्वक् इन्द्रयवो वा एषां प्रति समभागः सर्व्वचूर्णसमं लौहं । मात्रा १ माषा । अनुपानं मधु । सा.कौ. । अन्यः—जारितलौह १৬ তো. পারা ২ তো. গন্ধক ২ তো. আমলা, হরীতকী, বহেড়া, শুঁট, পিপুল, মরিচ, বিড়ঙ্গ, মুতা, গজপিপুল, পিপুলমূল, হরিদ্রা, দারুহরিদ্রা, চিতের মূল প্রত্যেকে ১ তো.। আদার রসে মর্দ্দন। মাত্রা ২রতি। भैष.। तृतीयः बृहत्सर्व्वज्वरहरः—পারা, গন্ধক, অভ্র, তাম্র, স্বর্ণমাক্ষিক, স্বর্ণ, রৌপ্য, শুদ্ধ হরিতাল প্রত্যেকে ২ তো. কান্তলৌহ ৮ তো. । মর্দ্দনদ্রব্য—উচ্ছেপাতার রস, দশমূলকাথ, ক্ষেৎপাপড়ার রস, ত্রিফলাকাথ, গুলঞ্চরস, পানের রস, কাকমাচীরস, নিশুণ্ডীপত্ররস, পুনর্নবারস ও আদার রস। মাত্রা ১ রতি। অনুপান পিপুলচূর্ণ ও পুরাণ গুড়। र.सा.सं. । [श.च. ।

**सर्व्वतःशुभा** । स्त्री । पिप्पलीमूले । प्रियङ्गौ ।

**सर्व्वतन्त्रसिद्धान्तः** । पुं । सिद्धान्तविशेषे ।

**सर्व्वतिक्ता** । स्त्री । काकमाचिकायाम् । रा.नि.व.४ ।

**सर्व्वतोभद्रः** । पुं । निम्बवृक्षे । रा.नि.व.९ । क्ली । आसनपर्य्यङ्काकारेण अश्मरीच्छेदने । "तैव नौ वर्ज्जयित्वा तु चतुर्धा दारिते गुदे । सर्व्वतोभद्रकम् ......... ॥" सु.चि.৮অ. । वा.उ.२৮অ. ।

**सर्व्वतोभद्रा (द्रिका)** । स्त्री । गाम्भार्यां । গামার গাছ । रा.नि.व.६ । वा.सू.१৫অ.सारिवादौ । भा.म.१भ.ज्व.चि. । "श्रीफलः सर्व्वतोभद्रा ।"

**सर्व्वतोमुखम्** । क्ली । जले । रा.नि.व.१४ ।

**सर्व्वधातुकम्** । क्ली । ताम्रे । वै.निघ. ।

**सर्व्वपाचकः** । पुं । टङ्कणक्षारे । সোহাগা । वै.निघ. ।

**सर्व्वभक्ष्या** । स्त्री । छागल्यां । পাঁঠী । हे.च. ।

**सर्व्वभूतप्रमर्द्दिनी** । स्त्री । वन्ध्याकर्कोटक्यां । वै.निघ. । [द्रव्ये । वै.निघ. ।

**सर्व्वभूमिकः** । पुं । दारुचिनीति ख्याते पण्य

**सर्व्वमूल्यम्** । क्ली । कपर्द्दके । কড়ি । त्रिका. ।

**सर्व्वयूषः** । पुं । गौरसधान्याम्लफलाद्यैरेकत्र मिलितैर्यो रसो भवति । स गुरुतरः । वै.निघ. ।

**सर्व्वरसः** । पुं । धूनके । अम. । लवणरसे । हे.च. । स्त्री (सा) । खाजमण्डे । দৈথেয়ের মণ্ড । प.मु. ।

**सर्व्वरसोत्तमः** । पुं । लवणरसे । हे.च. ।

**सर्व्वलवणम्** । क्ली । औषरलवणे । रा.नि.व.६

मधुरं रसे पाके हिमं गुरु दाहकं बल्यं श्लेष्मकरं वातपित्तहरञ्च । भा. । मुद्गपर्ण्यां । रा.नि.व.१ । पुस्तकान्तरे सिंहीपाठः ।

**सिरः** । पुं । पिप्पलीमूले । हे.च. ।

**सिरा** । स्त्री । नाड्याम् । हे.च. ।

**सिरामातृका** । स्त्री । तन्नामकोऽर्द्धजत्रुमर्म्मणि । तत्स्थानं ग्रीवाया उभयपार्श्वे । सु.शा.६अ. ।

**सिराबृत्तम्** । क्ली । सीसके । সীসা । रा.नि.व.१३ ।

**सिराव्यधः** । पुं । See शिराव्यधः ।

**सिरी** । स्त्री । लाङ्गलिकालतायां । বিষলাঙ্গলিয়া । वै.निघ. । [वै.निघ. ।

**सिलीन्ध्रः** । पुं । मत्स्यविशेषे । ছিলিন্দে মাছ ।

**सिल्लकी** । स्त्री । सल्लकीवृक्षे । च.टी.भ. ।

**सिविका** । स्त्री । सेवफले । সেও ফল । वै.निघ. ।

**सिवितिकाफलम्** । क्ली । सेवफले । সেও ফল । भा. । गुणाः—कषायं स्वादु संग्राहि शीतञ्च । सु.सू.४६अ. । [পাতাড়ি । प.मु. ।

**सिहली** । स्त्री । सितलिह्लीप इति ख्याते द्रव्ये ।

**सिहुण्डः** । पुं । स्नुहीवृक्षे । মনসা গাছ । च.स. ।

**सिह्लः (कः)** । पुं । स्वनामख्यातगन्धद्रव्ये । শিলারস । বা পিস্ততৈল । गुणाः—सुरभिः तिक्तः कटुः स्निग्धः कुष्ठघ्नः कफपित्ताश्मरीमूत्राघातभूतज्वरघ्नश्च । रा.नि.व.१२ । “निर्म्मलः कपिलः स्वच्छः सिह्लकोऽतितरां नवः । मध्वाभो मलसंयुक्तः वर्ज्जितो गन्धकर्म्मणि ॥” भैष. । [श.र. ।

**सिह्लकी** । स्त्री । सल्लक्याम् । শালবিশেষ ।

**सिह्लभूमिका** । स्त्री । सल्लक्याम् । श.र. ।

**सिह्लसारः** । पुं । शिलारसे । वै.निघ. ।

**सिह्लहासः** । पुं । सिह्लके । শিলারস । रा.नि.व.१२ । [१भ.वा.व्या.चि.विषगर्भतैले ।

**सिह्लारः** । पुं । गर्भतैले, शिलारसे । वै.निघ.

**सिध्मः** । पुं । स्फटिके । शब्दकल्पः ।

**सीतः** । पुं । बेतसवृक्षे । वै.निघ. ।

**सीतजाम्रः** । पुं । महाम्रवृक्षे । वै.निघ. ।

**सीतफेणः (नः)** । पुं । रीठाकरञ्जे । वै.निघ. ।

**सीता** । स्त्री । महासमङ्गायाम् । रा.नि.व.४ ।

**सीताफलम्** । क्ली । फलविशेषे । আতা । गुणाः—मधुरं शीतलं हृद्यं बल्यं वातलं कफकरं स्वादु पुष्टिकरं पित्तघ्नञ्च । वै.निघ. ।

**सीतीलकः** । पुं । सतीलके, शिम्बीधान्यविशेषे । च.टी.रा. ।

**सीतोत्थम्** । क्ली । श्वेतमरिचे । रा.नि.व.६ ।

**सीत्यम्** । क्ली । धान्ये । शस्ये । हे.च. ।

**सीधुः (धूः)** । पुं, स्त्री । पक्वापक्वेक्षुरसकृतमद्ये । रा.नि.व.१४ । च.चि.८अ. । गुडासवे । अ.ह.सात्म्यविधिः । “आमैन शीतरसिकः सीधुः पक्वरसोद्भवः ।” इत्यशीनकात् । See शीधुः ।

**सीधुगन्धः** । पुं । वकुलवृक्षे । रा.नि.व.१० ।

**सीधुपर्णी** । स्त्री । गाम्भारीवृक्षे । रा.नि.व.६ ।

**सीधुपुष्पः** । पुं । वकुलवृक्षे । रा.नि.व.१० । कदम्बवृक्षे । रा.नि.व.९ । स्त्री (ष्पी) । धातकीवृक्षे । रा.नि.व.६ । [११ ।

**सीधु(धू)रसः** । पुं । आम्रवृक्षे । रा.नि.व.

**सीधुराव्यः** । पुं । मातुलुङ्गवृक्षे । वै.निघ. ।

**सीधुराचिकम्** । क्ली । काशीशे । হিরেকষ । वै.निघ. ।

**सीधुवृक्षः** । पुं । स्नुहीवृक्षे । वै.निघ. ।

**सीधु(धू)संज्ञः** । पुं । वकुलवृक्षे । रा.नि.व. १० । [पिते । वै.निघ. ।

**सीधूकफाणितम्** । क्ली । मधूकपुष्पोत्थफा-

**सीधूरसा** । स्त्री । आमलक्यां । वै.निघ. ।

**सीध्रम्** । क्ली । पायौ । মলদ্বার । शब्दकल्पः ।

**सीमन्तः** । पुं । अस्थिसङ्घातविशेषे । यैः सङ्घाताः सीविताः त एव सीमन्ता उच्यन्ते । ते च चतुर्दश । भा. । तैरुन्मादादिभिर्मरणम् । ते चास्थिसङ्घातवल्लक्षणीया यतश्चोक्ता अस्थिसङ्घाताः । सु.शा.५अ. ।

**सीमन्तकम्** । क्ली । सिन्दूरे । रा.नि.व.१३ ।

**सीमा** । स्त्री । अण्डकोषे । জটা ।

**सीमिकः** । पुं । सूक्ष्मक्रमौ । সরু কৃমি । वै
ल्मीके । वृक्षविशेषे । उणा. ।

**सीमीकः** । पुं । वृक्षविशेषे । शब्दकल्प: ।

**सीरः** । पुं । अर्कवृक्षे । अम. ।

**सीरकः** । पुं । शिशुमारके । श.मा. ।

**सीरी** (इन्) । पुं । स्थूलदर्भे । स्त्री (री) ।
लाङ्गलिकायाम् । वै.निघ. ।

**सीलन्धः** । पुं । मत्स्यभेदे । শিলিন্দা মাছ ।
गुणा:—"श्लेष्मल: वृष्य: विपाके मधुर: गुरु:
वातपित्तहर: हृद्य आमवातकफकरश्च ।" भा. ।

**सीवनम्** । क्ली । सूचीकर्म्मणि । সেলাই ।
अम. । स्त्री (नी) । सीवनकर्म्मणि । সেলাই ।
लिङ्गमण्यध:सूत्रे । हे.च. । सा चतुर्था—वेल्लितं
गोफणिका तुन्नसीवनी ऋजुग्रन्थिरिति । सु.सू.२५
अ. । [अ. ।

**सीव्यः** । त्रि । गोफणिकादिसीवनार्हे । सु.सू.५

**सीषपत्रकम्** । क्ली । सीसधातुपत्रे । সীসের
পাত । हे.च. ।

**सीषभस्म** (न्) । क्ली । (Plumbi carbonas.) White lead. সফেদা । हिं दा. सफेदा । तें सीसभस्मम् ।

**सीस(क)म्** । क्ली । (Plumbum) Lead, sulphate of lead. स्वनामख्यातधातौ । সীসা । हिं सीषक, शीषा । तें शिसमु । दा. शिश्र ।
गुणा:—"सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ।" "नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवितमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवित: स: ॥" सङ्कोचक: अवसादकर: शुष्ककारक: वेदनाहर: रक्तरोधकश्च । तथा—"पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । पाण्डुप्रमेहानिलसादशोथभगन्दरादीन् कुरुत: प्रभुक्तौ ॥" भा.पू.१भ.धा.व. । मारणं—"मन:शिलायुतो नागो वासारसविमर्द्दित: । त्रिभिर्गजपुटैर्भस्म भवेत्तन्मेहरोगजित् । तारस्य रञ्जको नागो वातपित्तकफापह: ॥" इति । सा.कौ. । तथा—"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निक्षिपेत् । मृत्पात्रे विद्रुते नागे लौहदर्व्या च चालयेत् । यामैकेन भवेद्भस्म तत्तुल्याञ्च मन:शिलाम् । काञ्जिकेन द्वयम्पिष्ट्वा पचेद्दृढपुटेन च । साङ्गशीतं पुन: पिष्ट्वा शिलया काञ्जिकेन च । पुन: पुटेच्चरावाभ्यामेवं षष्ठि: पुटैर्मृति: । नाग: सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ॥" मृतस्य गुणा:—"सतिक्तो मधुरो नागो मृतो भवति भस्मसात् । आयु: कीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात्सदा । रोगान्हन्ति मृतो नागो वङ्गवद्गुणकारक: ॥" र.सा.सं. । "जम्बाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापयेत् गुल्पपत्रम् । पक्वायमानं पुटयेत् सुयुक्त्या वाल्यादिकं यावदुपैति शान्तिम् ॥" रस.चि.६ष. ।

**सीसोपधातुः** । पुं । सिन्दूरे । भा. ।

**सीहुण्डः** । पुं । सेहुण्डवृक्षे, स्नुहीवृक्षे । अम. ।

**सुकटुः** । पुं । शिरीषवृक्षे । वै.निघ. ।

**सुकण्टका** । स्त्री । घृतकुमार्य्याम् । रा.नि.व.५ । পিণ্ডীখর্জ্জূরবৃক্ষে । वै.निघ. ।

**सुकण्डुः** । पुं । कण्डूरोगे । চুলকনা । श.र. ।

**सुकन्दः (कः)** । पुं । कशेरौ । কেশুর । रा.नि.व.८ । पलाण्डौ । পেঁয়াজ । अम. । वाराहीकन्दे । मुखालौ । धरणीकन्दे । रा.नि.व.७ ।

**सुकन्दकरणः** । पुं । श्वेतपलाण्डौ । वै.निघ. ।

**सुक(कु)न्दनः** । पुं । [illegible] तुलस्यां । वै.निघ. । बर्व्वरके । বাবুই [illegible] .नि.व.१० ।

**सुकन्दा** । स्त्री । लक्ष्मणाकन्दे । रा.नि.व.७ । बन्ध्याकर्कोटिकायाम् । वै.निघ. ।

**सुकन्दी** (इन्) । पुं । शूरणे । रा.नि.व.७ ।

**सुकर्णकः** । पुं । हस्तिकन्दे । रा.नि.व.७ ।

**सुकर्णा** । स्त्री । आखुकर्णिलतायाम् । মূষাকাণী । रा.नि.व.३ ।

**सुकर्णिका** । स्त्री । मूषिककर्ण्याम् । মূষাকাণী । श.र. । महाबलायां । वै.निघ. ।

**सुकर्णी** । स्त्री । इन्द्रवारुण्याम् । রাখালশশা । रा.नि.व.३ ।

**सुकाण्डः (कः)** । पुं । कारवेल्लतायाम् । করলা গাছ । रा.नि.व.३ । कासमर्द्दे । वै.निघ.

**सुकाण्डिका** । स्त्री । कारवेल्ललतायां । करला गाछ । रा.नि.व.३ । [लता । रा.नि.व.५ ।

**सुकामा** । स्त्री । त्रायमाणालतायाम् । बला

**सुकार:** । पुं । कुङ्कुमशाली । रा.नि.व.१६ ।

**सुकार्पास:** । पुं । रक्तकार्पास्याम् । र.सा.सं. चन्द्रोदयरसे ।

**सुकाष्ठकम्** । क्ली । देवदारुणि । काष्ठदारुणि । দেবদারুবিশেষ । रा.नि.व.१२ ।

**सुकाष्ठा** । स्त्री । कटुक्यां । কটকী । काष्ठकदल्याम् । रा.नि.व.३।११ । [वै.निघ. ।

**सुकुन्द:** । पुं । सल्लकीनिर्यासे । সরল-আটা ।

**सुकुमार: (क:)** । पुं । पुण्ड्रेक्षौ, रसालेक्षौ । পুঁড়ি আখ । मे. । रा.नि.व.१४ । श्यामाके । শ্যামা ধান । रा.नि.व.१६।२३ । वनचम्पके । स्वर्णचम्पके । चम्पकवृक्षे । रा.नि.व.१०।२३ । राजमाषे । कङ्गुणीधान्ये । কাংনোধান । रा.नि.व.१६। क्ली । राजरीतौ । ব্যাঙাপিতল । वै.निघ. । तमालपत्रे । তেজপত্র । रा.नि.व.६ ।

**सुकुमारा (री)** । स्त्री । स्पृक्कानामगन्धद्रव्ये । পেঁড়েলা । रा.नि.व.१२।२३ । जातीपुष्पवृक्षे । रा.नि.व.१० । (री) शिम्बीभेदे । प.मु. । रा.नि. व.२३ । वनमल्लिकायाम् । रा.नि.व.१०।२३ । महाकारवेल्लके । বড় করলা । इक्षौ । वै.निघ. । कदलीवृक्षे । त्रिसन्धिपुष्पवृक्षे । रा.नि.व.१०।११ ।

**सुकुमारिका** । स्त्री । कदलीवृक्षे । रा.नि.व. ११ । [গাছ । रा.नि.व.११ ।

**सुकेश(स)र:** । पुं । वीजपूरवृक्षे । গোঁড়ালেবু

**सुकेशिनी** । स्त्री । शङ्खिन्यां । वै.निघ. ।

**सुकोली** । स्त्री । क्षीरकाकोल्याम् । वदरीवृक्षे । र.मा. । [ঘোষা । रा.नि.व.७ ।

**सुकोशा (षा)** । स्त्री । कोशातक्याम् । ঝিঙা।

**सुकोषक:** । पुं । कोषाम्रे । भा. ।

**सुक्तम्** । क्ली । कन्दादिकृतसन्धानविशेषे । तदुक्तं —"कन्दमूलफलादीनि सस्नेहलवणानि च । यत्र द्रवेऽभिसूयन्ते तत् सुक्तमभिधीयते ॥" शार्ङ्ग. । चुक्रापरनामके तद्भेदे । চুক্রশুক্ত । "यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकं । धान्यराशौ त्रिरात्रस्थं सुक्तं चुक्रं तदुच्यते ॥" तच्च गुड़ेक्षुरसमद्यमाध्वीकभेदेन चतुर्विधम् । नामतश्च गुड़सुक्तं इक्षुरससुक्तं मधुसुक्तं माध्वीकसुक्तञ्चेति यथोत्तरं लघु ज्ञेयम् । तस्य साधारणगुणा:—रक्तपित्तकफघ्नं वातानुलोमनम् अत्युष्णतीक्ष्णरुच्याम्लं रुचिकरं दीपनं पाण्डुकृमिघ्नञ्च । वा.सू. ।

**सुक्ता (क्तिका)** । स्त्री । तिन्तिड्यां । वै.निघ.।

**सुक्षड़िचन्दनम्** । क्ली । स्वनामख्याते श्रीखण्डचन्दनान्यतरचन्दने । गुणा:—तिक्तं कृच्छ्ररक्तपित्तदाहघ्नं शीतलं सुगन्धि आर्द्रशुष्कलेपे तदन्यथागुणञ्च । रा.नि.व.१२ । See श्रीखण्डम् । शुक्लचन्दने । वै निघ. । [च. । रा.नि.व.५ ।

**सुखम्** । क्ली । ऋद्धौ । वृद्धि । जले । आरोग्ये ।

**सुखङ्करी** । स्त्री । जीवन्तीलतायां । জীবন্তী । रा.नि.व.३ । [नि.व.८ ।

**सुखदा** । स्त्री । शमीवृक्षे । শাঁই গাছ । रा.

**सुखदायिनी** । स्त्री । रोहिण्याम् । মাংসরোহিণী । वै.निघ. । [रा.नि.व.७ ।

**सुखभद्र:** । पुं । श्वेतशिग्रौ । সাদা সজিনা ।

**सुखभोजी** (इन्) । पुं । गरुड़शाली । পক্ষিরাজ ধান্য । रा.नि.व.१६ ।

**सुखमोद:** । पुं । शोभाञ्जनवृक्षे । লাল সজিনা গাছ । रा.नि.व.७ ।

**सुखमोदा** । स्त्री । सल्लकीवृक्षे । रा.नि.व.११।

**सुखर:** । पुं । सारसपक्षिणि । वै.निघ. ।

**सुखवर्च्चक: (वर्च्चा:(स्))** । पुं । सर्ज्जिक्षारे । সাজিমাটী । अम. । रा.नि.व.८ ।

**सुखवास:** । पुं । तरम्बुजे । তরমুজ । त्रिका. ।

**सुखवासन:** । पुं । सुखवासनसुगन्धद्रव्ये । श.र. ।

**सुखा** । स्त्री । वृद्धिनामौषधौ । वै.निघ. ।

**सुखात्मक:** । पुं । शुक्लमरुवकवृक्षे । মরুয়া বৃক্ষ । वै.निघ. ।

**सुखाम्बु** । क्ली । उष्णोदके । উষ্ণজল । च.द. वा.व्या.चि. । [रा.नि.व.६ ।

**सुखार्जिक:** । पुं । सर्ज्जिक्षारे । সাজিমাটী ।

**सुखालुका** । स्त्री । जीवन्तीभेदे । रा.नि.व.३।

**सुखाशः (सः) (कः)** । पुं । चेलालफलवृक्षे । তরমুজ গাছ । त्रिका. । (Curcuma sativus.) राजतिनिशे । ग्राम्यकर्कटी, शशा। श.मा. । सुखभोजने । मे. ।

**सुखोदकम्** । क्ली । उष्णाम्बुनि । গরম জল । "उष्णाम्बु च सुखोदकम् ।" प.प्र.३ख. ।

**सुखोद्भवा** । स्त्री । सूर्यावर्त्तक्षुपे । হুড়হুড়িয়া । वै.निघ. ।

**सुखोषिता** । स्त्री । मूर्व्वायाम् । रा.नि.व.३।

**सुगम्** । क्ली । विष्ठायां । श.च. ।

**सुगन्धम्** । क्ली । गन्धतृणविशेषे । গন্ধতৃণ, নাগদনা, রামকর্পূর । र.मा. । प.मु. । एलवालुके । वै.निघ. ।" वृहद्गन्धतृणे । सु.सू.३८ष. । नीलोत्पले । নীল শুন্দি । रा.नि.व.१० । श्रीखण्डचन्दने । শ্বেত চন্দন । शबरचन्दने । मन्थराजि । रा.नि.व.१२ । कणजीरके । ক্ষুদ্র জীরে । श.च. । ग्रन्थिपर्णे । গেঁটেলা । भा. ।

**सुगन्धः** । पुं । गन्धके । रा.नि.व.१३ । र.मा.। कृष्णजीरके । भा. । देवशालिरित्यपरनामशालिधान्यविशेषे । जालन्धरमगधादिषु गन्धशालिरिति ख्यातः । गुणाः—स्वादुपाकरसत्वादियुक्तः । चर्क. चि. । षष्टिकाङ्गीनगुणः । च.सू.२७ष. । आस्फोतके । হাপরমালী । र.मा. । रक्तशिग्रौ । লাল সজিনা । रा.नि.व.७ । मरुवके । शिलारसे । श्वेतकेतक्यां । अतिमुक्तके । चणके । ছোলা গাছ। रा.नि.व.१६ । श्वेतकरवीरे । वै.निघ. । भूतृणे । গন্ধতৃণ । रा.नि.व.८ । कसेरौ । কেশুর । धवलयावनाले । শ্বেত জনার । रा.नि.व.१६ । तुम्बुरुवृक्षे । मं कं तेंदु, तुम्बुरु । रा.नि.व.११ ।

**सुगन्धकः** । पुं । गन्धतुलस्यां । ছুলালতুলসী । प.मु. । सु.सू.३८ष. । धरणीकन्दे । वै.निघ. । रक्ततुलस्याम् । र.मा. । वृहद्गन्धतृणे । বড় গন্ধ খড় । सु.सू.३८ष.सुरसादिः । गन्धके । र.मा. । र.सा.सं. । द्रोणपुष्प्याम् । ঘলঘসা । नागरङ्गवृक्षे । त्रिका. । कर्कोटके । কাঁকুড় গাছ । श.च. । शालिधान्यभेदे । গন্ধ শালি । गुणाः शालिवत् । सु.सू.४६ष. ।

**सुगन्धकेश(स)रः** । पुं । रक्तशिग्रौ । লাল সজিনা । वै.निघ. ।

**सुगन्धगन्धकः** । पुं । गन्धके । वै.निघ. ।

**सुगन्धगन्धा** । स्त्री । दारुहरिद्रायाम् । দারুহরিদ্রা । वै.निघ. । [वै.निघ. ।

**सुगन्धचन्द्री** । स्त्री । सुगन्धशट्याम् । শঠী ।

**सुगन्धतृणम्** । क्ली । तृणभेदे । পুদিনা, গন্ধতৃণ रा.नि.व.८ ।

**सुगन्धतैलनिर्यासः** । पुं । यवादिनामगन्धद्रव्ये । থাটাশি । रा.नि.व १२ ।

**सुगन्धत्रयम्** । क्ली । चन्दनवालकनागकेसरेषु । वै.श. ।

**सुगन्धत्रिफला** । स्त्री । जातीफललवङ्गैलासु । वै.निघ. । पूगजातीफललवङ्गेषु । "जातीफलं पूगफलं लवङ्गकलिकाफलम् ।" रा.नि.व.२२ ।

**सुगन्धनम्** । क्ली । जीरके । वै.निघ. ।

**सुगन्धपत्रा** । स्त्री । रुद्रजटायाम् । रा.नि.व. ३ । (त्री) जातीपत्राम् । জয়িত্রী । वै.निघ. ।

**सुगन्धफलम्** । स्त्री । कक्कोले । কাঁকলা । वै.निघ. ।

**सुगन्धभूतृणम्** । क्ली । [illegible] । পুদিনা । गुणाः—सुगन्धि ईषत्तिक्तं [illegible] स्निग्धं मधुरं शीतं कफघ्नं पित्तघ्नं श्रमह [illegible] रा.नि.व.८ ।

**सुगन्धमुख्या** । स्त्री । कस्तूरिकायां । মৃগনাভি । वै.निघ. । [कृगकुल । वै.निघ. ।

**सुगन्धमूत्रपतनः** । पुं । सुगन्धमार्जारे । গ-

**सुगन्ध(न्धि)मूला (ली)** । स्त्री । स्थलपद्मिन्याम् । স্থলপদ্ম । रा.नि.व.५ । आमलक्यां । वै.निघ. । रास्नायाम् । रा.नि.व.६ । लवलीवृक्षे । নোয়াড় গাছ । भा. । (ली) सुगन्धशट्यां । वै. निघ. । [वै.निघ. ।

**सुगन्धमूषिका** । स्त्री । कुकुन्दर्यां । ছুঁচা ।

**सुगन्धवल्कलम्** । क्ली । त्वचि । গুড়ত্বক্ । वै.निघ. । [गन्धतृण । वै.निघ. ।

**सुगन्धवीरजात्यम्** । क्ली । रोहिषतृणे । গু-

**सुगन्धशालिः** । पुं । [illegible]

शेषे। गुणाः मधुरा हृद्या, कफपित्तज्वरास्रजित्। रा.नि.व.१६।

**सुगन्धषट्कम्।** क्ली। जातीफलकक्कोललवङ्गबालककर्पूरपूगेषु। जायफल, कांकला, लवङ्ग, बाला, कर्पूर, सुपारि। वै.निघ.।

**सुगन्धसारः।** पुं। शाकवृक्षे। शेगुन गाछ। वै.निघ.।

**सुगन्धा।** स्त्री। रुद्रायां। पिड़िं। रा.नि.व.१२। सुगन्धशालौ। रा.नि.व.१६। कृष्णजीरके। रा.नि.व.६। तिलवासिनीशालौ। रा.नि.व.१६। सल्लकीवृक्षे। रा.नि.व.११। गन्धरास्नायाम्। प.मु.। वन्ध्याकर्कोटक्याम्। रा.नि.व.३। नीलसिन्धुवारे। नील निशिन्दा। रा.नि.व.४। शट्यां। शठी। श.र.। रुद्रजटायाम्। रा.नि.व.३। एलवालुके। एलवालुक। ज.द.। शतपुष्पायाम्। शुलफ। रा.नि.व.४। नाकुलीनामकन्दशाके। रा.नि.व.७। सु.कल्प.५अ.। वा.उ.३६अ.। वनमल्लिकायाम्। सेउती। र.मा.। स्वर्णयूथिकायाम्। माधवीलतायाम्। रा.नि.व.१०। अनन्तायाम्। अनन्त मूल। प.मु.। भा.पू.१भ.। मातुलुङ्गायाम्। लेबु गाछ। प.मु.। गङ्गापत्रीतृणे। रा.नि.व.८। तुलस्याम्। र.मा.।

**सुगन्धाढ्या।** स्त्री। हस्तमल्लिकायाम्। वटपत्रमल्लिकायां। रा.नि.व.१०। उष्णशालौ। सुगन्धशालिधान्यविशेषे। रा.नि.व.१६।

**सुगन्धामलकगणः।** पुं। शुष्कामलकलगयुक्ते सर्व्वौषधिगणे। "सर्व्वौषधिसमायुक्ताः शुष्काश्चामलकत्वचः। यदा तदायं योगः स्यात् सुगन्धामलकाभिधः॥" रा.नि.व.२२।

**सुगन्धि।** क्ली। वर्वरचन्दने, रक्तचन्दनभेदे। रा.नि.व.१२। एलवालुके। रा.नि.व.४। मुस्तायाम्। रा.नि.व.६। कसेरौ। केशुर। रा.नि.व.८। धान्यके। धनिया। पिप्पलीमूले। रा.नि.व.६। गन्धतृणे। रा.नि.व.८।

**सुगन्धिः।** पुं। गन्धशालौ। रा.नि.व.१६। सहकारवृक्षे। आम गाछ। श.च.। शुभगन्धे। अम.। स्त्री। वर्व्वरिकायाम्। वन वावुइ। रा.नि.व.१। चिर्भटिकायां। फुटी। वै.निघ.।

**सुगन्धिकम्।** क्ली। उशीरे। वेणार मूल। रा.नि.व.१२। धन्याके। रा.नि.व.६। कह्लारे। रक्तकश्मल। श.र.। पुष्करमूले। मद.व.१। सुरपर्णनामसुगन्धपत्रे। रा.नि.व.१०। एलवालुके। रा.नि.व.४। गौरसुवर्णशाके। रा.नि.व.७। जीरके। वै.निघ.। कृष्णजीरके। मद.व.२। तुलके। रा.नि.व.६।

**सुगन्धिकः।** पुं। सिल्हके। शिलारस। रा.नि.व.१२। महाशालौ। हे.च.। च.सू.२७अ.। गन्धके। अ.टी.रा.। सुगन्धार्ज्जकवृक्षे। पुन्नागवृक्षे। पुनाग। कपित्थवृक्षे। वै.निघ.।

**सुगन्धिका।** स्त्री। कृष्णनिर्गुण्ड्याम्। काल निशिन्दा। वै.निघ.२भ.सर्व्वज्व.चि.चन्दनवलातैले। सु.चि.१७अ.। कस्तूर्य्याम्। मृगनाभि। वै.निघ.। श्वेतसारिवायाम्। सु.चि.१७अ.। स्वर्णकेतक्यां। सु.कल्प.५अ.।

**सुगन्धिकुसुमः।** पुं। पीतपुष्पकरवीरे। रा.नि.व.१०। क्ली। सुगन्धपुष्पे। स्त्री। रुद्रायाम्। पिड़िं। जटा।

**सुगन्धिकृत्।** पुं। शिलारसे। वै.निघ.।

**सुगन्धित्रिफला।** स्त्री। जातीफलं पूगफलं लवङ्गश्चेति द्रव्यत्रये। "जातीफलं पूगफलं, लवङ्गकलिकाफलम्। सुगन्धित्रिफला प्रोक्ता।" रा.नि.व.१२।

**सुगन्धिनी।** स्त्री। आरामशीतलायाम्। रा.नि.व.१०। सुनन्दिनीति २यः पाठः—स्वर्णकेतक्यां। वै.निघ.।

**सुगन्धिपुष्पः।** पुं। राजकदम्बवृक्षे। वै.निघ.।

**सुगन्धिमूलकम्।** क्ली। उशीरे। वेणार मूल। रा.नि.व.१२। [?]। रा.नि.व.१६।

**सुगन्धिमूषिका।** क्ली। मूषिकविशेषे। छुं।

**सुगरम्।** क्ली। हिङ्गुले। रा.नि.व.१३।

**सुगर्भकम्।** क्ली। त्रपुषे। शशा। वै.निघ.।

**सुगुण्डा।** स्त्री। गुण्डासिनीतृणे। रा.नि.व.८।

**सुगुप्ता।** स्त्री। कपिकच्छ्वाम्। आलाकुशी। प.मु.।

**सुग्टहः (ही [इन])।** पुं। पत्नुदपक्षिविशेषे,

चञ्चुसूचिकपक्षिणि । हे.च. । सु.सू.४६अ. । का-रण्डवपक्षिणि । चिका. ।

**सुग्रन्थिः** । पुं । चोरकनामगन्धद्रव्ये । गेँठेला। रा.नि.व.१२ । क्ली । पिप्पलीमूले । पिपुलमूल । रा.नि.व.६ ।

**सुग्रीवः** । पुं । राजहंसे । शब्दकल्प: ।

**सुच(चु)टी** । स्त्री । यन्त्रविशेषे । चिमिटा इति लोके । शब्दकल्प: ।

**सुच(चु)ञ्चुका** । स्त्री । महाचञ्चुशाके । चेँच्-को शाक । रा.नि.व.४ ।

**सुचन्दनम्** । क्ली। पत्राङ्गचन्दने । वकमकाठ । रा.नि.व.१२ । चि.क्र.क.गर्भ.चि. ।

**सुचर्म्मा(न्)** । पुं । भूर्जवृक्षे । रा.नि.व.९ ।

**सुचक्षुः** । पुं । उदुम्बरवृक्षे । यज्ञ डुमुर गाछ । जटा. ।

**सुचित्रकः** । पुं। मत्स्यरङ्कपक्षिणि । माछराङ्गा पाखी । चित्रसर्पे । चिति साप । श.र. ।

**सुचित्रबीजा** । स्त्री । विडङ्गायाम् । विडङ्ग । रा.नि.व.६ । [व.७ ।

**सुचित्रा** । स्त्री । चिर्भटायां । फुटी । रा.नि.

**सुचुक्रिका** । स्त्री । तिन्तिड्याम् । वै.निघ. ।

**सुच्छिद्रिका** । स्त्री । महामेदायां । वै.निघ. ।

**सुजलम्** । क्ली । कमले । रा.नि.व.१० । सुन्दरजले ।

**सुजातका** । स्त्री । कुङ्कुमशाल्यौ । हैमन्तिक शालिधान्यविशेष । रा.नि.व.१६ । [व.१२ ।

**सुजाता** । स्त्री । सौराष्ट्रमृत्तिकायाम् । रा.नि.

**सुजीवन्ती** । स्त्री। स्वर्णजीवन्त्यां । रा.नि.व.३।

**सुतङ्गी** । स्त्री । महोपोदिकायां । बड़ पुँइ । वै.निघ. । [व.६ ।

**सुतजीवकः** । पुं । पुत्रञ्जीवकवृक्षे । रा.नि.

**सुतपादि(दु)का** । स्त्री । क्षुपजातीयहंसपादीलतायाम् । गोयालिया लता । रा.नि.व.५ ।

**सुतर्कारी** । स्त्री । देवदालीलतायाम् । देया-ताड़ा । रा.नि.व.३ ।

**सुतर्द्दनः** । पुं । कोकिले । चिका. ।

**सुतवस्करा** । स्त्री । पुत्रसप्तकमातरि । सात विउनी । चिका. ।

**सुतश्रेणी** । स्त्री । द्रवन्तीवृक्षे । बड़ दन्ती । मूषकपर्णीक्षुपे, मूषिककर्ण्यां । इन्दूरमारी । हिं उन्दुरविणीवा । गुणा:—चक्षुष्या कटु: आखुविषव्रणदोषनेत्ररोगघ्नी च । रा.नि.व.४ ।

**सुता** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.व.८ । दुरालभायां । श.च. । [नि.व.५ ।

**सुतिक्तः** । पुं । पर्पटके । क्षेतपापड़ा । रा.

**सुतिक्तकः** । पुं । पारिभद्रवृक्षे । पालिधामान्दार । जटा । भूनिम्बवृक्षे । चिराता । पर्पटके । क्षेतपापड़ा । श.र. ।

**सुतिक्ता** । स्त्री । कोशातकीलतायाम् । घोषालता । रा.नि.व.३ । शल्लकीवृक्षे । वै.निघ. ।

**सुतिन्तिड़ः** । पुं । तिन्तिडीवृक्षे । वै.निघ. ।

**सुतीक्ष्णकः** । पुं । श्वेतशिग्रौ । श्वेत सजिना । रा.नि.व.७. शोभाञ्जनवृक्षे । लाल सजिना । जटा. । मुष्ककवृक्षे । घण्टापारुल । स्त्री (का) । सर्षपवृक्षे । वै.निघ. । [नि.व.११ ।

**सुतुङ्गः (ङ्गा)** । पुं, स्त्री । नारिकेलवृक्षे । रा.

**सुतूर्थः** । पुं । उलूके । र.मा. ।

**सुतृणः** । पुं । कुन्दुरुतृणे । वै.निघ. । मञ्जरतृणे । ऊषरतृणे । रा.नि.व.८ ।

**सुतेजनः** । पुं । धनुर्वृक्षे । भा. ।

**सुतेजाः (स)** । स्त्री । आदित्य...ायाम् । हु ड़हुड़िया । रा.नि.व.४ ।

**सुतैला** । स्त्री । महाज्योतिष्मतीलतायाम् । लताफटकी । रा.नि.व.३ ।

**सुदग्धिका** । स्त्री । दग्धानामवृक्षे । 'करही' इति कोङ्कणे ख्याता । रा.नि.व.९ । [नि.व.७ ।

**सुदण्डः** । पुं । वेत्रवंशे । बेउड़ बाँश । रा.

**सुदण्डिका (ण्डी)** । स्त्री । गोरक्ष्याम् । गोरक्षचाकुलिया । रा.नि.व.५ । ब्रह्मदण्ड्याम् । बामनहाटी । वै.निघ. ।

**सुदधि** । क्ली । कपित्थफले । वै.निघ. ।

**सुदन्तिका** । स्त्री । गवि । गाइ । वै.निघ. ।

**सुदमनः** । पुं । आम्रवृक्षे । वै.निघ. ।

**सुदर्भा** । स्त्री । इक्षुदर्भातृणे । रा.नि.व.८ ।

**सुदर्शनः** । पुं । मत्स्यभेदे । रा.नि.व.४ । अर्क. चि.४र्थ शतके । मत्स्य । भा. ।

**सुदर्शनचूर्णम्** । क्ली । विषमज्वरे औषधविशेषः । अत्र पुष्करमूलाभावे कुष्ठं, भार्ग्यभावे कण्टकारीमूलं, सौराष्ट्रभावे फटिकारी, तगराभावे कुष्ठं, जीवकर्षभकयोरभावे विदारीकन्दस्य भागद्वयं, काकोल्यभावे अश्वगन्धामूलं, तालीशाभावे च कण्टकारीमूलं ग्राह्यम् । भा.म.१भ.ज्व.चि. । कृष्णागुरु हरिद्रा वचा देवदारु मुस्तकं हरीतकी दुरालभा कर्कटशृङ्गी कण्टकारी शुण्ठी त्रायमाणा क्षेत्रपर्पटकं निम्बत्वक् पिप्पलीमूलं बालकं शटी कुष्ठं पिप्पली मूर्वामूलं कुटजत्वक् यष्टीमधु शिग्रुबीजं नीलोत्पलम् इन्द्रयवः खोरासानीवचा (पाठान्तरे शतमूली) दारुहरिद्रा रक्तचन्दनं पद्मकाष्ठं वाट्यालकं (বেলেড়) (पाठान्तरे सरलकाष्ठं) उशीरं गुड़त्वक् पङ्कपर्पटी शालपर्णी यमानी अतिविषा बिल्वपेशिका मरिचं तेजपत्रं (गन्धतृणं वा) आमलकी चित्रकमूलं पटोलपत्रं धान्यकं पृश्निपर्णी बृहती गुडूची कटुका चेति द्रव्याणि । एषां द्रव्याणां चूर्णं प्रत्येकं १ तो कैरातचूर्णं सर्व्वचूर्णार्द्धम् । अनु. शीतलजलम् । কৃষ্ণাগুরু, হরিদ্রা, বচ, দেবদারু, মুতা, হরীতকী, দুরালভা, কাঁকড়াশৃঙ্গী, কণ্টিকারী, শুঁট, বনভাঁটলিয়া (বলাডুমুর), ক্ষেৎপাপড়া, নিমছাল, পিপুলমূল, বালা, শটী, কুড়, পিপুল, মূর্বামূল, কুড়চিছাল, যষ্টিমধু, সাজনাছাল বা বীজ, শুন্দীমূল বা ফুল, ইন্দ্রযব, খোরাসানীবচ, দারুহরিদ্রা, রক্তচন্দন, পদ্মকাষ্ঠ, বাট্যালক বা সরলকাষ্ঠ, বেণার মূল, গুড়ত্বক্, পঙ্কপর্পটী, শালপাণি, যমানী, আতইচ, বেলশুঁটা, মরিচ, তেজপত্র বা গন্ধতৃণ, আমলকী, চিতামূল, পটোলপত্র, ধনে, চাকুলিয়া, বৃহতী, গুলঞ্চ, কটুকী প্রত্যেকে ১ তো. চিরাতাচূর্ণ সর্ব্বচূর্ণার্দ্ধ। অনুপান শীতল জল । মা.কৌ. ।

**सुदर्शना** । स्त्री । स्वनामख्यातलतायाम् । উরতিপূরতি, পদ্মগুলঞ্চ । भैष.अ.पि.चि.सुधावतीगुड़ी । च.द.बालवाङ्गेरीघृते । गुणाः—"स्वादुरुष्णा कफशोफास्रवातजित्" भा. । रक्तदोषञ्च वातञ्च नाशयेत । वै.निघ. ।

**सुदलः** । पुं । मुचुकुन्दवृक्षे । रा.नि.व.१० । क्षीरमोरटे । र.मा. । स्त्री (ला) । शालपर्णीक्षुपे । रा.नि.व.४ । तरुणीपुष्पवृक्षे । বন সেউতী । रा.नि.व.१० ।

**सुदारु** । क्ली । देवदारुकाष्ठे । सरलकाष्ठे । वै. [निघ. ।

**सुदीर्घः** । पुं । चिचिण्डके । চিচিঙ্গা । भा.पू. १भ शा.व. । [রাজিতা । श.च. ।

**सुदीर्घघर्मा** । स्त्री । असनपर्ण्याम् । অপ-

**सुदीर्घफला** । स्त्री । बृहत्कर्कटिकायाम् । বড় কাঁকুড় । वै.निघ. ।

**सुदीर्घफलिका** । स्त्री । दीर्घवार्त्ताकभेदे । শিঙ্গে বেগুন । र.मा. ।

**सुदीर्घा** । स्त्री । चीनकर्कटिकायाम् । रा.नि. व.७ । [नि.व.४ ।

**सुदूरमूलः** । पुं । यासक्षुपे । দুরালভা । रा.

**सुदृढ़त्वचा** । स्त्री गाम्भारीवृक्षे । रा.नि.व.९ ।

**सुदृष्टिः (कः)** । पुं । गृध्रे । शकुनि । वै. निघ. । [१५ ।

**सुधांशुतैलम्** । क्ली । कर्पूरतैले । रा.नि.व.

**सुधांशुरत्नम्** । क्ली । मौक्तिके । मुक्ता । रा. नि.व.१३ ।

**सुधा** । स्त्री । शालपर्ण्याम् । रा.नि.व.४ । अमृते । अम. । मूर्वायां । মুর্গা । इष्टकायां । मे. । स्नुहीवृक्षे । মনসা, তেকাঁটা সিজ্ । रा.नि. व.८ । सु.सू.३८अ.श्यामादिः । चि.२अ. । च.द. ना.व्र.चि. । स्नुहीमूले । च.द बृहदग्निघृते । गुडूच्याम् । भा.म.१भ.सन्धिकज्व.चि. । "सनागरसुधान्विता ।" वेधनद्वारे । विषे । रा.नि.व.२३ । रसे । जले । धात्र्यां । अनेकार्थध्वनिः । हरीतक्यां । मधुनि । श.च. ।

**सुधानिधिरसः** । पुं । रक्तपित्ते औषधम् । পাঠ:—"सूतं गन्धं माक्षिकं लौहचूर्णं सर्व्वं घृष्टं त्रैफलैनीरकेन । मूषामध्ये भूधरे तत्पुटित्वा दद्याद्गुञ्जां त्रैफलैनीरकेन ।" रात्रौ लौहपात्रपक्वं द-

...धईयम्। पারা, গন্ধক, স্বর্ণমাক্ষিক, লৌহ সমভাগ ত্রিফলার জলে মাড়িয়া মূষামধ্যে ভূধরযন্ত্রে পাক করিবে। রাত্রে দুগ্ধ দিবে॥ रस.चि.।

**सुधान्यम्।** क्ली। षष्टिकधान्ये। ষেটে ধান। रा.नि.व.१६। [शब्दकल्प:।

**सुधापय:।** क्ली। स्नुहीक्षीरे। সিজুব ক্ষীর।

**सुधापाणि:।** पुं। धन्वन्तरौ। शब्दकल्प:।

**सुधापाषाण:।** पुं। शुक्लखड़िकायाम्। ফুল খড়ি। वै.निघ.। [नि.व.१४।

**सुधामोदक:।** पुं। यवासशर्करायाम्। रा.

**सुधामोदकज:।** पुं। तवराजखण्डे। গালথণ্ডীবিশেষ। रा.नि.व.१४।

**सुधालता।** स्त्री। गरुड़वल्ल्याम्, गुडूचीभेदे। वै.निघ.२भ.ज्व.चि.।

**सुधावास:।** पुं। त्रपुषफले। শশা। भा.। कर्कटिकायाम्। কাঁকুড়। वै.निघ.।

**सुधाशर्करा।** स्त्री। शुक्लपाषाणे। শুক্ল খড়ি। सु.सू.११अ.।

**सुधास्र(स्र)वा।** स्त्री। रुदन्तीनाममहाक्षुपे। রুদন্তী। रा.नि.व.५। उपजिह्वायां। আলজিবি। त्रिका.।

**सुधासूति:।** पुं। पद्मे। श.र.।

**सुधाह्वय:।** पुं। चूर्णके। চূন। वै.निघ.।

**सुधाक्षार:।** पुं। चूर्णक्षारे। वै.निघ.।

**सुधूपक:।** पुं। श्रीवेष्टे। সরলকাঁ আটা। रा.नि.व.१२। [गन्धसारे। रा.नि.व.१२।

**सुधूम: (म्य:)।** पुं। अगुरुसारे। स्वादुनाम

**सुधोद्भव:।** पुं। धन्वन्तरौ। त्रिका.। स्त्री (वा)। हरीतक्याम्। त्रिका.। गुडूच्यां। वै.निघ.।

**सुनख:।** पुं। कुक्कुरे। वै.निघ.।

**सुनन्दा।** स्त्री। गोरोचनायाम्। मे.। अर्कपत्राम्। ঈশের মূল। र.मा.। शिशोर्मातृका-ग्रहविशेषे। यो द्वितीये दिवसे मासि वर्षे वा बालं गृह्णाति। तेन बालस्य ज्वरचक्षुरुन्मीलनादिकं भवति। च.द.बालरो.चि.।

**सुनन्दिनी।** स्त्री। आरामशीतलायाम्। वै.निघ.।

**सुनयन:।** पुं। मृगे। श.च.।

**सुनाकृत:।** पुं। कर्पूरे। श.च.।

**सुनाद:।** पुं। शङ्खे। শাঁখ। वै.निघ.।

**सुनाभा (मा)।** स्त्री। श्वेतकिणिह्यां। (मा) ब्राह्म्याम्। ब्राह्मीশাক। वै निघ.।

**सुनामिका।** स्त्री। त्रायमाणालतायाम्। বলালতা। वै.निघ.। [कुक्कुरीस्तन्ये। मे.।

**सुनार:।** पुं। चटकपक्षिणि। सर्पडिम्बे।

**सुनालम्।** क्ली। लामज्जके। উশীরবিশেষ। रा.नि.व.१२। [श.च.।

**सुनालक:।** पुं। बकपुष्पवृक्षे। বক বৃক্ষ।

**सुनासा (सिका)।** स्त्री। काकनासालतायां। কুঁচ গাছ। रा.नि.व.३। [निघ.।

**सुनिर्घोषा।** स्त्री। झिञ्झिन्यां। ঝিঞ্জা। वै.

**सुनिर्यासा।** स्त्री। झिञ्झिनीवृक्षे। भा.।

**सुनिषण्ण: (क:)।** पुं, क्ली। शितावरीक्षुपे, जलान्विते देशे चाङ्गेरीपत्रसदृशचतुष्पत्रशाके। শুষুনী শাক। हिं चणपत्री, शिरीआरी। मं कं कुरड़ाहके, खड़कतिरा। तें सुनिषण्णमनेशाकमु। उत्. कुनकुनिया। रा.नि.व.४। इदं निद्राकरं, रक्तपित्ते वर्ज्यम्। भा.र.पि.चि.। गुणा: — "सुनिषण्णो हिमो ग्राही मोहदोषत्रयापह:। अविदाही लघु: स्वादु: कषायो रूक्षदीपन:। वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत्॥" भा.पू.१भ. शा व.। संग्राही कषायोष्ण, त्रिदोषघ्न: मेधारुचिकर: दाहज्वरहर: रसायनश्च। रा.नि.व.४। क्ली। शैवाले। र.मा.।

**सुनिषण्णकच्छदा(पत्रिका)।** स्त्री। चाङ्गेर्याम्। আমরুল শাক। वै.निघ.।

**सुनील: (क:)।** पुं। नीलकान्तमणौ। रा.नि.व.१३। दाड़िमवृक्षे। रा.नि.व.११। नीलभृङ्गराजे। वै.निघ.।

**सुनीला।** स्त्री। गर्मोटिकातृणे। रा.नि.व.८। अतसीवृक्षे। মশিনা গাছ। रा.नि.व.१६। च-

शिकाटवे । रा.नि.व.८ । विष्णुक्रान्तायाम् । रा.नि.व.५ ।

**सुनेपाली** । स्त्री । पिण्डीखर्जूरभेदे । गुणाः —"सुनेपाली श्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत् ।" भा. ।

**सुन्दरः** । पुं । तिलकपुष्पवृक्षे । रा.नि.व.१० । ग्रीष्मसुन्दरके । গিমা শাক । भैष.ज्व.चि.अचिन्त्यशक्तिरसे । स्वनामख्यातवृक्षे । সুঁদরী গাছ । सुखबोधः । स्त्री (री) । हरिद्रायाम् । श.च. । प्रियङ्गौ । च.द.वा.व्या.चि. । "चम्पकसुन्दरीत्वक् ।" काकमाच्याम् । रा.नि.व.४ । सुन्दरवृक्षे । मे. ।

**सुपक्वः** । पुं । सुगन्धाम्रे । श.च. ।

**सुपत्रम्** । क्ली । तेजपत्रे । श.च. । पुं । पक्षी वाहटवे । रा.नि.व.८ । आदित्यपत्रक्षुपे । হুড়হুড়িয়া বিশেষ । रा.नि.व.४ । इङ्गुदीवृक्षे । रा.नि.व.८ । (कः) शिग्रुवृक्षे । সজিনা গাছ । रा.नि.व.७ ।

**सुपत्रा** । स्त्री । रुद्रजटालतायाम् । रा.नि.व.३ । शतावर्य्याम् । শতমূলী । शालपर्ण्याम् । रा.नि.व.४ । शमीवृक्षे । শাঁই গাছ । रा.नि.व.८ । पालक्यशाके । পালংশাক । रा.नि.व.७ ।

**सुपत्रिका** । स्त्री । शालपर्ण्याम् । रा.नि.व.४ । जतुकालतायाम् । रा.नि.व.३ ।

**सुपत्री** (त्रिन्) । पुं । पक्षिणि । वै.निघ. ।

**सुपथ्यः** । पुं । आम्रवृक्षे । वै.निघ. । स्त्री । श्वेतचिल्लीशाके । लघुवास्तुके । रा.नि.व.७ ।

**सुपद्मा** । स्त्री । वचायाम् । श.च. । चि.क.क. गर्भ.चि. ।

**सुपर्णः** । पुं । नागकेशरवृक्षे । নাগেশ্বর গাছ । त्रिका. । कृतमालवृक्षे । সোন্দাল গাছ । स्वर्णचूड़पक्षिणि । मे. । स्त्री । पद्मिन्यां । श.मा. ।

**सुपर्णकः** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । र.मा. । सप्तपर्णवृक्षे । ছাতিম গাছ । रा.नि.व.१२ ।

**सुपर्णाख्यः** । पुं । नागकेशरवृक्षे । নাগেশ্বর গাছ । प.मु. ।

**सुप(व)र्णिका** । स्त्री । स्वर्णजीवन्त्याम् । रा.नि.व.३ । वाकुच्यां । সোমরাজ । रा.नि.व.४ । अतिबलायां । वै.निघ. । पलाशीलतायां । नागरदेशे ख्याता । रा.नि.व.३ । शालपर्ण्यां । रा.नि.व.४ । रेणुके । রেণুক । रा.नि.व.६ ।

**सुपर्णी** । स्त्री । पलाशीलतायां । नागरे ख्याता । रा.नि.व.३ । पद्मिन्यां । পদ্মের ঝাড় । मे. । रेणुके । रा.नि.व.६ । अपराजितायां । वै.निघ. ।

**सुपर्व्वा** (न्) । पुं । वंशे । धूमे । पर्व्वणि । পাব । मे. । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.व.८ ।

**सुपाकिनी** । स्त्री । आम्रहरिद्रायाम् । वै.निघ. ।

**सुपाक्यम्** । क्ली । विड़लवणे । বিট্‌লবণ । रा.नि.व.६ ।

**सुपार्श्वः (कः)** । पुं । गर्दभाण्डवृक्षे । পলাশ পিপুল । प्लक्षवृक्षे । পাকুড় গাছ । अम. ।

**सुपिङ्गला** । स्त्री । जीवन्तीशाके । रा.नि.व.७ । ज्योतिष्मत्याम् । লতা ফট্‌কী । रा.नि.व.३ ।

**सुपीतः** । पुं । पीतझिण्टीक्षुपे । পীতঝাঁটী । रा.नि.व.१० । क्ली । गर्जरमूलके । গাজর । रा.नि.व.७ ।

**सुपुटः** । पुं । कोलकन्दे । विष्णुकन्दे । रा.नि.व.७ । (टा) स्त्री । वनमल्लिकायाम् । वै.निघ. ।

**सुपुत्रः** । पुं । जीवकद्रुमे । জেঁয়র ষষ্ঠী । प.मु. ।

**सुपुत्रिका** । स्त्री । जतुकालतायाम् । रा.नि.व.३ ।

**सुपुष्करा** । स्त्री । स्थलपद्मिन्याम् । স্থলপদ্ম । रा.नि.व.५ ।

**सुपुष्पम्** । क्ली । प्रपौण्डरीके । পুণ্ডরিয়া । रा.नि.व.१२ । लवङ्गे । श.च. । तूलकाष्ठे । रा.नि.व.९ । आहुल्यक्षुपे । रा.नि.व.४ । देवदारुणि । वै.निघ. ।

**सुपुष्पः (कः)** । पुं । मुचुकुन्दवृक्षे । মুচ্‌কুন্দ গাছ । शुक्लार्कवृक्षे । শ্বেত আকন্দ । राजतरुणीपुष्पवृक्षे । रा.नि.व.१० । शिरीषवृक्षे । শিরীষ গাছ । हरिद्रुमे । रा.नि.व.९ । पारिषाश्वत्थे । পলাশপিপুল । वै.निघ. । पारिभद्रवृक्षे । পালিধামান্দার । श.च. ।

**सुपुष्पा** । स्त्री । कोशातक्याम् । ঘোষা লতা । रा.नि.व.७ । द्रोणपुष्प्यां । ঘলঘসা । शतपुष्पा-

र्यां । শুল্‌ফা। शतपत्र्यां । বন সেউতী वै. निघ. ।

**सुपुष्पिका** । स्त्री । शताह्वायाम् । শুল্‌ফা। रा.नि.व.४ । पाटलावृचे । পারুল গাছ । रा. नि.व.१० । वृद्धदारकविशेषे । ছাগলবেঁটে । रा. नि.व.३ । कृष्णमल्लिषवल्ल्यां । वनशणे । वै.निघ. ।

**सुपुष्पी** । पुं । श्वेतापराजितायाम् । रा.नि.व. ३। मिश्रेयाख्यक्षुपे । মৌরী গাছ । शतपुष्पायां । শুলফা । रा.नि.व.४ । द्रोणपुष्प्याम् । ঘলঘসা। रा.नि.व.५ । कदल्याम् । श.च. ।

**सुपूरः (कः)** । पुं । चूर्णकविशेषे । চূর্ণবিশেষ । मातुलुङ्गवृचे । টাবা গাছ । हिं बीजौड़ा । रा.नि.व.११ । (कः) वकपुष्पवृचे । र.मा. ।

**सुप्तम्** । क्ली । सुषुप्तौ । ह.च. ।

**सुप्तजनः** । पुं । अर्द्धरात्रे । जटा. ।

**सुप्तज्ञानम्** । क्ली । स्वप्ने । जटा. । [मि. ।

**सुप्तिः** । स्त्री । निद्रायाम् । शयने । स्पर्शतायां ।

**सुप्रतिभा** । स्त्री । मदिरायाम् । रा.नि.व.१४।

**सुप्रतिष्ठः (ष्ठितः)** । पुं । उदुम्बरवृचे । যজ্ঞডুমুরের গাছ । रा.नि.व.११ ।

**सुप्रतिष्ठा** । स्त्री । मद्यसामान्ये । रा.नि.व.१४।

**सुप्रतिष्ठिता** । स्त्री । महाजम्बूवृचे । वै.निघ.।

**सुप्रतीका** । स्त्री । मद्ये । वै.निघ. ।

**सुप्रभम्** । क्ली । पद्मकाष्ठे । वै.निघ. ।

**सुप्रभा** । स्त्री । वाकुच्याम् । সোমরাজ । रा. नि.व.४ । [याम् । रा.नि.व.१० ।

**सुप्रसन्नकः** । पुं । कृष्णार्जके, वनवर्व्वरिका-

**सुप्रसरा** । स्त्री । प्रसारिण्याम् । গন্ধভাদুলিয়া । रा.नि.व.५ ।

**सुफलः** । पुं । कर्णिकारवृचे । সোণালু । रा. नि.व.६ । दाड़िमवृचे । बदरवृचे । কুল গাছ । रा.नि.व.११ । वदामवृचे । वै.निघ. । मातुलुङ्गवृचे । টাবা । प.मु. । मुद्गवृचे । रा.नि.व.१६ । कपित्थवृचे । কৎবেলের গাছ । श.च. । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व. ३ । कुष्माण्ड्याम् । কুমড়া গাছ । रा.नि.व.७ । गाम्भारीवृचे । रा.नि.व.६ । कदलीवृचे । कपिलद्राचायाम् । रा.नि.व.११ । महाजम्बूवृचे । বড় জাম গাছ । महाखर्ज्जूरवृचे । ছোহারা গাছ । वै.निघ. ।

**सुफेनम्** । क्ली । समुद्रफेने । रा.नि.व.६ ।

**सुबन्धः** । पुं । तिले । श.च. । अस्य मूलं स्थावरविषान्तर्गतमूलविषभेदे वर्त्तते । सु.कल्प.२अ । See मूलविषम् । [वै.निघ. ।

**सुबीजम्** । क्ली । खखसबीजे । পোস্তদানা।

**सुभगम्** । क्ली । शैलजनामगन्धद्रव्ये । শৈলজ। रा.नि.व.१२ । पुं । टङ्कणे । সোহাগা । प.मु. । गन्धके । रस.कौ.ज्वरारिरसे । चम्पकवृचे । रक्ताम्लाने । রক্তঝাঁটী । पीतझिण्ट्यां । পীতঝাঁটী । अशोकवृचे । रा.नि.व.१० ।

**सुभगा** । स्त्री । प्रियङ्गौ । कस्तूर्य्याम् । मृगनाভি । रा.नि.व.१२ । नीलदूर्व्वायां । रा.नि.व. ८ । शालपर्ण्यां । रा.नि.व.४ । स्वर्णकदल्यां । চাঁপাকলা । रा.नि.व.१६ । तुलसीवृचे । रा.नि. व.१० । हरिद्रायाम् । कैवर्त्तमुस्तके । কেওটমুতা । रा.नि.व.६ । जातीपुष्पवृचे । वै.निघ. । वनमल्लिकायां । श.र. ।

**सुभगाह्वया** । स्त्री । कैवर्त्तिकालतायाम् । सुरङ्गीलतेति मालवे ख्याता । रा.नि.व.३ । शालपर्ण्याम् । रा.नि.व.४ । हरिद्रायाम् । रा.नि.व. ६ । सुवर्णकदल्याम् । চাঁপাকলা । रा नि.व.११ । तुलसीवृचे । रा.नि.व.१० । नील[illegible]याम् । रा. नि.व.८ ।

**सुभङ्गः** । पुं । नारिकेलवृचे । जटा. ।

**सुभ(भा)ञ्जनः** । पुं । शोभाञ्जनवृचे । সজিনা গাছ । भा.हिरुपको. । [क्षवृचे । वै.निघ. ।

**सुभद्रः (कः)** । पुं । विल्ववृचे । श.च. । नि-

**सुभद्रा** । स्त्री । श्यामालतायाम् । प.मु. । गाम्भारीवृचे । रा.नि.व.६ । समीवृचे । শাঁই গাছ । रा.नि.व.८ । घृतमण्डायां । श.च. । रक्तापराजितायां । वै.निघ. ।

**सुभद्राणी (णी)** । स्त्री । त्रायमाणालतायाम् । वहुला इति लोके । र.मा. ।

**सुभिक्षा** । स्त्री । धातकीवृक्षे । धाइ फुलेर गाछ । प.मु. । [छ । द्वारा. ।

**सुभीरः (कः)** । पुं । पलाशवृक्षे । पलाश गा-

**सुभूतिकः** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**सुभोजकः** । पुं । गरुड़शाली । पक्षिराज धान्य । रा.नि.व.१६ ।

**सुमम्** । क्ली । पुष्पे । भ.टी.भ. । [वै.निघ. ।

**सुमकरन्दः** । पुं । कुन्दवृक्षे । कुँद गाछ ।

**सुमङ्गलः** । पुं क्ली । विषभेदे । प.मु. । स्त्री । मधूली । गाकड़शतावास, मालकाँकड़ी, माकड़िया । र.मा. ।

**सुमङ्गल्यम्** । क्ली । चिड़ादेवदारुणि । वै.निघ. ।

**सुमञ्जरी** । स्त्री । कृष्णतुलस्यां । कालतुलसी । वै.निघ. । [वै निघ. ।

**सुमतिः** । स्त्री । शारिकायां । गादि शालिक ।

**सुमदनः** । पुं । आम्रवृक्षे । रा.नि.व.११ ।

**सुमधुरः** । पुं । जीवशाके । रा.नि.व.७ । गोधूमे । वै.निघ. ।

**सुमनः** । पुं । गोधूमे । प.मु. । धुस्तूरवृक्षे । श.मा. । घृतकरञ्जे । जातीपत्न्याम् । जयित्री । वै.निघ. । क्ली (स) । पुष्पे । अम. ।

**सुमनःपत्रिका** । स्त्री । जातीकोषे । जयित्री । रा.नि.व.१२ ।

**सुमनःप्रबालः (पल्लवः)** । पुं । जातीपल्लवे । जातीफुलेर शाखा । च.द. । च.सू.३अ. कुष्ठलेपे ।

**सुमनःफलः** । पुं । कपित्थवृक्षे । कयेत गाछ । श.च. । क्ली । जातीफले । जायफल । रा.नि.व.१२ ।

**सुमनाः** (स) । पुं । पूतिकरञ्जे । नाटा । श.मा. । महाकरञ्जे । डहर करञ्चा । निम्ववृक्षे । रा.नि.व.६ । गोधूमे । रा.नि.व.१६ । स्त्री (नाः) । मालतीपुष्पवृक्षे । मे. । सु.सू.३६अ. । पुष्पे । मे. । जातीपुष्पवृक्षे । चामिलि । शतपत्न्याम् । सेंउती । रा.नि.व.१० । (ना) जातीपुष्पवृक्षे । रा.नि.व.१० । च.वि.८अ. । सु.चि. १६अ. । चि.६अ. । भा.भग.चि. । शतपत्र्यां । सेउती । रा नि.व.१० । मालतीवृक्षे । र.मा. ।

**सुमनोमुकुलम्** । क्ली । जातीपुष्पमुकुले । जातीफुलेर कुँड़ि । सु.सू.३६अ. ।

**सुमनोरजः** (स) । क्ली । पुष्परजसि । पुष्पपराग । अम. ।

**सुमुखः** । पुं । राजिकायाम्पे । राइसरिषार गाछ । गुणाः—रोचनः सुगन्धः नातिकटुकश्च । च.सू.२७अ. । वनवर्व्वर्य्याम् । वनबाबुई । च.वि. ८अ. । श्वेतपत्रक्षुद्रतुलस्याम् । श्वेतपत्र क्षुद्रतुलसी । कृष्णवर्व्वरे । काल बाबुई । रा.नि.व. १० । सु.सू.३८अ.सुरसादिः । जलचरपक्षिविशेषे । भारुण्ड पाखी । च.सू.२७अ. ।

**सुमूलः (कः)** । पुं । श्वेतशिग्रौ । श्वेत सजिना । क्ली । गर्ज्जरमूले । गाजर । रा.नि.व.७ । स्त्री (ला) । शालपर्ण्याम् । शालपानि । पृश्निपर्ण्याम् । चाकुलिया । रा.नि.व.४ ।

**सुमेखलः** । पुं । मुञ्जतृणे । मुञ्ज । रा.नि.व.८ ।

**सुमेधाः** (स) । स्त्री । ज्योतिष्मतीलतायाम् । लताफटकी । मे. ।

**सुम्पलुगण्डः** । पुं । कर्पूरे । श.च. ।

**सुरः** । पुं । देवदारुणि । वै.निघ.ज्व.चि. । गा. व्या.महारास्नादौ ।

**सुरकन्दः** । पुं । कटुशूरणे । वै.निघ. ।

**सुरकाष्ठम्** । क्ली । देवदारुकाष्ठे । भा.चि.३अ. ।

**सुरक्तता** । स्त्री । गुड़ूच्याम् । रा.नि.व.३ ।

**सुरक्तकः** । पुं । कोषाम्रे । रा.नि.व.११ । क्ली । सुवर्णगैरिके । रा.नि.व.१३ । रक्तचन्दने । वै. निघ. । [निदा. ।

**सुरगण्डः** । पुं । विद्रधिविशेषे । राजगाँड़ ।

**सुरगोपः** । पुं । इन्द्रगोपकीटे । आषाढ़े पोका । च.द.स्त्रीरो.चि. ।

**सुरङ्गम्** । क्ली । हिङ्गुले । रा.नि.व.१३ । पत्तङ्गचन्दने । बकमकाष्ठे । रा.नि.व.१२ ।

**सुरङ्गः (कः)** । पुं । नागरङ्गवृक्षे । नारङ्गी लेबुर गाछ । प.मु. । रा.नि.व.११ । रक्तशिग्रौ । लाल सजिना । प.मु. ।

**सुरङ्गदम्** । क्ली । पत्तङ्गचन्दने । বকমকাষ্ঠ । रा.नि.व.१२ । [মাটী । रा.नि.व.१३ ।

**सुरङ्गधातुः (युक्)** । पुं । गैरिके । গেরি-

**सुरङ्गा** । स्त्री । कैवर्त्तिकालतायां । सुरङ्गीलता इति मालवे ख्याता । वम्.शिरीजि । रा.नि.व.३ ।

**सुरङ्गिका** । स्त्री । मूर्व्वालतायाम् । रा.नि.व.३ । उपोदिकायां । পুঁই গাছ । श्वेतकाकमाच्यां । শ্বেত গুড়কাঁউলী । वै.निघ. ।

**सुरङ्गी** । स्त्री । काकनासायाम् । কুঁচ গাছ । रा.नि.व.३ । काकमाच्याम् । গুড়কামাই । वै.निघ. । रक्तशोभाञ्जनवृक्षे । प.मु. । सु.सू.३९अ. शिरोविरेचने । रस.र.कर्णारी.चि. । [কশ্চিৎ ।

**सुरजम्** । क्ली । लवणक्षारे । লোণার ক্ষার ।

**सुरजःफलः** । पुं । पनसवृक्षे । কাঁটালগাছ । शब्दकल्प. ।

**सुरजितः** । पुं । लघुनिदाननामग्रन्थकर्त्तरि ।

**सुरञ्जनः** । पुं । गुवाकवृक्षे । त्रिका. ।

**सुरञ्जी** । स्त्री । श्वेतकाकमाच्यां । वै.निघ. ।

**सुरतम्** । क्ली । मैथुने । मे. ।

**सुरतरुः** । पुं । विकङ्कतवृक्षे । বঁইচী গাছ । वै.निघ. । देवदारुवृक्षे । रा.नि.व.१२ ।

**सुरतुङ्गः** । पुं । सुरपुन्नागवृक्षे । সুরপুনাং গাছ । रा.नि.व.१० ।

**सुरत्नम्** । क्ली । स्वर्णे । माणिक्ये । वै.निघ. ।

**सुरथकर्णिका** । स्त्री । पुन्नागवृक्षे । পুনাং গাছ । वै.निघ. ।

**सुरदारु** । क्ली । देवदारुणि । দেবদারু । रा.नि.व.१२ । सरलदेवदारौ । वै.निघ. ।

**सुरदुन्दुभी** । स्त्री । तुलसीवृक्षे । रा.नि.व.१० ।

**सुरद्रुमः** । पुं । देवदारुवृक्षे । सं.बा.व्या.चि. रसोनपाके । देवनाले । বড় নল গাছ । रा.नि.व.८ । विकङ्कतवृक्षे । বঁইচী গাছ । वै.निघ. ।

**सुरधूपः** । पुं । राले । ধুনো । रा.नि.व.१२ ।

**सुरनालः** । पुं । देवनाले । বড় নল । रा.नि.व.८ ।

**सुरनिर्गन्धम्** । क्ली । पत्रके । তেজপাতা । रा.नि.व.६ ।

**सुरपत्री (र्णम्)** । स्त्री, क्ली । सुगन्धपत्रशाकविशेषे । माटीपत्री इति ख्यातम् । পানমৌরী, ফুলান্ তুলসী । मं सुरपर्णि । कं मश्विपत्रे । गुणाः— कटूष्णं क्रिमिश्वासवलासघ्नं दीपनं वातकफघ्नं वर्ण्यकरं बालहितञ्च । रा.नि.व.१० ।

**सुरपर्णिकः** । पुं । सुरपुन्नागवृक्षे । रा.नि.व.१० । पुन्नागवृक्षे । वै.निघ. ।

**सुरपर्णी** । स्त्री । सुरपुन्नागे । रा.नि.व.१० । पलाशीलतायाम् । रा.नि.व.३ । [त्रिप्र. ।

**सुरपादपः** । पुं । कल्पवृक्षे । देवदारौ । भू-

**सुरपुन्नागः** । पुं । स्वनामख्यातवृक्षे । পুন্নাগবিশেষ । मं सुरपन्ना । कं सुरवन्ने । गुणाः—पुन्नागसमाः । रा.नि.व.१० । सप्तपर्णवृक्षे । ছাতিম গাছ । प.मु. ।

**सुरपुष्पी** । स्त्री । अजगन्धायाम् । রাঙ্গুনী । रा.नि.व.४ । [গাছ । रा.नि.व.१० ।

**सुरप्रियः** । पुं । अगस्तिपुष्पवृक्षे । বক ফুলের

**सुरप्रिया** । स्त्री । सुवर्णकदलीवृक्षे । চাঁপা কলার গাছ । रा.नि.व.११ । पीतजात्याम् । পীতপুষ্প চামিলি । वै.निघ ।

**सुरभिः** । पुं । सुगन्धे । अम. । রালি । ধুনো । रा.नि.व.१२ । वै.निघ.कास.चि.कु...त्यादिकषाये । गन्धशाली । সুগন্ধ ধান্য । ...नि.व.१६ । चम्पकवृक्षे । চাঁপা গাছ । बकुलवृक्षे । বকুল গাছ । रा.नि.व.१० । कदम्बवृक्षे । কদম গাছ । रा.नि.व.९ । जातीफलवृक्षे । জায়ফলের গাছ । मे. । शमीवृक्षे । শাঁই গাছ । सुगन्धतृणे । গন্ধতৃণ । रा.नि.व.८ । कणगुग्गुलौ । रा.नि.व.१२ । गन्धफले । श.र. । वसन्तकाले । हारा. । क्ली । स्वर्णे । गन्धपाषाणे । গন্ধক । श.र. । वर्व्वरचन्दने । रा.नि.व.१२ । स्त्री । मुरानामगन्धद्रव्ये । মুরামাংসী । रा.नि.व.१२ । तुलसीवृक्षे । पाचीनामसुगन्धपत्रे । मं पाचि । कं पच्चे । সুগন্ধ পত্রবিশেষ । गङ्गापत्र्याम् । সুগন্ধ পত্র । रा.नि.व.१० । शमीवृक्षे । শাঁই গাছ । रा.नि.व.८ । शल्लकीवृक्षे । यस्य निर्यासः शिलारस इत्युच्यते ।

रा.नि.व.११। च.द.खदिरवग्याम्। गवि। मी.। वनमल्लिकायां। एलबालुके। रुद्रजटायाम्। रा. नि.व.३। महाभरीवचायाम्। भा.म.क्षुद्रकी.चि. कुङ्कुमाद्यतैले। "सर्षपाः सुरभिर्वचा।"

**सुरभिका।** स्त्री। स्वर्णकदल्याम्। চাঁপা ক- লা। रा.नि.व.११।

**सुरभिकान्ता।** स्त्री। वासन्तीपुष्पवृक्षे। বাসন্তীফুলের গাছ। वै.निघ.।

**सुरभिगन्धम्।** क्ली। पत्रे। তেজপত্র। रा. नि.व.६। स्त्री (न्धा)। जातीपुष्पवृक्षे। जाती- ফুল বা চামিলি গাছ। रा.नि.व.१०।

**सुरभिच्छदः।** पुं। कपित्थवृक्षे। কৎবেল। वै.निघ.। [रा नि.व.२२।

**सुरभित्रिफला।** स्त्री। सुगन्धित्रिफलायाम्।

**सुरभित्वक्।** स्त्री। सूक्ष्मैलायाम्। ছোট এ- লাচ। रा.नि.व.६। [रा.नि.व.१२।

**सुरभिदारुः (कः)।** पुं। सरलदेवदारुवृक्षे।

**सुरभिनिम्बुः।** पुं। (Murraya konigii. Syn. Bergera konigii.) सुगन्धनि म्बुकभेदे। वरसुङ्गा। हिं हरिरि, कट्निम्। मं. काढ़िनिम्बु। तें करिवेपचेट्टु। ता. करुवेम्बु। Watts.

**सुरभिपत्रा।** स्त्री। राजजम्बूवृक्षे। বড় জাম বা গোলাপ জাম। रा.नि.व.११।

**सुरभिमञ्जरी।** स्त्री। श्वेततुलस्यां। वै.निघ.।

**सुरभिवल्कलम्।** क्ली। गुड़त्वचि। দারু- চিনি। श.र.। भैष.मु.रो.चि.वृहत्खदिरवटी।

**सुरभिशाकः।** पुं। सुगन्धशाकभेदे। रा.नि व.१०। [प.मु.। रा.नि.व.११।

**सुरभिस्रवा।** स्त्री। शल्लकीवृक्षे, शालभेदे।

**सुरभी।** स्त्री। शल्लकीवृक्षे। श.च.। सुगन्धे। च.टी.भ.। शुकशिम्बायाम्। আলাকুশী। च.सू. ५अ.अणुतैले। तुलसीभेदे। বাবুই তুলসী। प. मु.। मार्चिकाशाके। পুদিনা শাক। रुद्रजटा यां। सुगन्धशालिधान्ये। मुरायां। মুরামাংসী। एलबालुके। रास्नायां। वै.निघ.। नवमल्लिकायां। रा.नि.व.१०।

**सुरभीजल(मूत्र)म्।** क्ली। गोमूत्रे। গাভি- র মূত্র। गुणाः—"सौरभेयकमूत्रन्तु घनं सान्द्रं प्रशस्यते। तत्र तु हंसवर्णहीनानां किञ्चिन्न्यूनतरं मत- म्॥" चभि.टम.। भैष.शूलचि.शर्करालौहे।

**सुरभीरसा।** स्त्री। शल्लकीवृक्षे। च.टी.भ.।

**सुरभूरुहः।** पुं। देवदारुवृक्षे। তার্পিনগাছ। भा.। [पीतचन्दने। रा.नि.व.१२।

**सुरमृत्तिका।** स्त्री। सौराष्ट्रमृत्तिकायां। गौ-

**सुरमेदसमुद्भवा।** स्त्री। महामेदायां। वै. निघ.।

**सुरमेदा।** स्त्री। महामेदायाम्। रा.नि.व.५।

**सुरराजः।** पुं। वैक्रान्तमणौ। वै.निघ.।

**सुरराजवस्तिः।** पुं। इन्द्रवस्तौ। পায়ের ডিম। सु.चि.१८अ.।

**सुरलता।** स्त्री। महाज्योतिष्मतीलतायाम्। লতাফট্কী। रा.नि.व.३।

**सुरवल्लभा।** स्त्री। श्वेतदूर्व्वायां। रा.नि.व.८।

**सुरवल्ली।** स्त्री। तुलसीवृक्षे। रा.नि.व.१०। ज्वरकुञ्जरपारीन्द्ररसे।

**सुरवारुणी।** स्त्री। इन्द्रवारुणीलतायाम्। রাখালশশা। वै.निघ.।

**सुरवृक्षः।** पुं। देवदारुवृक्षे। वै.निघ.।

**सुरशाखी (इन्)।** पुं। कल्पवृक्षे। जटा.।

**सुरश्रेष्ठः।** पुं। श्वेतकरवीरे। वै.निघ.। स्त्री (ष्ठा)। ब्राह्मीशाके। रा.नि.व.५।

**सुरसम्।** क्ली। बोले। গন্ধবোল। त्वचि। গুড়ত্বক্। पत्रे। তেজপত্র। रा.नि.व.६। सुग न्धतृणे। গন্ধতৃণ। रा.नि.व.८। तुलस्याम्। मे.। पुं। कणगुग्गुलौ। रा.नि.व.१२। पर्णासे। শ্বেত পুষ্প তুলসীবিশেষ। मे.। गुणाः—"कफानि- लविषश्वासकासदौर्गन्ध्यनाशनः। पित्तकृत्पार्श्वशूलघ्नः सुरसः…… ॥" रस.र.बाल.चि.कुमारकल्याण घृते। च.द.कास.चि.दशमूलाद्यघृते। सुगन्धभू- तृणे। मोचरसे। रा.नि.व.८। सिन्धुवारवृक्षे। নিশুন্দ গাছ। श.र.। च.द.आम.वा.चि.।

**सुरसमिध्।** स्त्री। देवकाष्ठे। দেবদারু। चि.क्र.क.१स्तवकः।

**सुरसम्भवा ।** स्त्री । आदित्यभक्तायाम् । हुड़हुड़े । रा.नि.व.४ ।

**सुरसयुगम् ।** क्ली । गौरकृष्णतुलसीद्वये । वा.सू.१५अ. । "सुरसयुगफणिज्झकम् ।"

**सुरसर्षपः (कः) ।** पुं । देवशिरीषवृक्षे । कैंटाशिरीष । रा.नि.व.६ ।

**सुरसा ।** स्त्री । रक्ततुलस्याम्, पर्णासभेदे । अ.र. । च.द.श्ली.चि. । कृष्णपुष्पतुलस्याम् । काल तुलसी । गुणाः—कफघ्नी लघुः रूक्षा स्निग्धोष्णा पित्तला कटुपाकरसा च । सु.सू.३८।४६अ । "सुरसा श्वेतसुरसा ।" सु.सू.३९अ.शिरोविरेचने । च.सू.४अ. । सू.२अ. । श्वेतयूथिकायाम् । श्वेत जुई । नाकुलीकन्दे । सर्पगन्धा । श्वेतनिहतायां । श्वेत तेउड़ी । ब्रह्मकोषवे । वै.निघ. । निर्गुण्ड्याम् । ईञ्जुर । रस.चि.८अ.स्वच्छन्दभैरवरसे । रास्नायां । रा.नि.व.६ । सु.सू.३८अ. । ब्राह्मीशाके । र.मा. । प्रयोगा रसराजेन्द्ररसे । मिश्रेया-ख्यक्षुपे । मौरी । महाशतावर्य्यां । रा.नि.व.४ । बृहत्याम् । कण्टकारिकायां । पुनर्नवायां । श.च. ।

**सुरसाग्रम् ।** क्ली । सिन्धुवारमञ्जर्य्यां । निशिन्दा मञ्जरी । च.द.विष.चि. ।

**सुरसाग्रणी ।** स्त्री । श्वेततुलस्यां । वै.निघ. ।

**सुरसादिवर्गः ।** पुं । सुरसयुग्म-फणिज्झका-लमाला-विड़ङ्ग-खरबुसवृषपर्णी कटफल-कासमर्द-चवक-सुरसी-भार्गी कासुका काकमाची-कुलहल-विषमुष्टिभूस्तृणभूतकेशीषु । गणोऽयं श्लेष्मभेदः क्रमिघ्नः प्रतिश्यायारुचिश्वासकासघ्नः व्रणशोधनश्च । श्वेत तुलसी, कृष्ण तुलसी, मुरुवक तुलसी, बाबुई तुलसी, विड़ङ्ग, वन बाबुई, इन्दुरकाणी, कट्फल, कासमर्द्द, हेंचेता, श्वेत निर्गुण्डी, वामनहाटी, अतिमुक्तलता, कोकशिमा, घोड़ानिम, गन्धतृण, नील निशिन्दा । वा.सू.१५अ. । अन्यः—सुरसा श्वेतसुरसाफणिज्झकार्ज्जकभूस्तृणसुगन्धकसुमुखकालमालकासमर्द्दचवकखरपुष्पाविड़ङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरकर्णिकाफञ्जीप्राचीबलकाकमाची विषमुष्टिश्च । श्वेत तुलसी, कृष्ण तुलसी, गन्धपलाश, बाबुई तुलसी, गन्धतृण, वृहत् गन्धतृण, राईसरिषा, बाबुई, वन बाबुई, कासमर्द्द, हेंचेता, विड़ङ्ग, कटफल, श्वेत निशिन्दा, नील निशिन्दा, कुकशिमा, इन्दुरकाणी, वामनहाटी, केउयाठुँटी, काकमाची, घोड़ानिम । सु.सू.३८अ. ।

**सुरसाष्टः ।** पुं । तरुवर्गभेदे । यथा—"निर्गुण्डी तुलसी ब्राह्मी बृहती कण्टकारिका । पुनर्नवेति…… ॥" श.च. ।

**सुरसी ।** स्त्री । श्वेतनिर्गुण्ड्याम् । श्वेत निशिन्दा । कपित्थपत्रसदृशपत्रा, विल्वनाक्षीति लोके । सु.सू.३८अ.सुरसादिः ।

**सुरसुन्दरीगुड़िका ।** स्त्री । रसायनाधिकारे औषधम् । पाठः—"अभ्रकं माक्षिकं वज्रं कान्तं हेम समं समम् । सर्व्वाणि समभागानि सूतयुक्तानि कारयेत् । नीलकञ्च ततः कृत्वा पक्कं निचुलवारिणा । ततस्तं पुटपाकेन सम्भाव्यिता प्रयत्नतः । वाह्ये चास्यापि लिप्ता च वर्त्तीया गुड़िकोत्तमा । समभयेच्च ततस्तद्वात विषरोगांश्च नाशयेत् ।…… ॥" रस.र. ।

**सुरा ।** स्त्री । चषके । मे. । मद्यसामान्ये । रा.नि.व.१४ । परिपक्वान्नसन्धानजातसुरायां । यथा—"परिपक्वान्नसन्धानसमुद्भूता सुरा मता ।" तोड़. । सा पिष्टकिण्वकल्केन किञ्चित्कलुषा लोहितवर्णा बुद्धिलोपकरत्वात् मदकारिणी च । गुणाः—"कषाया मधुरा चाम्ला सुरा सन्दीपनी मता । कासार्शोग्रहणीस्तन्यमूत्रघ्नी [illegible]नाशिनी ॥" अत्रि.१९अ. । सामान्यतः—" [illegible]र्शोग्रहणीदोषमूत्राघातानिलापहा । स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥" सु.सू.४६अ. । सुराविशेषगुणाः—"कृशानां रक्तमूत्राणां ग्रहण्यर्शोविकारिणां । सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च ॥" श्वेतसुरागुणाः— [illegible] । श्वेतमूत्रकरा स्तन्यरक्तमांसकरी सुरा । छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दिनी ॥" राज.३प. ।

**सुराकरः ।** पुं । नारिकेलवृक्षे । शब्दकल्प. ।

**सुराकिट्टम् ।** क्ली । सुराबीजे । मदेर गेजा । भा.म.४भ. । [निघ. ।

**सुरागा ।** स्त्री । मनःशिलायां । मनछाल । वै.

**सुराजः ।** पुं । गोधूमे । गम । वै.निघ. ।

**सुराजकः** । पुं । भृङ्गराजे । भीमराज । श. मा. । [र. ।

**सुरापानम्** । क्ली । मद्यपाने । मददंशे । श.

**सुराभागः (मण्डः)** । पुं । सुराया अग्रभागे । मदेर मेठा । श.च. । अम । भैष.शूल.चि. ।

**सुरामेहः** । पुं । प्रमेहविशेषे, यत्र रोगी सुरासदृशं मेहति । सु.नि.६अ. ।

**सुरार्हम्** । क्ली । हरिचन्दने । रा.नि.व.१२ । कुङ्कुमागुरुचन्दने । वै.निघ. । स्वर्णे । शब्दकल्प: ।

**सुरार्हः (कः)** । पुं । वर्वरके । काल बाबुई । रा.नि.व.१० । वैजयन्तीतुलस्यां । वै.निघ. ।

**सुरालः** । पुं । श्रेष्ठसर्जरसे । भाल धूनो । वा.सू.१५अ.विरेचने । [मनसा । वै.निघ. ।

**सुरालिका** । स्त्री । सातलायां । ठेकाँटा

**सुरावीजम्** । क्ली । सुराकिण्वे पक्वसारमेदके । मदेर मेठा । शार्ङ्ग. । "सुरावीजञ्च किण्वकम् ।" बीजाम्भसि । जगलस्तुरा ।

**सुराष्ट्रजम्** । क्ली । सौराष्ट्रमृत्तिकायां । भा. । पुं । कृष्णमुद्गे । कालमुग । रा.नि.व.१६ । प.मु. । स्त्री । सौराष्ट्रमृत्तिकायां । पङ्कपर्पटी । रा.नि. व.१३ । सु.सू.३६अ. । सु.चि.१७अ. । च.द. यक्ष्मचि.एलादिमन्थे । चि.क्र.क.१म.स्तवके । रक्तकुलत्थे । नीलकुरति कलाई । गोपीचन्दने । तिलकमाटी । वै.निघ. ।

**सुरासवः** । पुं । आसवविशेषे । गुणाः—"तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् । मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥" सु.सू. ४५अ. । "सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।" च.सू.२७अ. ।

**सुराह्वः (यः)** । पुं । देवदारुवृक्षे । र.मा. । भा.म.१भ.सन्धिकज्व.चि. । "सुराह्वघननागराः ।" च.सू.३अ.प्रदेहे । च.द.व्र.शो.चि. । मरुवकवृक्षे । गन्धतुलसी । रा.नि.व.१० । हरिद्रुवृक्षे । रा.नि. व.६ । [श.मा. ।

**सुरुङ्गः** । पुं । शोभाञ्जनवृक्षे । सजिना गाछ ।

**सुरुद्रिः** । स्त्री । भारतवर्षीयनदीविशेषे । तज्जलगुणाः—शीतलं स्वादु लघु सर्व्वरोगघ्नं निर्म्मलं दीपनं पाचनं बलबुद्धिमेधायुष्करञ्च । पिपासास्रिस्तज्जलगुणा अपि एवं । रा.नि.व.१४ ।

**सुरूपम्** । क्ली । तूलकाष्ठे । पुं । पारिषाश्वत्थे । पलाशपिपुल । रा.नि.व.६ । स्त्री (पा) । शालपर्ण्याम् । रा.नि.व.४ । भार्ग्याम् । बामनहाटी । रा.नि.व.६ । वनमल्लिकायां । काठमल्लिका । वार्षिकीमल्लिकायाम् । बेल फुल । रा.नि.व.१० । See वार्षिका ।

**सुरूहकः** । पुं । गर्द्दभाश्वे । हे.च. ।

**सुरेज्या (ष्टा)** स्त्री । तुलसीवृक्षे । रा.नि.व. १० । (ष्टा) ब्राह्मीशाकक्षुपे । रा.नि.व.५ ।

**सुरेन्द्रः (कः,कन्दः)** । पुं । कटुसूरणविशेषे । बागा ओल । वै.निघ. ।

**सुरेन्द्रगोपः** । पुं । इन्द्रगोपकीटे । आषाढ़े पोका । मा.नि.सद्योव्रणे ।

**सुरेन्द्र(श्र)लुप्तम्** । क्ली । शिरःकीटभेदे । टाकपोका । च.द.भग.चि. । च.सू.३अ. ।

**सुरेन्द्रा** । स्त्री । इन्द्रवारुण्यां । । वै.निघ. ।

**सुरेभम्** । क्ली । वङ्गे । राङ । त्रिका. ।

**सुरेवटः** । पुं । (Areca grasilis or triaunda.) पूगवृक्षविशेषे, रामपूगे । त्रिका. ।

**सुरेश्वरी** । स्त्री । निर्गुण्ड्याम् । निशिन्दा । च. द.स्त्री.चि. ।

**सुरेष्टः (कः)** । पुं । श्वेतरक्तवकवृक्षे । सादा लाल बक वृक्ष । रा.नि.व.५ । सुरपुन्नागवृक्षे । रा.नि..व.१० । सर्जवृक्षे । शालगाछ । रा.नि.व. ६ ।

**सुरोत्तरः** । पुं । चन्दनवृक्षे । श.र. ।

**सुरोद्भवम्** । क्ली । पद्मकाष्ठे । वै.निघ. ।

**सुरोहिषम्** । क्ली । सुगन्धरोहिषतृणे । बड़ गन्धतृण । वै.निघ. ।

**सुलङ्घनम्** । क्ली । सुष्ठुलङ्घने । खूब उपोस । लक्षणं—"सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम् । प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम् ॥" सु. ।

**सुलभा** । स्त्री । माषपर्णीलतायाम् । मासानी । रा.नि.व.३ । धूम्रपत्रायाम् । गंधानीति महाराष्ट्रे ।

**सुवर्णदुग्धी** । स्त्री । स्वर्णक्षीरिणीनामक्षुपे । সোণাথিরুই । रा.नि.व.५ ।

**सुवर्णनकुली** । स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাফট্‌কী । रा.नि.व.३ ।

**सुवर्णपुष्पः** । पुं । राजतरुणीपुष्पवृक्षे । रा.नि.व.१० ।

**सुवर्णप्रसवम्** । क्ली । एलवालुके । वै.निघ. ।

**सुवर्णमापकः** । पुं । मध्यमद्वादशधान्यमाने । सु.चि.३१अ. । [नि.व.१३ ।

**सुवर्णमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । रा.

**सुवर्णमित्रम्** । क्ली । टङ्कणक्षारे । সোহাগা। वै निघ. । [কলার গাছ । वै.निघ. ।

**सुवर्णमोचा** । स्त्री । सुवर्णकदल्याम् । চাঁপা-

**सुवर्णयूथिका (थी)** । स्त्री । स्वर्णयूथिकायाम् । পীত যুঁই, স্বর্ণযুঁই । गुणाः—स्वादुः शीतला शर्करा – पित्तदाहतृषाघ्नी नानात्वग्दोषघ्नी च । रा.नि.व.१० ।

**सुवर्णरम्भा** । स्त्री । सुवर्णकदलीवृक्षे । চাঁপা-কলার গাছ । रा.नि.व.११ ।

**सुवर्णवर्णा (र्णी)** । स्त्री । हरिद्रायाम् । अ.च. । कपर्दकभेदे । रा.नि.व.१३ । (र्णी) जीवन्त्याम् । प.सु. ।

**सुवर्णसंभ्रम्** । क्ली । सुवर्णकर्षे । (लीलावती)।

**सुवर्णसिन्दूरम्** । क्ली । See स्वर्णसिन्दूरं । र.सा.सं. ।

**सुवर्णक्षीरिणी (री)** । स्त्री । स्वर्णक्षीर्याम् । चनलासदृशपत्रा हिमावलीति लोके । সোণাথিরুই । मं पिसौरामेदु, चिक्कणिकेयमेदु । रा.नि.व.५ । कङ्कुष्ठे । सु.सू.३८अ.श्यामादिवर्गः, ३८अ. अधःसं. । वृक्षविशेषे । শেয়ালকাঁটা । यस्य क्षीरं सुवर्णवर्णं चक्षुष्यं व्रणघ्नञ्च । कश्चित् ।

**सुवर्णा (र्णी)** । स्त्री । हरिद्रायाम् । रा.नि.व.६ । कणगुग्गुलौ । इन्द्रवारुण्यां । রাখালশশা । रा.नि.व.२३ । कृष्णागुरुणि । কাল অগুরু । मे. । वाट्यालके । বেলেড়া । अ.च. । सुवर्णक्षीर्यां । শেয়ালকাঁটা । रा.नि.व.५ । (र्णी) आखुकर्ण्याम् । ইন্দুরকাণী । रा.नि.व.३ ।

**सुवर्णाख्यः** । पुं । नागकेशरवृक्षे । र.मा. ।

**सुवर्णाभः** । पुं । राजावर्त्तमणौ । वै.निघ. ।

**सुवर्णारः** । पुं । काञ्चनारवृक्षे । রক্ত কাঞ্চন গাছ । रा.नि.व.१० ।

**सुवर्णाह्वा** । स्त्री । स्वर्णयूथिकायां । वै.निघ. ।

**सुवर्णिका** । स्त्री स्वर्णजीवन्त्याम् । रा.नि.व.३ । [निघ. ।

**सुवर्त्तुलम्** । क्ली । तरम्बुजे । তরমুজ । वै.

**सुवर्षा** । स्त्री । मल्लिकापुष्पवृक्षे । वै.निघ. ।

**सुवल्लिः (ल्ली)** । स्त्री । सोमराज्याम् । সোমরাজ । अ.टी.भ. । रा.नि.व.४ । पुत्रदात्रीलतायां । कटुकवल्ल्याम् । কট্‌কী । रा.नि.व.३ ।

**सुवल्लिका** स्त्री । जतुकालतायाम् । मालवे ख्याता । रा.नि.व.३ । सोमराज्याम् । रा.नि.व.४ ।

**सुवल्लिजः** । पुं । प्रबाले । পলা । वै.निघ. ।

**सुवसन्ता** । स्त्री । माधवीलतायाम् । মাধবী লতা । श्वेतजात्याम् । শুক্ল জাতী । वै.निघ. ।

**सुवहा** । स्त्री । शेफालिकावृक्षे । শিউলী গাছ । प.सु. । रा.नि.व.४ । हंसपादीलतायाम् । গোয়ালিয়া লতা । रा.नि.व.५ । सु.चि.२अ. । सल्लकीवृक्षे । শালভেদ । रा.नि.व.११ । जीरके । वै.निघ. । गन्धनाकुल्याम् । রাস্নাবিশেষ । रा. नि.व.७ । सु.चि.१७अ. । रुद्रजटायां । रा.नि. व.३ । तालमूल्याम् । रा.नि.व.७ । एलापर्ण्यां । मे. । नीलसिन्धुवारे । নীলনিশিন্দা । रा.नि.व. ४ । त्रिवृतायाम् । তেউড়ী । प.सु. । च.सू.४अ. । गन्धरास्नायाम् । भा.म.१भ.सन्निकज्व.चि. । "सुवहा मुण्डाग्नता: ।" रास्नायाम् । अम । च.सू.४अ. । वि.७अ. । [श्वे ।

**सुवासः** । पुं । कदम्बवृक्षे । वै.निघ. । सुक्षुग-

**सुवासरा** । स्त्री । चन्द्रशूरे । তোকমারী । भा. । [चिरूभट्यां । अम. ।

**सुवासिनी** । स्त्री । पितृभवनस्थायां नार्य्यां,

**सुविदः** । पुं । तिलकवृक्षे । वै.निघ. । [द ।

**सुविष्टरा** । स्त्री । गुण्डासिनीतृणे । रा.नि.व.

**सुवीजः** । पुं । बदरवृक्षे । কুল গাছ । खस्ख-

म्रे । বেণা । रा.नि.व.११ । क्ली । सुन्दरवीजे ।

**सुवीरः (कः) (र्य्यः)** । पुं । एकवीरवृचे । रा.नि.व.८ । बदरीवृचे । वै.निघ । क्ली (कम्) । सौवीराञ्जने । र.मा. । बदरे । कृष्णाञ्जने । वै. निघ. । (र्य्यम्) बदरीफले । जटा. ।

**सुवीराम्लम्** । क्ली । सौवीराम्ले । কাঁজিবিশেষ । रा.नि.व.१५ । काञ्जिके । কাঁজি । जटा. ।

**सुवीर्य्या** । स्त्री । वनकार्पास्याम् । বন কাপাসী । श.र. । महाशतावर्य्याम् । বড় শতমূলী । वै.निघ. । नाड़ीहिङ्गौ । रा.नि.व.६ ।

**सुवृत्तः** । पुं । शूरणकन्दे । ওল । रा.नि.व.७ । मरिचे । वै.निघ. । स्त्री (त्ता) । शतपत्र्याम् । সেউতী । काकोलीद्राचायां । रा.नि.व.१०।११।

**सुवेगा** । स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাফট্‌কী । रा.नि.व.३ ।

**सुवेशः** । पुं । श्वेतेचौ । रा.नि.व.१४ ।

**सुव्रतः** । पुं । अगस्तिवृचे । বকফুলের গাছ । रा.नि.व.१० । श्वेतार्के । শ্বেত আকন্দ । वै. निघ. । स्त्री (ता) । गन्धपलाश्याम् । काश्मीरे प्रसिद्धा । गन्धशटी । भा.म.१भ.ज्व.चि.विश्वादियोगे । "ब्राह्मी वचा सुव्रता ।" सुखदोह्यायां गवि । अम. । [प.मु. ।

**सुशक्या** । स्त्री । शुकनासायाम् । শুয়াঠোঁটী ।

**सुशल्यः** । पुं । खदिरवृचे । रा.नि.व.८ ।

**सुश(ष,स)वी** । स्त्री । [भ.टी.भ.(षवी), भ. टी.रा.(सवी)] कृष्णजीरके । कारवेल्ले, पानीय वल्ल्याम् । উচ্ছে । अम. । च.द.योनिरो.चि. । सु.सू.३८भ. । वा.सू.१५भ.आरग्वधादिः । "सुषवीफलवाणघोण्टाः ।" सूक्ष्मकृष्णजीरके । प.मु. । करञ्जवृचे । र.मा.सं.ज्वराङ्कुशरसे । स्थूलकृष्णजीरके । रा.नि.व.६ ।

**सुशाकः** । पुं । तण्डुलीयशाकचुपे । কাঁটানটিয়া । रा.नि.व.५ । 'चुञ्चुचुपे । চেঁচকো । भेण्डाचुपे । रा.नि.व.४ । क्ली । आर्द्रके । रा.नि. व.६ । [रा.नि.व.१६ ।

**सुशाल्यकः** । पुं । रक्तशालौ । দাদ্‌খানি ।

**सुशिखा** । स्त्री । मयूरशिखाचुपे । रा.नि.व.५ ।

**सुशीतः** । पुं । ह्रस्वप्लक्षवृचे । ছোট পাকুড় । रा.नि.व.११ । अम्लवेतसे । वै.निघ. । क्ली । हरिचन्दने । प.मु. ।

**सुशीतला** । स्त्री । ह्रस्वचपुषलतायां । ছোট শশা গাছ । भा. । कर्कटिकायां । কাঁকুড় গাছ । वै.निघ. । क्ली । गन्धतृणे । রামকর্পূর । र.मा. । नागदमन्यां । নাকদনা । प.मु. ।

**सुशीता** । स्त्री । शतपत्र्याम् । সেউতি গাছ । रा.नि.व.१० । स्थलपद्मिन्यां । স্থলপদ্ম । वै.निघ. ।

**सुशी(षी)मः** । पुं । शैत्ये । चन्द्रकान्तमणौ । जटा. । हिमे, शीतले । सर्पविशेषे । मे. ।

**सुशीविका** । स्त्री । वाराहीकन्दे । श.च. ।

**सुशुक्ला** । स्त्री । शुक्लजातीपुष्पवृचे । শ্বেত চামিলী । वै.निघ. । [সজিনা গাছ । प.मु. ।

**सुशुभञ्जनः** । पुं । रक्तशोभाञ्जनवृचे । লাল

**सुश्रीका** । स्त्री । सल्लकीवृचे । रा.नि.व.११ ।

**सुश्रुतः** । पुं । विश्वामित्रसुते धन्वन्तरिशिष्ये संहिताकारकऋषिभेदे । यः गुरुमुखादुपश्रुत्य स्वनाम्ना तन्त्रं सुश्रुतं चकार । तत्प्रादुर्भावः—"विश्वामित्रो मुनिश्रेष्ठः पुत्रं सुश्रुतमायुर्वेदाध्ययनाय काशिराजदिवोदाससमीपं वाराणस्यां प्रेरयामास । स बहुमुनिसुतपरिवृतस्तमुपस्थाय एवं स्वागमनकारणमुक्तवान्—'भगवन्मानवान् दृष्ट्वा व्याधिभिः परिपीड़ितान् । क्रन्दतो म्रियमाणांश्च [illegible]स्माकं हृदि व्यथा । आमयानां शमोपायं [illegible]तुं वयमागताः । आयुर्वेदं भवान् अस्मानध्यापयतु यत्नतः ।' अङ्गीकृत्य वचस्तेषां नृपतिस्तानुपादिशत् । व्याख्यातस्तेन ते यत्नाज्जगृहुर्मुनयो मुदा । काशिराजं जयाशीर्भिरभिनन्द्य मुदान्विताः । सुश्रुताद्याः सुसिद्धार्थाः जग्मुर्गेहं स्वकं स्वकम् । प्रथमं सुश्रुतस्तेषु स्वतन्त्रं कृतवान् स्फुटम् । सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि तेनिरे । सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः । तस्मात्तत् सुश्रुतं नाम्ना विख्यातं चितिमण्डले ॥" भा. ।

**सुश्वेतम्** । क्ली । खण्डे । খাঁড় । भा. । स्त्री (ता) । श्वेतकण्टकार्य्याम् । वै.निघ. ।

**सुषिः** । पुं । छिद्रे । भ.टी.भ. ।

**सुषिरम्** । क्ली । लवङ्गे । शीतलजले । कुष्ठौषधे । কুড় । वै.निघ. । स्त्री (रा) । नलुकायां । নালুকা । रन्ध्रवंशे । वै.निघ. ।

**सुषिराख्यः** । पुं । रन्ध्रवंशे । रा.नि.व.७ ।

**सुषुप्तिः** । स्त्री । सत्वप्रधाने अज्ञाने, आनन्दमयकोशे । वेदान्तः ।

**सुषुम्ना** । स्त्री । शरीरान्तर्नाड़ीविशेषे । सा तु मेरुदण्डवाह्ये ईड़ापिङ्गलानामनाड्योर्मध्यस्थनाड़ीभेदः । तन्त्रम् ।

**सुषेणः** । पुं । करमर्दवृक्षे । अम. । वेतसलतायाम् । रा.नि.व.८ । स्वनामख्यातवैद्यकग्रन्थकारविशेषे । [ड़ी । रा.नि.व.६ ।

**सुषेणा (णी)** । स्त्री । त्रिवृतायाम् । তেউ-

**सुषेणिका** । स्त्री । कृष्णत्रिवृतायां । अम. ।

**सुष्टुगन्धा** । स्त्री । मदिरायां । वै.निघ. ।

**सुसंस्कृतः** । त्रि । सुपक्के । अम. ।

**सुसन्धिजा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । वै.निघ. ।

**सुसर्पणः** । पुं । पारदे । रस.कौ. ।

**सुसारः** । पुं । रक्तखदिरवृक्षे । रा.नि.व.८ । इन्द्रनीलमणौ । त्रिका. ।

**सुसारवत्** । क्ली । स्फटिके । त्रिका. ।

**सुसिकता** । स्त्री । सुशर्करायां । रा.नि.व.१४

**सुसिरः** । पुं । दन्तमूलगतरोगविशेषे । लक्षणं —"श्वयथुर्दन्तमूलेषु रुजावान् पित्तरक्तजः । लालास्रावी स सुसिरः दन्तमांसप्रशातनः ॥" वा.उ. २१अ. । [निघ. ।

**सुसीता** । स्त्री । शतपत्र्यां । সেউতী । वै.

**सुस्तनी** । स्त्री । हृष्टार्त्तवायां कन्यायाम् । रा.नि.व.१८ । [श.च. ।

**सुस्थता** । स्त्री । स्वास्थ्ये । सुखे । आरोग्ये ।

**सुस्थितः** । पुं । अश्वस्य तन्नामकग्रहे । लक्षणं —"द्वेषते सततं यस्तु पश्चादात्मानमीक्षते । सुसंस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥" ज.द. ५७अ. ।

**सुस्ना** । स्त्री । शिम्बीधान्यविशेषे । থেঁসারী । गुणाः—दुर्जरा रूक्षा कषाया विशदा गुरुश्च । रा.नि.व.१६ ।

**सुस्वनः** । पुं । शङ्खे । শাঁক । वै.निघ. ।

**सुस्वरा** । स्त्री । ब्राह्मीशाके । प.मु. ।

**सुहिता** । स्त्री । रुद्रजटायां । रा.नि.व.३ ।

**सुहृत्त्राणा** । स्त्री । त्रायमाणालतायां । वै.निघ. ।

**सूकः** । पुं । उत्पले । वाते । मे. । [जटा. ।

**सूकरः** । पुं । शूकरे । श.र. । हरिणविशेषे ।

**सूकरकन्दः** । पुं । वाराहीकन्दे । रा.नि.व.७ ।

**सूकरपादिका (दी)** । स्त्री । कृष्णशिम्बीलतायाम्, कपिकच्छ्वां । আলাকুশী । वै.निघ. ।

**सूकराह्वयः** । पुं,क्ली । ग्रन्थिपर्णवृक्षे । গেঁঠেলা । वै.निघ. ।

**सूकरी** । स्त्री । वराहक्रान्तायां । বরাক্রান্তা । श.मा. । वाराहीनामकन्दशाके । रा.नि.व.७ । वै.निघ.रभ.उन्मा.चि.महापैशाचघृते ।

**सूक्ता** । स्त्री । शारिकापक्षिण्याम् । त्रिका. ।

**सूचः** । पुं । कुशाङ्कुरे । शब्दकल्पः ।

**सूचकः** । पुं । सूक्ष्मशालौ । মিহি ধান । रा.नि.व.१६ । कुक्कुरे । सीवनद्रव्ये । সূঁচ । विड़ाले । काके । मे. ।

**सूचिः** । स्त्री । सेवन्यां । अम. ।

**सूचिकपुष्पः (ष्पिका)** । पुं, स्त्री । श्वेतकेतकवृक्षे । শ্বেত কেয়া গাছ । वै.निघ. ।

**सूचिका** । स्त्री । करिशुण्डायाम् । सूच्याम् । शब्दकल्पः ।

**सूचिकाभ(व)रणरसः** । पुं । सन्निपातज्वरे रसः । पाठः—विषमेकपलं रसस्य चत्वारो माषाः द्वयं, मिलित्वा चूर्णीकृत्य काचशरावद्वयमध्ये अथवा मृत्तिकाशरावद्वयमध्ये संस्थाप्य मुद्रिकां कृत्वा मृदादिना संलिप्य शोषयित्वा प्रहरद्वयं यावत् मन्दाग्निना ज्वालयेत् । কাঠবিষ ১ প. পারা ৪ মা. একত্র মাড়িয়া কাচশরাবেই হউক আর মৃত্তিকাশরাবেই হইক, ঐ শরাবদ্বয় মধ্যে স্থাপনপূর্ব্বক লেপিয়া মৃদ্-

आগে পাক করিবে। রা.কৌ.। অস্য:—रस: गन्धक: क्षीमं स्थावरविषं (मूलविषं) जङ्गमविषम् (कृष्णसर्पविषं) एषां प्रत्येकं समभाग:। भावना-द्रव्यं—मत्स्यपित्तं शूकरपित्तं मयूरपित्तं छागपित्तञ्च। परिमाणं सूचिकाग्रमितम्। পারা, গন্ধক, সীসা, কাঠবিষ, কেউটে সাপের বিষ একত্র মাড়িয়া রোহিতপিত্ত, শূকরপিত্ত, ময়ূরপিত্ত এবং ছাগপিত্ত ইহা দ্বারা যথাক্রমে ভাবনা দিবে। र.सा.सं.।......"यावत् सूच्या मुखे लग्नं कृष्णा निर्याति भेषजम्। तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि। क्षुरेण प्रछ्ते मूर्ध्नि तत्राङ्गुल्या च घर्षयेत्। रक्तभेषजसम्पर्कान् मूर्च्छितोऽपि हि जीवति॥" रस.र.। रस.कौ। अस्य:—विषं सर्पविषं दारुमोचं प्र. १ तो. हिङ्गुलं ३ तो. पञ्चपित्तैन एकैकं दिनं भावयित्वा सर्षपमिता वटी कार्य्या। अनु. उष्णाजलम्। भैष.। अयं हृष्टफल:।

**सूचिकामुखम्।** क्ली। शङ्खे। शाँक। हारा.।

**सूचिपत्र: (क:)।** पुं। शितावरक्षुपे। শুশুনি শাক। रा.नि.व.४। भा.पू.१भ.शा.व.। श्वेतेक्षौ। वै.निघ.। [प.मु.।

**सूचिपुष्प:।** पुं। केतकवृक्षे। কেয়া গাছ।

**सूचिमल्लिका।** स्त्री। नवमल्लिकायाम्। रा.नि.व.१०।

**सूचिरोमा (न्)।** पुं। शूकरे। त्रिका.।

**सूचिवदन:।** पुं। मशके। मशा। नकुले। নেউল। रा.नि.व.१९। [रा.नि.व.१६।

**सूचिशालि:।** पुं। सूक्ष्मशाली। মরুধান।

**सूची।** स्त्री। सीवनास्त्रे। सूँच। हिं सूइ। सीवनकार्य्येषु सा त्रिधा भवति, तत्रैका वृत्ता द्व्यङ्गुला अल्पमांसे देशे सन्धौ च नेया। तथा मांसले देशे त्र्यङ्गुला त्र्यस्रा च सूची ग्राह्या। वक्रा सूची मर्म्मफलकोषादिषु ग्राह्या च। सु.सू.२५अ.। शुक्लदर्भे। শ্বেত কুশ। वै.निघ.।

**सूचीदल:।** पुं। शितावरशाकक्षुपे। শুশুনি ঝাড়। रा.नि.व.४।

**सूचीपत्र: (क:)।** पुं। इक्षुविशेषे। गुणा:—वातकर: कफपित्तहर: कषायो विदाही च। सु.सू.४५अ.। सुनिषण्णकशाके। শুশুনি শাক। भा.।

**सूचीपत्रा।** स्त्री। गण्डदूर्व्वायाम्। रा.नि.व.८। केतकीवृक्षे। কেয়া গাছ। रत्नमाला सं.मु. कोद्रव्यनिर्णये।

**सूचीपुष्प:।** पुं। केतकीवृक्षे। र.मा.।

**सूचीमुखम्।** क्ली। हीरके। হীরা। है.च.। विस्रावणार्थे शस्त्रविशेषे। सु.सू.८अ.। भगन्दरभेदविशेषे। सु.चि.८अ.। पुं। सितदर्भे। শ্বেত কুশ। रा.नि.व.८। सौम्यकीटे। सु.कल्प.८अ.।

**सूचीमुखी (वक्त्रा)।** स्त्री। योनिव्यापद्विशेषे। लक्षणम्—"वातलाहारसेविन्यां जनन्यां कुपितोऽनिल:। स्त्रियो योनिमणुद्वारां कुर्य्यात् सूचीमुखीति सा॥" वा.उ.३३अ.।

**सूचीरोमा (न्)।** पुं। शूकरे। त्रिका.।

**सूचीवक्त्र:।** पुं। मृगविशेषे। वै.निघ.।

**सूच्य:।** पुं। स्वल्पगोधूमे। वै.निघ.।

**सूच्यग्र: (स्थूलक:)।** पुं। उलुपतृणे। উলু খড়। र.मा.।

**सूच्यास्य:।** पुं। मूषिके। ইন্দুর। है.च.।

**सूच्याह्व:।** पुं। शितावरीक्षुपे। শুশুনি শাক। रा.नि.व.४।

**सूत: (क:)।** पुं, क्ली। द। अम.। मे.। त्रि। प्रसूते। [निघ.।

**सूतका।** स्त्री। सद्य:प्रसूतायां स्त्रियां। वै.

**सूतकागृहम्।** क्ली। प्रसवगृहे। आँतुर-घर। अ.टी.भ.। अम.। See सूतिकागृहम्।

**सूतक्षोट:।** पुं। रसजारणबीजे, पारदजारणार्थं सिक्थकवद्द्रव्ये, रसपिष्टी। रस.चि.७अ.।

**सूतमातृका।** स्त्री। कुमार्य्याम्। घृतकुमारी। रा.कौ.अभ्रकजारणे।

**सूतराज: (ट्)।** पुं। पारदे। रा.नि.व.१३।

**सूतसूर्य्य:।** पुं। कृकलासे। কাঁকলাস। वै.निघ.।

**सूति:।** स्त्री। उत्पत्तौ। प्रसवे। शब्दकल्प:।

**सूतिका।** स्त्री। सद्य:प्रसूतायां स्त्रियां। वै.

निघ.। शिशोः मातृकायन्त्रविशेषे। या नवमी दिने मासि वर्षे वा शिशुं गृह्णाति। तेन तस्य ज्वरच्छर्दिगात्रभङ्गादि शिशोर्भवति। च.द.बाल. चि.।

**सूतिकागार(गृ[गे]ह)म्** । क्ली। प्रसवगृहे। আঁতুর ঘর। "तत्र गृहं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु विल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासंख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्रागद्वारं दक्षिणद्वारं वाष्टहस्तायतचतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्।" सु.शा.१०अ.।

**सूतिकाभवनम्** । क्ली। सूतिकागारे। हारा.।

**सूतिकारिरसः** । पुं। सूतिकारोगे रसः। पाठः—"रसं गन्धं मृताभ्रञ्च मृतताम्रञ्च तुल्यकम्। चूर्णितं मर्द्दयेद्दग्धलाङ्गिकपर्णीरसेन च। छायाशुष्का गुडी कार्य्या कलायसदृशी ततः॥" পারা, গন্ধক, অভ্র, তামা, সমভাগ; থুলকুড়িরসে মাড়িয়া ছায়াশুষ্ক বটী করিবে। মাত্রা কলায়পরিমাণ। অনুপান আদার রস। रस.कौ.।

**सूतिकारोगः** । स्त्री। प्रसूतेः प्रसवानन्तरं जाते ग्रहण्यादिरोगविशेषे। সূতিকা রোগ, গ্রহণী প্রভৃতি। निदानं—"मिथ्योपचारात् संक्लेशाद्विषमाजीर्णसेवनात्। सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते॥" लक्षणं—"अङ्गमर्द्दो ज्वरः कासः पिपासा गुरुगात्रता। शोथः शूलातिसारौ च सूतिकारोगलक्षणम्॥"

**सूतिकावासः** । पुं। सूतिकागारे। शब्दकल्पे शुद्धितत्त्वम्।

**सूतिकाविनोदरसः** । पुं। सूतिकारोगे रसः। पाठः—"शुण्ठ्या भागो भवेदेको द्वौ भागौ मरिचस्य च। पिप्पल्याश्च त्रिभागः स्यादर्द्धभागश्च रोमकम्। जातीकोषस्य भागौ द्वौ द्वौ भागौ तुत्थकस्य च। सिन्धुवारजलेनैव मर्द्दयेदेकयामतः। मधुना सह भोक्तव्यः सूतिकातङ्कनाशनः॥" শুঁট ১ ভ. মরিচ ২ ভ. পিপুল ৩ ভ. সৈন্ধব ॥০ ভ. জৈত্রী ২ ভ. তুঁতে ২ ভ. একত্র নিশিন্দারসে ১ প্রহর মাড়িবে। भैष.।

**सूतिकाषष्ठी** । स्त्री। सूतिकागारे जातस्य षष्ठदिने पूजनीयदेवीविशेषे। সূতিকা ষষ্ঠী। सूतिकाषष्ठीपूजा विष्णुधर्म्मोत्तरे। "सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता॥"

**सूति(ती)गृहम्** । क्ली। सूतिकाभवने। अ.र.।

**सूति(ती)मासः** । पुं। प्रसवमासे, नवमे दशमे वा मासि। जटा। [च.।

**सूत्परम्** । क्ली। घर्घरशब्दे। सुरासन्धाने। अ.

**सूत्या** । स्त्री। सोमलतारसपाने। भ.।

**सूत्रम्** । क्ली। तन्तौ। সূতা। अम.। शास्त्रादिसूचनग्रन्थे। वैद्यके तच्चतुर्विधं यथा—प्रतिसंस्कर्त्तृसूत्रम् एकीयसूत्रं शिष्यसूत्रं गुरुसूत्रमिति।

**सूत्रकण्ठः** । पुं। नकुले। वनकपोते; पारावते। পায়রা। खञ्जरीटे। খঞ্জন পাখী। मे.।

**सूत्रखण्डमोदकः** । पुं। खण्डलड्डुकविशेषे। वै.निघ.।

**सूत्रपुष्पः** । पुं। कार्पासवृक्षे। त्रिका.।

**सूत्रमध्यभूः** । पुं। यक्षधूपे, कुन्दुरौ। श.च.।

**सूत्रवर्त्तिः** । स्त्री। सूत्रकृतवर्त्त्याम्। সূতার পলতে। भा.म.ना.अ.चि.।

**सूत्राङ्गम्** । क्ली। उत्तमकांस्ये। वै निघ.।

**सूत्री (इन्)** । पुं। काके। त्रिका.।

**सूदः** । पुं। लोध्रवृक्षे। प्रस्थपरिमाणे। এক পালি। त्रिका.। व्यञ्जने। अम.। त्रि। पाचके। अम.। [वै.निघ.।

**सूदजः** । पुं। उपजिह्विकायां। আলজিব।

**सूदशाला** । स्त्री। पाकशालायां। রাঁধুনীঘর। हे.च.।

**सूदाध्यक्षः** । पुं। पाकशालाध्यक्षे, रसवत्यधिकारिवैद्ये। हे.च.। See पाकशाला।

**सूनम्** । क्ली। पुष्पे। प्रसवे। मे.।

**सूना** । स्त्री। अधोजिह्विकायाम्। আলজিব, গলার শুঁড়ি। "तस्याः सूना भवेदधः।" ज.द. २अ.। [কন্দ গাছ। अम.।

**सूनुः** । पुं। सूर्य्ये। पुत्रे। मे.। अर्कवृक्षे। আ

**सूपः** । पुं। व्यञ्जने। তরকারি। भाण्डे। यूषे।

ঝোল। विदलमांसमाषादिपक्वा: सूपाभिधाय-
का:। रा.नि.व.२०। पक्वद्विदलव्यञ्जने। ডাক্তা
ডাল। क्रिया यथा—द्विदलधान्यमपि कर्त्तव्ये त
द्धान्यं कृष्णसर्षपतैलेन उद्वर्त्तनीयं, अथ शुष्कीकृत्य
त्वचा हीनं द्विदलं गृह्णीला सूप: पाच्य:। "यस्य
द्विदलधान्यस्य सूप: कर्त्तव्यतां गत:। तद्धान्यं कृ-
ष्णशिरसतैलेनोद्वर्त्तयेत्तत:। उष्णशुष्कादिविनिष्कास्य
त्वग्धीनां शुद्धदालिकां। शीतोदकेन मन्दाग्नौ
पचेत् सूप: सकाञ्चन:। स लघु: कफपित्तघ्न: का-
सश्वासनिकृन्तन:॥" द्रव्य.गु.। "दाली तु सलिले
सिद्धा लवणार्द्रकहिङ्गुभि:। संयुक्ता सूपनाम्नी
स्यात्······॥" भा.।

**सूपकार:**। पुं। पाचके। রাঁধুনি। तस्य ल-
क्षणं—"इङ्गिताकारतत्त्वज्ञो बलवान् मिष्टपाच-
क:। शूरश्च कठिनश्चैव सूपकार: स उच्यते॥"
नीतिशास्त्रम्।

**सूपधूपनम्**। क्ली। हिङ्गुनि। रा.नि.व.६।

**सूपपर्णी**। स्त्री। मुद्गपर्ण्याम्। মুগানী। रा.
नि.व.३।

**सूपश्रेष्ठ:**। पुं। मुद्गे। মুগ। रा.नि.व.१६।

**सूपाङ्गम्**। क्ली। हिङ्गुनि। रा.नि.व.६।

**सूप्य:**। पुं। शिम्बीधान्ये। দাল, কলায়। भा.
पू.१भ.। स्त्री (प्या)। तुवर्य्याम्। অড়হর। मसूरे।
वै.निघ.।

**सूमम्**। क्ली। चीरे। मे.। जले। श.र.।

**सूर:**। पुं। मसूरे। মুসুরি। रा.नि.व.१६।
अर्कवृक्षे। আকন্দ গাছ। अम.। [व.७।

**सूरकन्द:**। पुं। शूरणकन्दे। ওল। रा.नि.

**सूरण:**। पुं। शूरणे। ওল। श.र.।

**सूरणवटक:**। पुं। शूरणकृतवटके। ওলের
বড়া। यथा—"सूरणं खण्डश: कृत्वा स्वेदयित्वा
च पेशयेत्। तस्मिंश्च लवणं हिङ्गु जीरकं वा म-
रीचकं। निक्षिप्य वटकान् कृत्वा घृते तप्ते च
पाचयेत्। कथिता दीपना: प्रोक्ता वातदुर्नामना-
शना:॥" वै.निघ.।

**सूरसावन:**। पुं। सर्षपे। प.मु.।

**सूरसाधनक:**। पुं। सिन्धुवारवृक्षे। নিশি-
ন্দা গাছ। रा.नि.व.४।

**सूरी**। स्त्री। राजसर्षपे। र.मा.।

**सूर्प:**। पुं। द्रोणद्वयमाने। ६४ श.। "द्रोणाभ्यां
सूर्पकुम्भौ च···।" प.प्र.१ख.। यूषे। वै.निघ.।

**सूर्पपर्णी**। स्त्री। मुद्गपर्णीमाषपर्ण्यो:। মুগা-
নী ও মাষাণী। च.चि.१प.ब्राह्मरसायने। रस.
र.अश्वगन्धाद्यघृते।

**सूर्य्य:**। पुं। ताम्रे। তামা। अर्कवृक्षे। আ-
কন্দ গাছ। मे.। र.सा.सं.अभ्रमारणे। सुवर्णे।
सूर्य्यावर्त्तवृक्षे। হুড়হুড়িয়া। वै.निघ.।

**सूर्य्यकान्त:**। पुं। स्वनामख्यातमणौ, स्फटि-
कमणौ। আতস পাথর। हला.। गुणा:—उ-
ष्णो निर्म्मल: रसायन: वातश्लेष्मघ्न: पवित्रपूजनात्
रवितुष्टिकरश्च। रा.नि.व.१३। पुष्पवृक्षविशेषे।
সূর্য্যমণি ফুল। श.च.।

**सूर्य्यकान्ता (न्ति:)**। स्त्री। आदित्यपर्णी-
नामौषधौ। See आदित्यपर्णी। पुष्पवृक्षविशेषे।
সূর্য্যমণি ফুলের গাছ। श.र.।

**सूर्य्यनामका**। स्त्री। सूर्य्यावर्त्तक्षुपे। হুড়-
হুড়ে। वै.निघ.। पुं। अर्कवृक्षे। আকন্দ গা-
ছ। ज.द.।

**सूर्य्यपत्र:**। पुं। अर्कपत्रवृक्षे। ঈশের মূল।
रा.नि.व.४। सं.व्रणराक्षसतैले। सूर्य्यावर्त्तक्षुपे।
वै.निघ.। [रा.नि.व.२३।

**सूर्य्यपर्णी**। स्त्री। अर्कपत्रायाम्। মাষাণী।

**सूर्य्यपर्य्यायनाम**। क्ली। ताम्रे। वै.निघ.।

**सूर्य्यपाद:**। पुं। सूर्य्यकिरणे। सूर्य्यकान्तमणौ।
निम्बवृक्षे। वै.निघ.। [वै.निघ.।

**सूर्य्यपुष्पक:**। पुं। अर्कवृक्षे। আকন্দ গাছ।

**सूर्य्यप्रिया**। स्त्री। पद्मिन्यां। পদ্মের ঝাড়।
वै.निघ.। [कूलि गाछ। मे.। श.र.।

**सूर्य्यभक्त: (क:)**। पुं। बन्धूकपुष्पवृक्षे। বা-

**सूर्य्यभक्ता**। स्त्री। आदित्यभक्तायां। হুড়হু-
ড়িয়া। भा.म.३ख.अश्म.चि.।

**सूर्य्यमणि:**। पुं। (Hibiscus phoeni-
ceus.) पुष्पवृक्षविशेषे। সূর্য্যমণি ফুলের গাছ।
श.र.। सूर्य्यकान्तमणौ। हे.च.।

**सूर्य्यमुखी** । स्त्री । पुष्पवृक्षविशेषे । সূর্য্যমুখী ফুলের গাছ । भूरिप्र. ।

**सूर्य्यलता** । स्त्री। आदित्यभक्तायां । रा.नि.व.४।

**सूर्य्यवल्लभा** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া । रा.नि.व.४ । पद्मिन्यां । वै.निघ. ।

**सूर्य्यवल्ली** । स्त्री । क्षीरकाकोल्याम् । र.मा. ।

**सूर्य्यवृक्षः** । पुं । अर्कवृक्षे । আকন্দ গাছ । वै.निघ. । अर्कपुष्प्यां । ज.द. ।

**सूर्य्यसंज्ञम्** । क्ली । ताम्रे । कुङ्कुमे । त्रिका. ।

**सूर्य्या** । स्त्री । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ ।

**सूर्य्याख्यः** । पुं । सूर्य्यकान्तमणौ । वै.निघ. ।

**सूर्य्या(प)वर्त्तः** । पुं । आदित्यभक्तायाम् । হুড়হুড়িয়া, শুল্টে । वै.निघ.२भ.भूतज्व.चि. । गजपिप्पल्याम् । प.मु. । तन्नामकशिरोरोगे । लक्षणं—"सूर्य्योदयं वा प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढ़ं । विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च । सर्व्वात्मकं कष्टतमं विकारं सूर्य्यापवर्त्तं तमुदाहरन्ति ॥" मा.नि. ।

**सूर्य्यावर्त्तरसः** । पुं । श्वासाधिकारे रसः । रसः २तो. गन्धकः १ तो. घृतकुमारीरसेन प्रहरं मर्द्दयेत् । पश्चात्तेन कल्केन शुद्धताम्रपत्रं ६ तो. लेपयेत् । ततो वालुकायन्त्रेण तत् ताम्रपत्रं दिनैकं पचेत् । भक्षणं २ र. । अनुपानम्—इन्द्रवारुणीमूलं देवदारु त्रिकटु समभागचूर्णं शर्करासहितं पश्चाद्भक्षयेत् । सा.कौ. । [व.४ ।

**सूर्य्यावर्त्ता** । स्त्री । आदित्यभक्तायां । रा.नि.

**सूर्य्याश्मा** (न्) । पुं । सूर्य्यकान्तमणौ । हे.च.।

**सूर्य्याह्वम्** । क्ली । ताम्रे । त्रिका. ।

**सूर्य्याह्वः** (यः) । पुं। अर्कवृक्षे। रा.नि.व.१०। स्त्री (ह्वा) । महेन्द्रवारुणीलतायां । মাকাল গাছ। वै.निघ. ।

**सूर्य्योदयरसः** । पुं। शिरोरोगाधिकारे रसः । पाठः—"मृतसूताभ्रकं तीक्ष्णं गन्धं ताम्रं मृतं समम् । क्षुद्रक्षीरैर्दिनं मर्द्यं भक्षयेन्माससमात्रकम् ॥" मधुना मर्दितं भक्षयेत । रस.र. ।

**सूर्य्यः** । पुं । माषे । श.र. ।

**सृषा** । स्त्री । काश्मर्दभेदे । वै.निघ. ।

**सूक्ष्मः (कः)** । पुं । रीठाकरञ्जवृक्षे । রীঠা । श.र. । जीरकक्षुपे । पूगे । শুপারি । वै.निघ. ।

**सूक्ष्मकृष्णफला** । स्त्री । क्षुद्रजम्बूवृक्षे । বন জামের গাছ । र.मा. ।

**सूक्ष्मघण्टिका** । स्त्री । क्षुद्रशणपुष्पिकायाम् । শণ গাছ । रा.नि.व.४ ।

**सूक्ष्मजिह्वा** । स्त्री । तालुनऊर्द्धदेशवर्त्तिक्षुद्रजिह्वायाम् । আলজিবি, নলুরি । रा.नि.व.१८।

**सूक्ष्मतण्डुलः** । पुं । खस्खसक्षुपे । পোস্ত গাছ । रा.नि.व.४ । सर्ज्जरसे । ধুনো । वै.निघ.। स्त्री (ला) । पिप्पल्याम् । रा.नि.व.६ ।

**सूक्ष्मदलः** । पुं । देवशिरीषे । रा.नि.व.९ । स्त्री (ला) । दुरालभायाम् । रा.नि.व.४ ।

**सूक्ष्मदारु** । क्ली । सूक्ष्मकाष्ठफलके । त्रिका. ।

**सूक्ष्मपत्रः** । पुं। रक्तेक्षौ । রক্ত ইক্ষু । रा.नि.व.१४ । वनजीरके । বন জীরা । धान्यके । धनिया । रा.नि.व.६ । देवसर्षपे । रा.नि.व.९ । दुरालभायाम् । माषक्षुपे । आदित्यपत्रक्षुपे । रा.नि.व.४ । ह्रस्वबदरे । ছোট কুল । रा.नि.व.११ । कुकुरद्रुमे । কুকশিমা । वै.निघ. । वावलवृक्षे । বাবলা গাছ । श.च । वनवर्वरिकायाम् । বন বাবুই । रा.नि.व.१० । क्ली । सुरपर्णे । रा.नि.व.१० ।

**सूक्ष्मपत्रकः** । पुं । पर्पटके । ক্ষেৎপাবড়া । सुगन्धार्ज्जके । वै.निघ. ।

**सूक्ष्मपत्रा** । स्त्री । वृद्धदारकविशेषे । ছাগলবেঁটে । रा.नि.व.३ । क्षुद्रजम्ब्वाम् । বন জাম । भा. । शतमूल्याम् । শতমূলী । डीरलीक्षुपे । वृहती । रा.नि.व.४ । सूक्ष्मदुरालभायां । अपराजितायाम् । रक्तसञ्ज्ञपुष्प्यां ।রক্তাপরাজিতা । वै.निघ. । जीरकक्षुपे । क्षुद्रोपोदक्याम् । বন পুঁই । रा.नि.व.७। बलायां । বেলেড়া । ज.द.।

**सूक्ष्मपत्रिका** । स्त्री। क्षुद्रोपोदक्याम् । ছোট পুঁই । रा.नि.व.७। शताह्वायाम् । শুল্ফা । रा.नि.व.४ । शतावर्य्यां । শতমূলী । आकाशमांस्यां ।

सूक्ष्मजटामांसी । रा.नि.व.१२ । दुरालभायाम् । लघुब्राह्म्याम् । रा.नि.व.४ ५ ।

**सूक्ष्मपत्री** । स्त्री । आकाशमांस्याम् । सूक्ष्म जटामांसी । रा.नि.व.१२ । शतावर्य्याम् । "सूक्ष्मपत्री शतावर्य्याम् ।" रा.नि.व.२३ ।

**सूक्ष्मपर्णा** । स्त्री । क्षुद्रशणपुष्पिकायाम् । सरुशन । रा.नि व.४ । जीर्णफञ्ज्याां । बृहत्यां । बृहती । रा.नि.व.४ । (र्णी) रामदूत्याम् । श.च. ।

**सूक्ष्मपिण्डीतकः** । पुं । क्षुद्रमदनवृक्षे । छोटो मयना । वै.निघ. । [नि.व.६ ।

**सूक्ष्मपिप्पली** । स्त्री । वनपिप्पल्याम् । रा.

**सूक्ष्मपुष्पा** । स्त्री । शणपुष्प्यां । शण । रा.नि.व.४ । (ष्पी) यवतिक्तालतायाम् । रा.नि.व.३ । शङ्खिन्यां । चोरकाँच्की । वै.निघ. ।

**सूक्ष्मफलः** । पुं । सूक्ष्मबदरे । भूकर्कदारे । रा.नि.व.११ । स्त्री (ला) । (Flacourtia cataphracta.) तालीशपत्रे, भूम्यामलक्यां । मे. । महाज्योतिष्मतीलतायां । बड़ लताकट्की । वै.निघ. ।

**सूक्ष्मबदरी** । स्त्री । भूबदर्य्याम् । मेटोकुल । रा.नि.व.११ । [णी । रा.नि.व.१९ ।

**सूक्ष्ममक्षिका** । स्त्री । मशके । मशा,दौंश-

**सूक्ष्ममूला** । स्त्री । जयन्तीवृक्षे । जन्ती गाछ । रा.नि.व.४ । ब्राह्म्यां । वै.निघ ।

**सूक्ष्मवल्ली** । स्त्री । ताम्रवल्लीलतायां । सा मालवे ख्याता । जतुकालतायाम् । रा.नि.व.३ । लघुकारवेल्ल्याम् । छोटे उच्छे । वै.निघ. ।

**सूक्ष्मवस्त्रम्** । क्ली । श्लक्ष्णवसने । मिहिकापड़ । शब्दकल्पः । [नि.व.४ ।

**सूक्ष्मवीजः** । पुं । खसखसे । पोस्ता । रा.

**सूक्ष्मशरीरम्** । क्ली । ज्ञानेन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं वायुपञ्चकं बुद्धिमनसीचेति सप्तदशावयवाः । वेदान्तसारः । [१४ ।

**सूक्ष्मशर्करा** । स्त्री । बालुकायाम् । रा.नि.व.

**सूक्ष्मशाकः (खः)** । पुं । जालवर्बूरके । रा.नि.व.८ ।

**सूक्ष्मशालिः** । पुं । सूक्ष्माकारशालिधान्यविशेषे, अणुधान्ये । मिहिधान, सरुधान । गुणाः— सुमधुरः लघुः पित्तरक्तदाहहरः दीपनः पाचनः किञ्चिद्वातविकारघ्नश्च । रा.नि.व.१६ ।

**सूक्ष्मषट्चरणः** । पुं । पक्ष्माश्रयीकृमिविशेषे । रा.नि.व.१९ । [ना । रा.नि.व.२० ।

**सूक्ष्मस्फोटः** । पुं । विचर्चिकायाम् । ठुलक-

**सूक्ष्मा** । स्त्री । मुषल्याम् । तालमूली । प.मु. । सूक्ष्मजटामांस्यां । वै.निघ. । क्षुद्रैलायाम् । रा.नि.व.६ । बालुकायाम् । रा.नि.व.१४ । (क्ष्मी) करुणीपुष्पवृक्षे । करवीरकर्णीति कोङ्कणे प्रसिद्धा । रा.नि.व.१० । यूथिकायां । जूई । श.च. ।

**सूक्ष्माम्लः** । पुं । क्षुद्राम्ले । "कोलसूक्ष्माम्लकलशौ ।" वा.चि.१म. ।

**सूक्ष्माह्वा** । स्त्री । महामेदायाम् । वै.निघ. ।

**सूक्ष्मैला** । स्त्री । (Elettaria cardamomum.) क्षुद्रैलायाम् । छोटो एलाच, गुजराटी एलाइच । हिं छोटीएलाची । तें चिन्नयालकुलु, एल्लकाय । गुणैः स्थूलैलासमा । प.मु ।

**सूक्ष्मौषधम्** । क्ली । तैलादौ । वा. ।

**सूकः** । पुं । वायौ । पद्मे । केरवे । उणा. ।

**सूकण्डुः** । स्त्री । कण्डूयने । श.र. ।

**सूका(गा)लः** । पुं । शृगाले । श.च ।

**सूक्कम् (क्की)** । क्ली, स्त्री । ओष्ठप्रान्त्यौ । रा.नि.व.१८ । भ.टी.भ. ।

**सूक्का** । स्त्री । अनन्तायां । अनन्तमूल । ज.द. ।

**सूज(जि)काक्षारः** । पुं । सर्ज्जिकाक्षारे । साजिमाटी । भ.टी.र. ।

**सूञ्झा** । स्त्री । छाग्यां । चिका. । [१८ ।

**सूणि(णी)का** । स्त्री । लालायाम् । रा.नि.व.

**सूत्वा** । स्त्री । वीसर्परोगे । व्रजौ । उणा. ।

**सूदरः** । पुं । सर्पे । उणा. ।

**सूदाकुः** । पुं । पयौ । वायौ । वह्नौ । उणा. ।

**सूपाटिका (टी)** । स्त्री । पक्षिचुञ्चौ । मानविशेषे । वै.निघ. । शिक्ष्ण.भ. ।

**सृमरः** । पुं । मत्स्याकारमहाशूकरे । वै.निघ. । मरदि प्रकृत्यागिमृगभेदे । तन्मांसं कषायरसं वातपित्तघ्नं गुरु शुक्रघ्नञ्च । सु.सू.४६ग. ।

**सृष्टः** । पुं । तिन्दुकवृक्षे । গাব গাছ । स्त्री (ष्टा) । महौषधे । वै.निघ. ।

**सृष्टिः (ष्टी) (दा)** । स्त्री । वृद्धौषधे । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. । [वै.निघ. ।

**सृष्टिकृत्** । पुं । पर्पटकक्षुपे । ক্ষেৎপাবড়া ।

**सृष्टिप्रदा** । स्त्री । गर्भदात्रीक्षुपे । रा.नि.व.४।

**सेकः** । पुं । स्नेहादिभिर्नेत्रपरिषेके । নেত্রে তৈলাদি সেচন । तल्लक्षणं यथा—"सेकस्तु सूक्ष्मधाराभिः सर्व्वस्मिन्नयने हितः । स सर्क्तो भवेद्वाते पित्ते रक्ते च रोपणः । लेखनस्तु कफे कार्य्यः...... । सेकस्तु दिवसे कार्य्यो रात्रौ चात्यन्तिके गदे ॥" इति । भा. । वृक्षविशेषे । गुणा. —शीतलः भग्नसन्धानकः वातकफघ्नश्च । वै.निघ.।

**सेका** । स्त्री । श्यामालतायाम् । वै.निघ. ।

**सेकिमम्** । क्ली । मूलके । हे.च. ।

**सेगुड़ी** । स्त्री । क्षुद्रक्षुपविशेषे । गुणाः—कटुरुष्णा पृष्ठशूलगुल्मवातशूलघ्नी देहदार्ढ्यकरी च । वै.निघ. । See शिगड़ी ।

**सेटुः** । पुं । धवलयावनाले । শ্বেত জনার । रा.नि.व.१६ । नाटाम्रे । তরমুজ । हारा. ।

**सेतुः (कः)** । पुं । वरुणवृक्षे । अम. । श.र. ।

**सेतुभेदी** (इन्) । पुं । दन्तीवृक्षे । श.च. ।

**सेतुवृक्षः** । पुं । वरुणवृक्षे । अम. ।

**सेचम्** । क्ली । सायौ । शङ्खले । व्याक. ।

**सेनिका** । स्त्री । शतपुष्पायाम् । শুল্‌ফা । वै. निघ. ।

**सेन्दिनी** । स्त्री । स्वनामख्यातफलशाके । गुणाः —कटुका तिक्ता पाकाम्ला वातघ्नी पित्तकृत् पीनसघ्नी दीपनी रुचिकृच्च । रा.नि.व.७ ।

**सेन्दुः** । पुं । लतापनसे । তরমুজ । त्रिका. ।

**सेन्धा** । स्त्री । सल्लकीवृक्षे । भा. ।

**सेफः** । पुं । शेफसि । जटा. ।

**सेफाली** । स्त्री । सिन्धुवारवृक्षे । নিশিন্দা গাছ । रा.नि.व.२३ । [ब्दकल्पः ।

**सेमण्डी** । स्त्री । पुष्पवृक्षभेदे । সেউতী । श-

**सेमषः** । पुं । मेषे । ভেড়া । त्रिका. ।

**सेरीपूगम्** । क्ली । महाराष्ट्रकर्णाटयोः खेरीति प्रसिद्धे पूगे । रा.नि.व.११ ।

**सेलुः** । पुं । वरुणवृक्षे । বরুণ গাছ । र.मा. । बहुवारवृक्षे । চাল্‌তা গাছ । भ.द्विरूपको. ।

**सेल्लकः** । पुं । पीतरोध्रे । वै.निघ. ।

**सेवम् (वि)** । क्ली । काबेलदेशे तन्नामकफलविशेषे । সেও ফল । हिं सेव । गुणाः—वातपित्तघ्नं गुरु बृंहणं कफकरं रसे पाके च मधुरं शीतलं रुच्यं शुक्रलञ्च । भा.धा.व. । वातपित्तहरं गुरु बृंहणं कफकरं हृद्यं पाके स्वादुरसं हितञ्च । रा.नि.व.११ ।

**सेवकालः (लुः)** । पुं । दुग्धपेयावृक्षे । श.च.।

**सेवती (न्तिका, न्ती)** । स्त्री । (Rosa alba or Chrysanthemum coronarium. Syn, C. Roxburghii.) स्वनामख्यातपुष्पवृक्षे । সেউতী গোলাপ । গুলদস্তী । हिं गुलचिनि । तें चामन्ती । ता. सामन्तिप्पु । गुणाः —हिमा हृद्या ग्राहिणी शुक्रला लघुः दोषत्रयाम्रजिद्वल्या तिक्ता कट्वी पाचनी च । भा. ।

**सेवनी** । स्त्री । शरीरावयवसंयोगविशेषे । শরীরের সেবনী স্থান । यथा—सेवन्यः सप्त तासां मस्तके पञ्च शेफसि एका जिह्वायामेका इति। ताः कदाचिदपि न विध्येत् । "सेवन्यः सप्त तासान्तु भवेयुः पञ्च मस्तके । एका शेफसि जिह्वायामेका विध्येन्न ताः क्वचित् ॥" भा.। सु.शा.५ग.।

**सेवाली** । स्त्री । आकाशजटामांस्यां । শূন্যজটামাংসী । वै.निघ. ।

**सेविका** । स्त्री । मिष्टान्नभेदे । সেওয়াঞি । हिं सेवइ । यथा—"समितावर्त्तिकाः कृत्वा सूक्ष्मा यवसन्निभाः । शुष्काः क्षीरेण संसाध्या भोज्या घृतसमन्विताः॥" गुणाः—"सेविका तर्पणी बल्या गुर्व्वी पित्तानिलापहा । ग्राहिणी सन्धिकृत् रुच्या तां खादेन्नातिमात्रया ॥" भा. ।

**सेवितम्** । क्ली । सेविफले । সেও ফল । रा.
नि.व.११ ।

**सेव्यम्** । क्ली । उशीरे । लामज्जके । গন্ধবেণা । ज.द. । प मु. । वै.निघ.२भ.सर्व्वज्व.चि.सुदर्शनचूर्णे । चन्दनादितैले । च.द.छर्दि.चि. । पुं । अश्वत्थवृचे । रा.नि.व.११ । हिज्जलवृचे । হিজল গাছ । श.र. । स्त्री (व्या) । वन्दायां । মান্দড়া । श.र. ।

**सेहुण्ड:** (ण्डी) । पुं, स्त्री । (Euphorbia nerrifolia.) स्वनामख्यातवृचे । মনসা গাছ । हिं सेहुण्ड, थोकर, सिज । बम्. निवडुङ्ग, थोर । तत्पत्रं तीक्ष्णं दीपनं लघु पाचनम् आध्मानाष्ठीलागुल्मशूलशोथोदरघ्नञ्च । भा.पू.१भ.शा.व. ।

**सैंहलम्** । क्ली । सुवर्णपित्तले । त्वचि । वै.निघ. ।

**सैंहली** । स्त्री । स्वनामख्यातपिप्पलीविशेषे । मं रानपिप्पली । कं काडिपिप्पली । गुणा:—कटु: उष्णा क्रमिघ्नी दीपनी कफश्वासवातव्याधिशमनी कोष्ठशोधनी च । रा.नि.व.६ ।

**सैकतम्** । क्ली । हिङ्गुले । वै.निघ. । [व.६ ।

**सैकतेष्टम्** । क्ली । आर्द्रके । আদা । रा.नि.

**सैक्यम्** । क्ली । शीषपित्तले । वै.निघ. ।

**सैन्धव:** । पुं, क्ली । सिन्धुदेशोत्थे स्वनामख्यात खनिजलवणे । सैन्धव इति प्रायेण सर्व्वत्र प्रसिद्धम् । সৈন্ধব লবণ । बम्. सैन्धे लोण । गुणा:—एतल्लवणरसं मदुशीतवीर्य्यत्वात् पित्तहरम् । सु.सू.४०अ. । वृष्यं चक्षुष्यं हृद्यं दीपनं त्रिदोषघ्नं पूतं व्रणविबन्धघ्नञ्च । श्वेतरक्तभेदेन रसवीर्य्यविपाकेषु गुणाढ्यं पूतनं शिवञ्च । रा.नि.व.६ । वा.सू. १५अ.ऊषकादि: । "कासीसद्वयसैन्धवम् ।" लवणविशेषानुक्तौ सैन्धवं प्रयोज्यम् । पुं । घोटके । चिका. ।

**सैन्धवादितैलम्** । क्ली । भगन्दराधिकारे तैलम् । पाठ:—"सैन्धवं चित्रकं दन्तीं पलाशञ्चेन्द्रवारुणीं । गोमूत्रेऽष्टगुणे पश्चात् ग्राह्यमष्टावशेषकम् । क्वाथपादं चिपेत् तैलं कल्क: क्रमायसं स्मृतम् । पचेत्तैलावशेषञ्च तेन लिप्यं भगन्दरम् ॥" তিল তৈল ৮ প. সৈন্ধব, চিতা, দন্তী, পলাশবীজ, রাখালশশার মূল প্রত্যেকে ২ প. ২ তো. পাকার্থ—গোমূত্র ১২৮ প. শে. ৩২ প. । কল্কার্থ—জারিত পুটিত লৌহচূর্ণ ৮ প. । अन्यत् यथा—चक्रमर्दकमूलस्य कल्कं कृत्वा विपाचयेत् । केशराजरसे तैलं कटुकं मृदुनाग्निना । पाकशेषे विनिक्षिप्य सिन्दूरमवतारयेत् । एतत्तैलं निहन्त्याशु गण्डमालां सुदारुणाम् ॥" रस.र. ।

**सैन्धी** । स्त्री । मद्यविशेषे । তালরসকৃতমদ্যে । वै.निघ. । गुणा:—शीता कषाया अम्ला पित्तहृत् वातदा च । रा.नि.व.१४ ।

**सैमन्तिकम्** । क्ली । सिन्दूरे । शब्दकल्प: ।

**सैरिभ:** । पुं । महिषे । प.मु. । [प.मु.

**सैरी** । स्त्री । लाङ्गलिकायाम् । বিষলাঙ্গুলি

**सैरीय:** (क:) । पुं । श्वेतझिण्टाम् । ঝাঁটী । श.र. । अम. । सु.सू.३८अ. । नीलझिण्टाम् । प.मु. ।

**सैरीयकद्वयम्** । क्ली । नीलपीतझिण्टीद्वये सु.सू.३८अ. । चि.२५अ. । [श.मा.

**सैरेय:** । पुं । श्वेतपुष्पझिण्टाम् । শ্বেতঝাঁটী

**सैरेय:** (क:) । पुं । श्वेतझि[illegible] । শ্বেত ঝাঁটী । हिं कटसरैया । गुणा: [illegible]रेय: कुष्ठवातास्रकफकण्डूविषापह: । [illegible]ी मधुरो नक्ष: सुस्निग्ध: केशरञ्जन: ॥" [illegible] सु.चि.३अ. सौम्यकीटे । सु.कल्प.८अ. ।

**सैर्य्य:** । पुं । श्वेतझिण्टीक्षुपे । वै.निघ.२भ.वा व्या.षड्शीतिगुग्गुलौ ।

**सैर्य्यक:** । पुं । सहचरे । শ্বেত ঝাঁটী । वा.सू १५अ.आरग्वधादौ । "भूनिम्बसैर्य्यकपटोलकरञ्जयुग्मम् ।"

**सैर्य्यकयुग्मम्** । क्ली । सहचरद्वये । एको रक्तपुष्प: कुरवकाख्य:, अन्य: पीतपुष्प: कुरण्टकाख्य इति । वा.सू.१५अ.वरुणादिवर्गे । "वरुणसैर्य्यकयुग्मशतावरी ।" [शब्दकल्प:

**सैवालम्** । क्ली । जलनील्याम् । শেওলা

**सैह्लिक:** । पुं । शिलारसे । सं. ।

**सोनह:** । पुं । लशुने । श.र. ।

**सोन्माद:** । त्रि । चिप्ते, उन्मत्ते । अ.टी.भ.

**सोमाञ्जनः** । पुं । शोभाञ्जनवृक्षे । सजिना गाछ । श.टी.भ. ।

**सोमम्** । क्ली । काञ्जिके । वै.निघ. । रक्तचन्दने । वै.निघ.२भ.वा.व्या.चि.स्वेदविधौ ।

**सोमः** । पुं । कर्पूरे । श्रम. । सोमरसे । जले । वानरे । मे. । अमृते । शब्दकल्प: । (Acid Sarcostemma. S. Viminalis or Sarcostemma brevistigma. Syn. Asclepias acida.) The moon plant. तन्नामकौषधिराजि । सोम लता । हिं सोमलता । बम्. सोमवल्ली । तें टिगटसुम्मुडु, पुल्लतीगे । तस्य पत्राणि पञ्चदश भवन्ति । तानि च शुक्लप्रतिपदश्चन्द्रकलावत् एकैकं जायन्ते, कृष्णप्रतिपदश्च एकैकं चीयन्ते । तदुक्तं—"सोमनामौषधिराजः पञ्चदशपर्णः, स सोम इव हीयते वर्द्धते च ।" च. चि.१श. । स चतुर्विंशतिविधः, सर्व्वेषामेव पत्राणि १५ श. भवन्ति । ते अंशुमान् घृतगन्धः, रजतप्रभः कदलीकन्दवत्कन्दः, मुञ्जवान् लशुनपत्रः, चन्द्रमा कनकाभः जले जायते, गरुडाहृतः श्वेताक्षश्चाहिनिर्म्मोकवत् वृक्षाग्रे लम्बते । अन्ये सर्व्वे च सोमा विचित्रवर्णमण्डलचित्रिताः । सर्व्वे एव पञ्चदशदलाः चीरकन्दलतावन्तश्च । तेषां सर्व्वेषां जन्म महेन्द्रमलयश्रीपर्व्वतदेवगिरिहिमालयपारियात्रसह्यविन्ध्यादिषु । चन्द्रमा सोमश्च सिन्धुनदे इतवन्नासते, मुञ्जवानंशुमांश्च तत्राप्यधिगम्यते । तथा काश्मीरे क्षुद्रमानससरसि च स्वैष्टुभपाङ्क्तजागतशाङ्करा अधिगम्यन्ते । सु.चि.२९श. ।

**सोमकः** । पुं । सोमरोगे । निदा. ।

**सोमखण्डा** । स्त्री । सोमराज्यां । वै.निघ. ।

**सोमगन्धकम्** । क्ली । रक्तोत्पले । वै.निघ. ।

**सोमगा** । स्त्री । सोमराज्यां । वै.निघ. ।

**सोमघट्टि(ट्टी)का** । कुष्माण्डलतायां । वै.निघ. ।

**सोमग्रहः** । पुं । श्रमस्य ग्रहविशेषे । तेनाश्रः कम्पते अश्रुपातानाशनः शीतलाङ्गश्च गात्रं प्रसार्य्य शेते । ज द ५श. ।

**सोमघृतम्** । क्ली । गर्भोत्पादनघृते । जीवद्वत्सैकवर्णाया गोः घृतं ८ श. । क्वाथार्थे—सिद्धार्थकः वचा ब्राह्मी शङ्खपुष्पी पुनर्नवा श्वेतभूमिकुष्माण्डं त्रिफला कुष्ठं कटुकी अनन्तमूलं श्यामालता यष्टीमधु चोरपुष्पी जातीपुष्पं वासापुष्पं मञ्जिष्ठा देवदारु शुण्ठी पिप्पली भृङ्गराजः हरिद्रा दारुहरिद्रा वृद्धदारकं सुवर्च्चला दशमूलम् अपामार्गः अश्वगन्धा शतमूली प्र. २ प. । पाकार्थे—जलं ६४ श. शे. १६ श. । अकल्कमिदम् । जीवद्वत्सा एकवर्णा गाभीर घृत ८ श. । क्काथार्थ—राईसरिषा, वच, ब्राह्मीशाक, वेलेड़ा, पुनर्नवा, शुक्लभूमिकुष्माण्ड, त्रिफला, कुड़, कट्की, अनन्तमूल, श्यामालता, यष्ठीमधु, चोर्‌हुली, जातीपुष्प, वासकपुष्प, मञ्जिष्ठा, देवदारु, शुण्ठी, पिपुल, भीमराज, हरिद्रा, दारुहरिद्रा, वृद्धदारक, हुड़हुड़िया, दशमूल, आपाङ, अश्वगन्धा, शतमूली प्रत्येके २ प. जल ६४ श. शे. १६ श. । सा.कौ. । अन्यत्—गव्यघृतं ४ श. । कल्कार्थे—श्वेतसर्षपः वचा ब्राह्मी चोरपुष्पी पुनर्नवा चीरकाकोली कुष्ठं यष्टीमधु कटुकी द्राक्षा गाम्भारीफलं परूषकफलं श्यामालता अनन्ता हरिद्रा पाठा गुड़त्वक् देवदारु सौवर्च्चललवणं मञ्जिष्ठा त्रिफला प्रियङ्गु वासापुष्पं गिरिमल्लिका मिलितं १ श. । भैष. ।

**सोमजम्** । क्ली । दुग्धे । हे.च. । [निघ. ।

**सोमदा** । स्त्री । गन्धमज्याम् । गन्धशटी । वै.

**सोमनाथरसः** । पुं । प्रमेहे, सोमरोगाधिकारोक्ते च रसविशेषे । अत्र रसगन्धादीनां प्रत्येकं रसांशमानं ग्राह्यम् । र.सा.सं. । पालिधारसशोधितहिङ्गुलोत्थपारदः आखुकर्णीरसशोधितगन्धकः प्र. २ तो. कज्जलिः कार्य्या । कन्यारसमर्द्दितलौहं ८ तो. अभ्रकं वङ्गं रौप्यं खर्परं स्वर्णमाक्षिकं सुवर्णं प्र. १ तो. कुमारीरसेन भेकपर्णीरसेन च मर्द्दयेत् भावयेच्च । वटी गुञ्जाद्वयमिता । पालिधारसे शोधित पारा २तो. इन्दुरकाणीपानार रसे शोधित गन्धक २ तो. एकत्र कज्जलि करत लौह ८तो. सह मिशाइया घृतकुमारीर रसे माड़िते हइवे । अभ्र, रङ्ग, रोपा, खापर, स्वर्णमाक्षिक एवं स्वर्ण प्रत्येके १ तो. समस्त एकत्र मिशाइया घृतकुमारी ओ

थुलकुड़िर रसे भावना दिया २ र. वटी करिबे । सा.कौ. ।अग्न। [च. ।

**सोमपत्न:** । पुं । उलुपहणे । उलू थड़ । श.

**सोमपादप:** । पुं । कायफलवृक्षे । वै.निघ. ।

**सोमप्रियम्** । क्ली । कुमुदपुष्पे । वै.निघ. ।

**सोमबन्धु:** । पुं । कुमुदे । श.र. ।

**सोममणि:** । पुं । चन्द्रकान्तमणौ । भूरिप्र. ।

**सोमयोनि:** । पुं । पीतचन्दनवृक्षे । श.र. ।

**सोमराजिका** । स्त्री । सोमराज्याम् । श.र. ।

**सोमराजी** । स्त्री । (Vernonia anthelmintica, Syn. Serratula anthelmintica.) स्वनामख्यातक्षुपे । সোমরাজ, হাকুচ । हिं बुकचे, कालियै जियोरित । मं बावची । कं बाउचिगे । तें तिप्पतीगे, नेलवयलिये । वम्. बांवचा, कालीजीरी । रा.नि.व.४ । गुणा:—वाकुचीशब्दे ज्ञेया: । [भैष.कन्दर्पसारतैले ।

**सोमराट्** । पुं । सोमराज्याम् । সোমরাজ ।

**सोमरोग:** । पुं । स्त्रीणां मूत्रातिसारे । निदानादि—"स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि । अतीसारकयोगाद्वा गरयोगात्तथैव च । अप: सर्व्वशरीरस्था: क्षुभ्यन्ति प्रस्रवन्ति च । तस्यास्ता: प्रच्युता: स्थानात् मूत्रमार्गं व्रजन्ति हि ॥" लक्षणं—"प्रसन्ना विमला: शीता निर्गन्धा नीरुज: सिता: । स्रवन्ति चातिमात्रं ता: सा न शक्नोति दुर्ब्बला । वेगं धारयितुं तासां न विन्दति सुखं क्वचित् । शिर:शिथिलता तस्या मुखं तालु च शुष्यति ॥" इति । भा. ।

**सोमलता** । स्त्री । दिव्यौषधिविशेषे । সোমলতা । See सोम: । गुडूच्याम् । ब्राह्मीक्षुपे । रा.नि.व.५ । [च्यां । रा.नि.व.३ ।

**सोमलतिका** । स्त्री । सोमलतायाम् । गुडू

**सोमवल्क:** । पुं । कट्फलवृक्षे । কট্‌ফলের গাছ । र.मा. । करञ्जवृक्षे । করঞ্জ গাছ । जटा. । च.वि.८अ. । रीठाकरञ्जे । रा.नि.व.९ । २३ । श्वेतखदिरे । अम. । वर्व्वूरके । বাবলা গাছ । र.मा. । रा.नि.व.२३ । [रे । वै.निघ. ।

**सोमवल्कल:** । पुं । कट्फलवृक्षे । श्वेतखदि-

**सोमवल्लरी** । स्त्री । सोमलतायाम् । সোমলতা । ब्राह्मीक्षुपे । सोमराज्याम् । वै.निघ. । स्वाद्याम् । अम. । सोमलताभेदे । भ. ।

**सोमवल्लिका** । स्त्री । सोमलतायाम् । भ. । सोमराज्याम् । अम. ।

**सोमवल्ली** । स्त्री । सुदर्शनायां । উবতি পূর্তি, পদ্মগুলঞ্চ । खताकरञ्जे । ब्राह्मयां । ब्राह्मी शाक । वाकुच्याम् । সোমরাজ । रा.नि.व. २३ । सु.कल्प.१अ. । श्वेतखदिरे । गजपिप्पल्यां । वनकार्पासे । वै.निघ. । गुडूच्याम् । अम. । पातालगरुडीलतायाम् । পাতাল গরুড়ী । रा. नि.व.३ । सोमायाम् । সোমলতা । रा.नि.व.३ । भ. । च.चि.८अ. । मण्डूक्यां । থুলকুড়ি । रा. नि.व.२३ ।

**सोमवृक्ष:** । पुं । कट्फलवृक्षे । र.मा. । श्वेतखदिरे । रा.नि.व.८ । [७ ।

**सोमशकला** । स्त्री । शशाण्डुल्यां । रा.नि.व.

**सोमशल्य:** । पुं । श्वेतखदिरे । रा.नि.व.८ ।

**सोमसंज्ञम्** । क्ली । कर्पूरे । र.मा. ।

**सोमसाट्टक:** । पुं । सट्टकभेदे । यथा—"दधिवीर्ौ विनिक्षिप्य तस्मिन् त्रिसमरीचयो: । कृष्णाजिचकयोश्चूर्णं क्षिप्त्वा भाण्डे सुघोलयेत् । वस्त्रपूते ततस्तस्मिन् बीजं दाड़िमजं क्षिपेत् । सोमसट्टकनामासौ वर्द्धमानगुणे: समः । द्रव्य.गु. ।

**सोमसम्भवा** । स्त्री । गम्भीरा । वै.निघ. ।

**सोमसार:** । पुं । श्वेतखदिरे । रा.नि.व.८ ।

**सोमस्कन्ध:** । पुं । श्वेतखदिरे । वै.निघ. ।

**सोमक्षीरा (री)** । स्त्री । महासोमलतायां । रा.नि.व.३ ।

**सोमा** । स्त्री । लघुसोमलतायाम् । रा.नि.व.३ ब्राह्मयां । বির্গী শাক । सोमवल्क्याम् । कट्फल । सु.सू.३९अ. । गुडूच्यां । सोमराज्यां । সোমরাজ । शुक्लाभ्रे । শ্বেত অভ্র । वै.निघ. ।

**सोमाख्यम्** । क्ली । रक्तकैरवे । রক্তকুমুদ । र.मा. ।

**सोमार्हा (र्द्धा)** । स्त्री । महासोमलतायाम् । रा.नि.व.३ ।

**सोमाल:** । त्रि । सुकुमारे । हारा. ।

**सोमोद्भव:** । पुं । हस्तिनि । वै.निघ ।

**सोरकम्** । क्ली । मत्स्यारभेदे । सोरा इति ख-

ख्याते । रसचि. (गन्धद्रावके ।) ।

**सोहरा** । स्त्री । सोरा इति ख्याते पण्यद्रव्ये ।

भैष.प्लीहचि.महाशङ्खद्रावके ।

**सौकरी** । स्त्री । वाराहीकन्दे । वै.निघ. ।

**सौख्यम्** । क्ली । आरोग्ये । सुखे । हे.च. ।

**सौगन्ध्यम्** । क्ली । कत्तृणे । গন্ধ থড় । सुगन्ध

तृणे । রামকর্পূর । अ.र. । त्रि । शुभगन्धे ।

**सौगन्धकपत्रक:** । पुं । श्वेतार्जके । শ্বেত

তুলসীবিশেষ । वै.निघ. ।

**सौगन्धिकम्** । क्ली । माणिक्यभेदे । रा.नि.

व.१३ । पद्मरागे । मे. । नीलोत्पले । নীলশুন্দি ।

रा.नि.व.१० । सु.मू.३८अ.ड. । रक्तकमले । লাল

পদ্ম । च.सू.४३अ. । त्रिसुगन्धे, त्वगेलापत्रेषु । वै.

निघ.२भ.संग्रहणी.चि.दाड़िम्बाष्टके सौवर्चलल-

वणे । সচল লবণ । वै.निघ.अर्शो.चि.भल्लातकले-

हे । रोहिषतृणे । রামকর্পূর । अम. । कह्लारे ।

রক্ত কহ্লার । अम. । रस र.विष चि. । गन्धतृणे ।

अम. । च.सू.३अ. । पुं । गन्धके । रा.नि.व.१३ ।

भद्रतरगन्धके । च.द.राजय.चि.रसेन्द्रगुड्याम् ।

च.सू.३अ. । कफजक्रिमिविशेषे । च.वि.७अ. ।

स्त्री (का) । पद्मभेदे । শুন্দী । शब्दकल्प: । ग

न्धतृणे । भैष.ना.व्र.चि.कुम्भीकाद्यतैले । अनन्त

मूले । च.द.ना.व्र.चि. । [घ. ।

**सौगन्धिपत्रक:** । पुं । श्वेतार्जके । वै.नि

**सौपण्डी** । स्त्री । पिप्पल्याम् । अ.च. ।

**सौध:** । पुं, क्ली । रौप्ये । रा.नि.व.१३ । राज

भवने । अम. । पुं । शुक्लखड़िकायां । ফুলখড়ি ।

रा.नि.व.१३ । स्त्री (धा) । स्नुहीवृक्षे । মনসা-

সিজু । च.द.ग्रन्थिरो.चि. ।

**सौधभूषणम्** । क्ली । चूर्णके । চূণ । वै.निघ. ।

**सौपर्णम्** । क्ली । मरकतमणौ । रा.नि.व.१३ ।

शुण्ठ्यां । रा.नि.व.६ । स्त्री (र्णी) । वत्सादनील-

तायाम् । পাতালগরুড়ী । रा.नि.व.३ । नकुल

१८अ ।

**सौभद्रेय:** । पुं । विभीतकवृक्षे । বহেড়া গা-

ছ । अ.र. ।

**सौभाग्यम्** । क्ली । सिन्दूरे । टङ्कणे । সোহা-

গা । रा.नि.व.६।१३ । भैष.ज्व.चि.सौभाग्यवट्यां ।

**सौभाग्यचिन्तामणि:** । पुं । विषमज्वरे

औषधम् । रसगन्धकहिङ्गुलजैपालबीजकानि क्र-

मवृद्धा नेतव्यानि, अथ दन्तीमूलरसेन पिष्टा गु-

ञ्जाप्रमाणा वटी कार्य्या । अनुपानं शर्करा । सा.

कौ. । [निघ. ।

**सौभाग्यमण्डनम्** । क्ली । हरिताले । वै.

**सौभाग्यशुण्ठी** । स्त्री । সূতিকায়া মোদকৌ-

ষধি । কেশুর, পাণিফল, পদ্মবীজ, মুতা,

জীরা, কৃষ্ণজীরা, জায়ফল, জয়িত্রী, লবঙ্গ,

শৈলজ, নাগেশ্বর, তেজপত্র, গুড়ত্বক্, শঠী,

ধাইফুল, এলাইচ, শুল্‌ফা, ধনিয়া, গজপিপু-

ল, মরিচ,কাঁকড়াশৃঙ্গী, ভূমিকুষ্মাণ্ড এবং শ-

তমূলী প্রত্যেকে ৪ তো. লৌহ ৮ তো. অভ্র

৮ তো. শুণ্ঠীচূর্ণ ১ শ. মিছরি ৩০ প.ঘৃত ১

শ. গব্যদুগ্ধ ৮ শ. । মাত্রা ১ তোলা পর্য্যন্ত ।

দ্বিতীয়া যথা—ত্রিফলা, ত্রিকটু, কৃষ্ণজীরা,

গুড়ত্বক্, তেজপত্র, এলাইচ, নাগেশ্বর, মু-

তা, জয়িত্রী, জায়ফল, ধনে, লবঙ্গ, শুল্‌ফা,

নালুকা, ময়নাফল, যমানী, বনযমানী, ধাই-

ফুল, শতমূলী, তালমূলী, লোধ, গজপিপুল,

পিয়ালবীজ, গুলঞ্চ, কর্পূর, চন্দন, রক্তচন্দন

প্রত্যেকে চূর্ণ ২ তো. শুঁটচূর্ণ ৪ শ. ঘৃত ১

শ. দুগ্ধ ৮ শ. চিনি ৫ শ. একত্র পাক করি-

বে । অনুপান ছাগদুগ্ধ । १म पाठ: —"कशेरु-

शृङ्गाटवराटमुस्तं द्विजीरकं जातिफलं सकोषम् ।

लवङ्गशैलेयकनागपुष्पं पत्रं वराङ्गं शटिधातकी च ।

एला शताह्वा धनिकेभपिप्पली तथौषधं शृङ्गिवरी

विदारी । लौहाभ्रकं तत्र पलप्रमाणं प्रत्येकमेषा-

मिह कर्षयुग्मम् । महौषधात् चूर्णपलानि चाष्टौ

त्रिंशत्पलान्यत्र सिता विधेया । पलानि चाष्टावपि

सर्पिषश्च प्रस्थद्वयं क्षीरमिह प्रयुक्तम् । पचेद्विधिज्ञ:

परमादरेण … ॥" सा.कौ. । द्वितीयस्या: पत्री

—त्रिफला त्रिकटु कृष्णजीरकं गुड़त्वक् तेजपत्रम्

एला नागकेसरपुष्पं मुस्ता जयित्री जातीफलं धा-

न्यकं लवङ्गं शताह्वा नलुका मदनफलं यमानी-

[illegible] [illegible] [illegible] [illegible] [illegible]-
[illegible] [illegible] [illegible] कर्पूरं चन्दनं [illegible]-
[illegible] प. चूर्णं २ मी. [illegible] ४ म. घृतं १ प.
दुग्धं ८ मु. शर्करा ५ प. । चतु. [illegible] ।
[illegible] । [गाछ । च.टी म. ।

**सौभाञ्जनः** । पुं । शोभाञ्जनवृक्षे । सजिना

**सौभिद्यः** । पुं । कफस्य शूकरोगभेदे । लक्षणं —"गुरुभिः स्वादितैर्नित्यं तथा [illegible]योगतः । सौभिद्यो जायतेऽस्य [illegible] गलच्छितः ॥" ज.द.४३ष. । [निघ. ।

**सौमनस(स्य)फलम्** । क्ली । जातीफले । वै.

**सौमनसा (स्या)** । स्त्री । जातीपत्राम् । जयित्री । रा.नि.व.१२ ।

**सौमनस्यफला** । स्त्री । महाजातिपुष्पवृक्षे । मालती फुलेर गाछ । वै.निघ. ।

**सौमनस्यायनी** । स्त्री । मालतीपुष्पकलिकायाम् । चिका. । च.वि.८ष. ।

**सौमिचम्** । क्ली । ग्रन्थिपर्णभेदे । गेंठेलाविशेष । वै.निघ. । [व.१२ ।

**सौमेरवम् (रुकम्)** । क्ली । सुवर्णे । रा.नि.

**सौम्यः** । पुं । उदुम्बरवृक्षे । यज्ञडुमुरेर गाछ । रा.नि.व.११ । सुगन्धार्जके । सुगन्ध श्वेत तुलसी । शर्करासवे । क्ली । श्वेतरक्तकमले । दुग्धे । वै.निघ. । [डितौ । रा.नि.व.१० ।

**सौम्यगन्धा (न्धी)** । स्त्री । शतपत्राम् । से-

**सौम्यगन्धिकम्** । क्ली । श्वेतरक्तकमले । वै.निघ. ।

**सौम्यज्वरः** । पुं । ज्वरभेदे । लक्षणं —"वातपित्तात्मकः शीतमुष्णं वातकफात्मकः । इच्छत्युभयमेतत्तु ज्वरो व्यामिश्रलक्षणः ॥" च.सू.३ष. ।

**सौम्यधातुः** । पुं । कफे । रा.नि.व.२१ ।

**सौम्या** । स्त्री । शालपर्ण्याम् । शालपानि । रा.नि.व.४ । वै.निघ.२भ.कल्याणघृते । महेन्द्रवारुण्यां । माकाल लता । रा.नि.व.३ । वै.निघ. वा.व्या.चि.लघुनारायणतैले । गुञ्जायाम् । कुंच । महाज्योतिष्मतीलतायाम् । बड़ लताफटकी । रुद्रजटायाम् । रा.नि.व.३ । महिषवल्ल्याम् । लघु सोमलता । सर्पजीवन्याम् । रा.नि.व.३।१५. ब्राह्म्याम् । ब्रह्मीशाक । रा.नि.व.५।२३। मत्स्याक्षी । [illegible]यष्टिमधुनि । लतायष्टिमधु । रा.नि.व.६ । श्वेतदूर्वायाम् । नागवल्ल्यां । पान गाछ गुडूच्यां । वै.निघ. । मल्लिकायां । मल्लिका गाछ रा.नि.व.१० ।

**सौरः (लः) (भः)** । पुं । तुम्बुरुफलवृक्षे । ताम्बूल फलेर गाछ । रा.नि.व.११ । क्ली । कुंकुमे । चिका. । धान्यके । वै.निघ. । बोलनामगन्धद्रव्ये । रा.नि.व.६ । [रा.नि.व.११ ।

**सौरभजः** । पुं । तुम्बुरुवृक्षे । ताम्बूल फल ।

**सौरसः** । पुं । रक्तजक्रिमिभेदे । च.वि.७ष. । तुम्बुरुवृक्षे । ताम्बूल फल । वै.निघ. ।

**सौराष्ट्रः** । पुं । कुन्दुरुके । सल्लकीनिर्यासे । मालाई आठा । रा.नि.व.१२ । क्ली । कांस्ये । रा.नि.व.१३। स्त्री (ष्ट्रा) । स्वनामकमृत्तिकायाम् । सोराति माटी । रा.नि.व.१३ ।

**सौराष्ट्रकम्** । क्ली । पञ्चलौहे । हे.च. । कांस्यधातौ । प.मु. । [पर्पटी । रा.नि.व.१३ ।

**सौराष्ट्रमृत्तिका** । स्त्री । सौराष्ट्र्यां । पङ्क-

**सौराष्ट्रसम्भूता** । स्त्री । फटिकारिकायाम् । फट्‌किरि । वै.निघ. । [स्वध[illegible] । वै.निघ. ।

**सौराष्ट्रिकम्** । क्ली । विष[illegible] श.र. । कां-

**सौराष्ट्री** । स्त्री । सौराष्ट्र[illegible] प्रसिद्धायां स्वनामख्यातसुगन्धमृत्तिकायाम् । तद्देशीय सुगन्ध मृत्तिका । सं तुवरी । कं तुरवियमणु । बम्. सोरटीमाती । गुणाः —"तक्रा कटुका कषाया चक्षुष्या सङ्गमी च। वस्त्रघ्नी[illegible]पित्तसन्तापघ्नी च । रा.नि.व.१३ । सा च स्फाटिकातुल्यगुणा । भा.पू. १भ.उ.रसव. । कफपित्तवीसर्पव्रणघ्नी । राज. । सु. चि.१९ष. । तदभावे पङ्कपर्पटी ग्राह्या । भा.म.४ भ.उ.द.चि. । वै.निघ.१भ.अर्शः चि.भल्लातकादिलेपे । गोपीचन्दने । तिलकमाटी । वै.निघ. ।

**सौरिः** । पुं । असनवृक्षे । आसन् गाछ । रा.नि.व.९ । स्त्री । आदित्यभक्तायाम् । हुड़हुड़िया । रा.नि.व.४ । [वै.निघ. ।

**सौरिकः** । पुं । भल्लातकवृक्षे । भेला गाछ ।

**सौरिरत्नम्** । क्ली । नीलमणौ । रा.नि.व.१३।

**सौरी** । स्त्री । आदित्यभार्यायां । हुड़हुड़िया । पुं (री[इन्]) । भल्लातके । वै.निघ. ।

**सौरीयकम्** । क्ली । तन्नामकलक्षारनिर्यासविषे सु.कल्प.२अ. । See लक्षारविषम् ।

**सौरेयः (कः)** । पुं । शुक्लझिण्टाम् । श्वेत झाँटी । हिं कटसरैया । गुणाः—"सौरेयः कुष्ठवातास्रकफकण्डूविषापहः । तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः ॥" भा. ।

**सौल्विकः** । पुं । ताम्रकुट्टके । अ.टी. ।

**सौवर्चलम्** । क्ली । Sochal salt. तद्देशजलवणे । সচল লবণ । हिं चौहारकोड़ा । च.द अ.सा.चि. । चौहारलवण । भा.म.४अ.योनिरो.चि. । सौवर्चल इति महाराष्ट्रादौ । गुणाः—लघु क्षारं कटु उष्णं गुल्मकृमिघ्नम् ऊर्द्ध्ववातामशूलविबन्धारोचकहरञ्च । रा.नि.व.६ । अग्निकरं कटु उष्णं विशदं लघु । मद. । विबन्धानाहशूलघ्नम् उद्गारशोधकञ्च । भा. । रुचिकरं वीर्य्योष्णं हर्षदं कटु गुल्मघ्नं शूलघ्नं किञ्चित्पित्तकरं लघुपाकञ्च । राज. । सर्ज्जिक्षारे । সাজিমাটী । अम. ।

**सौवर्णभेदिनी** । स्त्री । प्रियङ्गौ । श.मा. ।

**सौवर्णिका** । स्त्री । असाध्यलताविशेषे । सु.कल्प.८अ. । [अम. ।

**सौविदः (दल्लः)** । पुं । अन्तःपुररक्षके ।

**सौवीरम्** । क्ली । बदरे । बृहद्बदरे । বড় কুল । र.मा. । काञ्जिके । কাঁজি । प.मु. । काञ्जिकभेदे । च.द.कृमि.चि. । स्रोतोऽञ्जने । अम. । सौवीराञ्जने । নীলাঞ্জন, নীল সুর্মা । र.मा. । एतच्छोधनं वराटकवत् । र.सा.सं. । रसाञ्जने । रसाञ्जनशोधने द्रष्टव्यम् ।

**सौवीरकम्** । क्ली । यवगोधूमकृतकाञ्जिके । যব ও গমের কাঁজি । "निस्तुषपक्वयवैः सहितमम्लं ।" शार्ङ्ग. । निस्तुषयवकाञ्जिके । যবের কাঁজি । च. । गुणाः—"सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतः । गोधूमैरपि सौवीरमाचार्य्यैः कैश्चिदूचिरे । सौवीरन्तु ग्रहण्यर्शःकफघ्नं भेदि दीपनम् । उदावर्त्ताङ्गमर्द्दास्थिशूलानाहेषु शस्यते ॥" भा. । अम्लरसं केश्यं शिरोरोगघ्नं जराहरं शोथिल्यनाशनं बलकरं सन्तर्पणञ्च । रा.नि.व.१५ । See तुषाम्बु । "सौवीरकं सुवीराम्लं ज्ञेयं गोधूमसाधितं । निस्तुषैस्तु यवैः केचित् प्राहुः सौवीरकं बुधाः ॥ यवैस्तु निस्तुषैः पक्वैः सौवीरं साधितं क्वचित् । यथादृष्टगुणं तोयं दापयन्ति चिकित्सकाः ॥ घनात्यये तथा ग्रीष्मे सन्धानं षड्दिनं भवेत् । हेमन्ते शिशिरे स्याच्च भिषक् द्वादशदिनेन वै । प्रावृड्वसन्ते सन्धानं भवेदष्टदिनेन वै ॥" तीड़. । सौवीराञ्जने । तच्च नीलाभं, नीलसुर्म्मा इति लोके । प.मु. । [কুল গাছ । रा.नि.व.११ ।

**सौवीरकः** । पुं । बदरवृक्षे । বড় পাটনাই

**सौवीरजम्** । क्ली । नीलाञ्जने । নীল সুর্মা । वै.निघ. ।

**सौवीरबदरम्** । क्ली । बदरफलविशेषे । নারকুলে, পাটনাই মিষ্ট বড় কুল । गुणाः—शीतलं भेदनं गुरु शुक्रलं बृंहणं पित्तदाहरक्तक्षततृष्णावातघ्नञ्च । मद.व.६ । [न । रा.नि.व.१३ ।

**सौवीरसारम्** । क्ली । स्रोतोऽञ्जने । रक्ताञ्ज-

**सौवीरा** । स्त्री । क्षीरकाकोल्यां । क्षीरकाँकला । वै.निघ. ।

**सौवीराञ्जनम्** । क्ली । स्वनामख्याताञ्जनविशेषे । सुवीरानामनदीभवाञ्जने । নীলাঞ্জন, নীল সুর্মা । रा.नि.व.१३ । लक्षणं—"वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति । सौवीराञ्जनमित्याहुरायुर्वेदविदो जनाः ॥" च.द.स्वस्थवृत्ते । गुणाः—शीतलं तीक्ष्णं स्वादु लेखनं कटु चक्षुष्यं तिक्तं ग्राहकं मधुरं स्निग्धं हिक्काक्षयपित्तविषकफघ्नं नेत्रदोषहरं वातघ्नं श्वासहरं रक्तपित्तघ्नञ्च । वै.निघ. । शीतलं कटु तिक्तं कषायं चक्षुष्यं रसायनं कफवातविषघ्नञ्च । रा.नि.व.१३ । [६ ।

**सौवीरिका** । स्त्री । क्षुद्रबदरीभेदे । मद.व.

**सौसुरादः** । पुं । पुरीषजकृमौ । च.वि.७अ. ।

**सौहित्यम्** । क्ली । तृप्तौ । अम. । यावताहारेण कुक्षेरप्रपीड़नादिकं भवेत् तावदाहारे । च.सू.१५अ. ।

**स्कन्दः** । पुं । शरीरे । त्रिका. । पारदे । रा.नि.व.१३ । स्कन्दग्रहे । भा.प्र.४अ.बालचि. ।

**स्कन्दग्रहः** । पुं । तन्नामकबालग्रहविशेषे । तदाविष्टस्य लक्षणं—"शूनाक्षः क्षतजसगन्धिकः स-

महिड वक्रास्यो हतचलितैकपक्ष्मैव: । उद्विग्न: सुलखितबद्धमुरल्परोदी स्कन्दार्तो भवति च गाढ़ मुष्टिवर्चा: ॥" सु.उ.२७अ. । तदुत्पत्ति: यथा – "स्कन्द: सृष्टो भगवता देवेन त्रिपुरारिणा । बिभर्त्ति चापरां संज्ञां कुमार इति स ग्रह: ॥" सु.उ. २७अ. । [व.११ ।

**स्कन्द(न्ध)तरु:** । पुं । नारिकेलवृक्षे । रा.नि.

**स्कन्दनम्** । क्ली । रेचने । त्रिका. । शोषणे । व्याक. ।

**स्कन्दसखा** । पुं । स्कन्दापस्मारे । सु.उ.२७अ. ।

**स्कन्दांशक:** । पुं । पारदे । रा.नि.व.१३ ।

**स्कन्दापस्मार:** । पुं । बालग्रहविशेषे । लक्षणं यथा -- "नि:संज्ञो भवति पुनर्भवेत् ससंज्ञ: संरब्ध: करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भमाण: फेनं वा सृजति च तत्सखाभिपन्न: ॥" सु.उ.२७अ. । "स्कन्दापस्मारसंज्ञो य: सोऽग्निनाग्निसमद्युति: । स च स्कन्दसखा नाम विशाख इति चोच्यते ॥" सु.उ.२७अ. ।

**स्कन्ध:** । पुं । शरीरावयवविशेषे । काँद । रा. नि.व.१८ । तरोर्मूलादिशाखापर्य्यन्तभागे । गाछेर गुँड़ि । अम. । शरीरे । मे. ।

**स्कन्धज:** । पुं । शल्लक्यादौ । "पर्व्वयोनय इक्ष्वाद्या: स्कन्धजा: शल्लकीमुखा: ।" हे.च. । वटवृक्षे । मद.व.५ । [अम. ।

**स्कन्धदेश:** । पुं । हस्तिस्कन्धे । स्कन्धप्रदेशे ।

**स्कन्धफल:** । पुं । नारिकेलवृक्षे । रा.नि.व.११ । उदुम्बरवृक्षे । यज्ञ डुमुर । श.च. । स्त्री (ला) । खर्जूरवृक्षे । भा. । [पाथो । हे.च. ।

**स्कन्धमल्लक:** । पुं । कङ्कपक्षिणि । काँक

**स्कन्धरुह:** । पुं । वटवृक्षे । बट गाछ । रा.नि. व.११ । [निदानम् ।

**स्कन्धरोग:** । पुं । अंसजाते अववाहुकादौ ।

**स्कन्धवन्दना** । स्त्री । मधुरिकायां । मौरी । श.च. ।

**स्कन्धशृङ्ग:** । पुं । महिषे । शब्दकल्प: ।

**स्कन्धा** । स्त्री । शाखायां । लतायां । शब्दकल्प: ।

**स्कन्धी** (इन्) । पुं । वृक्षे । र.मा. ।

**स्खद:** । त्रि । सुते । अम. । वा.उ.३६अ. ।

**स्कोटिका** । स्त्री । हापुत्रिकायां, खञ्जनिकायाम् । त्रिका. ।

**स्तन:** । पुं । कुचे । रा.नि.व.१८ । तन्नामकमर्म्मस्थाने । सु.शा.६अ. । [चि. ।

**स्तनकील:** । पुं । स्तनविद्रधौ । च द.स्त्रीरो.

**स्तननम्** । क्ली । कुन्थने । मे. ।

**स्तनन्धय:** । पुं । स्तनपायिशिशौ । रा.नि.व. १८ । स्त्री (या, यी) । स्तनपायिबालिकायाम् । रा.नि.व.१८ । [नि.व.१८ ।

**स्तनपायिका** । स्त्री । बालिकायाम् । रा.

**स्तनपीड़ा** । स्त्री । स्तनरोगे । निदा. ।

**स्तनमुखम्** । क्ली, पुं । चूचुके । रा.नि.व.१८

**स्तनयित्नु:** । पुं । मुस्तके । अम. । रोगे । हे.च. ।

**स्तनरोग:** । पुं । स्त्रीणां स्तनजव्याधौ । स्तनेर रोग । सम्प्राप्ति: – "सक्षीरौ वाप्यदुग्धौ वा दोष: प्राप्य स्तनौ स्त्रिया: । रक्तं मांसञ्च संदूष्य स्तनरोगाय कल्पते यावन्तो गलग्रो येञ्च कारणै: सम्भवन्ति हि । तावन्त: स्तनरोगा: स्यु: स्त्रीणां तैरेव हेतुभि: । धमन्य: संवृतद्वारा: कन्यानां स्तनमाश्रिता: दोषाविसरणात्तासां न भवन्ति स्तनामया: । तासामेव प्रजातानां गर्भिणीनान्तु ता: पुन: । स्वभावादेव विवृता जायन्ते सम्भवन्त्यत: ॥" सु.नि.१२अ. ।

**स्तनरोहित:** । पुं । तन्नामकसन्धिस्थाने । तस्य स्थानं स्तनचूचुकयोरूर्द्ध्वम् उभयतो द्व्यङ्गुलभागे । सु.शा. ।

**स्तनविद्रधि:** । पुं । स्तनोपरिजातस्फोटके । ठूनको वा मेयेर उपर फोड़ा । हे.च. । रस.र.स्तनरो.चि. ।

**स्तनवृन्त:** } **स्तनशिखा** } पुं,स्त्री । चूचुके । स्तनेर बोँटा । हे.च. ।

**स्तनव्रण:** । पुं । स्तनोपरिजातव्रणे । रस.र. स्तनरो.चि. । [द.स्त्रीरो.चि ।

**स्तनशोष:** । पुं । स्तनशुष्कतारोगविशेषे । च.

**स्तनसम्पत्** । स्त्री । प्रशस्तीरसम्पत्तौ । सम्पत् यथा—नात्यूर्द्धौ नातिलम्बौ नातिकृशौ नातिपीनौ युक्तपिप्पलकौ सुखप्रपाणौ चेति । च.शा.८अ. ।

**स्तनान्तरम्** । क्ली । हृदये । है.च. । भावि-वैधव्यसूचकहृदयस्थचिह्नविशेषे । शब्दकल्प: ।

**स्तनितफल:**
**स्तनितोद्भव:** } पुं । उदुम्बरवृक्षे । यज्ञडुमुर गाछ । विकङ्कतवृक्षे । बंइंची गाछ । रा.नि.व.११ ।

**स्तन्यम्** । क्ली । दुग्धे । रा.नि.व.१५ । तदुक्तं —"रसप्रसादो मधुर: पक्वाहारनिमित्तज: । कृत्स्नाद्देहात् स्तनौ प्राप्त: स्तन्यमित्यभिधीयते ॥" "आहाररसयोनित्वादेवं स्तन्यमपि स्त्रिया: । तदेवापत्यसंस्पर्शात् दर्शनात् स्मरणादपि । ग्रहणाच्च शरीरस्य शुक्रवत् सम्प्रवर्त्तते । स्नेहानिरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥" तत् शुद्धं दुष्टञ्च—तयो: परीक्षा यथा—"नीरे स्तन्यं यदैकीस्यात् अविवर्णमतन्तुमत् । पाण्डुरं तनुशीतञ्च तद्दुग्धं शुद्धमादिशेत् । कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् । पित्तादम्लञ्च कटुकं राज्योऽम्भसि तु पीतिका: । कफदुष्टन्तु तत्तोये निमज्जति च पिच्छिलम् । द्वन्द्वजन्तु द्विलिङ्गं स्यात् त्रिलिङ्गं सान्निपातिकम् ॥" भा. ।

**स्तन्यजनन:** । त्रि । स्तनदुग्धवर्द्धके । च.सू.४।

**स्तन्यशोधन:** । त्रि । स्तन्यदोषहरे । सु. ।

**स्तन्यसम्पत्** । क्ली । प्रशस्तस्तन्ये । तत्र प्रकृतिवर्णरसगन्धयुक्तं भवेत् । च.शा ८अ. ।

**स्तन्या** । स्त्री । कलम्बीशाके । प.मु. ।

**स्तब्ध:** । त्रि । दृढे । स्थिरे । व्याक. ।

**स्तब्धता** । स्त्री । दृढतायां । दार्ढ्ये । मा.नि. ।

**स्तब्धरोमा** (न्) । पुं । शूकरे । अम. ।

**स्तभ:** । पुं । छागे । श.र. ।

**स्तम्ब:** । पुं । रोहितकवृक्षे । रयना गाछ । प्रकाण्डहीनतरुमात्रे । अम. । तृणादिगुच्छे । चामर: । [निघ. ।

**स्तम्बक:** । पुं । अश्वकवृक्षे । ८इँ८ेचता । वै.

**स्तम्बकरि:** । पुं । धान्ये । अम. । धान्यमात्रे । श.र. ।

**स्तम्बेरम:** । पुं । हस्तिनि । प.मु. ।

**स्तम्भ:** । पुं । स्तब्धतायां । कायजडतायाम् । अ.ह.अ. । मा.नि. । "निद्रानाश: श्रम: स्तम्भ: ।"

**स्तम्भक:** । पुं । रक्तबोलि । खूनथाराबी । वै. निघ. । [वेदनाविशेषे । सु.सू.२२अ. ।

**स्तम्भनम्** । क्ली विष्टम्भभावे । वायुजन्यव्रण-

**स्तम्भनीक्रिया** । स्त्री । शिरावेधव्रणमुखाव-चूर्णनादिना स्रावनिवारणकार्य्ये । च.द.शिराव्यध.चि. । [कन्दे । रा.नि.व.७ ।

**स्तवक(काख्य)कन्द: (क:)** । पुं । गुलुच्छ-

**स्तवकफल:** । पुं । तेजोवत्याम् । ৫তজফল, তাম্বূল । वै.निघ. ।

**स्तवकमञ्जरी** । स्त्री । अशोकवृक्षे । वै.निघ.।

**स्तवकशालिनी** । स्त्री । घृतकुमार्य्याम् । प.मु. ।

**स्तिमित:** । त्रि । स्थिरे । मन्दे । मा.ज्व.नि.।

**स्तीरम्** । क्ली । वङ्गे । वै.निघ. ।

**स्तीर्व्वि:** । पुं । रुधिरे । तृणजातौ । उणा. ।

**स्तुटि:** । पुं । भरद्वाजपक्षिणि । वै.निघ. । [११।

**स्तुत्या** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व.

**स्तुनक:** । पुं । छागे । श.च. । [भा. ।

**स्तुभ:** । पुं । छागे । अ.टी.भ. । स्त्री । छाग्यां ।

**स्तूपक:** । पुं । वटकादिभक्ष्यद्रव्ये । वै.निघ. ।

**स्तेम:** । पुं । आर्द्रीभावे । अम. ।

**स्तेयी** (इन्) । पुं । वनमूषिके । वै.निघ. ।

**स्तैमित्यम्** । क्ली । आर्द्रतायां । अङ्गानामार्द्र-पटावगुण्ठितत्वे इव भावे । "स्तैमित्यं स्तिमितो वेग: ।" मा.नि. । भा.म.१भ.श्लेष्मज्व.चि. । जडतायाम् । रा.नि.व.२० ।

**स्तोक: (क:)** । पुं । चातकपक्षिणि । रा.नि. व.१९ । अम. । रक्तबोलि । खूनथाराबी । (क:) वत्सनाभविषे । वै.निघ. ।

**स्तोमम्** । क्ली । शस्ये । मस्तके । शब्दकल्प: ।

**स्त्यान:** । त्रि । आर्द्रे । भा.कुष्ठचि. । स्निग्धे । क्ली । आलस्ये । विश्व. । मे. ।

**स्त्येनः** । पुं । चवरी स्तेना. ।

**स्त्री** । स्त्री । नार्य्याम् । मेयेमानुष । वयोभेदेन तासां नामादि यथा—"बालेति गीयते नारी यावत् षोड़शवत्सरा । ततस्तु परन्तु तरुणी यावत् स्यात् त्रिंशतं भवेत् । तत ऊर्द्ध भवेत् प्रौढ़ा यावत् पञ्चाशतं पुनः । वृद्धा ततः परं ज्ञेया सा रतोत्सववर्जिता ॥ "पञ्चपञ्चाशतो नारी सप्तसप्ततितः पुमान् । द्वावेतौ न प्रसूयेते प्रसूयेते व्यतिक्रमात् ॥" राज.५प. । स्त्रीसंसर्गगुणाः स्त्रीसंसर्गशब्दे मन्तव्याः । [सजिना गाछ । चिका. ।

**स्त्रीचित्तहारी** (इन्) । पुं । श्रीभाञ्जनवृक्षे ।

**स्त्रीचिह्नम्** । क्ली । योनौ । भटा. ।

**स्त्रीधर्म्मः** । पुं । स्त्रीरजसि । हे.च. ।

**स्त्रीधर्म्मिणी** । स्त्री । रजस्वलायाम् । अम. ।

**स्त्रीनवनीतम्** । क्ली । मानुषीस्तन्यजातनवनीते । गुणाः—चक्ष्यं लघुपाकं चक्षुष्यं सर्व्वरोगघ्नं दीपनं विषघ्नञ्च । रा.नि.व.१५ ।

**स्त्रीनिरीक्षणदोहदः** । पुं । तिलकपुष्पवृक्षे । वै.निघ. । [अम. ।

**स्त्रीपुंसलक्षणा** । स्त्री । पोटायां स्त्रियि ।

**स्त्रीप्रियः** । पुं । आम्रवृक्षे । चिका. ।

**स्त्रीबीजः** । पुं । श्यामाकतृणे । श्यामा घास । वै.निघ. । [नि.व.५ ।

**स्त्रीमलापहा** । स्त्री । धूम्रपत्रायाम् । रा.

**स्त्रीमुखमधुदोहदः** । पुं । वकुलवृक्षे । रा.नि.व.१० ।

**स्त्रीरञ्जनम्** । क्ली । ताम्बूले । शब्दकल्प: ।

**स्त्रीरोगः** । पुं । विंशतिविधयोनिरोगे । See योनिव्यापत् ।

**स्त्रीसंसर्गः** । पुं । स्त्रीसेवायां । गुणाः—"बाला तु प्राणदा प्रोक्ता तरुणी प्राणधारिणी । प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥" राज.५प. ।

**स्त्रीसुखः** । पुं । शिग्रुवृक्षे । सजिना गाछ । वै.निघ. ।

**स्थगिका** (बन्धः) । स्त्री । अङ्गुष्ठाङ्गुलिमेढ्रादेषु व्रणबन्धनभेदे । ताम्बूलकरङ्काकारबन्ध इति सुश्रुत: । सु.सू.१८अ. । तल्लक्षणं—"स्थगिकां तु विदध्यात्तां मेढ्राङ्गुष्ठाङ्गुलापितान् । यथासम्भवैः पूर्वां बन्धीत् सुसमाहितः ॥" इति । सु. चि.१८अ.सू. ।

**स्थगु** । क्ली । कुब्जभावे । कूँज । शब्दकल्प: ।

**स्थपनी** । स्त्री । भ्रूमध्यस्थमर्म्मणि । सु.शा.६अ. । See तत्सम्बन्धमर्म्म ।

**स्थपुटम्** । त्रि । विषमोन्नते । हारा. ।

**स्थलकन्दः** । पुं । आरण्यसूरणे । बन ओल । र.मा. ।

**स्थलकमलम्** । क्ली । स्थलपद्मे । स्थलपद्म । गुणाः शीतलं कटु तिक्तं कषायं कफवातघ्नं मूत्रकृच्छ्राश्मशूलश्वासकासविषघ्नञ्च । रा.नि.व.१० ।

**स्थलकुमुदः** । पुं । श्वेतकरवीरवृक्षे । रा.नि.व. १० ।

**स्थलजा** । स्त्री । वल्लीय[illegible]नि । वै.निघ. ।

**स्थलतण्डुलगन्धः** । पक्षिराजशालौ । पक्षिराज धान । रा.नि.[illegible]६ ।

**स्थलपद्म(क)म्** । क्ली । स्वनामख्यातपुष्पविशेषे । स्थलपद्म । हिं बेटल मर । तें स्थलपद्ममनेपु । अम । गुणाः—"पद्मानुष्णा कटुस्तिक्ता कषाया कफवातजित् । मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा ॥" भा. ।

**स्थलपद्मः** (कः) । मानके । मानकचु । र.मा. ।

**स्थलपद्मिनी** (द्मी) । स्त्री । स्थलपद्मवृक्षे । स्थलपद्म । गुणाः—शीत्या तिक्ता शीता रक्तपित्तवान्तिमेहभूतातीसारघ्नी च । रा.नि.व.५ ।

**स्थलपिण्डा** । स्त्री । पिण्डखर्जूरिकायाम् । वै.निघ. ।

**स्थलपुष्पा** । स्त्री । भेण्डुकक्षुपे । रा.नि.व.५ ।

**स्थ(स्थू)लभण्टा (की)** । स्त्री । वृहतिकायां । विकृति । वै.निघ. । मद. ।

**स्थ(स्थू)लमञ्जरी** । स्त्री । अपामार्गे । र.मा. ।

**स्थलमर्कटः** । पुं । करमर्दकवृक्षे । वै.निघ. ।

**स्थ(स्थू)लरुहा** । स्त्री । स्थलपद्मिन्याम् । रा. नि.व.५ । वै.निघ. ।

**स्थलशृङ्गाटः (कः)** । पुं । क्षुद्रगोक्षुरे । छोट गोखरी । रा.नि.व.४ । गोक्षुरे । र.मा. ।

**स्थला (ली)** । स्त्री । जलशून्याकृत्रिमभूमौ । अ.टी.भ. ।

**स्थलेरुहा** । स्त्री । गृहकुमार्य्यां । घृतकुमारी । रा.नि.व.५ । दग्धारुहे । कुकरौंधा इति ख्याता । रा.नि.व.६ । सितपाटलावृक्षे । श्वेत पारुल । रा.नि.व.१० ।

**स्थलेशयः** । पुं । क्रोड़शल्लकशशादौ । तन्मांसं सर्व्वगुणकरम् । रा.नि.व.१७ ।

**स्थविका** । स्त्री । मक्षिकाभेदे । सु.कल्प.८अ. ।

**स्थविरम्** । क्ली । शैलेये । शैलज । रा.नि.व. १२ । वा.चि.३अ. । पुं । वृद्धे । रा.नि.व.१८ । कदम्बवृक्षे । वै.निघ. । वृद्धदारके । बीजताड़क । "मूलं स्थविरस्य शिंशपा चैभिः ।" भा.म.४भ.क्षुद्री.न्यक्कच्छचि. । स्त्री (रा) । महाश्रावणिकायाम् । रा.नि.व.५ । वृद्धायाम् । रा.नि.व.१८ ।

**स्थविरदारु** । क्ली । वृद्धदारुणि । बीजताड़क । "स्थविरदारुरास्नाः समाः ।" भा.म.१भ.सन्निपातज्व.चि. ।

**स्थाणुः** । पुं । जीवके । शब्दकल्प. ।

**स्थाणुकर्णी** । स्त्री । महेन्द्रवारुणीलतायाम् । बड़ माकाल । रा.नि.व.३ ।

**स्थाणुरोगः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं – "प्रावृट्काले व्रणो यस्य जङ्घायामुपजायते । स्थाणुरोगः स विज्ञेयः दुष्टशोणितसम्भवः ॥" ज.द.३८अ. । [शब्दकल्पः ।

**स्थानकम्** । क्ली । आलवाले । फे.च. । फेने ।

**स्थानचञ्चला** । स्त्री । बर्व्वरीवृक्षे । श.च. ।

**स्थानमृगः** । पुं । कर्कटे । मत्स्ये । कच्छपे । मकरे । वै.निघ. ।

**स्थापना** । स्त्री । समर्थनायां । "प्रतिज्ञाया एव हेतुभिर्दृष्टान्तोपनयनिगमैः स्थापनायाम् । पूर्व्वं हि प्रतिज्ञा पश्चात् स्थापना ॥" च.वि.८अ. ।

**स्थाप(थि)नी** । स्त्री । पाठायाम् । आकनादि । रा.नि.व.६ ।

**स्थालम्** । क्ली । पात्रविशेषे । थाल । अम. ।

**स्थालिका** । स्त्री । मक्षिकाविशेषे । सु.कल्प.८अ. । [तानि त्रिसप्ततिसंख्यकानि । च.शा. ।

**स्थालिकास्थि** । क्ली । अर्ब्बुदाकारास्थनि ।

**स्थालिद्रुमः** । पुं । नन्दीवृक्षे । तूणगाछ । वै.निघ. ।

**स्थालिपर्णी** । स्त्री । अश्वगन्धायां । वै.निघ. ।

**स्थाली** । स्त्री । सङ्कीर्णमुखपात्रविशेषे । थालि । हण्डिकायाम् । अम. । रक्तपाटलवृक्षे । रक्त पारुल गाछ । मे. । [शब्दकल्पः ।

**स्थालीपक्वम्** । क्ली । स्थालीपाचितान्नादौ ।

**स्थालीपाकः** । पुं । भानुपाकानन्तरं लौहस्य स्थाल्यां पाकविधौ । लौहद्विगुणत्रिफलया षोड़शगुणेनाष्टावशेषक्वाथं कृत्वा लौहमालोड्य स्थालीमध्ये रसशोषणपर्य्यन्तं पचेत् । तथा हस्तिकर्णपलाशशतावरीभृङ्गराजकेशराजानाम् एकस्य वा स्वरसेन, अभावे लौहसमानां त्रिफलामष्टगुणतोये निःक्वाथ्य पादशेषक्वाथेन स्थालीपाकं कुर्य्यात् । त्रिफलायाः पुनः स्वरसलाभेऽपि स्वरसो न ग्राह्य इति ज्ञेयम् । र.सा.सं. ।

**स्थालीवृक्षः** । पुं । अश्वत्थविशेषे । गया अश्वथ । हिं बेलियापीपर । गुणाः—स्वादुः कटुः तिक्तः तुवर उष्णः कटुपाकरसः ग्राही विषपित्तकफास्रघ्नः । भा. । [वै.निघ. ।

**स्थावरः** । त्रि । स्थितिशीले । पुं । नन्दीवृक्षे ।

**स्थावरविषम्** । क्ली । कन्दमूलखनिजादिविषेषु । तेषु नागोग्रशृङ्गौ नाम विषभेदौ श्रेष्ठौ । "नागो देहकरे श्रेष्ठः लौहे चैवोग्रशृङ्गकः ।" रा.नि.व.६ । दार्व्विकवत्सनाभसैकतशृङ्गकमुस्तकसार्षपकौर्म्मशृङ्गीकालकूटदर्दुरहालाहलयमदंष्ट्रमेषशृङ्गीहारिद्रकर्कटरक्तशृङ्गीग्रन्थिककेशराणीति । र.सा.सं. । "विषन्तु गरलः क्ष्वेड़स्तस्य भेदानुदाहरे । वत्सनाभः सहारिद्रः शक्तुकश्च प्रदीपनः । सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च । हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥" भा.पू.१भ. । एतदर्कगुणाः—"क्षेपेन गलगण्डाद्या वातरोगाः प्रयान्ति च ।" अर्क.चि. । अन्यच्च स्थावरविषाणि समासेन पञ्चपञ्चाशत् । तानि च मूलपत्रफलनिर्यासक्षीरधातुकन्दाश्रयत्वाद्दशभेदानि । तत्र मूल-

विषाणि अष्ट, पत्रविषाणि पञ्च, फलविषाणि द्वादश, पुष्पविषाणि पञ्च, त्वक्सारनिर्यासविषाणि सप्त, क्षीरविषाणि त्रीणि, धातुविषे द्वे, कन्दविषाणि च त्रयोदशेति पञ्चपञ्चाशत्। गुणादि स्वस्वपर्य्याये स्रष्टव्यम्। सु.कल्प.२अ। [६।

**स्थावरादिः**। क्ली। वत्सनाभविषे। रा.नि.व.

**स्थिकः**। पुं। कटिप्रोथे, स्फिचायाम्। फिँक्। श.र.।

**स्थितिः**। स्त्री। आयुर्वेदनिर्णये। च.द.।

**स्थिरः**। पुं। धववृक्षे। धाओया गाछ। भा.। वृक्षसामान्ये। त्रिका.। त्रि। कठिने। धरणिः।

**स्थिरकः**। पुं। शाकवृक्षे। सेगुन गाछ। वै.निघ.।

**स्थिरकुसुमः**। पुं। बकुलवृक्षे। रा.नि.व.१०।

**स्थिरगन्धः**। पुं। स्वर्णचम्पकवृक्षे। रा.नि.व.१०। स्त्री (न्धा)। पाटलवृक्षे। श्वेतकेतकीवृक्षे। रा.नि.व.१०। [मा.।

**स्थिरच्छदः (दा)**। पुं, स्त्री। भूर्जवृक्षे। र.

**स्थिरच्छायः**। पुं। वटादौ छायातरौ। त्रिका.।

**स्थिरजिह्वः**। पुं। मत्स्ये। हे.च.। [श.मा.।

**स्थिरजीविका (ता)**। स्त्री। शाल्मलीवृक्षे।

**स्थिरदंष्ट्रः**। पुं। सर्पे। मे.।

**स्थिरपत्रः**। पुं। हिन्तालवृक्षे। हेँताल गाछ। रा.नि.व.९। महाताले। वै.निघ.।

**स्थिरपुष्पः**। पुं। चम्पकवृक्षे। वकुलवृक्षे। तिलकपुष्पवृक्षे। रा.नि.व.१०।

**स्थिरपुष्पी** (इन्)। पुं। तिलकपुष्पवृक्षे। रा.नि.व.१०। [गाछ। वै.निघ.।

**स्थिरफला**। स्त्री। कुष्माण्डीलतायां। कुमड़ा

**स्थिरमुद्गा**। स्त्री। रक्तकुलत्थे। वै.निघ.।

**स्थिरयोनिः**। पुं। छायावृक्षे। शब्दकल्प:।

**स्थिररङ्गा**। स्त्री। नील्याम्। नील गाछ। रा.नि.व.४। [व.६।

**स्थिररागा**। स्त्री। दारुहरिद्रायाम्। रा.नि.

**स्थिरराङ्गः**। पुं। माषपर्ण्यां। माषाणी। वै.निघ.। [ल। वै.निघ.।

**स्थिरशाल्मली**। स्त्री। शाल्मलीवृक्षे। शिमू-

**स्थिरसाधनकः**। पुं। सिन्दुवारवृक्षे। निशिन्दा गाछ। रा.नि.व.४। [रा.नि.व.९।

**स्थिरसारः**। पुं। शाकवृक्षे। सेगुन गाछ।

**स्थिरा**। स्त्री। शालपर्ण्याम्। शालपाणि। रा.नि.व.४।२३। "सारिवातिविषे स्थिरा।" च.द.ज्व.चि.पिप्पल्याद्यघृते। च.सू.४अ.वल्यगणे, वयःस्थापने च। काकोल्याम्। काँकला। "बृहती कलशी स्थिरा।" भा.। शाल्मलीवृक्षे। शिमुल गाछ। श.च.। वनमुद्गे, माषपर्ण्यां। माषाणी। आखुकर्णीलतायां। मूषाणीलता। वै.निघ.।

**स्थिराङ्घ्रिः (पः)**। पुं। तालवृक्षे। हिन्तालवृक्षे। वै.निघ.। रा.नि.व.९। [श्यामशूले।

**स्थिरादिः**। पुं। स्वल्पपञ्चमूल्यां। च.द.परि-

**स्थिराद्वयम्**। क्ली। शालपर्णीपृश्निपर्ण्यौ। शालपाणि ओ चाकुलिया। "स्थिरे द्वे।" वा.सू.१५अ.पद्मकादौ। [अम.।

**स्थिरायुः**। पुं। शाल्मलिवृक्षे। शिमुल गाछ।

**स्थूरः**। पुं। वृषे। उणा.। मनुष्ये। व्याक.।

**स्थूलः**। पुं। पनसवृक्षे। काँठाल गाछ। रा.नि.व.११। तूदवृक्षे। तुँत गाछ। भा.। प्रियङ्गुनामतृणधान्ये। रा.नि.व.१६। स्त्री। वै.निघ.। त्रि। पीने। अम.।

**स्थूलकः**। पुं। तृणविशेषे। उलू। र.मा.।

**स्थूलकङ्गुः**। पुं। वरकधान्ये। कामिनीधान्य। रा.नि.व.१६। प.मु.। See प्रियङ्गुकः, कङ्गुच।

**स्थूलकणा**। स्त्री। स्थूलजीरके। रा.नि.व.६।

**स्थूलकण्टकः**। पुं। जालवर्बूरके। रा.नि.व.८। [च.।

**स्थूलकण्टकिका**। स्त्री। शाल्मलिवृक्षे। श.

**स्थूलकण्टफलः**। पुं। पनसवृक्षे। वै.निघ.।

**स्थूलकण्टा (ली) (ण्टी)**। स्त्री। बृहत्यां। रा.नि.व.४।

**स्थूलकन्दः (कः)**। पुं। रक्तलशुने। लाल

रशुन। रा.नि.व.७। शूरणे' वनशूरणे। वै. निघ.। हस्तिकन्दे। माणकन्दे। মান কচু। মুখালৌ। থাম আলু। रा.नि.व.७.२३।

**स्थूलका।** स्त्री। आमहरिद्रायां। वै.निघ.।

**स्थूलकुमुदः।** पुं। श्वेतकरवीरे। वै निघ.।

**स्थूलग्रन्थिः।** स्त्री। महाभरीवचायाम्। মহাভরী বচ। वै.निघ.। [শাক। रा.नि.व.४।

**स्थूलचुञ्चुः।** पुं। महाचुञ्चुक्षुपे। চেঁচ্‌কো

**स्थूलचम्पकः।** पुं। श्वेतचम्पके। वै.निघ.।

**स्थूलजीरकः।** पुं। जीरकभेदे। মোটা কাল জীরা। हिं मगरैला। वै.निघ.२भ.ग्रहणी.चि. जातीफलाद्यचूर्णे। गुणाः—कटुः तिक्त उष्णः वातघ्नः गुल्मघ्नः श्लेष्माध्मानहरः अजीर्णक्रिमिघ्नः दीपनश्च। रा.नि.व.६।

**स्थूलतण्डुलः।** पुं। स्थूलशालौ। মোটা হৈমন্তিক ধান। रा.नि.व.१६। प.मु.।

**स्थूलतालः।** पुं। हिन्तालि। হেঁতাল। रा. नि.व.६। [वै.निघ.।

**स्थूलतिक्ता।** स्त्री। दार्व्व्यां। দারুহরিদ্রা।

**स्थूलतिन्दुकः।** पुं। काकतिन्दुके। মাকড়াগাব। वै.निघ.। [छ। रा.नि.व.६।

**स्थूलत्वचा।** स्त्री। काश्मर्य्याम्। গামার গা-

**स्थूलदण्डः।** पुं। देवनाले। মহানল। रा. नि.व.८। [८।

**स्थूलदर्भः।** पुं। मुञ्जतृणे। मूँज। रा.नि.व

**स्थूलदला।** स्त्री। गृहकन्यायां। ঘৃতকুমারী। रा नि.व.५। [नि.व.८।

**स्थूलनालः।** पुं। देवनले। বড় নল। रा.

**स्थूलनासः (सिकः)।** पुं। शूकरे। हे.च.। चिक्ष.। [वै.निघ.।

**स्थूलनिम्बुः (कः)।** पुं। महानिम्बुवृक्षे।

**स्थूलनीलः।** पुं। श्येनपक्षे। বাজ। वै.निघ.।

**स्थूलपट्टः।** पुं। कार्पासे। श.र.।

**स्थूलपट्टाकः।** पुं। स्थूलवस्त्रे। श.र.।

**स्थूलपत्रः।** पुं। दमनकक्षुपे। দনা। रा.नि.

व.१०। सप्तपर्णवृक्षे। ছাতিম গাছ। वै.निघ.।

**स्थूलपर्णी।** स्त्री। सप्तपर्णवृक्षे। ছাতিম গাছ। वै.निघ.। [निघ.।

**स्थूलपादः।** पुं। गजे। चि। श्लीपदिनि। वै.

**स्थूलपुष्पः।** पुं। वकवृक्षे। বাকস গাছ। र. मा.। प.मु.। भुरुण्डक्षुपे। रा.नि.व.५। स्त्री (ष्पा)। पार्व्वतीयापराजितायाम्, आस्फोतायाम्। হাপরমালী। र मा.। [नि.व २३।

**स्थूलपुष्पी।** स्त्री। यवतिक्तालतायाम्। रा.

**स्थूलप्रियङ्गुः।** स्त्री। वरकधान्ये। কামিনী ধান। वै.निघ.।

**स्थूलफलः।** पुं। शाल्मलिवृक्षे। रा.नि.व.८। महानिम्बूवृक्षे। বড় লেবুর গাছ। वै.निघ.।

**स्थूलफला।** स्त्री। शणपुष्प्याम्। শণ। रा. नि.व.४। शाल्मलीवृक्षे। শিমুল গাছ। रक्तफलवृक्षे। वै.निघ.। [व.१।

**स्थूलभण्टाकी।** स्त्री। महावृहतीक्षुपे। मद.

**स्थूलमरिचम्।** क्ली। कक्कोलके। কঙ্কোল। रा.नि.व.१२। [মান আলু। रा.नि.व.७।

**स्थूलमूल(क)म्।** क्ली। चाणक्यमूलके। চা-

**स्थूलवर्त्मकृत्।** स्त्री। भार्ग्याम्। বামনহাটী। श.च.।

**स्थूलवर्वु(र्वू)रिका।** स्त्री। महावर्वूरवृक्षे। বড় বাবলা। "स्थूलवर्वूरिकापत्ररसः पानाद्‌ध्रुवं हरति। सर्व्वातिसारान्......।" शार्ङ्ग.म.१भ.।

**स्थूलवल्कलः।** पुं। रक्तलोध्रे। জটা।

**स्थूलवृक्षः।** पुं। महावकुलवृक्षे। वै.निघ.।

**स्थूलवृक्षफलः।** पुं। स्निग्धपिण्डीतकवृक्षे। ময়না বৃক্ষবিশেষ। रा.नि.व.८। [व.६।

**स्थूलवैदेही।** स्त्री। गजपिप्पल्याम्। रा.नि.

**स्थूलशरः।** पुं। शरविशेषे। स मालवदेशे सम्नाम्ना ख्यातः। রামশর, মোটা শর। गुणाः— मधुरः सुतिक्तः कफवातपित्तापहरः बलवीर्य्यकरः नित्यसेवनेन ईषद्वातकरश्च। रा.नि.व.८।

**स्थूलशालिः।** पुं। शालिधान्यविशेषे स्वनामख्याते। মোটা হৈমন্তিক ধান। मं वड़ीशालि।

वौ दोड़नेलु। गुणाः—स्वादुः मधुरः शीतलः पित्तशमनः जीर्णज्वरदाहजठररोगघ्नः बालवृद्धानां हितः अग्निबलवीर्य्यकरश्च। रा.नि.व.१६।

**स्थूलशिम्बः** । पुं। असितशिम्बायाम्। रा.नि.व.७। [१६।

**स्थूलशिम्बी** । स्त्री। श्वेतनिष्पावे। रा.नि.व.

**स्थूलशीर्षा (र्षिका)** । स्त्री। महामस्तकपिपीलिकायाम्। क्षुद्रपिपीलिकायाम्। हे.च.। सु.कल्प.८अ.। See पिपीलिका। [निघ.।

**स्थूलषट्पदः** । पुं। वरोलि। বোলতা। वै.

**स्थूलसायकमुखाख्यः** । पुं। स्थूलशरे। रा.नि.व.८।

**स्थूलस्कन्धः** । पुं। लकुचवृक्षे। रा.नि.व.६।

**स्थूलांशा** । स्त्री। गन्धपत्रायाम्। रा.नि.व.१०।

**स्थूला** । स्त्री। वृहदेलायाम्। বড় এলাচ। र. मा.। शतपुष्पायाम्। শুলফা। मधुरिकायाम्। মৌরী। कपिलद्राक्षायाम्। वै.निघ.। कार्पास्याम्। रा.नि.व.४। गजपिप्पल्यां। श.च.। एर्वारुकौ। কাঁকুড়। रा.नि.व.७।

**स्थूलाङ्गः (ङ्गी)** । पुं, स्त्री। स्थूलशालौ। মোটা ধান। वै.निघ.। [জীরা। मद.व.२।

**स्थूलाजाजी** । स्त्री। स्थूलजीरके। মোটা

**स्थूलाम्लम्** । क्ली। तन्नामककर्कोटाङ्गे। মোটা আংড়ি। च.शा.७अ.। [११।

**स्थूलाम्रः** । पुं। महाराजचूतवृक्षे। रा.नि.व.

**स्थूलारुष्कम्** । क्ली। क्षुद्रकुष्ठभेदे। कुष्ठरोगविशेष। अनेन स्थूलानिदारुणशोफाः सन्धिषु भवन्ति। सु.नि.५अ.।

**स्थूलास्यः** । पुं। सर्पे। श.च.।

**स्थूली (इन्)** । पुं। उष्ट्रे। शब्दकल्प:।

**स्थूलैरण्डः** । पुं। वृहदेरण्डवृक्षे। বড় ভেরেণ্ডা গাছ। मं थोरएरंड। गुणाः—रसवीर्य्यविपाकेषु गुणाढ्य इति। रा.नि.व.८।

**स्थूलैला** । स्त्री। (Amomum subulatum.) Larger cardamum. वृहदेलायाम्। বড় এলাচ। हिं बड़ एलाइच। तें पेद्द एलाकुलु। ता. एलम। मं एलचीड़ि। गुणाः—शीतला तिक्ता सुगन्धा कफपित्तघ्नी मूत्ररोगहरी मलहरी पुंस्त्वघ्नी च। रा.नि.व.६। [नि.।

**स्थूलोच्चयः** । पुं। मुखश्रेणी। वयसकोड़ा।

**स्थौणेय(क)म्** । क्ली। ग्रन्थिपर्णे। গাঁঠিয়ালা। हिं थुनेर। तें सुगन्धद्रव्यमु। नेपालि भटिउर। गुणाः—"स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषणुत्। मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तुजित्। हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान्॥" भा.। च.द.का.व्या.चि.एलादि.। सु.सू. ३८अ.। वा.सू.१५अ.एलादिः।

**स्थौल्यम्** । क्ली। स्थूलतायां। व्याक.।

**स्नपनम्** । क्ली। स्नाने। शब्दकल्पः।

**स्नवः** । पुं। क्षरणे। अम.।

**स्नसा** । स्त्री। वस्नसायां। স্নায়ু। हे.च.।

**स्नानम्** । क्ली। अवगाहने। गुणाः—"स्नानं पवित्रमायुष्यं श्रमस्वेदमलापहम्। शरीरबलसन्धानं कैश्यमोजस्करं परम्॥" राज.२प.। "रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम्। उष्णेन शिरसः स्नानम् अहितञ्चक्षुषः सदा॥ शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत्। श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिकलाबलम्। कामसुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत्। अतिशीताम्बुशीतं च श्लेष्ममारुतकोपनम्। अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनम्। तच्चातिसारज्वरि[illegible]शूलानिलार्त्तेषु। आध्मानारोचकाजीर्णे[illegible] च गर्हितम्॥" इत्यादि। सु.चि.२४अ.।

**स्नानतृणम्** । क्ली। कुशतृणे। श.र.।

**स्नापकः** । त्रि। स्नानकारके। च.सू.१५अ.।

**स्नायुः** । स्त्री, क्ली। वायुवाहिनाड्याम्। महर इति लोके। सा मर्मस्थल सप्तभिर्मासैर्भवति। मुग्धबोधः। स्नायुश्चतुर्विधा यथा—प्रतानवत्यः वृत्ताः पृथ्वः शुषिराश्चेति। सु.शा.५अ.। तत्स्वरूपं यथा—"मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्। शिराणां हि मृदुः पाकः स्नायूनाञ्च ततः खरः॥" इति। "स्नायवो बन्धनानि स्युर्देहमांसास्थिमेदसाम्। सन्धीनामपि यत्ताश्च शिराभ्यः सुदृढाः स्मृताः॥" तत्संख्या—"शतानि नव आयुर्वे

...नी स्नायवो नवाम् ।" तासु शाखासु षट्-...रीरे नायवो नवाम् ।" तासु शाखासु षाक-...नि ६०० । कोष्ठे २३०, ग्रीवायाम् ७०, पादा-...लिषु ३०, तलकूर्चगुल्फेषु ३०, जङ्घायां ३०, ...जानुनि १०, ऊरौ ४०, वङ्क्षणे १०, स्कन्धयो-...५ । कट्यां ६०, पृष्ठे ८०, पार्श्वयोः ६०, उर-...से ३०, ग्रीवायां ३६, मूर्ध्नि ३४ । सु.शा.५अ. । ...भा. ।

...स्नायुकः । पुं । तन्नामकरोगविशेषे । स्नायु-...रोग । हिं नहरुया । निदानं —"शाखासु कुपि-...तो दोषः शोथं कृत्वा विसर्पवत् । भिनत्ति तस्थिते ...तत्र सोष्मा मांसं विशोष्य च । कुर्य्यात् तन्तुनिभं ...जीवं वृत्तं सितद्युतिवर्धिः । शनैः शनैः क्षताद् ...याति छेदात् कोपमुपैति च । तत्पातात् शोकमा-...नि: स्यात् पुनः स्थानान्तरे भवेत् । स स्नायुक-...इति ख्यातः क्रियोक्ता तु विसर्पवत् । बाह्योर्यदि ...प्रमादेन जङ्घयोस्त्रुट्यति क्वचित् । सङ्कोचं खञ्जता-...ञ्चैव छिन्नं जन्तुः करोत्यसौ ॥" सु. ।

**स्नायुर्म्म** (न्) । क्ली । शुक्लगतनेत्ररोगभेदे । ल-चणं यथा —"शुक्ले यत् पिशितमुपैति वृद्धिमेतत् स्नायुर्म्मेत्यभिपठितं खरं प्रपाण्डु ।" सु.उ.४अ. ।

**स्नावः** । पुं । स्नायुशिरायां । शब्दकल्प: ।

**स्नावी** । स्त्री । अंसवये । वा.शा.४अ. ।

**स्निग्धम्** । क्ली । मधूच्छिष्टे । মোম । रा.नि. व.१४ । पुं । रक्तैरण्डे । रा.नि.व.८ । सरलवृक्षे । रा.नि.व.८ । दुग्धसरे । सरलनिर्यासे । वै.निघ. । त्रि । चिक्कणे । श.र. ।

**स्निग्धकरञ्जकः** । पुं । गुच्छकरञ्जे । वै.निघ. ।

**स्निग्धच्छदः** । पुं । वटवृक्षे । वै.निघ. । (दा) स्त्री । बदरीवृक्षे । वै.निघ. ।

**स्निग्धतण्डुलः (ला)** । पुं, स्त्री । षष्टिक-शालिधान्ये । प.मु. । रा.नि.व.१६ । See गौर-षष्टिकः ।

**स्निग्धदलः** । पुं । गुच्छकरञ्जे । रा.नि.व.९ ।

**स्निग्धदारु** । क्ली । देवदारुकाष्ठे । रा.नि.व. १२ । पुं (रुः,कः) । सरलवृक्षे । गन्धकाष्ठविशे-षे । रा.नि.व.१२। शालवृक्षे । वै.निघ. । [निघ.।

स्निग्धपि...

**स्निग्धपत्रः (त्रः)** । पुं । हस्तकरञ्जे । गुच्छ-करञ्जे । रा.नि.व.९ । आवर्त्तक्यां । आँ:मोड़ा । वै.निघ. । मञ्जरकृष्णे । रा.नि.व.८ ।

**स्निग्धपत्रा (त्री)** । स्त्री । बदरीवृक्षे । कटा-पालङ्कशाके । रा.नि.व.७ । कोलिकायाम् । शुनि शाक । वै.निघ. । गाम्भारीवृक्षे । গামার গাছ । रा.नि.व.९ ।

**स्निग्धपर्णिका (र्णी)** । स्त्री । मूर्वायाम् । रा.नि.व.३ । पृश्निपर्ण्यां । চাকুলিয়া । वै.निघ. ।

**स्निग्धपिण्डीतकः** । पुं । मदनवृक्षविशेषे । मं घोरमेथाह्वय । अयं वाराहतुल्यगुणः । रा. नि.व.८ ।

**स्निग्धफला** । स्त्री । बालुककर्कटिकायाम् । कुटी । वै.निघ. । नाकुल्यां । গন্ধরাস্না । रा.नि. व.७ । [গাছ । वै.निघ. ।

**स्निग्धमज्जकः** । पुं । वातामवृक्षे । বাদাম

**स्निग्धराजिः** । पुं । कृष्णसर्पेण राजिमत्यां जाते सर्पविशेषे । सु.कल्प.४अ. । See सर्पः ।

**स्निग्धा** । स्त्री मेदायाम् । रा.नि.व.५ । च-स्थिसारे । मज्जा । विकङ्कतवृक्षे । বঁইচী গাছ । ज.द. ।

**स्नुक्** । स्त्री । स्नुहीवृक्षे । মনসা গাছ, মনসা সিজু । र.मा. । सेहुण्ड इति ड. । सु.सू.२९अ. अधःसंस्रमने । वा.सू.१५अ. । "स्नुक् शङ्खिनी ?"

**स्नुक्छदः** । पुं । चीरीशवृक्षे । খিরিশ গা-ছ । प.मु. । चीरकस्नुहीवृक्षे । र.मा. ।

**स्नुक्छदोपमः** । पुं । वाराहीकन्दे । শুয়ার আলু । वै.निघ. ।

**स्नुग्दलम्** । क्ली । मनसापत्रे । মনসাপাতা । रस.र.बाल.चि. । पुं । स्नुहीवृक्षे । মনসা গাছ বা তেকাঁটা সিজু । श.च. ।

**स्नुषा** । स्त्री । पुत्रभार्य्यायाम् । वा.चि.६अ. । स्नुहीवृक्षे । মনসা সিজু, তেকাঁটা সিজু । श. च. ।

**स्नुहा (हिः, ही)** । स्त्री । (Euphorbia neriifolia. Syn. E. Ligularia. Eu-

वास्तुके । स्नुहीविशेषे । मनसा गाछ, घोड़ा सिजु, तेकाँटा सिजु । हिं थोहर, तिधार, आकुनिया । ते चेमुड़केड़ । वम्. मिवडुंग । र. मा. । सं.कुष्ठ.चि.मरिचाद्यतैले । गुणा:—उष्णा पित्तदाहघ्नी कुष्ठवातप्रमेहघ्नी च । तत्क्षीरं वात-विषाध्मानगुल्मोदरघ्नञ्च । रा.नि.व.८ । "बहुदोषे प्रयोक्तव्यमग्नितुल्यं सुधापय: ।" राज. । विरेचने च प्रशस्तं । च.सू.१अ. । सु.चि.१४अ ।

**स्नुहाद्यतैलम्** । क्ली । खालित्ये तैलम् । टी-केर तैल । पाठ:—"स्नुहीपय: पयोऽर्कस्य मार्कवो लाङ्गलीविषम् । मूत्रमाजं गवांमूत्रं रक्तिका सेन्द्रवारुणी । सिद्धार्थं तीक्ष्णतैलञ्च गर्भं दत्त्वा विपश्चिता । वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥" लाङ्गलीविषं लाङ्गलीमूलं, रक्तिका गुञ्जाफलं, तीक्ष्णतैलं नयाफुटकीतैलं । केचित्तु सिद्धार्थतीक्ष्णतैलमिति श्वेतसर्षपतैलं वदन्ति । रस. र. । [वीज । सं.कनकतैले ।

**स्नुहीवीजम्** । क्ली । स्नुहीवृक्षवीजे । मनसा-

**स्नुह्यम्** । क्ली । उत्पले । त्रिका. ।

**स्नु(ही)चीरम्** । क्ली । स्नुहीवृक्षनिर्यासे । सिजुर आटा । सु.सू.३६अ. । सं.बाहुशालगुड़े ।

**स्नेह:** । पुं । दुग्धसारे । वै.निघ. । मस्तिष्के । रा.नि.व.१८ । सर्षपे । भा.पू.१भ.धा.व. । पृथिव्यम्बुगुणभूयिष्ठद्रव्ये, घृतादौ । सु.सू.४१अ. । स चतुर्विध: घृततैलवसामज्जान इति । च.सू.१अ. । स्नेह: स्थावरजङ्गमभेदेन द्वियोनि: । तथोस्तैलं स्थावरयोनि:, घृतञ्च जङ्गमयोनि: । तत्पानसमयो रवेरुदयात् किञ्चिदनन्तरम् । तत्पानञ्च शीते दिवा, ग्रीष्मे रात्रौ, वातपित्ताधिके रात्रौ, वातश्लेष्माधिके च दिवा हितम् । घृते कोष्णजलं, तैले यूष:, वसामज्ज्ञो: मण्डमनुपेयम् । भा. । स्नेहप्रयोगविधि: —"स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचित्तका: । वृद्धबालाबलकृशा रूक्षा: क्षीणास्रेतस: । वातार्त्तस्यन्दतिमिरदारुणप्रतिबोधिन: । स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बला: । उरुस्तम्भातिसारामगलरोगगरोदरै: । मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीड़िता: ॥" तस्य सप्तदिनपर्य्यन्त: काल: । स त्रिविध: उत्तममध्यमाधमभेदेन । तत्र दिनत्रयपर्य्यन्तमधम:, दिनचतुष्टयपर्य्यन्तं मध्यम:, सप्तदिनपर्य्यन्तमुत्तम: । गुणा:—"स्नेहोऽनिलं हन्ति मृदूकरोति देहं मलानां विनिहन्ति सङ्गम् । स्निग्धस्य सूक्ष्मेष्वयनस्य लीनं ........ ॥" च.सिद्धि.१अ. । स्नेहमात्रा —"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमा । जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥" च.द. । स्नेहपाकविधि:—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं चीरं कल्कस्तु स्नेहपादिक: । चतुर्गुणत्वष्टगुणे द्रवद्वैगुण्यतो भवेत् । तत्र द्रवान्तरानुक्तौ चीरमेव चतुर्गुणम् । द्रवान्तरेण योगे हि चीरं स्नेहसमं भवेत् ॥" अन्यत्—"जलमष्टगुणं क्वाथ्यात् क्वाथश्च जलपादिक: । क्वाथ्याच्च पादिक: स्नेह: स्नेहात् कल्कस्तु पादिक: ॥ पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥" अन्यच्च—"एकद्वित्रिद्रवद्रव्यै: कुर्य्यात् स्नेहाच्चतुर्गुणम् । चीरं स्नेहसमं देयं चतुर्भिश्च चतुर्गुणम् । कल्काच्चतुर्गुण: स्नेह: स्नेहात्तोयं चतुर्गुणम् । क्वाथ्याच्चतुर्गुणं वारि क्वाथ्य: क्वाथसमो भवेत् । जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितं । पाद: स्यादौषधं स्नेहात् स्नेहात्तोयं चतुर्गुणम् । वृषादिकुसुमात् कल्क: केवलं स्नेहसिद्धये ॥ यत्रोक्ता: स्नेहपादांश: स्नेहकार्य्ये मनीषिभि: । स्नेहे सिध्यति शुद्धाम्बुनि:क्वाथस्वरसै: क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् । स्वरसचीरमाङ्गल्यै: पाको यत्रेरित: क्वचित् । जलं चतुर्गुणं तत्र [illegible] धानार्थमावपेत् । (माङ्गल्यं दधि) । न [illegible] रसं द्रव्यचीरादिभिरुपक्रमम् । सम्यक् पाको न जायेत तस्मात्तोयं चतुर्गुणम् । स्नेहपाकविधौ यत्र चीरमेकन्तु कथ्यते । तोयादीनामनिर्द्देशे चीरमेव चतुर्गुणम् । अकल्कोऽपि भवेत् स्नेहो य: साध्य: केवले द्रवे । स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित् । स्नेहस्य कुड़वं तत्र पचेत् कल्कपलेन तु । मानानुक्तौ घृते तैले प्रस्थमाहुश्चिकित्सका: । द्विगुणं त्रिगुणं वापि बहुमात्राच्च पादिकम् । योगं यदि पचेन्मूढो हीनवीर्य्यं भवेत्तदा । तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता । अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम् ॥" अन्येऽप्याहु:—"अङ्गेऽप्यनुक्ते विहितन्तु मूलं भागेऽप्यनुक्ते समता विधेया । द्रवेऽप्यनुक्ते जलमेव देयं कालेऽप्यनुक्ते दिवसस्य पूर्व्वम् । प्रसारण्यादिनि[illegible] शतमेकं पृथक्

क्। जलद्रोणेन चैकैकं साधयेत् क्वाथकं हितम्। व्यद्रव्यस्य बाहुल्यादुदकं स्वल्पमेव तु। सम्यक् कं न मुञ्चेत हीनवीर्य्यन्तु केवलम्॥ कल्कका- विनिर्द्दिष्टे गणात्तस्मात् समाहरेत्। समस्तवर्गमर्द्धं यथालाभमथापि वा। प्रयुञ्जीत भिषक् प्राज्ञः त्रमात्राविभागवित्॥ यथाधिकरणैर्योगैर्गणे ात् स्नेहसंविधौ। तत्रैव कल्कनिर्य्यूहौ विध्येते हवेदिना॥ गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौ- गकम्। तदुद्धरेद्यौगिकन्तु प्रक्षिपेद्यदकीर्त्ति- तम्।" शार्ङ्गधरस्तु—"कल्काच्चतुर्गुणीकृत्य घृतं त्र तैलमेव वा। चतुर्गुणद्रवे साध्यं तस्य मात्रा पलोन्मिता॥ द्वादशाहस्तु मूलानां वल्लीनां क मसेव च। एकाहं व्रीहिमांसानां पाकं कुर्य्या द्विचक्षणः॥ चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं ज लम्। तथा च मध्यमे द्रव्ये दद्यादष्टगुणं पयः॥ अत्यन्तकठिने द्रव्ये नीरं षोड़शिकं मतः। कर्षा- दितः पलं यावत् क्षिपेत् षोड़शिकं जलम्॥ त- दूर्द्धं कुड़वं यावत् भवेदष्टगुणं पयः। प्रस्थादितः क्षिपेन्नीरं चोरं यावच्चतुर्गुणम्॥ अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम्। कल्कस्यांशं तत्र दद्यात् चतुर्थं षष्ठमष्टमम्॥ द्रवाणि यत्र स्नेहेषु पञ्चादी- नि भवन्ति हि। तत्र स्नेहसमान्याहुर्यथापूर्व्वं च- तुर्गुणम्॥ द्रवेण केवलेनैव स्नेहपाको भवेद्यदि। तत्राम्बुपिष्टाः कल्काः स्युर्द्रवश्चात्र चतुर्गुणः॥ क्वा- थेन केवलेनैव पाको यत्रेरितः क्वचित्। क्वाथ्यद्र व्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते॥" स्नेहपा कनिष्पत्तिलक्षणमाह—"स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्। वह्नौ क्षिप्ते च नो शब्दस्त- दा सिद्धिं विनिर्द्दिशेत्॥ शब्दस्योपरमे प्राप्ते फेन- स्योपरमे तथा। गन्धवर्णरसादीनां सम्पत्तौ सि- द्धिमादिशेत्॥ स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा। ईषत् स्वरसकल्कस्तु स्नेहपाको मृदुर्भ- वेत्। मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले॥ ईषत्कठिनकल्कस्य स्नेहपाको भवेत् खरः॥ तदूर्द्धं खरपाकः स्यात् दाहकृन्निष्प्रयोजनः। सर्व्वेषामिह द्रव्याणां मध्यपाकः प्रशस्यते। वरं पाको मृदुः कार्य्यः तथापि न खरो मतः॥ घृततैलगुड़ादींश्च नैकाहादवतारयेत्। व्युषितास्तु प्रकुर्व्वन्ति विशे- षेण गुणान् यतः॥ केवलं व्रीहिजन्त्वङ्गक्वाथो व्यु- ष्टस्तु दोषलः॥" प.प्र.२ख.। अश्वस्य घृतादिप्र-

"तयोः पिचौ भीजनेषु पेयः पाने च कथ्यते॥" ज.द.१८च.।

**स्नेहकारः**। पुं। आम्रवृक्षे। वै.निघ.। [सु.।

**स्नेहगर्भः**। पुं। तिलक्षुपे। তিল গাছ। प.

**स्नेहचतुष्टयम्**। क्ली। सर्पिस्तैलवसामज्जसु। प.प्र.१ख.। सि.यो.ना.व्या.चि.।

**स्नेहनः**। पुं। स्नेहचूर्णपानविशेषे। कफे। तस्य स्थानं शिरः। स्नेहदानेनेन्द्रियसन्तर्पणत्वात्। भा.। प्रत्यङ्गोविशेषे स्नेहपाने। सु.चि.१च.। क्ली। च- व्यहे। रा.नि.व.१५। दुग्धफेनि। ननि। वै. निघ। त्रि। स्निग्धकरे। स्त्री (नी)। स्नेहन- न्यां। च.सू.२च.। तन्नामकमेकोपानवर्णो। "धा- त्र्याचपथ्याबीजानि एकद्वित्रिगुणानि च। पिष्ट्वा वर्त्तिं जलैः कुर्य्यादञ्जनं हितरोगकम्॥" भा.।

**स्नेहपाककल्पः**। पुं। स्नेहपाकविधौ। "स्ने- हकुड़वे भेषजपलं पिष्टं कल्कं चतुर्गुणं द्रवमावा- प्य विपचेत्।" इत्यादि। सु.चि.३१च.।

**स्नेहपिण्डीतकः**। पुं। पीतमदनवृक्षे। वै. निघ.।

**स्नेहपूरफलः**। पुं। तिलक्षुपे। वै.निघ.।

**स्नेहभूः**। पुं। कफे। हे.च.।

**स्नेहमुख्यम्**। क्ली। तैले। वै.निघ.।

**स्नेहरङ्गः**। पुं। तिले। श.र.।

**स्नेहवती**। स्त्री। मेदायाम्। रा.नि.व.५।

**स्नेहवर्त्तिः**। स्त्री। चक्षुःशूलरोगे। ज.द.।

**स्नेहवस्तिः**। पुं। तैलादिना वस्तिदाने। তৈলপিচ্কিরি। "स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः। स्नेहवीर्य्यं तथादत्ते स्नेहेनानुविसर्पति॥" च.द.। See अनुवासनवस्तिः।

**स्नेहविद्धः (द्रुमः)**। पुं। तैलदेवदारुणि। তৈলদেবদারু। वै.निघ.। जटा.।

**स्नेहबीजः**। पुं। पियालवृक्षे, चारवृक्षे। পিয়াল গাছ। रा.नि.व.११। [सु.।

**स्नेहव्यापत्**। स्त्री। स्नेहातियोगजन्यविकारे।

**स्नेहसारः**। पुं। मज्जधातौ। मज्जा। वै.निघ.।

[illegible] (...)। पुं। ... रोगे। जटा.।

**स्पर्शोत्तमम्** । क्ली तैले । वै.निघ. ।

**स्पन्दः (नम्)** । पुं, क्ली । कम्पने । मा.नि. ।

**स्परिशः** । पुं । स्पर्शे । शब्दकल्प. ।

**स्पर्शः** । पुं । त्वाचप्रत्यये । रोगे । दाने । चिका. । मणिविशेषे । परशपाथर । शब्दकल्प. ।

**स्पर्शनः** । पुं । वायौ । रा.नि.व.११ । क्ली । स्पर्शे । मे. । [शब्दकल्प. ।

**स्पर्शमणिः** । पुं । मणिविशेषे । परशपाथर ।

**स्पर्शमणिप्रभवम्** क्ली । स्वर्णे । श.र. ।

**स्पर्शलज्जा** । स्त्री । लज्जालुकायाम् । लज्जावती । रा.नि.व.५ । [श.च. ।

**स्पर्शशुला** । स्त्री । शतमूल्याम् । शतमूली ।

**स्पर्शसङ्कोचपत्रिका** । स्त्री । शुक्ललज्जालुकायाम् । श्वेत लज्जावती । वै.निघ. ।

**स्पर्शस्यन्दः** । पुं । भेके । বেঙ । शब्दकल्प. ।

**स्पर्शहानिः** । स्त्री । शूकरोगविशेषे । "जनयेत् स्पर्शहानिन्तु शोणितं शूकदूषितम् ।" सु.नि. १४अ. ।

**स्पृक्का** । स्त्री । तन्नामकसुगन्धशाके । पिड़िং शाक । मं स्पृक्का । कं:ड्रिके । तें स्पृकुयनेडुद्रव्यमु । गुणाः—कटुः कषाया तिक्ता कफकासघ्नी श्लेष्महाश्मरीमूत्रकृच्छ्रेषु हिता च । रा.नि.व. १२ । सु.सू.३८अ. । लज्जालुकायाम् । रा.नि.व. ५ । वा.सू.१५अ.एलादिः । "स्पृक्काचोरकचोचपत्रतगरम् ।" वै.निघ.२भ.क्षय.चि.मार्कवादिचूर्णे । ब्राह्म्याम् । विर्ह्मी शाक । मालत्यां । मालती फुल । शतपत्र्यां । সেউতি । पाचीनामपुष्पवृक्षविशेषे । वै.निघ. ।

**स्पृशा** । स्त्री । सर्पकङ्कालिकावृक्षे । श.च. । (शा, शी) । कण्टकार्याम् । कल्प. । प.मु. ।

**स्पृष्टरोदनिका** । स्त्री । समङ्गायां । लज्जावती । सु.चि.२१अ.ड. ।

**स्पृष्टास्पृष्टि** । अ । परस्परस्पर्शने । ছোঁওয়াছুঁয়ি । शब्दकल्प. ।

**स्पृष्टिः** । स्त्री । स्पर्शने । अम. ।

**स्पृह्यः** । पुं । मातुलुङ्गवृक्षे । श.च. ।

**स्फटः (टा)** । पुं, स्त्री । सर्पफणायां । अम.

**स्फटिकः** । पुं । सूर्यकान्तमणौ । हला. स्वनामख्यातमणौ । स्फटिक । गुणाः—पित्तदाहरोगघ्नः रसससवीर्यश्च । एतज्जपमालया जपः कोटिगुणं फलं भवति । रा.नि.व.१३ । स्फटिकरौ । फट्‌किरि । भा.म.४भ.नेत्ररो.चि. । "स्फटिकमङ्गनाभौन्दवः ।" कर्पूरे । वै.निघ. ।

**स्फटिकविषम्** । क्ली । दारुमोचभेदे । सं. ।

**स्फटिका (ख्या)** । स्त्री । स्फटिकारिकायां । फट्‌किरि । भा. । सं.रसकर्पूरे ।

**स्फटिकाभा (न्)** । पुं । [illegible] । श.र. ।

**स्फटिकाद्रिभिदः** } [illegible]र्पूरे । शब्दकल्प. ।
**स्फटिकाभ्रः** } रा.नि.व.१२ ।

**स्फटिकारिः** । स्त्री । स्वनामख्यातखनिजोपरसे । फट्‌किरि । हिं फिटिकारी । गुणाः—कषाया उष्णा वातपित्तकफव्रणघ्नी श्वित्रविसर्पघ्नी योनिसङ्कोचकारिणी च । भा.पू.१भ.उ.रसव. ।

**स्फटिकोपमः** । पुं । कर्पूरे । यशदे । दस्ता । चन्द्रकान्तमणौ । वै.निघ. ।

**स्फटिकोपलः** । पुं । स्फटिके । वै.निघ. ।

**स्फटी** । स्त्री । स्फटिकारी । फट्‌किरि । भा. ।

**स्फाट(टि,टी)कम्** । क्ली । स्फटिके । श.र. ।

**स्फाटिकोपलः** । पुं । स्फटिके । त्रिका. ।

**स्फिक् (च्)** । स्त्री । कटिप्रोथे । গুদপুলা । रा.नि.व.१८ ।

**स्फिक्घातनकः** । पुं । कट्फलवृक्षे । श.च. ।

**स्फुटकपत्रम्** । क्ली । ज्योतिष्मतीपत्रे । लताफट्‌किर पाता । च.द.बाल.चि. । प्रयोगा. ।

**स्फुटत्वचा** । स्त्री । ज्योतिष्मत्यां । लताफट्‌कि । वै.निघ. ।

**स्फुटनम्** । क्ली । विसरणे । अम. ।

**स्फुटफलः** । पुं । तुम्बुरौ । তাম্বুল । वै.निघ.

**स्फुटबन्धना (नी)** । स्त्री । पारावतपद्यां लताफट्‌की । प.मु. । [फट्‌की । र.मा. ।

**स्फुटवल्कली** । स्त्री । पारावतपद्यां । लता-

**स्यन्दनम्** । क्ली । जले । क्षरणे । मे. ।

**स्यन्दनः** । पुं । तन्नामकवृक्षे । तिनिश, सादन इति पाश्चात्ये । সাদন গাছ । भा.म.पूतना.चि. । "स्यन्दनोऽर्ज्जुन एव च ।" च.चि.३अ. । वि.८अ. । तिन्दुकवृक्षे । তেঁদ গাছ । वै.निघ. ।

**स्यन्दनतैलम्** । क्ली । भगन्दरे तैलम् । पाठः —"चित्रकार्कौ त्रिवृत्पाठे मलपू हयमारकम् । सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्चिकां । ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् । एतद्धि स्यन्दनं तैलं भग्नं दद्याद्भगन्दरे ॥" सु.चि.८अ. ।

**स्यन्दनद्रुः (मः)** । पुं । तिनिशद्रुमे । সাদন গাছ । रा.नि.व.९ ।

**स्यन्दनाह्वयः** । पुं । तिनिशवृक्षे । तिन्दुकवृक्षे । তেঁদ গাছ । वै.निघ. । [प.मु. ।

**स्यन्दनिः** । पुं । तिनिशवृक्षे । সাদন গাছ ।

**स्यन्द(न्दि)नी** । स्त्री । मुखलालायां । লাল । रा.नि.व.१८ । तिनिशवृक्षे । সাদন গাছ । र.सा.सं. । मूत्रवहनाड्यां । कश्चित् । [वै.निघ. ।

**स्यन्दिता** । स्त्री । तिन्दुकवृक्षे । তেঁদ গাছ ।

**स्यमीकः** । पुं । वल्मीके । উইঢিপি । तरुभेदे । শাঁই গাছ । मे. । स्त्री (का) । नीलिकायाम् । मे. ।

**स्युमम्** । क्ली । जले । उणा. ।

**स्योनाकः** । पुं । श्योणाकवृक्षे । শোণা গাছ । वै.निघ. ।

**स्रंसः** । पुं । पूगवृक्षे । সুপারিগাছ । वै.निघ. ।

**स्रंसनम्** । क्ली । विरेचने । "स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।" भैष.गुल्मचि. । ऊर्द्ध्वगदोषस्याधःकरणे । सु.ड. ।

**स्रंसिनीफलः** । पुं । शिरीषवृक्षे । श.मा. ।

**स्रंसी** (इन्) । पुं । पीलुवृक्षे । আকরোট । भा. । पूगवृक्षे । সুপারি গাছ । वै.निघ. ।

**स्रक् (ज्)** । स्त्री । मालायां । ফুলের মালা । अम. ।

**स्रघूः** । स्त्री । वातकर्म्मणि । शब्दकल्पः ।

**स्रवः** । पुं । मूत्रे । रा.नि.व.१८ ।

**स्रवणम्** । क्ली । मूत्रे । रा.नि.व.१८ । घर्म्मे । क्षरणे । श.र. । व्याक. । [लोके । वै.निघ. ।

**स्रवत्तोया** । स्त्री । रुदन्तीवृक्षे । रुदन्तीति

**स्रवद्गर्भा** । स्त्री । पतितगर्भायां गवि । अम. ।

**स्रवन्ती** । स्त्री । ओषधिविशेषे, श्रावण्याम् । মুণ্ডীরী । भे. । [हृ.चि.महाद्रावके ।

**स्रवन्तीपतिफेनः** । पुं । समुद्रफेणे । सं.क्री.

**स्रवा** । स्त्री । जीवन्त्यां । वै.निघ. । मूर्व्वायां । अ.टी.रा. ।

**स्रष्टा** (ष्टृ) । पुं । वैद्ये । वै.निघ. ।

**स्रस्ताङ्गता** । स्त्री । शिथिलाङ्गतायां । निःसहायावयवतायां । मा.ज्व.नि. ।

**स्रावः** । पुं । क्षरणे, निस्यन्दे । रसे । निर्यासे । আটা । वै निघ. ।

**स्रावकम्** । क्ली । मरिचे । श.च. ।

**स्रावणिका (णी)** । स्त्री । कट्वी । शब्दकल्पः । मुण्डीर्य्यां । মুণ্ডীরী । भा.म.कुष्ठ.चि. ।

**स्रावी** (इन्) । पुं । कर्णपालीगतरोगे । सु.सू. १६.अ. । [कम् ।

**स्राव्यः** । त्रि । स्रावणार्हे, विद्रध्यादौ । वैद्य-

**स्रुग्दारुः** । पुं । विकङ्कतवृक्षे । বঁইচী গাছ । र.मा. । [च. ।

**स्रुघ्नी** । स्त्री । स्वर्जिकाक्षारे । সাজিমা[illegible] । हे.

**स्रुता** । स्त्री । हिङ्गुपत्र्याम् । श.[illegible]

**स्रुवतरुः (द्रुमः)** । पुं । विकङ्कतवृक्षे । বঁইচী গাছ । वै.निघ. । रा.नि.व.९ ।

**स्रुव(वा)वृक्षः** । पुं । विकङ्कतद्रुमे । বঁইচী গাছ । रा.नि.व.९ । वा.सू.१५अ.आरग्वधादि. । "निम्बामृतामधुरसास्रुववृक्षपाठः ।"

**स्रुवा** । स्त्री । शल्लकीवृक्षे । मे. । मूर्व्वायाम् । মূর্গা । प.मु. ।

**स्रोतः** (स्) । क्ली । जलवेगे । मे. । छिद्रे । रा.नि.व.१८ । देहस्थमलद्वारेषु । "यैर्मार्गैर्देहस्थमलादयः सञ्चरन्ति तानि स्रोतांस्युच्यन्ते ।" भा. । उक्तञ्च —"मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि य-

र्। स्रोतस्तदिति विज्ञेयं शिराधमनिवर्जितम् ॥" सु.शा.९अ.। तानि नव श्रवणनयनवदनघ्राणगुदमेढ्राणि नराणां बहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्तादक्तवहञ्च। सु.शा.५अ.। इन्द्रिये। मे.। [मा.नि.।

**स्रोतःपाकः** । पुं। मुखनासिकादिस्रावे।

**स्रोतोजः** । पुं। जलवेतसे। क्ली। स्रोतोऽञ्जने, सौवीराञ्जने। वै.निघ.।

**स्रोतोऽञ्जनम्** । क्ली। सौवीराञ्जने। শ্বেত সুর্মা। भा.। सु.सू.३८अ.प्रियङ्ग्वादि.ड.। स्वनामख्याताञ्जनविशेषे। অঞ্জন, কাল সুর্মা। र.मा.। सु.चि.१७अ.। तत् श्वेतकृष्णलोहितभेदेन त्रिधा। लक्षणं —"वल्मीकशिखराकारं भिन्ननीलाञ्जनप्रभं। घृष्टे च गैरिकावर्णं श्रेष्ठं स्रोतोऽञ्जनञ्च तत् ॥" गुणाः — शीतलं कटु कषायं क्रिमिघ्नं रसायनं रसे योग्यं लघ्वग्निकरञ्च। रा.नि.व.१३। "किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम्।" भा.। [निघ.।

**स्रोतोनदीभवम्** । क्ली। स्रोतोऽञ्जने। वै.

**स्वः** । पुं। आत्मनि। क्ली। स्वर्गे। त्रिका.।

**स्वकुलक्षयः** । पुं। मत्स्ये। हे.च.।

**स्वगुप्ता** । स्त्री। शूकशिम्ब्याम्। আলকুশী। श.र.। वै.निघ.कास.चि.त्र्यूषणादिघृते। भा.म.३भ.मू.कृ.चि.। श्वेतलज्जालुकायाम्। रा.नि.व.५

**स्वगर्हः** । पुं। कलिकारपक्षिणि। जटा.।

**स्वग्रहः** । पुं। बालरोगभेदे। निदा.।

**स्वच्छः** । पुं, क्ली। स्फटिके। रा.नि.व.१३। बदरवृक्षे। কুল গাছ। रा.नि.व.११। क्ली। रौप्यमाक्षिके। विमलानामोपधातौ। मौक्तिके। रा.नि.व.१३। अभ्रधातौ। वै.निघ.। त्रि। रोगमुक्ते। श.र.। [के। वै.निघ.।

**स्वच्छधातुः** । पुं। कर्पूरकमणौ। रौप्यमाक्षि

**स्वच्छन्दभैरवः** । पुं। रसोऽयं सन्निपातादिनवज्वरे हितः। पाठः—"ताम्रभस्म विषं हिङ्गुः समधा भावितं रसैः। गुञ्जार्द्धं सन्निपातादिनवज्वरहरं परम् ॥" তামা, বিষ সমভাগ। ধুতুরাপত্ররসে ৭ ভাবনা দিবে। द्वितीयः—"रसगन्धकयोः भागं प्रत्येकं कज्जलीकृतं। सुवर्णमाक्षिकं भागं शुद्धश्चैकञ्च कारयेत्। रुद्रजटा निशुन्दा च नागदामलकी तथा। विषकण्टालिका चैषां स्वरसं भागमात्रकम्। दत्त्वा संशोध्य संमर्द्य कार्य्या मुद्गसमा वटी ॥" आर्द्रकरसेन पेया। রস, গন্ধক, স্বর্ণমাক্ষিক প্রত্যেকে ৩২ রতি। রুদ্রজটা, নিশিন্দা, হরীতকী, আমলা এবং বিষকাটালিয়া প্রত্যেকে ৩২ রতি রসে সংশোধন করিয়া মর্দ্দনপূর্ব্বক মুগপ্রমাণ বটী করিবে। र.सा.सं.। अन्यः ज्वरे —"समभागांश्च संगृह्य पारदामृतगन्धकान्। जातीफलस्य भागार्द्धं दत्त्वा कुर्य्याच्च कज्जलिम्। सर्व्वार्द्धं पिप्पलीचूर्णं खल्लयित्वा निधापयेत्। गुञ्जाद्वयं नयष्टापि नागवल्लीदलैः सह ॥" পারা, বিষ, গন্ধক প্রত্যেকে ২ তো. জায়ফল ১ তো. পিপুলচূর্ণ ৩।০ তো.। भैष.। अन्यः वातश्लेष्मी— "शुद्धसूतं मृतं लौहं ताम्रगन्धकतालकम्। पथ्याग्निमन्थनिर्गुण्डी त्र्यूषणं टङ्कणं विषम्। तुल्यांशं मर्दयेत् खल्ले दिनं निर्गुण्डिकाद्रवैः। भृङ्गीद्रावैः दिनैकन्तु द्विगुञ्जां वटकीकृताम् ॥" শুদ্ধপারা, গন্ধক, লৌহ, স্বর্ণমাক্ষিক, হরীতকী, আগস্ত, নিশিন্দামূল, শুঁঠ, পিপুল, মরিচ, সোহাগার খৈ, বিষ প্রত্যেকে সমভাগ নিশিন্দা ও সাদার রসে এক দিন মাড়িয়া ২ রতি পরিমাণ বটী করিবে। रस.र.।

**स्वच्छपत्रम्** । क्ली। अभ्रकधातौ। অভ্র। हे.च.। [नि.व.१३।

**स्वच्छवालुकम्** । क्ली। विमलाधातौ। रा.

**स्वच्छमणिः** । पुं। स्फटिके। रा.नि.व.१३।

**स्वच्छा** । स्त्री। श्वेतदूर्व्वायाम्। रा.नि.व.८।

**स्वजम्** । क्ली। रुधिरे। मे.। पुं। पुत्रे। घर्म्मे। मे.। स्त्री (जा)। कन्यायां। त्रि। आत्मजाते।

**स्वञ्जः** । पुं। कुस्थमनुष्ये। शब्दकल्प.।

**स्वदनम्** । क्ली। भोजने। हे.च.। लौहे। रा.नि.व.१३।

**स्वदिः** । स्त्री। भक्षणे। रा.नि.व.२०।

**स्वधाप्रियः** । पु। कृष्णतिले। श.र.।

**स्वधालता** । स्त्री। लताभेदे। चि.क्र.क.प्रदचि.।

**स्वनिताह्वय:** । पुं । तण्डुलीयशाकक्षुपे । रा.नि.व.५ । [अ.र. ।

**स्वनोत्साह:** । पुं । खड्गिनि । गाण्डार ।

**स्वपनम्** । क्ली । निद्रायाम् । अ.र. ।

**स्वपिण्डा** । स्त्री । पिण्डखर्जूरे । रा.नि.व.११ ।

**स्वप्न:** । पुं । निद्रायाम् । अम. । निद्रितस्य ज्ञाने । स्वपन । दर्शने । मे. । [अ.च. ।

**स्वप्नकृत्** । क्ली । सुनिषण्णकशाके । शुशुनिशाक ।

**स्वप्नक्** । त्रि । निद्रालौ । अम. ।

**स्वप्नदर्शनम्** । क्ली । निद्रावस्थायां दर्शने । स्वपन देखा । तल्लक्षणं यथा—"पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपत: प्रभु: । रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् । करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते । अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥" सु.शा ४अ. ।

**स्वप्नदोष:** । पुं । स्वप्ने रेतस्खलने । शब्दकल्प. ।

**स्वप्ननाश:** । पुं । निद्राविरहे । मा.ज्व.नि. ।

**स्वप्ननित्य:** । त्रि । नित्यं निद्रागमनशीले । स्वप्नदर्शनशीले । च.शा.८अ. । [रा.नि.व.१ ।

**स्वभद्रा** । स्त्री । गाम्भारीवृक्षे । गामार गाछ ।

**स्वभाव:** । पुं । प्रकृतौ । प्रकृतौ । वै.निघ. ।

**स्वभाववलप्रवृत्त:** । त्रि । क्षुत्पिपासाजरामृत्युप्रभृतिषु आधिदैविकरोगेषु । ते अपि द्विधा कालकृता अकालकृता च । तत्र परिरक्षणकृता: कालकृता:, अपरिरक्षणकृता अकालकृताश्च । सु.सू.२४ ।

**स्वयङ्गुप्ता** । स्त्री । कपिकच्छ्वां । आलकुशी । रा.नि.व.३ । सु.चि.२७अ. । च.द.कास.चि.अगस्त्यहरीतक्याम् । [२८अ. ।

**स्वयम्प्रभ:** । पुं । तन्नामसोमलताभेदे । सु.चि.

**स्वयम्भुव:** । पुं । वनमुद्गे । मुगानी । वै.निघ. । स्त्री (वा) । धूम्रपत्रायां । ताँमाक । रा.नि.व.५ । लिङ्गिन्याम् । शिवलिङ्गिनी लता । माषपर्ण्यां । माषाणी । रा.नि.व.३ ।

**स्वयम्भू:** । पुं । माषपर्ण्याम् । माषानी । लिङ्ग्याम् । शिवलिङ्गी लता । रा.नि.व.३ ।

**स्वर:** । पुं । शब्दे । अम. । सुवर्णे । वै.निघ. । नासावायौ । मे. ।

**स्वरघ्न:** । पुं । स्वरनाशकगलरोगभेदे । तस्य लक्षणं यथा—"योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वर: शुष्कविमुक्तकण्ठ: । कफोपदिग्धेष्वनिलायनेषु ज्ञेय: स रोग: श्वसनात् स्वरघ्न: ॥" सु.नि.१६अ. ।

**स्वरभङ्ग: (भेद:)** । पुं । स्वरनाशकरोगविशेषे । निदानादि यथा—"अत्युच्चभाषणविषाध्ययनाभिघातसन्दूषणै: प्रकुपिता: पवनादयस्तु । स्रोत:सु ते स्वरवहेषु गता: प्रतिष्ठां हन्यु: स्वरं भवति चापि हि षड्विध: स: । वातेन कृष्णनयनाननमूत्रवर्चा भिन्नस्वरं वदति गर्द्दभवत् खरञ्च । पित्तेन पीतनयनाननमूत्रवर्चा ब्रूयाद्गलेन स च दाहसमन्वितेन । ब्रूयात्कफेन सततं कफरुद्धकण्ठ: स्वल्पं शनैर्वदति चापि दिवा विशेषात् । सर्व्वात्मके भवति सर्व्वविकारसम्पत् तच्चाप्यसाध्यमृषय: स्वरभेदमाहु: । धूम्येत वाक् क्षयकृते क्षयमाप्नुयाच्च वागेष चापि हतवाक् परिवर्जनीय: । अन्तर्गतस्वरमलक्ष्यपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलस्थपार्श्व: ॥" मा.नि. । "वाते सलवणं तैलं पित्ते सर्पि: समाक्षिकं । कफे सक्षारकटुकं क्षौद्रं केवलमिष्यते ॥" सं. ।

**स्वरभङ्गी (इन्)** । पुं । पक्षिविशेषे । श.र. ।

**स्वरस:** । पुं । आर्द्रद्रव्यपेषणजरसे । "यन्त्रप्रपीडनाद्द्रव्यं रस: स्वरस उच्यते । " च. । [illegible] शुष्कद्रव्यम् अष्टगुणतोये पक्वा पादा[illegible] । ग्राह्य: । प.प्र.१ख. । तस्य मात्राऽर्द्धपलम् । "आहतात्तत्क्षणाकृष्टाद्द्रव्यात् क्षुण्णात् समुद्भव: । वस्त्रनिष्पीडितो य: स्यात् रस: स्वरस उच्यते ॥" शार्ङ्ग.म.१अ. । स्वरसविधि:—"कुडवं चूर्णितं द्रव्यं प्रक्षिप्तं द्विगुणे जले । अहोरात्रं स्थितं तस्माद्भवेत् स्वरस उच्यते ॥ स्वरसस्य गुरुत्वेन शुक्तिमात्रं प्रदापयेत् । वह्निसिद्धं रसश्चैव पलमात्रं प्रदापयेत् ॥ मधुश्वेतागुडक्षीरजीरकं लवणं तथा । घृतं तैलं च चूर्णञ्च कोलमात्रं रसे न्यसेत् ॥" क्षुण्णस्य: ।

**स्वरसा** । स्त्री । कपित्थपत्रायां । वै.निघ. ।

**स्वरसाद:** । पुं । स्वरभङ्गे । रा.नि.व.२० ।

**स्वरसादि:** । त्रि । कषाये । वै.निघ. ।

**स्वरहा(न्)** } पुं । स्वरघ्ने । रा.नि.व.१० ।
**स्वरच्चय:** }

**स्वरामक:** । पुं । वर्षोदकवृक्षे । আকুরাটে গাছ । वै.निघ. ।

**स्वरालु:** । पुं । वचायाम् । श.च. ।

**स्वरु:** । पुं । इषिकभेदे । शब्दकल्प: ।

**स्वर्गपुष्पम्** । क्ली । लवङ्गे । वै.निघ. ।

**स्वर्गलोकेश:** । पुं । शरीरे । जटा. ।

**स्वर्ज:** (क्षार.) पुं । सर्ज्जिक्षारे । च.द.प रिणामशूल । "हिङ्गुकृष्णवचास्वर्ज ।"

**स्वर्ज्जि:** (क:) । पुं । स्वर्ज्जिक्षारे । সাজিমা- টী । रा.नि.व.६ । यवक्षारे । সোরা । भा. ।

**स्वर्ज्जिकापाक्य:** । पुं स्वर्ज्जिक्षारे । वै.निघ. ।

**स्वर्ज्जि(का)क्षार:** । पुं । (Coroxylon griffithii.) Panjab salt wort or Sajji. स्वनामकक्षारे । সাজিক্ষার, সাজিমাটী । हि साजीखार, कङ्गणखार । गुणा: — कटुरुष्ण: तीक्ष्ण: वातकफघ्न: गुल्माध्मानकृमिघ्न: व्रणोदरघ्न श्च । रा.नि.व.६ । "यवक्षारो जयेद्दंश:श्वासान् वातकफामयान् । गुल्माष्ठीलोदराणाहपाण्डुप्लीहानाह मलामयान् । तस्मादल्पान्तरगुण: स्वर्जिकाक्षार उच्यते ॥" राज. । [रा.नि.व.६ ।

**स्वर्ज्जी**(न्) । पुं । स्वर्ज्जिक्षारे । সাজিক্ষার ।

**स्वर्णम्** । क्ली । स्वनामप्रसिद्धधातौ । সোনা । धुस्तूरे । अम. । वै.निघ.२भ.चयाच,कालान्तकर- से । नागकेसरपुष्पे । নাগেশ্বর ফুল । गौरसुवर्ण- शाके । সোনানটিয়া শাক । रा.नि.व.७।१० । "पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् । मरीचिरत्रिरङ्गिरा वशिष्ठ: पुलस्त्य: पुलह: क्रतु: । त- स्मिन्नृषय इति सप्तैते कीर्त्तिता: परमर्षय: ॥ पत्नीर्वि- लोक्य लावण्यलक्ष्मीसम्पन्नयौवना: । कन्दर्पदर्पवि- ध्वस्तचेतसो जातवेदस: । पतितं यद्धरापृष्ठे रेतस्त- द्धेमतामगात् ॥ कृत्रिमञ्चापि भवति तद्रसेन्द्रस्य वे- धत: ॥" इति स्वर्णोत्पत्ति: । "दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्बोज्झितं स्निग्धं कोमलं गुरु हेम सत् ॥" इति परीक्षा । "स्वर्ण- ताराररताम्रायसपत्राण्यग्नौ प्रतापयेत् । निषिञ्चेत्- प्रतप्तानि तैले तक्रे गवां जले । काञ्जिके च कुलत्थानां कषाये समधा पृथक् । एवं स्वर्णादिलौ- हानां विशुद्धि: संप्रजायते ॥" एतदीक्षणपत्राणि वह्नौ तापयित्वा तप्तानि तैले तक्रे काञ्जिके गोमू- त्रे कुलत्थकषाये त्रिस्त्रिर्निर्वाप्य शोधयेत् । एवमे- कांशेषां धातूनामपि शोधनं कार्य्यम् ॥ इति शोध- नम् । मारणं यथा — स्वर्णस्य एकं भागं पारदस्य च भागद्वयम् एकत्र मर्दयित्वा गोलकसमं गन्धक- चूर्णं तदध उपरि च निधाय शरावसंपुटे निरुध्य त्रिंशद्वनकरीषै: चतुर्दश पुटान् दद्यात् । "शिला- गन्धार्कदुग्धाक्ता स्वर्णाद्या: सप्त धातव: । म्रियन्ते द्वादशपुटै: सत्यं गुरुवचो यथा ॥" शिला मन:शि- ला । एषा चूर्णादिभि: पत्राणि लेपयित्वा गज- पुटै: पचेत् । अथवा रक्तकाञ्चनिकया केवलेन वा रसेन स्वर्णपत्रं लिप्त्वा हिङ्गुहिङ्गुलसिन्दूरमन:शि- लाभि: स्वर्णसमाभिर्मेलयित्वा धुस्तूररसेन घनं म- र्दयित्वा गोलकं कुर्य्यात् । ततो हण्डिकामध्ये सं- स्थाप्य शरावेणाच्छाद्य वह्निलेपं दत्त्वा पलाशभस्म- ना पूरयेत् । ततो दिनद्वयं गाढाग्निं दद्यादिति । र.सा.सं. । गुणा: — "सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् । स्वादु तिक्तञ्च तुवरं पाके च स्वादु पिच्छलम् । पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्र- दम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् । बलं स- वीर्य्यं हरते नराणां रोगव्रजान् शोषयतीह काये । असौख्यकारञ्च सदा सुवर्णमशुद्धमेतन्मरणञ्च कु- र्य्यात् । असम्यक् मारितं स्वर्णं बलं वीर्य्यञ्च नाश- येत् । करोति रोगान् मृत्युञ्च तद्धन्याद्यत्नतस्तत: । भा.पु.धा.व. । [किङ्किणीनैलि ।

**स्वर्णकम्** । क्ली । धुस्तूरफले । भैष.शिरोरो.चि.

**स्वर्णकण:** । पुं । कणगुग्गुलौ । रा.नि.व.१२ ।

**स्वर्णकण्डू:** । स्त्री । सर्ज्जरसे । धुনো, রজন । वै.निघ. ।

**स्वर्णकमलम्** । क्ली । रक्तपद्मे । वै.निघ. ।

**स्वर्णकेतकी** । स्त्री । रक्तकेतकीवृक्षे । সোনা- কেয়া । पुष्पगुणा: — वर्णकरं केशसौगन्ध्यकरं स्व- र्णवर्णं मदनोन्मत्ततावाहुल्यकरं सौख्यकारि च । केतकीस्तन:, अतिशीतल: कटु: पित्तकफघ्न: रसा- यन: बल्य: देहदार्ढ्यकरञ्च । रा.नि.व.१० ।

**स्वर्णगैरिकम्** । क्ली । रक्तगैरिके । रक्त गेरिमाटी । वै.निघ. । [जटा. ।

**स्वर्णचूड़ः** । पुं । पक्षिविशेषे । चाक पक्षी ।

**स्वर्णजम्** । क्ली । स्वर्णमाक्षिके । वै.निघ. । व-ङ्गे । हे.च. ।

**स्वर्णजातिका (ती)** । स्त्री । (Jasminum revolutum.) पीतजातीपुष्पवृक्षे । पीत चामिली । वै.निघ. ।

**स्वर्णजीवन्तिका (न्ती)** । स्त्री । पीतपुष्प-जीवन्त्याम् । स्वर्णजीवन्ती । हिं सोनाजीवइ । गु-णाः—वृष्या मधुरा चक्षुष्या शिशिरा वातपित्तर-क्तदाहघ्नी च । रा.नि.व.३ ।

**स्वर्णजीवा** । स्त्री । स्वर्णजीवन्त्याम् । वै.निघ.।

**स्वर्णटी** । स्त्री । स्वर्गगङ्गायाम् । अम. । वृश्चि-काल्याम् । विछाटी । रा.नि.व.५ ।

**स्वर्णदुग्धा** । स्त्री । स्वर्णक्षीरिकायाम् । सो-णाखिरुई, शेयालकाँटा । वै.निघ. ।

**स्वर्णद्रुः** । पुं । महारग्वधवृक्षे । बड़ सोन्दाल । रा.नि.व.९ ।

**स्वर्णधातुः** । पुं । स्वर्णगैरिके । स्वर्णे । वै.निघ.।

**स्वर्णनिभम्** । क्ली । स्वर्णगैरिके । स्व गेरि-माटी । वै.निघ. । [पीत । रस.चि. ।

**स्वर्णपत्रम्** । क्ली । पत्रलसुवर्णवर्णे । सोणार

**स्वर्णपत्रिका** । स्त्री । सुवर्णमुख्याम् । सो-णामुखी । भैष.शूल.चि.हरीतकीखण्ड ।

**स्वर्णपर्णी** । स्त्री । स्वर्णजीवन्त्यां । वै.निघ. ।

**स्वर्णपर्पटी** । स्त्री । ग्रहण्यधिकारे रसः । यथा —पारदस्य पलं स्वर्णस्य तोलकम् एकत्रामिश्रणा-न्मर्दयित्वा तेन सह गन्धकस्य पलं मिश्रयित्वा लौ-हखल्ले मर्दयित्वा कज्जलिः कार्य्या । अथ यथावि-धि पर्पटी पाच्या । भैष. । [र.मा. ।

**स्वर्णपाटकः** । पुं । टङ्कणक्षारे । सोहागा ।

**स्वर्णपारे(ले)वतम्** । क्ली । द्वीपान्तरखर्जू-रे । महापारेवतफले । रा.नि.व.११ ।

**स्वर्णपुष्पः** । पुं । वावलवृक्षे । वावला गाछ । अ.च. । आरग्वधवृक्षे ।

व.९ । कपित्थवृक्षे । कुष्माण्डलतायां । वै.निघ. । स्वर्णचम्पकवृक्षे । रा.नि.व.११ । स्त्री (ष्पा) । ला-ङ्गलिकौषधौ । विषलाङ्गुलिया । सातलायाम् । पीतडगुं मनसा । रा.नि.व.७ । मेषशृङ्ग्याम् । मेड़ाशिङे । वै.निघ. । [णालू । वै.निघ. ।

**स्वर्णपुष्पध्वजा** । स्त्री । स्वर्णलीवृक्षे । सो-

**स्वर्णपुष्पिका** । स्त्री । लाङ्गलिकौषधौ । वि-षलाङ्गुलिया । रा.नि.व.४ । स्वर्णयूथिकायाम् । वै.निघ. ।

**स्वर्णपुष्पी** । स्त्री । स्वर्णकेतक्यां । रा.नि.व.१० । सातलायां । रा.नि.व.४ । आरग्वधवृक्षे । सोणा-लू । अ.च. ।

**स्वर्णफलम्** । क्ली । धुस्तूरफले । धुतुरावीज । भैष.महालक्ष्मीविलासरसे । स्त्री (ला) । स्वर्णक-दल्याम् । रा.नि.व.११ । [च.सा.चि.महारसे ।

**स्वर्णबीजम्** । क्ली । धुस्तूरबीजे । वै.निघ.।भ.

**स्वर्णभूमिः** । स्त्री । मधुरवल्कले । दारुचिनि । वै.निघ. । [चिके । वै.निघ. ।

**स्वर्णभूषणम्** । क्ली । आरग्वधवृक्षे । [illegible]

**स्वर्णभृङ्गारः** । पुं । पीतभृङ्गराजे । [illegible] नि.व.४।

**स्वर्णमण्डनम्** । स्वर्णगैरिके । वै.निघ. ।

**स्वर्णमाता** । स्त्री । महाजम्बूवृक्षे । बड़ जाम गाछ । वै.निघ. ।

**स्वर्णमाक्षिकम्** । क्ली, पुं । स्वनामख्यातोप-धातुविशेषे । स्वर्णमाक्षिक । अस्य स्वर्णमाक्षिका-ख्याभिधानम् —"किञ्चित् सुवर्णसाहित्यात् स्वर्ण-माक्षिकमुच्यते ।" "उपधातुः सुवर्णस्य किञ्चित् स्वर्णगुणान्वितम् । तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम् ॥ किन्तु तस्यानुकल्पत्वात् किञ्चि-दूनगुणान्ततः । न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्ण-माक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः ॥" गुणाः—"सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोद-रान् । अर्शः शोथं विषं कण्डूं त्रिदोषमपि नाशये-त् ॥" अशुद्धं तत् मन्दाग्नित्वं बलहानिं विष्टम्भं नेत्ररोगं कुष्ठादिकञ्च करोति । भा.पू.१भ.धा.व । "सिन्धूद्भवस्य भागैकं त्रिभागं माक्षिकस्य च । मा-

**स्वादुलता।** स्त्री। विदार्य्याम्। भूँईकुमड़ा। रा.नि.व.७।

**स्वादुलुङ्गी।** स्त्री। मधुकर्कटिकायाम्। शरबती लेबु, शाङ्तारा लेबु। मद.व.६। स्वादुमातुलुङ्गे। वै.निघ.।

**स्वादुवीर्य्यः।** पुं। पियालवृक्षे। वै.निघ।

**स्वादुशुण्ठी।** स्त्री। श्वेतकिणिह्याम्। वै.निघ.।

**स्वादुशुद्ध(स्वच्छ)म्।** क्ली। पार्व्वतलवणे। सैन्धव। शब्दकल्पः।

**स्वादुसिञ्चितिकाफलम्।** क्ली। काबिलदेशीयफले। सेवफल। वै.निघ.।

**स्वाद्वगुरुः।** पुं। मधुररसागुरुवृक्षभेदे। गुणाः—उष्ण आमवातहरः तुवरश्च। राज.।

**स्वाद्वन्नम्।** क्ली। स्वादुरसान्ने। गुणाः—"सौमनस्यं बलं पुष्टिमुत्साहं हर्षमायुषः। स्वादु सञ्जनयत्यन्नम्······॥" भा.।

**स्वाद्वम्लः।** पुं। दाड़िमवृक्षे। चिका.। नागरङ्गवृक्षे। नारेङ्गा लेबुर गाछ। राज.। कदम्बवृक्षे। वै.निघ.।

**स्वाद्वी।** स्त्री। द्राक्षायाम्, कपिलद्राक्षायाम्। द्राक्षा, काल द्राक्षा। अम.। चिर्भटिकायाम्। फुटी। वै.निघ.। क्षुद्रखर्ज्जूरीवृक्षे। भा.।

**स्वाध्यायः।** पुं। वेदाभ्यासे। वै.निघ.।

**स्वान्तम्।** क्ली। मनसि। रा.नि.व.१८।

**स्वापः।** पुं। स्पर्शाज्ञाने। असाड़। सु.नि.५ अ.। निद्रायाम्। अम.।

**स्वापतेयम्।** क्ली। द्रव्ये। वै.निघ.।

**स्वापाश्रयम्।** क्ली। शयनशय्यायां। च.सू. १५अ.।

**स्वामी (इन्)।** पुं। पारदे। वै.निघ.।

**स्वाम्युपकारकः।** पुं। अश्वे। शब्दकल्पः।

**स्वायम्भुवगुग्गुलुः।** पुं। वातरक्ताधिकारे पक्वगुग्गुलौ। पाठः—"अमलतुषा लौहचूर्णं सयोरर्द्धपले पृथक्। पलत्रयञ्च ताप्यस्य वाकुच्याश्च पलत्रयम्। शिलाजतु तयोस्तुल्यं पलानि दश गुग्गुलोः। सर्व्वाण्येतानि संचूर्ण्य गुड़िकां कारयेद्भिषक्। शाणं कर्षार्द्धकर्षं वा ततः खादेत् प्रयत्नतः। आलमादेन विख्यातो नाम्ना स्वायम्भुवो रसः॥" रस.र.।

**स्वायम्भुवी।** स्त्री। ब्राह्मीशाके। वै.निघ.।

**स्वास्थ्यम्।** क्ली। यथाप्रकृतित्वे। आरोग्ये। श.र.। वा.चि.१अ.।

**स्वाचः।** पुं। शल्लकीनिर्यासे। वै.निघ.।

**स्विन्नः।** त्रि। कृतस्वेदे। घर्म्मयुक्ते। हला.। पक्वे। व्याक.।

**स्वेदः।** पुं। घर्म्मे। घाम। रा.नि.व.१८। "स्वेदावरोधः सन्तापः।" मा.नि.। भूपे। भापरा। मे.। स व्याधिविशेषेषु महामध्यमदुर्ब्बलेति। स तापेनोष्मणा द्रवेणोपनाहेनेति चतुर्विधोपायेन साध्यते। पुनश्च रोगभेदेषु चयोदश। यथा—सङ्करस्वेदः प्रस्तरस्वेदो नाड़ीस्वेदः परिषेकस्वेदोऽवगाहनस्वेदो जेन्ताकस्वेदः अश्मघनस्वेदः कर्षुस्वेदः कुटीस्वेदो भूस्वेदः कुम्भीस्वेदः कूपस्वेदः होलाकास्वेदश्च। च.सू.१४अ.। ते सर्व्वे एव वातहारिणः। "स्वेदौ तापोष्मजौ प्रायः श्लेष्मघ्नौ समुदीरितौ। उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः। महाबले महाव्याधौ शीते स्वेदो महान् स्मृतः। दुर्ब्बले दुर्ब्बलः स्वेदो मध्यमे मध्यमो मतः। बलासे रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले। कफमेदोवृते वाते कोष्णं गेहं रवेः करान्। नियुद्धं मार्गगमनं गुरु प्रावरणं भुवम्। चिन्ताव्यायामभाराश्च सेवेतामयमुक्तये॥" भा.। अर्शोपक्रमविशेषे, यो रुजाबद्धारुणकठिनेषु कार्य्यः। सु.चि.१अ.।

**स्वेदकः।** पुं। अयस्कान्तभेदे। कान्तलोह। अयं रसायने श्रेष्ठः। रा.नि.व.१।

**स्वेदचूषकः।** पुं। शीतलवायौ। शब्दकल्पः।

**स्वेदजः।** त्रि। कृमिकीटपिपीलिकादौ। अम.। कान्तलौहे। वै.निघ.।

**स्वेदजशाकम्।** क्ली। शाकभेदे। तच्च भूमीमयकाष्ठवल्काद्युद्भवं शिलीन्ध्रादिकम्। छाता इति लोके। पोयालछातू। गुणाः—शीता दोषला पिच्छिला गुरवः छर्द्यतीसारज्वरश्लेष्मरोगकराश्च। "श्वेतशुभ्रस्थलीकाष्ठवंशगोव्रजसम्भवाः। नातिदो-

पकरास्ते स्तुः शेवास्तेभ्यो विगर्हिताः ॥" भा.पू.१भ.ग्रा.व. । "शुक्तिकास्तु पलालेषु कारीषचितिरेषु जाः । सर्व्वाः संस्वेदजाः शीताः कषायाः स्वादुशीतलाः । गुरवस्तर्पयन्तीसारज्वरश्लेष्मामयापहाः । श्वेताः शुचिस्थलीकाष्ठवंशगोव्रजसम्भवाः । नातिदोषकरा ज्ञेयाः शेवास्तेभ्यो विगर्हिताः ॥" राज. ।

**स्वेदनम्** । क्ली । स्वेदे भे. । स्वेदनयन्त्रेण रससंस्कारविशेषे । भा. ।

**स्वेदनयन्त्रम्** । क्ली । पारदस्वेदनयन्त्रे । (दोलायन्त्र । तल्लक्षणम् —"साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च । पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥" भा. ।

**स्वेदनाशः** । पुं । वायौ । वै.निघ. ।

**स्वेदनी** । स्त्री । सुरानिर्म्माणार्थपात्रविशेषे । भाटी । वै.निघ. । लौहपात्रविशेषे । ताओया । भ. । [रा.नि.व.१८ ।

**स्वेदमाता (तृ)** । स्त्री । शरीरस्थरसधातौ ।

**स्वेदवाहिस्रोतः** । क्ली । घर्म्मवाहिनाड्यां । तस्य मूलं मेदः रोमकूपाश्च । च.वि.५अ. ।

**स्वेदस्रावः** । पुं । पित्तज्वरोगे । घाम हओया । निद्रा. । [र्म्मनिग्रहे । मा.नि. ।

**स्वेदाप्रवर्त्तनम्** । क्ली । घर्म्मातिशये । घ-

**स्वेदावरोधः** । पुं । घर्म्मावरोधे । जठराग्नेरवरोधे । मा.नि. ।

**स्वैरिता** । स्त्री । स्वच्छन्दतायाम् । अम. ।

**स्वोरसः** । पुं । स्वरसे । शिलापिष्टकल्के । श.च. ।

---

## ह

**हंसः** । पुं । सवजातीयजलचरपक्षिणि । हाँस । मं वल्लकि । गुणाः—"हंसः श्लेष्मकरो बलातिकृच्छिदो हृद्यो गुरुः शीतलः ...... " अत्रि.२२अ. । *अस्य मांसगुणाः—दृष्यतमं तिमिरघ्नञ्च । रा नि. व.१७ । गुरु उष्णं मधुरं स्निग्धं स्वरबलवर्णकरं बृंहणं शुक्रलं वातघ्नञ्च । सु.सू.४६अ. । हंसडिम्बगुणाः—"रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च । मधुराण्यविपाकीनि सद्योबलकराणि च ॥" च.सू.२७अ. । घोटकभेदे । शारीरवायुभेदे । मे. । पारदे । वनस्पतिभेदे । रौप्ये । वै.निघ. । अन्तःकरणे । विष्णौ । सूर्य्ये । त्रिका. ।

**हंसकः** । पुं । राजहंसे । श.च. ।

**हंसकूटः** । पुं । ककुदि । झूँटे । शब्दकल्पः ।

**हंसदाहनम्** । क्ली । अगुरुणि । अगुरु । श.च. ।

**हंसपदम्** । क्ली । कर्षे । २ तो. । प.प्र.१ख. ।

**हंसप(पा)दी** । स्त्री । हंसपदाकारपत्रलतायाम्, गोधापद्याम् । (गोयालिया लता । मं हंसपादी । कैं नविलडि । गुणाः—"हंसपादी कटूष्णा खाविषभूतविनाशिनी । भान्त्यपस्मारदोषघ्नी विज्ञेया च रसायनी ॥" रा.नि.व.५ । "हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् । विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥" भा.पू.१भ.गु.व. । सु.सू.३८अ. । रक्तलज्जालुकायाम् । वै.निघ. ।

**हंसपाकयन्त्रम्** । क्ली । औषधपाकार्थयन्त्रविशेषे । यथा—"खर्परं सिकतापूर्णं कृत्वा तस्योपरि चिपेत् । तत् समं खर्परं तत्र शनैर्मृद्वग्निना पचेत् । हंसपाकं समाख्यातं यन्त्रम्...... ॥" र.चि.३अ. । [योग्याग्नौ । रस.चि.३अ. ।

**हंसपाकाग्निः** । पुं । हंसपाकयन्त्रेण पाक-

**हंसपाद(क)म्** । क्ली । हिङ्गुले । हला. । सिन्दूरे । वै.निघ. ।

**हंसपादिका** । स्त्री । हंसपाद्याम् । रा.नि.व.५ । र.मा. । मण्डूकपर्ण्याम् । थुलकुडि, थानकुनी । च.सू.४अ. । र.सा.सं. । रक्तलज्जालुकायाम् । वै.निघ. । [रा.नि.व.३ ।

**हंसमाषा** । स्त्री । माषपर्ण्याम् । माषाणी ।

**हंसयोषिता** । स्त्री । राजहंस्यां । वै.निघ. ।

**हंसलोमशम्** । क्ली । कासीसे । हिराकस । रा.नि.व.१३ ।

**हंसलोहकम्** । क्ली । पित्तले । है.च. ।

**हंसवती** । स्त्री । हंसपद्याम् । जटा. ।

**हंसवीजम्** । क्ली । हंसडिम्बे । रा.नि.व.१९ । गुणाः—"हंसवीजं परं वृष्यं बृंहणं वातकोपनं । पाके लघुतरं शीतं सर्व्वामयविनाशनम् ॥" राज. ३प. । [वै.निघ. ।

**हंसाङ्घ्रिः** । स्त्री । हिङ्गुली । रक्तलज्जालुकायां ।

**हंसाण्डम्** । क्ली । हंसडिम्बे । হাঁসের ডিম। गुणाः—अतिबल्यम् अतिबृंहणं वातघ्नं पाके लघुतरं सर्व्वरोगहरञ्च । रा.नि.व.१९ । राज.३प ।

**हंसाभिमुख्यम्** । क्ली । रौप्यधातौ । रा.नि.व.१३ । हे.च. ।

**हंसाह्वया** । स्त्री । हंसपाद्यां । গোয়ালিয়া । सु.चि.१८अ. । च.द.ग्रन्थि.चि.अमृताद्यतैले ।

**हंसिका (सी)** । स्त्री । हंसपद्याम् । श.र. । सुद्गपर्ण्याम् । वै.निघ. । वराटकभेदे । रा.नि.व.१३ ।

**हंसिरः** । पुं । मूषिकभेदे । तद्दष्टे "हंसिरेणाऽन्नविद्वेषः जृम्भालोमाञ्चहर्षणं ।" सु.कल्प.६अ. ।

**हंसोदकम्** । क्ली । अंशूदके । च.सू.६अ. । See अंशूदकम् ।

**हञ्जिः** । स्त्री । क्षुधायां । जटा. । [भा. ।

**हञ्जिका** । स्त्री । भार्ग्याम । ब्राह्मणयष्टी ।

**हञ्जी** । स्त्री । जिह्निकाम् । वै.निघ. ।

**हटलपम्** । क्ली । शैवाले । सु.सू.४५अ. ।

**हट(ठ)पर्णि (र्णी)** । क्ली, स्त्री । शैवाले । श.र. । त्रिका. ।

**हट्टविलासिनी** । स्त्री । नखीनामगन्धद्रव्यविशेषे । अम. । हरिद्रायां । भा. ।

**हठः** । पुं । शैवाले, जलकुम्भिकायाम् । পানা । सु.चि.११अ. ।

**हठालुः** । स्त्री । कुम्भिकायां । পানা । श.च. ।

**हठी** । स्त्री । वारिपर्ण्याम् । পানা । धरणिः ।

**हड्डम्** । क्ली । अस्थनि । হাড় । श.च. ।

**हड्डजम्** । क्ली । मज्जायाम । श.च. ।

**हण्डिका (ण्डी)** । स्त्री । मृत्पात्रविशेषे । হাঁড়ি । शब्दकल्प. ।

**हण्डिकासुतः** । पुं । क्षुद्रहण्डिकायां । ছোট হাঁড়ি । त्रिका. ।

**हतचूर्णकः** । पुं । सोमलतायाम् । कश्चित् ।

**हताधिमन्थः** । पुं । सर्व्वाक्षिगतरोगे । लक्षणं—"उपेक्षणादक्षि यदाधिमन्थो वातात्मकः सादयति प्रसह्य । रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः...... ॥" मा.नि. ।

**हनुः** । पुं । व्याधौ । अस्त्रे । उषा. ।

**हदनम्** । क्ली । विष्ठात्यागे । হাগা । व्याक. ।

**हनीलः** । पुं । केतक्यां । र.मा. ।

**हनुः (नूः)** । स्त्री । हट्टविलासिन्यां । হরিদ্রা। भ.टी.भ. । रोगे । अस्त्रे । मृत्यौ । जटा. । पुं । नखीनामगन्धद्रव्ये । रा.नि.व.१२ ।

**हनुग्रहः** । पुं । तन्नामवातव्याधौ । निदानादि—"जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः । कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू । करोति विवृतास्यत्वमथवा संवृतास्यताम् । हनुग्रहः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ॥" मा.नि. । अपरञ्च वातव्याधौ अत्र हनू संगृहीतौ निश्चलौ लालास्रवश्च । अ.द.५१अ. ।

**हनुमूलबन्धनास्थि** । क्ली । हन्वस्थिमूलयोर्बन्धनभूतयोरस्थ्नोः । च.शा.७अ. ।

**हनुमोक्षः** । पुं । हनुगतमुखरोगभेदे । निदानं यथा—"वातेन तैस्तैर्भावैस्तु हनुसन्धिरसंहतः । हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥" सु.नि.१६अ. ।

**हनः** । त्रि । कृतपुरीषोत्सर्गे । अम. ।

**हन्वस्थि** । क्ली । हनुदेशास्थनि । চোয়ালের হাড় । च.शा.७अ. ।

**हपुषा** । स्त्री । गन्धद्रव्यविशेषे । सा च मरीचवत्सवङ्घ्रिचर्व्वणा । हवुषफल इति ख्याता । हिं हौवेर । See हवुषा ।

**हमलः** । पुं । कृकलासे । কাঁকলাস । वै.निघ. ।

**हयः** । पुं । घोटके । अम. ।

**हयकातरा (रिका)** । स्त्री । अश्वकातरिकायां । हिं घोडकाथरा । रा.नि.व.५ ।

**हयगन्धम्** । क्ली । काचलवणे । रा.नि.व.६ ।

पित्तास्रकफनाशनः ।" राज.३प. । "एणस्य मांसं लघुशीतबल्यं त्रिदोषहृत् षड्सदञ्च रुच्यं । कुरङ्ग मांसं मधुरञ्च बल्यं कफापहं पित्तहरं महत्तु ॥" रा.नि.व.१७ । [द्रष्टे । नर्या । श.च. ।

**हरिणाची** । स्त्री । हरिविलासिनीनामगन्ध

**हरिणी** । स्त्री । मृग्यां । अम. । मञ्जिष्ठायां । रा.नि.व.६ । स्वर्णयूथिकायाम् । स्वर्णयूँई । रा.नि.व.१० । विजयायाम् । सिद्धि । श्वेतयूथिकायाम् । श्वेत यूँई । वै.निघ. ।

**हरितम्** । क्ली । स्थौणेयके । गाँठियाला । रा.नि.व.१२ । कालिङ्गे । तरमूज । वै.निघ. ।

**हरितः** । पुं । मत्स्यानकतृणे । रा.नि.व.८ । यवे । प.मु. । नीलदूर्व्वायाम् । वै.निघ. । सिंहे । शब्दकल्प: । सविषमण्डूके । विषयुक्तबाङ् । मु. ।

**हरितकम्** । क्ली । शाके । आर्द्रकादौ । अम. "अन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः ।" च.सू.८अ. । [ना । मद.व.७ ।

**हरितच्छदः** । पुं । श्वेतशिग्रौ । श्वेत सजि-

**हरितनेत्रः** । पुं । उलूके । पेँचा । त्रिका. ।

**हरितपत्रिका** । स्त्री । पाच्यां । गङ्गापत्र्यां । सुगन्धशाकविशेष, कर्पूरशाक । रा.नि.व.१० ।

**हरितयवः** । पुं । निःशूकयवे । वै.निघ. ।

**हरितलता** । स्त्री । पाचीलतायां । वै.निघ. ।

**हरितशाकः** । पुं । शिग्रुशाके । सजिनार शाक । रा.नि.व.७ । [विशेष । रा.नि.व.१० ।

**हरितचेत्रा** । स्त्री । गङ्गापत्र्यां । सुगन्धशाक

**हरिता** । स्त्री । दूर्व्वायां । मे. । जयन्त्याम् । जन्ती गाछ । रा.नि.व.४ । हरिद्रायाम् । रा.नि.व.६ । कपिलद्राक्षायां । नीलदूर्व्वायां । रा.नि.व.८ । पाच्याम् । कर्पूरशाक । रा.नि.व.१० । ब्राह्मीक्षुपे । विर्म्मीशाक । वै.निघ. ।

**हरिताल(क)म्** । क्ली । पीतवर्णखनिजोपविषभेदे । हरिताल । प.मु. । तच्च पत्रपिण्डभेदेन द्विविधम्, तयोराद्यं श्रेष्ठम् । गुणाः—"तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम् । स्वर्णवर्णं गुरु स्निग्धं सपत्रञ्चाभ्रपत्रवत् । पत्राख्यं तालकं विद्यात् गुणाढ्यं तद्रसायनम् ॥ निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु । स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकं । हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् । कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणा-न् ॥" भा.पू.१भ.धा.व. । तच्छोधनादि यथा—"तालकं पोट्टलीं बद्ध्वा संचूर्ण्य काञ्जिके क्षिपेत् । दोलायन्त्रेण यामैकं ततः कुष्माण्डजे रसे । तिल-तैले पचेद्यामं यामञ्च त्रैफले जले ॥ दोलायन्त्रे चतुर्यामं भक्षीभूतं न दोषकृत् । तथा लाक्षारा-जीतिलाः शिग्रुटङ्कणं लवणं गुड़म् । तालकार्द्धेन संमिश्र छिद्रमूषां निरोधयेत् । पुटेत् पातालयन्त्रेण सत्वं पतति निश्चयम् ॥" रस.चि.७अ. ।

**हरितालः** । पुं । स्वनामख्यातपक्षिविशेषे । हरेल घुघु । हिं हरियाल । गुणाः—"हरितालोऽल्पविट्कः स्यात् कषायो विशदो लघुः । रक्तपित्तप्रशमनस्तृष्णाघ्नो वातकोपनः ॥" राज.३प. । दूर्व्वायां । वै.निघ. ।

**हरितालिका (ली)** । स्त्री । दूर्व्वायाम् । त्रिका. । मे. । खड्गलतायाम् । विश्व. ।

**हरिताश्म (न्)** । क्ली । तुत्थके । तुँते । रा.नि.व.१३ ।

**हरिताचः** । पुं । चक्षुष्य दुष्टग्रहभेदे । तन्न्हीति अकस्मात् चक्षुषी रक्ते विन्दवो भवन्ति । यासदेषश्च जायते । ज.द.५७अ. ।

**हरित्** । स्त्री । हरिद्रायां । रा.नि.व.६ । पुं, क्ली । तृणे । मे. । पुं । मुद्गे । मूग । हे.च. । त्रि । शाकवर्णे ।

**हरित्कन्दः** । स्त्री । कन्दविशेषे । वै.निघ. ।

**हरित्पर्णम्** । क्ली । मूलके । मूला । प.मु. ।

**हरिद्(द्र)र्भः** । पुं । हरिद्वर्णकुशे, शरपत्रकुशे । श्वेत कुश । रा.नि.व.८ ।

**हरिदश्वः** । पुं । सूर्य्ये । अर्कवृक्षे । आकन्द गाछ । अम. । [See कुशः ।

**हरिद्दर्भः** । पुं । कुशभेदे । श्वेत कुश । भा. ।

**हरिद्रकः** । पुं । हरिद्रावृक्षे । वै.निघ. ।

**हरिद्रवः** । पुं । नागकेशरचूर्णे । त्रिका. ।

**हरिद्रा (द्री)** । स्त्री । (Curcuma longa.) स्वनामख्यातकन्दौषधौ । हलुद । हिं हल्दी,

हलदी । मं हलदि । कं अरसिन । तें पसुप । दा. गुर्ज. हलद । गुणाः—कफपित्ताबशोथकण्डू-व्रणापहा । राज. । कटुतिक्ता च कफवातास्कुष्ठघ्नी मेहकण्डूव्रणघ्नी वर्णकरी च । रा.नि.व.६ । च.द.कफज्व.चि. । हरिद्रा चतुर्धा हरिद्रा कर्पूरहरिद्रा वनहरिद्रा दारुहरिद्रा चेति । त्रिविधा. पर्य्यायेषु मृग्याः । तच्छुद्धिः यथाशब्दे मृग्या । "हरिद्रा क्रियते स्थूला छिद्दे या कुसुमच्छविः ।" शेष. । [पुष्प । अ.च. ।

**हरिद्राङ्गः ।** पुं । हरितालपक्षिणि । हरडुल

**हरिद्रादिवर्गः ।** पुं । हरिद्रादारुहरिद्राद्याष्टकलसीकुटजेन्द्रयवद्रव्येषु । गुणाः—आमातीसारघ्नः मेदःकफाव्यवातसन्यदोषघ्नश्च । वा.सू.१५ अ. ।

**हरिद्राद्वयम् ।** क्ली । हरिद्रादारुहरिद्रयोः । पिण्डा एका, पत्रम्यथासंज्ञाया । चरकः । वा.सू. १५अ.हरिद्रादि. । "हरिद्राद्वयपथ्यास्त ...... ।"

**हरिद्रापञ्चकम् ।** क्ली । हरिद्रामहरिद्रादारुहरिद्राशटीविकङ्कतेषु । वै.निघ. ।

**हरिद्रापत्रकण्टका ।** स्त्री । दार्व्याम् । दारुहरिद्रा । वै.निघ. ।

**हरिद्राभः ।** पुं । पीतशालवृक्षे । पेयाशाल । कर्पूरे । शं.च. । त्रि । पीतवर्णे ।

**हरिद्रामेहः ।** पुं । पित्तजन्यप्रमेहभेदे । अत्र रोगी सदाहं हरिद्रावर्णं मेहति । सु.नि.६अ. ।

**हरिद्रुः ।** स्त्री । दारुहरिद्रायां । दारुहरिद्रा। मं हलदिवा । कं विलिलु । गुणाः—शीतलः तिक्तः मङ्गल्यः वान्तिपित्तघ्नः देहकान्तिकरः बल्यः नानालम्दोषघ्नश्च । रा.नि.व.६ । अम. । सा पञ्चधा—सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च । पीतद्रुश्च हरिद्रुश्च पीतदारु कपीतकं । दार्वी निशागुणा किन्तु नेत्रकर्णास्यरोगनुत् ॥" भा. ।

**हरिनामा** (न्) । पुं । मुद्गे । मूग । त्रिका ।

**हरिनेत्रम् ।** क्ली । श्वेतपद्मे । रा.नि.व.१० । पुं । पेचके । त्रिका. ।

**हरिमणिः ।** पुं । मरकतमणौ । पान्ना इति लोके, रा.नि.व.१३ ।

**हरिमुद्गः ।** पुं । हरिमुद्गे । हारिमुग । रा. नि.व.१६ । [कि । कै.च. ।

**हरिपर्णम् ।** क्ली । कृष्णचन्दने । प.मु. । मूल-

**हरिप्रियम् ।** क्ली। उशीरनामगन्धद्रव्ये । गन्धवेणा । रा.नि.व.१२ । कृष्णचन्दने । कालियाकाष्ठ । अ.च. । पुं । श्यामाकधान्ये । श्यामाधान । प.मु. । कदम्बवृक्षे । र.मा. । पीतभृङ्गराजे । पीत भीमराज । रा.नि.व.४ । See मार्कवः । विष्णुकन्दे । रा.नि.व.७ । करवीरवृक्षे । बन्धुजीववृक्षे । वाकुली । रा.नि.व.१० । शङ्खे । शाँख् । रा.नि.व.१३ ।

**हरिप्रिया ।** स्त्री । तुलसीवृक्षे । रा.नि.व.१० । स्वर्गरीवृक्षे । खेजूर गाछ । रा.नि.व.११ ।

**हरिवालुकम् ।** क्ली । एलवालुके । एलवालुक । प.मु. । रा.नि.व.४ । [अ.च. ।

**हरिभद्रम् ।** क्ली । एलवालुके । एलवालुक ।

**हरिभद्रकम्**
**हरिभव्यकम्** } क्ली । कुष्ठौषधौ । कुड़ । वै. निघ. ।

**हरिमन्थः ।** पुं । अग्निमन्थे । गणिरि । प.मु.। र.सा.सं. । चणके । छोला गाछ । रा.नि.व.१६ ।

**हरिमन्थकः (जः) ।** पुं । चणके । अ.टी. भ. । अम. । कृष्णमुद्गे । काल मुग । हे.च. ।

**हरिमुद्गः ।** पुं । (Phaseolus mungo.) शारदमुद्गविशेषे । घासिमुग, हारिमुग । हिं हरिमुङ् । मं हरियरमुंग । कं हसरुहेसरु । गुणाः—कषायः मधुरः पित्तकफघ्नः रक्तमूत्ररोगघ्नः शीतलः लघुः दीपनश्च । रा.नि.व.१६ ।

**हरिमूला ।** स्त्री । शालपर्ण्याम् । वै.निघ. ।

**हरिलोचनः ।** पुं । कर्कटे । त्रिका.। पेचके । शब्दकल्पः ।

**हरिवल्लभः ।** पुं । मुचुकुन्दवृक्षे । मुचकुन्द गाछ । स्त्री (भा) । जवापुष्पवृक्षे । रा.नि.व.१० २३ । तुलसीवृक्षे । रा.नि.व.१० ।

**हरिवासः ।** पुं । पीतभृङ्गराजे । पीतपुष्प भीमराज । रा.नि.व.४ । See मार्कवः । अश्वत्थवृक्षे । मद.व.५ ।

**हरिवीजम् ।** क्ली । हरिताले । जटा. ।

**हरिहरः** । पुं । रसाधिकाररसमणिकारौ ।

**हरीतकी** । स्त्री । (Terminalia chebula.) Chebulic myrobalan. स्वनामख्यात वृक्षे । হরীতকী গাছ । हिं हर्, मं हिरड़ा । कं अणिले । तें करकचेट्टु । उत्. हरिड़ा,करेड़ा । द्रा. हिं कलरा । ता. कड़कै । सा. गुणाः — हरीतकीफलम् अनुलोमनं (अर्थात् मलपाकं कृत्वा बन्धञ्च भित्त्वाधो नयति), तथा रसायनं शोधनञ्च । हरीतकी सप्तभेदा — "विजया रोहिणी चैव पूतना चामृताभया । जीवन्ती चेतकी चेति पथ्यायाः सप्त जातयः ॥" तासु विजया अलाबुवृत्ता सर्व्वरोगहिता च । रोहिणी वृत्ता व्रणरोपणी च । पूतना अस्थिमती सूक्ष्मा प्रलेपे हिता च । अमृता मांसला शोधनी च । अभया पञ्चरेखान्विता चक्षुष्या च । जीवन्ती स्वर्णवर्णा सर्व्वरोगहिता च । चेतकी त्रिरेखा चूर्णार्थे प्रशस्ता च । पुनः श्वेतकृष्णभेदेन चेतकी द्विधा, तयोः शुक्ला षड़ङ्गुलायता, कृष्णा चैकाङ्गुला । आसु कस्याश्चित् स्वादेन कस्याश्चिद्गन्धेन कस्याश्चिद्दर्शनेन कस्याश्चिच्च स्पर्शनेन भेदोऽनुमीयते । चेतकीतरुमूलमुपस्थ यस्य कस्यचित्प्राणिनो विरेचनं भवति । एतस्याश्च चेतक्या धारणेन नरो यावत्तिष्ठति तावदेव तस्य विरेको भवति । एषा तृष्णार्त्तसुकुमारकृशानामौषधद्वेषिणामतीव प्रशस्ता । आसु च सप्तजातीयहरीतकीषु विजयैव प्रधाना सुखप्रयोगा सुलभा सर्व्वरोगेषु शस्ता च । हरीतक्यां स्वादुतिक्तकषायरससद्भावेन पित्तहरत्वं, कटुतिक्तकषायरससद्भावेन कफहरत्वं, अम्लरससद्भावेन वातनाशित्वञ्चास्ति । स्वभावत एव प्रभावसिद्धमस्या वातनाशित्वम् । तथास्या मज्जसु स्नायुषु वृन्ते त्वचि अस्थिषु च यथासंख्यं स्वाम्लतिक्तकटूत्कृष्टरसा व्यवस्थिता एव । या हरीतकी नवीना स्निग्धा घना वृत्ता गुरुश्च, या च जले क्षिप्ता निमज्जति, सैव प्रशस्ता गुणदा च । हरीतकीचर्व्वणेनाग्निवृद्धिः । पिष्टसेवनेन मलशुद्धिः । आर्द्रसेवनेन कोष्ठबद्धता, भर्ज्जितसेवनेन च त्रिदोषनाशित्वं भवति । भोजनेन सह हरीतकीसेवनेन बुद्धीन्द्रियोन्मेलनं बलं वातपित्तकफनाशः मलमूत्रशुद्धिः भवति । भोजनोत्तरं भक्षणेनान्नपानकृतवातादिदोषशान्तिराशु भवत्येव । लवणेन भक्षिता कफनाशः, शर्करया पित्तनाशः, घृतेन वातरोगनाशी गुडेन च सर्व्वरोगनाशी भवति । तथा वर्षादिषु षट्सु ऋतुषु यथाक्रमं सैन्धवशर्कराशुण्ठीपिप्पलीमधुगुडैर्भक्षणीया । केवलमेव पथश्रान्तदुर्ब्बलरूक्षकृशानाहारनिपीड़ितपित्तविसृक्तशोणितगर्भिणीभिश्च न कदापि हरीतकी व्यवहरेयुः । भा.पू.१भ. । "हरस्य भवने जाता हरिता च स्वभावतः । हरयेत् सर्व्वरोगांश्च तेन प्रोक्ता हरीतकी ॥" इति निरुक्तिः । "बीजास्थितिक्ता मधुरा सदलः त्वग्भागतः सा कटुकषायवीर्य्या । मांसांशतश्चाम्लकषाययुक्ता हरीतकी पञ्चरसा स्मृतेयम् ॥" रा.नि.व.११ । "अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्षिताः । सेवेरन्नाभयामेते क्षुधातृष्णार्द्दिताश्च ये ॥" च.चि.१अ. । बालहरीतक्यां । জঙ্গিহরীতকী । सं.अजी.चि. अग्निमुखचूर्णे ।

**हरीतकीतैलम्** । क्ली । हरीतकीफलबीजभवतैले । गुणाः — शीतलं कषायं मधुरं कटु सर्व्वव्याधिहरं पथ्यं नानाविधत्वग्दोषघ्नञ्च । रा.नि.व. १५ ।

**हरीतकीबीजम्** । क्ली । हरीतक्यस्थिनि । হরীতকীর আঁটী । गुणाः — चक्षुष्यं गुरु वातघ्नं पित्तघ्नञ्च । वै.निघ. ।

**हरीन्द्रवैशेषिकः** । पुं । वैद्यकग्रन्थभेदे । स्त्री (का) । रेणुकायाम् । রেণুক । च.सू.२अ.शिरोविरेचने । निर्गुण्ड्याम् । নিশিন্দা । काम्पिल्लके । কমলাগুঁড়ি । वै.निघ. हिक्काचि.नस्ये ।

**हरेणुः (का)** । पुं । कुलत्थके । বড় ... । प.मु. । पर्पटके । ক্ষেৎপাপড়া । वै. ...२अ. कल्याणघृते, लाक्षादितैले । चय.चि.गुडूच्यादिमोदके । कलाये । মটর । रा.नि.व.१६ । "शतपुष्पा हरेणुभिः ।" च.द.अ.च.चि. ।

**हरेणुका** । स्त्री । रेणुकायाम् । রেণুক । रा.नि.व.६ । सु.सू.३८अ. पिप्पल्यादिः । कलायभेदे । অরহর কলায় । रा.नि.व.१४ । सु.सू.४६अ. ।

**हर्म्म (न्)** । क्ली । जृम्भायां । श.र. ।

**हर्म्मुटः** । पुं । कच्छपे । शब्दकल्पः ।

**हर्य्यः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**हर्य्यक्षः** । पुं । सिंहे । रा.नि.व.१९ । [व.८ ।

**हर्षः** । पुं । मदनवृक्षे । ময়না গাছ । रा.नि.

हर्षकीर्त्तिः । पुं । वैद्यकसारसङ्ग्रहकर्त्तरि ।

हर्षणम् । क्ली । धनधात्री । रा.नि.व.१८ ।
। नेत्ररोगभेदे । भ.र. ।

हर्ष(र्षि)णी । स्त्री । कपिकच्छ्वाम् । आत्म-
गुप्ता । वै.निघ. । भङ्गायाम् । सिद्धि । शब्दकल्पः ।

हर्षणीक्रिया । स्त्री । सुरापानजन्यहर्षोत्पाद-
कक्रियायाम् । "नाविशोध्य मनो मद्यं शरीरमविशु-
द्ध्य वा । कुर्यात्मदात्ययं तस्मादिष्यते हर्षणीक्रि-
या ॥" वा.चि.७अ. । [ पि । हर्षजनके ।

हर्षयित्नुः । पुं । पुत्रे । क्ली । स्वर्णे । हे. ।

हर्षसम्भवम् । क्ली । शुक्रे । वै.निघ. ।

हलच्छदः । पुं । कृष्णशिग्रौ । काल सजिना ।
वै.निघ. । [ रा.नि.व.६ ।

हलदी (द्दी) (का) । स्त्री । हरिद्रायाम् ।

हलराजम् । क्ली । वाहुल्यतृणे । रा.नि.व.४ ।

हललोमशम् । क्ली । कासीसे । हिराकस ।
रा.नि.व.१३ ।

हला । स्त्री । मद्ये । जले । अनेकार्थकोषः ।
लाङ्गलकीवृक्षे । विषलाङ्गुलिया । भैष.कुष्ठ.चि.
पञ्चविन्दुतैले ।

हलाहलम् । क्ली, पुं । विषभेदे । प.मु. ।
ब्रह्मसर्पे । आञ्जनाई । चिका. ।

हलिनकः । पुं । केतकवृक्षे । राज ६प. ।

हलिनी । स्त्री । लाङ्गलिकायाम् । विषलाङ्-
गुलिया । प.मु. । [ छ । प.मु. ।

हलिनीप्रियः । पुं । कदम्बवृक्षे । कदम गा-

हलिप्रियः । पुं । कदम्बवृक्षे । अम. । [ १४ ।

हलिप्रिया । स्त्री । मदिरायाम् । रा.नि.व.

हली । स्त्री । कलिकारीक्षुपे । विषलाङ्गुलिया ।
रा.नि.व.४ । भैष.कर्णरो.चि. । मद्यसामान्ये ।
रा.नि.व.१४ । [ च । केतकवृक्षे । प.मु. ।

हलीनः । पुं । शाकवृक्षे । शेगुन गाछ । श.

हलीमकः । पुं । पाण्डुरोगभेदे । तस्य लक्षणं
—"यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः ।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः । स्त्रीष्व-
हर्षोऽङ्गमर्दश्च दाहस्तृष्णाऽरुचिर्भ्रमः । हलीमकं त-
दा तस्य विद्यादनिलपित्ततः ॥" मा.नि. ।

हल्लकम् । क्ली । रक्तकह्लारे । रक्तसुन्दि । अम. ।

हविः । पुं । अग्निमन्थवृक्षे । गनियार । र.मा. ।

हविः (स्) । क्ली । घृते । रा.नि.व.१५ । जले ।
अग्नौ । शब्दकल्पः । [ वै.निघ. ।

हविर्गन्धा । स्त्री । शमीवृक्षे । रा.नि.व.८ ।

हविर्मन्थः । पुं । गणिकारिकायाम् । र.मा. ।

हविष्यम् । क्ली । घृते । चिका. ।

हवुषा । स्त्री । गुच्छाक्षमफले । प्र.नित्यानन्दर-
सं । स्वनामख्यातफले । हबुस फल । हिं हौहबे-
र । कं हौबेर । मं यरकहक्ले । एतत् फलं द्विवि-
धम् । तत्रैकं मत्स्यसदृशं विस्त्रगन्धञ्च, द्वितीयम्
अश्वत्थफलसदृशं मत्स्यगन्धञ्च । उभयविधमेव फलं
गुणैस्तुल्यं केवलमाकारतो भिन्नम् । भा. । गुणाः
—कटुतिक्तोष्णा गुरुः श्लेष्मवातघ्नी प्रदरोदरवि-
ड्बन्धशूलगुल्मार्शोघ्नी च । रा.नि.व.४ ।

हसन्तिका । स्त्री । अग्निशकटिकायां । वा.
चि.१अ. ।

हसन्ती । स्त्री । मल्लिकायाम् । मे. ।

हस्तः । पुं । करे । हात । रा.नि.व.१८ ।

हस्तज्योड़िः (ड़ी) । पुं । स्वनामख्यातम-
हाकन्दशाके । कराज्योड़ा । हिं मं हाताजोड़ी ।
गुणाः—रसबन्धकृत् वश्यकृच्च । रा.नि.व.७ ।

हस्तपर्णः । पुं । रक्तैरण्डे । वै.निघ. ।

हस्तपुच्छम् । क्ली । करपुच्छे । हातेर पौं-
छा । चिका. । [ पाणौ । रा.नि.व.१८ ।

हस्तमानम् । क्ली । आमध्याङ्गुलिकूर्परं विस्तृते

हस्तसन्धिः । स्त्री । मणिबन्धे । वै.निघ. ।

हस्ताङ्गुलिः । पुं । कराङ्गुली । हातेर
आङुल । भूरिप्र. ।

हस्ताञ्जनः । पुं । पर्णौषधवृक्षे । वै.निघ. ।

हस्ताभरणः । पुं । मण्डलिसर्पे । सु.कल्प.४
अ. । See सर्पः । [ शब्दकल्पः ।

हस्तामलकम् । क्ली । करस्थामलकीफले ।

**हस्तिः** । पुं । कदलीवृक्षे । गजे । अजमोदायां । वै.निघ. ।

**हस्तिकन्दः** । पुं । कोङ्कणे प्रसिद्धे स्वनामख्यातमहाकन्दशाके । হাঁসা বড় মূলা । मं हस्तिकन्द । कं मल्लिरक्कसियगड्डे । गुणाः—कटुकाः कफवातरोगघ्नः त्वग्दोषहरः महाकुष्ठविसर्पघ्नश्च । रा.नि.व.७ । "हस्तिकन्दी गुरुर्ग्राही श्लक्ष्णाह्निप्रदो मतः ।" अत्रि.१६अ. ।

**हस्तिकरञ्जः (कः)** । पुं । महाकरञ्जवृक्षे । ডহর করঞ্জ । रा.नि.व.९ ।

**हस्तिकर्णः (पलाशः)** । पुं । एरण्डवृक्षे । मे. । गजकर्णाकारैकपत्रे पलाशभेदे । भूपलाश इति लोके । হস্তিকর্ণ পলাশ । तें चिट्टामुदपुचेट्टु । सु.सू.३९अ. कफशोधने । गुणाः—"हस्तिकर्णः परं वृष्यो मेधायुर्बलवर्द्धनः ।" राज.६प. । रक्तैरण्डे । वै.निघ.अजी.चि.विलम्बिकायोगे । हस्तिकन्दे । হাঁসা মূলা । रा.नि.व.७ । एतद्बीजतैलं मूलकतैलवत् । See विभीतकतैलम् ।

**हस्तिकर्णकः** । पुं । किंशुकवृक्षभेदे । হস্তিকর্ণপলাশ । श.र. ।

**हस्तिकर्णदलः** । पुं । हस्तिकर्णपलाशे । হস্তিকর্ণপলাশ । प.मु. ।

**हस्तिकर्णी** । स्त्री । कासालुके । वै.निघ.२भ. पाण्डु.चि. । वा.व्या.चि.षडशीतिगुग्गुलौ ।

**हस्तिकच्छः** । पुं । सिंहे । व्याघ्रे । शब्दकल्पः । कच्छपकीटभेदे । सा.नि. ।

**हस्तिकारवी** । स्त्री । अजमोदायां । वनयमानी । रा.नि.व.६ ।

**हस्तिकृष्णा** । स्त्री । गजपिप्पल्यां । वै.निघ. ।

**हस्तिकोलः** । पुं । राजबदरे । वै.निघ. ।

**हस्तिकोलिः (ली)** । पुं.,स्त्री । बदरीभेदे । ডাঁশাকুল । नामकोलीति पूर्व्ववङ्गे । प.मु. । मद.व.६ । [illegible] [धुन्दुल । वै.निघ. ।

**हस्तिकोशातकी** । स्त्री । महाकोशातक्यां ।

**हस्तिघोषा** । स्त्री । महाकोशातकीनामफलशाकविशेषे । धुन्दुल । हिं नेनुआ । मं पारसदोड़का । कं अरहीरे । गुणाः—स्निग्धा मधुरा आध्मानवातकृत् वृष्या शमिकरी प्रणरोपणी च । रा.नि.व.७ । रक्तपित्तानिलघ्नी च । भा.पू.१भ. शा.व. । [र.मा. ।

**हस्तिघोषातकी** । स्त्री । हस्तिघोषायाम् ।

**हस्तिचारिणी** । स्त्री । महाकरञ्जे । ডহরকরঞ্জ । रा.नि.व.९ ।

**हस्तिदन्त (क)म्** । क्ली । मूलके । मूला । रा.नि.व.७ । श.मा. । [श.र. ।

**हस्तिदन्तः** । पुं । मूलके । मूला । [illegible]दन्ते ।

**हस्तिदन्तफला** । स्त्री । ए[illegible] । গোমুক । रा.नि.व.७ ।

**हस्तिदन्ती** । स्त्री । महेन्द्रवारुण्याम् । ह्रस्वदन्त्याम् । वै.निघ. । बृहत्फलगोडुम्बायाम्, नागदन्त्याम् । বড় গোমুক । च.सू.१अ. ।

**हस्तिनी** । स्त्री । महेन्द्रवारुण्याम् । বড় রাখালশশা । महाकरञ्जे । ডহরকরঞ্জ । वै.निघ. । करिण्याम् । হাতিনী । तद्दुग्धगुणाः—"हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ॥" सु.सू.४५अ. ।

**हस्तिनीघृतम्** । क्ली । हस्तिनीनवनीतजघृते । হাতিনীর দুধের ঘি । गुणाः—कफपित्तविषकृमिघ्नं कषायं लघु विष्टम्भि तिक्तम् अग्निकरञ्च । रा.नि.व.१५ ।

**हस्तिनीदधि** । क्ली । करिणीदुग्धजातदधनि । হাতিনীর দুধের দৈ । मं हातिणीदहि । कं आनेयमोसरु । गुणाः—कषायलघूष्णं पित्तघ्नं रुचिदं कान्तिदं बलासरोगघ्नं वीर्य्यवर्द्धनं बलदञ्च । रा.नि.व.१५ ।

**हस्तिनीदुग्धम्** । क्ली । हस्तिनीजातक्षीरे । হাতিনীর দুধ । मं हातिणीचे दुध । कं आनेयहालु । गुणाः—मधुरं वृष्यं गुरु कषायं स्निग्धं स्थैर्य्यकरं शीतलं चक्षुष्यं बलवर्द्धनञ्च । रा.नि.व.१५ ।

**हस्तिनीनवनीतम्** । क्ली । हस्तिनीदुग्धभवनवनीते । হাতিনীর দুধের মাখন । गुणाः—कषायं शीतलं लघु तिक्तं विष्टम्भि कृमिघ्नं कफपित्तघ्नञ्च । रा.नि.व.१५ ।

**हस्तिपत्रः** । पुं । हस्तिकन्दे । रा.नि.व.७ ।

**हारहूर:** । पुं । मद्ये । हे.च. ।

**हारा ।** स्त्री । गाम्भारीवृत्ते । वै.निघ. ।

**हारिकण्ठ:** । पुं । कोकिले । मे. ।

**हारित: (क:)** । पुं । हारीतपक्षिणि । ह-रेतेल घुघू । जटा. ।

**हारितकम्** । क्ली । शाके । श.र. ।

**हारिद्र:** । पुं । विषभेदे । हरिद्रावर्ण काठ-विष । लक्षणं—"हरिद्रातुल्यमूलो यो हारिद्र: स उदाहृत: ।" भा. । कदम्बवृत्ते । मे. । हरिद्रा-वृत्ते । (क:) महिषज्वरे । गजवैद्यकम् ।

**हारिद्रसन्निपात:** । पुं । सन्निपातज्वरभेदे, येन सर्व्वाङ्गमेव हरिद्रावर्णं भवति । लक्षणं—"हारिद्रदेहनखनेत्रकराङ्घ्रितापनिष्ठीवनादिकसने रूपलक्षितो य: । हारिद्रक: स कथित:······॥" वै.निघ. ।

**हारिद्रु:** । पुं । हरिद्रावृत्ते । वै.निघ. ।

**हारी** (इन्) । पुं । कदम्बवृत्ते । कोकिले । स्त्री (री) । सुक्तायाम् । श.र. ।

**हारीत: (क:) ।** पुं । हरितालपक्षिणि । हरेतेल घुघू । वम्. तिलगिरूपक्षी । तन्मांसगुणा: —स्वादु कफपित्तरक्तदोषघ्न्य । रा.नि.व.१७ । "बल्यो वृष्यो रुचिकरश्च तथा हारीतको मत: ।" आत्रेयशिष्ये । तन्नामकतन्त्रकारे ।

**हार्य्यम्** । क्ली । रक्ताञ्जने । वै.निघ. ।

**हार्य्य: (वृक्ष:)** । पुं । विभीतकवृत्ते । बहेड़ा गाछ । रा.नि.व.११ । [विष । श.र. ।

**हालह(हा)लम्** । क्ली । विषभेदे । हलाहल

**हाला** । स्त्री । कण्टकपालीलतायां । आकड़-कड़ा । प.मु. । चि.क्र.क.सीमरी.चि. । मद्यसा मान्ये । रा.नि.व.१४ ।

**हालाहलम्** । क्ली,पुं । हलाहल इति ख्याते मूलविषे । सु.कल्प.२श्र. । स्वरूपं यथा—"गोस्त-नाभफलो गुच्छस्तालपत्रच्छदस्तथा । ओजसा यस्य दह्यन्ते समीपस्था: द्रुमादय: ॥ असौ हालाहलो ज्ञेय: किष्किन्ध्यायां हिमालये । दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥" भा.पू.१भ.विषव. । See मूलविषम् ।

**हालाहलगणा (हली)** । स्त्री । मद्ये । वै.निघ. ।

**हालाहलधर:** । पुं । सर्पे । श.र. ।

**हालाहला** । स्त्री । क्षुद्रमूषिकायां । नेংटे इन्दुर । जटा. । [हे.च. ।

**हालिनी** । स्त्री । अञ्जनिकायां । आञ्जनाइ ।

**हाली** । स्त्री । तालादिमद्ये । ताड़ि । रा.नि. व.१४ । मद्ये । अम. ।

**हास:** । पुं । कङ्कुष्ठे । वर्णमृत्तिकाविशेष । स्त्री (सा) । जातीपुष्पवृत्ते । वै.निघ. ।

**हास्यफल:** । पुं । विकङ्कतवृत्ते । बँइंची गा-छ । रा.नि.व.११ ।

**हाह(हा)लम्** । क्ली । हलाहलविषे । श.च. ।

**हिंसारु: (सीर:)** । पुं । व्याघ्रे । त्रिका. । व्याक. । [ड़ा । हारा. ।

**हिंसालुक:** । पुं । खादककुक्कुरे । कामड़ाकु-

**हिंस्रा (स्रा)** । स्त्री । जटामांस्यां । रा.नि. व.१२ । कण्टकार्य्याम् । भैष.योनिरो.चि., आम. वा.चि.खेदे । शिरायां । श.च. । कण्टकपाली-लतायाम् । गुड़कांडली, केलेकड़ा । प.मु. । च.द.ग्रन्थि.चि. । सु.चि.१०अ. । च.द.हिक्काश्वा-सचि.हिंस्राद्यघृते । गवेधुकायाम् । गरगंड़ा । श.च. ।

**हिक्का** । स्त्री । तन्नामकरोगे । तस्या निदानं "विदाहिगुरुविष्टम्भिरुक्षाभिष्यन्दिभोजनै: शीत-पानाशनस्नानरजोधूमातपानिलै: । व्यायामकर्म्म-भाराध्ववेगघातापतर्पणै: । हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥" स्वरूपं निरुक्तिश्च—"मुहुर्मु-हुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवा-क्षिपन् । सघोषवानाशु हिनस्ति यस्मात्ततस्तु हि-क्केत्यभिधीयते बुधै: ॥" तद्भेदा: संप्राप्तिश्च—"अन्न-जां यमलां क्षुद्रां गम्भीरां महतीं तथा । वायु: कफेनानुगत: पञ्च हिक्का: करोति च ॥" पूर्व्वरूपं यथा—"कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता । हिक्कानां पूर्व्वरूपाणि कुक्षेराटोप एव च ॥" यम-लामाह—"चिरेण यमलैर्वेगै: या हिक्का संप्रवर्त्त-ते । कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्दिशे-

।॥" अन्नजामाह —"पानान्नैरतिसम्भुक्तैः सह ॥ पीड़ितोऽनिलः। हिक्कां यात्यूर्द्धगो भूत्वा तां वेद्यादन्नजां भिषक् ॥" गम्भीरा यथा —"नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥" महती यथा —"मर्म्माण्यपीड़यन्तीव सततं या प्रवर्त्तते। महाहिक्केति सा ज्ञेया सर्व्वगात्रप्रकम्पिनी ॥" भा.।

**हिङ्गु।** क्ली। (Ferula asafoetida or Ferula alliacea.) स्वनामख्यातपण्यद्रव्ये। हिंगु। हिं वम्. हिंग। म इङ्ग। कं लिंगु। तें इंगर। गुणाः—हृद्यं कटूष्णं क्रमिवातकफघ्नं विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मघ्नञ्च। रा.नि.व.६। वा.सू.१५अ.ऊषकादौ। "उष्णकं तुत्थकं हिङ्गु" च.सू.२अ.। तीक्ष्णं कटुरसं शूलाजीर्णविबन्धघ्नं लघु उष्णं पाचनं स्निग्धं दीपनं कफवातघ्नञ्च। राज.। पाचनं रुच्यं क्रमिशूलोदरापहञ्च। मद.व.२। "लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित्। कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥" सु.सू.४६अ.। [ड़ा। रा.नि.व.६।

**हिङ्गुनाड़िका।** स्त्री। नाड़ीहिङ्गौ। हिंगे-

**हिङ्गुनिर्यासः।** पुं। निम्बवृक्षे। प.मु.। हिङ्गुरसे। हिं। मे.।

**हिङ्गुपत्रः।** पुं। इङ्गुदीवृक्षे। रा.नि.व.८।

**हिङ्गुपत्री (र्णी)।** स्त्री। स्वनामख्याततृणे। वंशपत्र तृण। गुणाः - कटुः तिक्ता तीक्ष्णा उष्णा वातकफक्रमिघ्नी रुच्या दीपनी पाचनी च। रा.नि.व.८।

**हिङ्गुफला।** स्त्री। हिङ्गुपत्राम्। वै.निघ.।

**हिङ्गु(ङ्गू)लम् (लिः)।** क्ली, पुं। स्वनामख्यातपारदभूयिष्ठद्रव्ये। हिङुल। अम.। जटा.। तच्च त्रिविधं—चर्म्मारशुकतुण्डकहंसपादभेदेन। तत्र चर्म्मारः शुक्लवर्णः, शुकतुण्डकः पीतः, हंसपादो जैवाकुसुमसदृशः, स एव महोत्तमश्च। र.सा.सं.टी.। मधुरं तिक्तम् उष्णं वातकफघ्नं त्रिदोषघ्नमदोषज्वरघ्नञ्च। रा.नि.व.१३। शुद्धस्य गुणाः—"तिक्तं कषायं कटु हिङ्गुलं स्यात् नेत्रामयघ्नं कफपित्तहारि। हृल्लासकुष्ठज्वरकामलाश्च प्लीहामवातौ च गरं निहन्ति ॥ ऊर्द्धपातनयुक्त्या तु डमरुयन्त्रपाचितम्। हिङ्गुलं तस्य सूतन्तु शुद्धमेव न शोधयेत् ॥" भा.पू.१भ.उ.रस.व.। शोधनविधिः—"मेषीदुग्धैश्च दरदं सप्तवारञ्च भावितम्। अम्लवर्गैस्तथा शुद्धिमायात्येवं न संशयः। आर्द्रकस्वरसैः भाव्यं शुद्धभवति हिङ्गुलम् ॥" सा.कौ.। तस्मात्पारदबहिष्करणविधिः - हिङ्गुलं निम्बूरसैः प्रहरं यावत् मर्द्दयित्वा अधःपिठर्य्यां दत्त्वा सूतवदूर्द्धं पातयेत्। तेन ऊर्द्धपिठरीलग्नं रसं गृह्णीयात्। भा. मधुमूले। आलु इति लोके। श.च.।

**हिङ्गुलिका।** स्त्री। कण्टकार्य्याम्। श.च।

**हिङ्गुली** (इन्) **।** पुं। हिङ्गुलि। स्त्री वार्त्ताकौ। प.मु.। बृहत्याम्। भा.।

**हिङ्गुलुः।** पुं, क्ली। हिङ्गुले। अम.। र.सा.सं.।

**हिङ्गुलेश्वरः।** पुं। रसोऽयं वातप्रधानज्वरे हितः। हिङ्गुलं विषं पिप्पली च समभागं जलेन मर्द्दयित्वा वटी कार्य्या। द्विगुञ्जामितो मधुना देयः। र.सा.सं.।

**हिङ्गुलोत्थरसः।** पुं। हिङ्गुलनिष्काशितपारदे। तत्प्रकरणम्—"अथवा हिङ्गुलात् सूतं ग्रहयेत्तन्निगद्यते। जम्बीरनिम्बुनीरेण मर्दितो हिङ्गुलो दिनम्। ऊर्द्धपातनयन्त्रेण ग्राह्यः स्यान्निर्म्मलो रसः ॥" र.सा.सं.। [र.मा.।

**हिङ्गुशिरा(टि)का।** स्त्री। वंशपत्रीतृणे।

**हिज्जः (लः)।** पुं। (Barringtonia acutangula. Syn. Eugenia acutangula.) स्वनामख्यातवृक्षे। हिजल गाछ। हिं समुन्दरफल, इजर। मं पर्यलु। कं तीरेगणगिले। उत्. किञ्जोलो। वम्. समुन्द्रफल, परेल। गुणाः—कटुः उष्णः पवित्रः भूतघ्नः वातरोगघ्नः ग्रहसञ्चारदोषघ्नश्च। श.च.। रा.नि.व.८। जलवेतसे। भा.।

**हिण्डि(ण्डी)रः।** पुं। समुद्रफेने। प.मु.। वार्त्ताकौ। मे.। दाड़िमवृक्षे। वै.निघ.। रुचके। उणा.।

**हितम्।** क्ली। पथ्ये। रा.नि.व.२०।

**हितकः।** पुं। शिशौ। रा.नि.व.१८।

**हितलोहितः।** पुं। तुवरयावनाले। रा.नि.व.१६।

